REPRODUCTION OF EARLIE EDITION OF THE
SABDARTHACINTAMANIH

# शब्दार्थचिन्तामणिः
# ŚABDĀRTHACINTĀMAṆIH

चतुर्थ खण्ड

भाग - अ

ब्राह्मावधूत श्रीसुखानन्दनाथः

प्रिन्टवैल

जयपुर- 302 004

Published by
**PRINTWELL**
S-12 Shopping Complex
Tilak Nagar Jaipur 302 004

Distributed by
RUPA BOOKS PVT LTD
H O S-12 Shopping Complex Tilak Nagar Jaipur 302 004
B O 295-B Bharti Nagar P N Pudur Coimbatore 641 041

ISBN 81 7044-369 5 (Set)

**SABADARTH CHINTAMANI**
First Published 1860
Reprint - 1992

*Printed at*

**Efficient Offset Printers**
215, Shahzada Bagh Indl Complex
Phase-II, Phone 533736 533762
Delhi 110035

श्री.

# शब्दार्थचिन्तामणि.

( :——।*।——* )

श्रीमत्सज्जनसिंहवीर परिभि समुद्रित पूर्ति भाक् श्रीमत्सूर्यसुधान्व
वाय फतह श्रीसज्जिदेशदयं कीर्ति गायतिगापयत्यखिलसत्कार्येषु
कर्तुं क्रियाशब्दाना निखिल धीविजयतेशब्दार्थचिन्तामणि

भवतु सुखार्थं सतत संस्कृत विद्यैक रसिकानाम् ।
कोशो गीर्वाण गिरश्चिन्ता मणि रिवसमस्तशब्दार्थ ॥
श्री सुखानन्द नाथे न रचितो मुद्रित पुरे ॥
उदये कविराज श्री श्यामल प्रेरणावशात् ॥१॥

*—।*+—*

चतुर्थभागीयवर्गादि :

श्रीमन्महाराजाधिराज रविकुलावतंस महीमहेन्द्र यादवाय कुलकमल
दिवाकरमेदपाटदेशेश श्री१०८ श्रीसज्जनभूपशिरोमण्याज्ञया कविराज
राजप्रेरणया मुद्रणारब्ध, श्रीमत्सज्जन सिंहासना धिरूढसर्वाधि
कार सम्पन्न श्री १ ८ श्री फतहसिंह महीप मुकुटेन
द्विचतुर्नवचन्द्रमिते १९४२ वैक्रमेब्देराजधान्युदयपुरे
श्रीसज्जन यन्त्रालये वाजपि यवशोधरप्रबन्धत श्रीमे
दपाटेश्वरकोशधनव्ययत पूर्णतानीत

—॥—

श्रीमद्देवकीनन्दनो विजयते

य । पुं० वायौ ॥ यवने ॥ गन्तरि ॥ यशसि । योगे ॥ याने ॥ सर्वनाम यदर्थे ॥ यकारे ॥ आदिलघौ । ऽऽ ॥

यकृत् । न० कुचेर्दक्षिणभागस्थमांसखण्डे । कालखण्डे ॥ अधोदक्षिणतश्चापि हृदयाद्यकृतस्थितिः । तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम् ॥ रोगविशेषे ॥ यथा । प्लीहाम यक्ष्मेत्यादि समस्तं यकृदामये । किन्तु स्थितिस्तयोर्ज्ञेया वामदक्षिणपार्श्वयोः ॥ यमनम् । यम उपरमे । सम्पदादित्वात् क्विप् । गमादीनामितिमलोपः । आगमानित्यत्वान्न तुक् । य० संयमं कृन्तति । कृती । क्विप् । तुक् ॥

यकृदात्मिका । स्त्री० परोष्ण्याम् ॥ तैलपायिकायाम् ॥

यकृद्वैरी । पुं० प्लीहघ्ने । रोहितकवृक्षे ॥

यक्ष । पुं० कुवेरे ॥ यक्षसद्मनि ॥ त्रि० पूज्ये ॥ यक्ष्यते० पूज्यते । यक्ष पूजायाम् । अकर्तरि च कारके संज्ञायामिति० कर्मणि घञ् । पुंसीति घो वा ॥ यद्वा । ईं लक्ष्मीमक्ष्णोति व्याप्नोति । अक्षू व्याप्तौ । कर्मण्यण् ॥ यद्वा । इः कामस्तस्यैवाक्षिणी यस्य । इ रक्षिणी यस्य वा । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् ॥

यक्षकर्दमः । पुं० कर्पूराद्यैः समेकृतेऽनुलेपनविशेषे ॥ यथा । कर्पूरागुरुकस्तूरीकक्कोलघुसृणानि च । एकीकृत्यमिदं सर्वं यक्षकर्दममुच्यते ॥ अपि च । कुङ्कुमागुरुकस्तूरीकर्पूरचन्दनं तथा महासुगन्धमित्युक्तं नाम तो यक्षकर्दमः ॥ यक्षप्रिलकर्दमः ॥

यक्षतरुः । पुं० वटवृक्षः ॥

यक्षधूपः । पुं० अरालि । सर्जरसे । रालइति ख्याते ॥ यक्षान् धूपायति । धूपसन्तापे । आयादय आर्द्धे

रसे । श्रीवासे । सरलद्रवे । तदपग
दैव० इ० गो० दे० भाषा० ॥
यक्षरसः । पुं० मध्वासवे । पुष्पमधे
यक्षप्रियोरस ॥
यक्षराट् । पुं० गुह्यकेश्वरे । कुबेरे ॥
यक्षेषुराजसे । राजृ० । सत्सूद्विषेति
क्विप् ॥ मज्ञानांरक्षत्वरे ॥
यक्षराजः । पुं० कुबेरे ॥ यक्षाणां
राजा । राजाह सखिभ्यष्टच् ॥
यक्षराट्पुरी । स्त्री० अलकायाम् ॥
यक्षरात्रि । स्त्री० दीपान्वितायाम् ।
यक्षाणांरात्रि ॥
यक्षाधिप । पुं० कुबेरे ॥
यक्षसाधनम् न० यक्षोपासनायाम्
यक्षामलकम् । न० पिण्डखर्जूरफले ।
यक्षवासः । पुं० वटवृक्षे ॥
यक्षिणी । स्त्री० अलकायाम् ॥ यक्षा
सन्निमयस्याम् । इनि । ङीप् ॥
कुबेरपत्न्याम् ॥ यक्षभार्यायाम् ।
यक्षी । स्त्री० कुबेरपत्न्याम् ॥
यक्षोदुम्बरकम् । न० अश्वत्थफले ।
यक्ष्म । पुं० रोगराजे ॥ यक्षते
यक्ष० । अर्त्तिस्तुसुहितिमन् ॥
यक्ष्मघ्नी । स्त्री० द्राक्षायाम् ॥
यक्ष्मा पुं० रोगराजि । राजयक्ष्म
णि । क्षये । शोषे ॥ अस्यनिदानन्तु
। वेगरोधात्क्षयाच्चैव साहसाद्विष
माशनात् । त्रिदोषो जायतेयक्ष्मा
गदोहेतुचतुष्टयात ॥ वैद्योव्याधिम

ताधक्षाकुर्व्याधियंयमनयक्ष्यते । सच
क्षयप्रोच्यतेवाक्ये यक्ष्माक्षयविभार
हे ॥ यक्ष्मी० यक्ष्यरोगा । यक्ष०
मनिन् ॥
यक्ष्मी । त्रि० क्षयरोगिणि ॥
यक्ष्य । त्रि० पूज्ये ॥
यजत् । न० यागकर्त्तरि ॥ यजति ।
यज० । शतृ० ॥
यजत । पुं० ऋत्विजि ॥ यजति ।
यज० । भृमृदृशियजीत्यादिनाऽतच्
॥ यजत ० यष्टव्यद्भुतिवेदभाष्य-
म् ॥
यजति । पुं० यागे ॥
यजत्र । पुं० अग्निहोत्रे ॥ यजत्येऽ
नदेवा । यज० । अमिनक्षियजि
वधिपतिभ्योऽत्रन ॥ यजनीये ॥
यजनम् । न० समन्त्रकहवि प्रक्षेप-
णादिक्रियायाम् । यागे ॥ अस्यलक्ष
ण यथा । पशुवीराज्यपुरोडाशसो-
मौषधिचरुप्रभृतिभिर्हविर्भि अ-
द्दिरपलाशाश्वत्थन्यग्रोधोदुम्बरप्रभृ
तिभिः समिद्भिः स्रुक्स्रुवोदूख-
लमुसलकुठारखनित्रयूपदारुदर्भ-
चर्मावपनिजभाजनादिभिर्द्रव्यो
पकरणैर्यद्गात्रहोत्रध्वर्युब्रह्मादि-
भिर्ऋत्विग्भिः काम्यनैमित्तिका
मौपवादिपूर्वकाक्षांयथोक्तदक्षिणानां
समापनंयजनम् । इतिश्राद्धविवेक
धृतदेवयाजनम् ॥

यजनकर्त्ता । पु॰ यजनव्यापारवति॰ ऋत्विजि ब्रीह्यादिस्वादिनि ॥

यजमान । पु॰ अध्वरे॰ यष्टरि । तिभिन्न । यष्टरि ॥ यजते । यज-देवपूजासङ्गतिकरणदानेषु । पूज॰ यजो मानच् । मानच्या । यानि मुक् ॥

यजाक । त्रि॰ दानकर्त्तरि ॥

यजि । पुं॰ यागकर्त्तरि । यजमाने ॥ यजति । यज॰ । सर्वधातुभ्य-इन् ॥

यजुर्वेद । पुं॰ नवाधिकशतशाखात्मकेयथा । ऋचं प्रजञ्चभगवान्य ज्ञोनामादिपूरुष अजुष्योमिति ॥ शुक्लाधिपवेदविशेष ॥ आध्वर्यवय जुर्भि स्यादृग्भिर्होत्र द्विजोत्तमा । औद्गात्र सामभिश्चक्रे ब्रह्मत्व चाप्यथर्वभि ॥

यजुर्वेदाधिप । पु॰ भृगौ । शुक्रे ॥

यजु । न॰ वेदविशेषे । गीतिरहिताऽनियताक्षरपादवेदभागे ॥ इज्य तेऽनेन । यज॰ । अर्त्तिपृवपियजितनिधनितपिभ्योनिद्युसि ॥

यज्ञः । पुं॰ आत्मनि । नारायणे । विष्णौ ॥ हुताशने ॥ सवे । अध्वरे । यागे सप्ततन्तौ । मखे । क्रतौ । विताने ॥ दृष्टिवादौ चाक्षय कूसपतौ ॥ ययूपे ॥ अग्निष्टोमादौ । अग्निहोत्रदर्शपौर्णमासादौ श्रौतयागे ॥ स्मार्त्ते वैश्वदेवादौ । मखायज्ञत्वेन श्रुतिस्मृतिप्रसिद्धे । देवयज्ञ पितृयज्ञ भूतयज्ञ मनुष्ययज्ञइतिचतुर्विधेस्मार्त्तयज्ञे ॥ अध्यापनादिपञ्चविधमहायज्ञे ॥ यथा । अध्यापन ब्रह्मयज्ञ पितृयज्ञ स्तुतर्पणम् । होमोदैवोबलिर्भौतो नृयज्ञोतिथिपूजनमिति ॥ यज्ञ-व्याख्यास्यामोद्रव्य देवतात्यागइति कल्पकारैर्देवतोद्देशेनद्रव्यत्यागोय ज्ञइतिनिरुक्त । सचयजतिनाजुहोतिनाचोदितत्वेन॰यागोहोमश्चे तिद्विविधः। उत्तिष्ठहोमावषट्कारप्रयोगान्तायाज्यापुरोनुवाक्यान्ता यजतय । उपविष्टहोमा स्वाहाकारप्रयोगान्तायाज्यापुरोनुवाक्यर हिताजुहोतयइतिकल्पकारैर्व्याख्याता: ॥ अग्निहोत्रदर्शपूर्णमास-चातुर्मास्यपशुवधज्योतिष्टोमादि. । सचद्विविध . काम्योनित्यश्च ॥ अदृष्टार्थे । स्वाश्रमोचितधर्मे॰ अतीन्द्रिये ॥ समाध्यवस्थायांसर्वेन्द्रि-यवृत्तिनिरोध श्रोत्रादीनीन्द्रियाण्यन्ये॰ हृत्यु(?)तत्वात्सएकोयज्ञ . । व्युत्थानावस्थायारागद्वेषराहित्ये नविषयभोगोय : सोऽपरोयज्ञ : शब्दादीन्विषयानन्येइन्द्रियाग्नि षुजुह्वतीत्युक्तत्वात् ॥ अन्येव्युत्थितावस्था : श्रोत्रादिभिरविरुद्ध

विषयग्रहण स्पृहाशून्यत्वे नानन्य-
साधारण कुर्वन्ति॰सएवर्हिषाहोम
॥ सर्ववैदिकश्रेयः साधनरूपे ॥
यज्ञ सात्त्विकादिभेदेनत्रिविध ।
यथा । अफलाकाङ्क्षिभिर्यज्ञोवि
धिदृष्टोयइज्यते । यष्टव्यमेवेति-
मनः समाधायससात्त्विकः ॥
अभिसन्धायतुफलं दम्भार्थमपिचैव
यत् । इज्यतेभरतश्रेष्ठतंयज्ञविद्धि
राजसम् ॥ विधिहीनमसृष्टान्न
मन्त्रहीनमदक्षिणम् । श्रद्धाविरहि
तयज्ञंतामसपरिचक्षते ॥ सचा
नेकविधोयथा । द्रव्ययज्ञास्तपो
यज्ञायोगयज्ञास्तथापरे । स्वाध्याय
ज्ञानयज्ञाश्चयतयः संशितव्रताः ॥
यज्ञानांजपयज्ञोऽस्मीतिभगवतोविभू
तिस्वरूपेजपयज्ञे ॥ अन्येनैवतुस
सिद्ध्येद्ब्राह्मणोनात्रसंशय. । कुर्याद
न्यन्नवाकुर्यान्मैत्रोब्राह्मणउच्यते ॥
इज्यते॰ अनेनवा॰ अत्रवा । यज
याचेतिनङ् ॥ वर्णानांस्वधर्मयज्ञा
यथा । आरम्भयज्ञा ' क्षत्रा ' श्चहै
विर्यज्ञाविश स्मृता. । परिचार
यज्ञाश्शूद्रास्तुजपयज्ञास्तुब्राह्मणा-
इति ॥ यजनीये । पूज्ये ॥
यज्ञकृत् । पु॰ यागकर्त्तरि ॥ यज्ञ
करोति । क्विप् तुक् ॥
यज्ञपशुः । पुं॰ घोटके ॥ छागे ॥
यज्ञपुरुषः । पुं॰ विष्णौ ॥ यज्ञधारा

ष्टे ॥
यज्ञभाजनम् । न॰ यागपात्रे ॥
यज्ञभूषण । पुं॰ श्वेतदर्भे
यज्ञयोग्य । पुं॰ उदुम्बरवृक्षे ॥ त्रि॰
यागार्हे ॥
यज्ञवल्ली । स्त्री॰ सोमलतायाम् ॥
यज्ञवाट । पु॰ यागस्थाने ॥
यज्ञवित् । पुं॰ यज्ञानाञ्ज्ञातरि ॥
यज्ञानाकर्त्तरि ॥ तेचवेधायनाद
य ' । तेष्विज्योतिष्टोमादयोयज्ञाव
स्तुभूताभवन्तीतिमन्यते॰ तन्मतेषां
भ्रान्तिमात्रम् । यज्ञं व्याख्यास्यामो
द्रव्यं देवतात्यागइति । अथैकैक
स्मिन्॰ यज्ञविज्ञानाभावात्॰ स
मुदायस्यावस्तुत्वात् ॥ यज्ञान्वे-
त्ति॰ जानाति॰ विन्दतिलभतेवा
। विद॰ । विदलृलाभे । क्विप् ॥
यज्ञवृक्ष । पुं॰ विकङ्कते । स्रुवार्ह
वृक्षे ॥ वटीवृक्षे ॥
यज्ञशाला । स्त्री॰ देवयजने ॥
यज्ञशिष्टाशी । पु॰ वैश्वदेवादियज्ञा
वशिष्टामृतभोजिनि ।
यज्ञशेषः । पुं॰ होमावशिष्टाज्यपुरो
डाशादौ ॥
यज्ञश्रेष्ठा । स्त्री॰ सोमवल्ल्याम् ॥
यज्ञसार । पुं॰ यज्ञोदुम्बरे ॥
यज्ञसूत्रम् । न॰ उपवीते । यज्ञोप
वीते ॥ तत्प्रमाणयथा ॥ ऊर्द्ध्वन्तु
त्रिवृतंसूत्रं सधवानिर्मितंशने . ।

तन्तुत्रयमधोवृत्तं यज्ञसूत्रविदुर्बुधाः
। त्रिगुणं तद्ग्रन्थियुक्तं वेदप्रवरस-
म्मितम् ॥ शिरोधरान्नाभिमध्यात्
पृष्ठार्द्धपरिमाणकम् ॥ यजुर्विदां
नाभिमितं सामगानामयं विधिः ।
वामस्कन्धेन विधृतं यज्ञसूत्रं बलप्रदम्
॥ इति कालिकापुराणे ४ अध्यायः य
ज्ञस्य सूत्रम् । यज्ञार्थं कृतसूत्रं वा ।
शाकपार्थिवादि ॥

यज्ञसेन । पु॰ द्रुपदे ॥

यज्ञस्थानम् । न॰ यज्ञवाटे ॥

यज्ञाङ्ग । पु॰ श्वेतदुग्धके । उदुम्बरे
॥ यज्ञमङ्गति । अगिगतौ । कर्म-
ण्यण् । खदिरवृक्षे ॥ ब्राह्मणयष्टि
कायाम् ॥ वराहमूर्त्तौ । यज्ञाश्चा
ङ्गान्यस्य ॥ यज्ञवराहस्याङ्गान्युक्ता
नि हरिवंशे । वेदपादो यूपदंष्ट्रः क्र
तुदन्तश्चितीमुखः । अग्निजिह्वो
दर्भरोमा॰ ब्रह्मशीर्षो महातपाः ॥
अहोरात्रेक्षणो दिव्यो वेदाङ्गश्रुतिभू-
षणः । आज्यनासः स्रुवतुण्डः
सामघोषस्वनो महान् ॥ धर्मसत्य
मयः श्रीमान् क्रमविक्रमसत्क्रियः
प्रायश्चित्तनखो घोरः, पशुजानुर्म-
हाभुजः उद्गात्रान्त्रो होमलिङ्गः फ
लबीजमहौषधिः । वाय्वन्तरात्मा
मन्त्रस्फिग्विकृतः सोमशोणितः ॥
वेदिस्कन्धो हविर्गन्धो हव्यकव्याति
वेगवान् । प्राग्वंशकायो द्युतिमा

न्नानादीक्षाभिरर्चितः दक्षिणा
हृदयो योगी महासत्त्वमयो महान् ।
उपाकर्मोष्ठरुचकः प्रवर्ग्यावर्त्तभू
षणः ॥ नानाच्छन्दोगतिपथो गु-
ह्योपनिषदासनः । छायापत्नीस-
हायो वै मेरुशृङ्ग इवोच्छ्रितः इति ॥
न॰ प्रयाजादौ ॥ यज्ञे हि द्विविधम
ङ्गं जातं भवति । सिद्धरूपं॰ साध्यरू
पञ्च । तत्र सिद्धरूपं जातिद्रव्यसङ्
ख्यादि॰ साध्यरूपन्तु क्रियैव । तच्च
द्विविधम् । सन्निपत्योपकारकमारा
दुपकारकञ्च । तत्र द्रव्यादिसंस्कार
कत्वेन विधीयमानयागस्वरूपान्तर्भू
तकर्म सन्निपत्योपकारकम्॰ व्रीहीन
वहन्यात्॰ व्रीहीन् प्रोक्षतीत्येवं विहि
तावघातप्रोक्षणादि । तद्भिन्नं तत्त्व
फलजननसामर्थ्यजनकत्वादिना या
गेऽन्वितकर्माऽऽरादुपकारकम् ॥

यज्ञाङ्गा । स्त्री॰ सोमवल्ल्याम् ॥

यज्ञान्त । पु॰ अवभृथे । यागशेषे ॥

यज्ञायज्ञीयम् । न॰ सामविशेषे ॥ यज्ञा
यज्ञापदयुक्तं साम॰ यज्ञायज्ञीयम्॰
इति व्याख्यातारः । यज्ञायज्ञाशब्दो
ऽस्मिन्नस्ति । मतौच्छः सूक्तसाम्नो
रिति छः ॥

यज्ञायुधम् । न॰ स्फ्यकपालादिद्रव्ये-
षु । तानि यथा । स्फ्यश्च कपाला
नि चाग्निहोत्रहवणी च शूर्पञ्च कृष्णा
जिनञ्च शम्या चोलूखलञ्च मुसलञ्च दृ

यज्ञोपलाचेतानिवेद्ययज्ञायुधानी
तिदर्शपूर्णमासयोः श्रुतानि ॥
यज्ञायुधी । पुं० यजमाने ॥
यज्ञारि । पुं० शिवे ॥ राक्षसे ॥
यज्ञिय । पुं० किंशुकद्रुमे । पलाशवृक्षे
द्वापरयुगे ॥ त्रि० यज्ञकर्मार्हे । य-
ज्ञानांपात्रे । क्रतुक्रियासम्पादनयो
ग्ये द्विजद्रव्यादौ ॥ यज्ञमर्हति ।
यज्ञर्त्विग्भ्यामित्यत्र० तत्कर्मार्हे-
त्युपसङ्ख्यानात्० घ ॥ यज-
नीये ॥
यज्ञियदेश । पुं० यागकरणोपयुक्त-
कुरुपञ्चालादौ ॥ कृष्णसारस्तुचर
तिमृगोयत्रस्वभावतः सज्ञेयोय-
ज्ञियोदेशोम्लेच्छदेशस्त्वतः परः ॥
यज्ञियश्चासौदेशश्च ॥
यज्ञियशाला । स्त्री० यज्ञार्थशालाया-
म् ॥ यागमण्डपे ॥
यज्ञीय । पुं० उदुम्बरवृक्षे ॥ त्रि०
यागसम्बन्धिनि ॥
यज्ञीयब्रह्मपादपः । पुं० विकङ्कतवृ
क्षे ।
यज्ञेश्वरः । पुं० शिवे ॥ विष्णौ ॥
यज्ञेष्टम् । न० दीर्घरोहिषकतृणे ।
यज्ञोदुम्बर । पुं० उदुम्बरे । जन्तु
फले ॥
यज्ञोपवीतम् । न० यज्ञसूत्रे । यज्ञा
र्थंधृतमुपवीतम् । शाकपार्थिवा-
दि । [illegible] उपवीतमवा । यज्ञस्य

श्रौतस्यस्मार्तस्यच विविधस्यद्रव्यत
पोयोगस्वाध्यायज्ञानादिरूपसामी-
प्येनविशेषेणनित्यसंयोगेन० इतं
प्रारब्धिव्यर्थ ॥ ब्राह्मणेनयदादेवा
च्छिन्नयज्ञोपवीतकम् । मनसा
येनशुद्धिः स्यादापस्तम्बोऽब्रवीत्
मुनि ॥
यज्यु । पुं० यजुर्वेदविदि । अध्वर्यौ
॥ यजति । यज । यजिमनीति-
युच् ।
यज्वा । पुं० वेदविधानतः कृतया
गे । इष्टवान्० यजतिस्मवा । यज
देवपूजासङ्गतिकरणदानेषु । सुय-
जोङ्वनिप् ।
यज्वनाम्पति पुं० चन्द्रे ॥
यत् । अ० हेतौ । पश्चाच्चयद्० अव्य
यम् ॥
यत् । त्रि० यदर्थे ॥ गच्छति । एति ।
इण्गतौ । शतृप्रत्ययः ॥ यच्छब्दे
नोच्यतेयोर्थस्तच्छब्दस्तस्यवाचकः ॥
यतम् । न० हस्तिप्रेरणाय० पादाघा
ते ॥ पादकर्मयतप्रोक्तं यातमङ्कुशवार
णम् । त्रि० संयते । नियते ॥
यतचेता । त्रि० संयतचित्ते ॥ यतं
चेतोयस्य ॥
यतन् । त्रि० प्रयत्नवति ॥ यथा । ना
हंनमामिदेवान्देवानतोत्यनसेवते-
देवः । नतदनुकरोतिविधानतस्मै
यततेनमोनमोमह्यम् ॥ इतिपूज्य

पादानामार्थ्या ।। अर्हंदेवान्नमामि॰ ननमस्करोमि॰योदेवानतीत्य॰ अतिक्रम्यस्थित . सदेवोदेवान्नसेवते॰तदनुतदनन्तर विधानंविध्युक्तं कर्मनकरोति॰ तस्मै सर्वात्मभूताय यततेप्रयत्नवतेमह्य नमोनमइत्यादरार्थेद्विरुक्ति ' ।।

यतम ' । त्रि॰ बहूनामध्ये निर्द्धारिते॰ एकस्मिन् ॥ वाबहूनाजातिपरिप्रश्नेडतमच् ॥

यतमान ' । त्रि॰ व्याप्रियमाणे । प्रयतमाने ॥ यतीप्रयत्ने । शानच । मुक् ॥ प्रार्थयमाने ॥

यतमानसञ्ज्ञा । स्त्री॰ वैराग्यविशेषे ॥ यथा । रागाद्य कषायाश्चित्तवर्त्तिन तैरिन्द्रियाणियथास्वविषयेषुप्रवर्त्त्यन्ते॰तन्माप्रवर्त्तिषतविषयेष्विन्द्रियाणीति॰तत्परिपाचनायआरम्भ प्रयत्नोयतमानसञ्ज्ञावैराग्यम् ॥ अत्रजगतिकिंसारकिमसारमितिगुरुशास्त्राभ्याञ्ज्ञास्यामीत्युद्योगे ॥

यतर : । त्रि॰ द्वयोर्मध्येनिर्द्धारिते॰एकस्मिन् ॥

यत ' । अ॰ यदर्थे ॥ हेतौ ॥ यस्मात् । पञ्चम्यास्तसिल् । त्यदाद्यत्वम् ॥

यतात्मा । त्रि॰ संयतचित्ते ॥ संयतशरीरेन्द्रियादिसङ्घाते ॥ निदिध्यासनपरिपाकेणपरमात्मन्येवैकाग्रचित्ते ॥

यति . । पु॰ यतिनि । निर्जितेन्द्रियव्यूहे ॥ कुटीचरबहूदकहंसपरमहंसेषुसन्यासिषु ॥ विदितात्मनि॰अवधूते ॥ यत्नशीले । मुनौ ॥ यतते । यतीप्रयत्ने । सर्वधातुभ्यइन ॥ नहुषस्यराज्ञोज्येष्ठापत्ये ॥ निकारे ॥

यति . । स्त्री॰ विरतौ । पाठविच्छेदे । द्रुतमध्यविलम्बितरूपायांपरिपाट्याम् ॥ विधवायाम ॥ यमेस्त्रियाक्तिन् । मलोप : ॥ रागे ॥ सख्यौ ॥ वाद्याङ्गप्रबन्धविशेषे ॥

यतिचान्द्रायणम् । न॰ व्रतविशेषे ॥ यथा । अष्टावष्टौसमश्नीयात्पिण्डान्मध्यन्दिनेस्थिते । नियत . पाप्विप्यशौयतिचान्द्रायणंचरन् ॥ इतिमनु . । यतिचान्द्रायणेपादोनधेनुचतुष्टयतदम्नौसपादैकादशकार्षापणाइतिप्रायश्चित्तविवेक : ॥

यती । पु॰ यतौ । निर्जितेन्द्रियग्रामे ॥ यमनम् । यमउपरमे । भावेक्त ' । मलोप : । यतमुपरमणमस्त्यस्य वायस्य । अतइनिठनावितीनि । व्रीह्यादौ ।।

यतिनी । स्त्री॰ विधवायां ।।

यतिपात्रम् । न॰ अलाब्वादिपात्रे ॥ अलाबुदारुपात्रञ्चमृन्मयवैदलतथा

। एतानियतिपात्राणिमनु स्वाय भुवोऽब्रवीत् ।

यतिमैथुनम् न० रुद्धनरते यति- गोप्यरतौ ।

यती । स्त्री० गच्छन्त्याम् ॥ इण् गत रि० ङीप् ॥ विधवायाम् ॥

यतुका । स्त्री० }
यतूका । स्त्री० } वृक्षविशेषे ।

यत्तः । त्रि० यत्नवति ॥

यत्न । पुं० प्रयत्ने ॥ उत्साहे । उ- द्योगे । यतनम्०यत्यतेऽनेनाच का । यती० । यजयाचयतेतिन- ङ् ॥ रूपादिचतुर्विंशतिगुणान्तर्ग तगुणविशेषे ॥ सचत्रिविध । प्र- वृत्ति . निवृत्ति . जीवनयोनिस्थ- ति ॥

यत्नवान् । त्रि० प्रयत्नविशिष्टे । यत्न- मन्तरेणनकिञ्चिद्भवति०एवज्ञात्वा- यत्नतत्परे ॥ यत्नोऽस्यास्ति मतुप् ॥

यत्र । अ० अनवक्लृप्तौ ॥ अमर्षे ॥ ग र्हायाम् ॥ आश्चर्ये यस्मिन् स- प्तम्यास्त्रल् ॥

यथा । अ० तुल्यार्थे माने । प्रशंसा याम् ॥ निदर्शने दृष्टान्ते ॥ नि र्देशे ॥ हेतूपपत्तौ ॥ योग्यताया- म् ॥ वीप्सायाम ॥ पदार्थानति वृत्तौ ॥ येनप्रकारेण प्रकारवचने थाल् ॥ विभक्तित्वात्०अदादयस्त- म् ॥

यथाकथञ्चित् । अ० येनकेनप्रकारेणे- त्यर्थे ॥ यथाच०कथञ्चित्र ॥

यथाकथाच । अ० अनादरे ॥

यथाकामी । त्रि० स्वेच्छाचारिणि । स्व तन्त्रे । स्वरुचौ । स्वच्छन्दे । स्वैरि णि । निर्यन्त्रणे ॥

यथाकालम । अ० विहितकाले ॥

यथाक्रमम् । अ० क्रमानुरूपे परिपा ट्याम् । मूलावधिक्रमे ॥ क्रममनति क्रम्यवर्ततइत्यर्थे पदार्थानतिवृत्ताव व्ययीभावेऽव्ययम् ॥

यथाजात । त्रि० मूर्खे ॥ आजन्म कालविशेषमनतिक्रम्यवर्तते । पदा र्थानतिवृत्ताव्ययीभाव । तदस्या स्ति । अर्शआद्यच् ॥ नीचे ॥

यथाजातरूपधरः । त्रि० दिगम्बरे ॥ परमहंसे ॥ यथा । यादृशंजातमात्र- स्वरूपधारयतीतितथा ॥

यथातथम् । अ० न० यथावर्ततेतथेत्य र्थे ॥ यथार्थे । सत्यार्थे ॥ सत्यमनति क्रम्य । पदार्थानतिवृत्ताव्ययीभा व . यथाशब्दस्तथाशब्दोवासत्यार्थं । यथार्थेऽव्ययीभावोवा । सनपुंसक मितिनपुंसकत्वम् । ह्रस्वोनपुंसक इतिह्रस्वत्वम् ॥

यथापूर्वम् । अ० पूर्वदिग्देशकालानु रूपे ॥ यथा । अकृतायाप्रतिष्ठायां प्राणामाप्रतिमासुच यथापूर्वंतथा भाव स्वर्णादीनांनविष्णुता ॥

यथामुखम् । अ॰ प्रतिबिम्बे ॥ मुखस्य सदृशम्॰ यथामुखम् । निपातनादव्ययीभाव : । पदार्थानतिवृत्तौयथा शब्दोवा ॥

यथामुखीन । त्रि॰ मुखप्रतिबिम्बाश्रये । दर्पणे ॥ यथामुखंदर्शन . यथामुखसम्मुखस्यदर्शन : स्पृतिख ' ॥

यथायथम् । अ॰ यथार्थे ॥ अनतिलङ्घनेनेत्यर्थे ॥

यथायथम् । न॰ यथास्वमित्यर्थे ॥ यथास्वेर्थे॰ यथाशब्दस्यद्वित्वनपुंसकत्वञ्चनिपात्यते॰ यथास्वेयथायथमितिसूत्रेण ॥ योयमात्मा॰ यश्चात्मीय॰ तद्यथास्वम् । आत्मानि ज्ञाता सर्वपदार्थायथायथम्॰ यथास्वभावमित्यर्थ ॥ आत्मीये । सर्वेषामुयथायथम् । यदात्मीयमित्यर्थं . ॥

यथायोग्यम् । अ॰ यथोचिते ॥

यथार्थम् । अ॰ सत्यार्थे ॥ अर्थमनतिक्रम्य । पदार्थानतिवृत्तावव्ययीभाव ' ॥

यथार्थं । त्रि॰ युक्ते ॥

यथार्थानुभव . । पुं॰ तद्वतितत्प्रकाराऽनुभवे ॥ सएवप्रमेत्युच्यते । यथार्थानुभवश्चतुर्विध । प्रत्यक्षानुमित्युपमितिशाब्दभेदात् । तत्करणमपिचतुर्विधम् । प्रत्यक्षानुमानोपमानशब्दभेदात् ॥

यथार्हम् । अ॰ यथायोग्यं ॥

यथार्हवर्ण । पु॰ चरे । प्रणिधौ ॥ अर्हति । अर्ह॰ । अच् योग्योर्थो यथार्हंवर्णौरूपमस्य ॥

यथाविधि । अ॰ य सह्ययोचितमित्यर्थे ॥ यथाविधानमित्यर्थे ॥

यथावृत्त । त्रि॰ यथाचारे ॥

यथाशक्ति । अ॰ साध्यानुसारे ॥ शक्तिमनतिक्रम्य । यथार्थेपदार्थानतिवृत्तावव्ययीभाव । अव्ययीभावश्चेत्यव्ययत्वम् ॥

यथाशास्त्रम् । अ॰ शास्त्रसम्मत ॥ शास्त्रमनतिक्रम्य । यथार्थेऽव्ययीभाव ॥

यथास्थित : । त्रि॰ सत्ये ॥

यथास्वम् । अ॰ यथार्थे ॥ यथायथमित्यर्थे । स्वात्मीये ॥ यथास्वमिति वीप्सायामव्ययीभाव. । योयआत्मा यद्यश्चात्मीयतद्यथास्वमित्युच्यते ॥

यथेप्सितम् । अ॰ कामम् । प्रकाममित्यर्थे ॥ इष्टानतिक्रमे । निकामे ॥ आप्तुमिष्टम् । आप्लृव्याप्तौ । सन् । क्त । आप्ज्ञप्यधामीत् । अव्ययविभक्तीत्यव्ययीभाव : ॥

यथेष्टम् । न॰ इष्टमनतिक्रम्यस्थिते ॥

यथेष्टचारी । पुं॰ पक्षिणि ॥

यथेष्टाचरण । त्रि॰ यथेष्टाचारिणि ॥ यथा । क्रियाहीनश्चमूर्खश्चमहारोगिणएवच । यथेष्टाचरणश्चाहु-

मैरवान्तमणीचकम् ॥

यथेष्टाचारी । त्रि॰ स्वेच्छाचारिणि ॥ यथेष्टमाचरितुशीलमस्य । णिनि ॥

यथोक्तकारी । त्रि॰ काम्यनिषिद्धवर्ज नपुरस्सरनित्याद्यनुष्ठानलक्षणेश्वर-प्रीतौ ॥ यथाज्ञाकारिणि ॥

यथोचित॰ । त्रि॰ यथायोग्ये । यथा प्राप्ते ॥

यथोत्तरम् । अ॰ उत्तरमुत्तरप्रतीत्य-र्थे ॥

यथोदितम् । न॰ यथोक्ते ॥

यथोपजोषम् । अ॰ यथासुखमि-त्यर्थे ॥

यद् । अ॰ हेतौ ॥ यच्छति । यम॰ । क्विप । अनुदात्तोपदेशे त्यनुना-सिकलोपः ॥ यद्यर्थे ॥

यत्॰द् । त्रि॰ यदर्थे ॥ बुद्धिस्थत्वो-पलक्षितधर्मावच्छिन्ने । जी॰ श्रु-तिभाषा ॥ यत्तदोर्नित्यसम्बन्ध॰ यच्छब्देनोच्यतेयोर्थःतच्छब्दस्तस्य-वाचकः ॥ अपिच । तच्छब्देनतु यच्छब्दोबोद्धव्य॰ सततंबुधैः । उदाहृतेतुयच्छब्देतच्छब्दः स्या दुदाहृत ॥ यजेस्त्यजितनियजिभ्यो डिदित्यदिः ॥

यदा । अ॰ यस्मिन्काले ॥ यथा । यदायदासर्ताहि निवृंदमार्गानुसा-रिणाम् । तदातदाकलिर्वृद्धिरनुमे याविचक्षणैः ॥ सर्वेकार्यस्यादि-

ना॰ दा ॥

यदि । अ॰ पक्षान्तरे ॥ सम्भावनाया म् । चेदर्थे । असन्देहेसन्देहव चने ॥ यदिवेदाः प्रमाणस्यु । वेदाः प्रमाणं हिचेत्युक्त्यादिर्यथा- ॥ यतनम् । यती॰ । क्विन् । पृ षोदरादित्वात्तलस्यद॰ ॥

यदीय॰ । त्रि॰ यत्सम्बन्धिनि ॥

यदु । पुं॰ देवयान्याययातेर्जातेज्ये ष्ठपुत्रे ॥ दशार्हदेशे ॥ तद्देशवासि नि॰ यदवः ॥

यदुतुङ्गम् । न॰ तीर्थविशेषे ॥

यदुदेव । पुं॰ वसुदेवे ॥

यदुनाथः । पुं॰ श्रीकृष्णे ॥

यदुपतिः । पुं॰ श्रीकृष्णे ॥ यदूनांपति ॥

यदुवंशः । पुं॰ यदोसन्ताने ।

यदृच्छा । स्त्री॰ स्वातन्त्र्ये । स्वैरिता याम् ॥ स्वारसिक्यामिच्छायाम् । शास्त्राननुमतप्रयत्नव्यतिरेके । कच्छ मनृच्छा । ऋच्छगत्यादौ । गुरोश्च ल्य । याऋच्छा । विशेषणमिति समासः ॥ सदसार्थे । निर्निमित्ते ॥ यथायदृच्छाशब्द । अयमतप्रवृ त्ति निमित्तमनपेक्ष्यय शब्दः प्र योक्तृभिप्रायेणप्रवर्ततेसयदृच्छाश ब्दोडित्थादिरिति ॥ दैवगतौ ॥

यदृच्छालाभ॰ । पुं॰ अप्रार्थितोपस्थि तेलाभे ॥

यदृच्छालाभसन्तुष्ट । पुं॰ तत्त्वज्ञे ॥ शास्त्रानुमतप्रयत्नव्यतिरेकात्॰ यदृच्छा॰ तयैवयोलाभोऽन्नाच्छादनादेशास्त्रानुमतश्च॰ सयदृच्छालाभ. तेनसन्तुष्ट॰ तदधिकतृष्णारहित॰ ॥ यतयोभिक्षार्थंग्रामप्रविशन्तीतिशास्त्रानुमतस्तु प्रयत्न कर्तव्य एव ॥

यद्भविष्य. । त्रि॰ मूर्खे ॥ दैष्टिके ॥ यद्भविष्योविनश्यति ॥

यद्यपि । अ॰ अवधारणे ॥ अप्यर्थे ॥

यद्युवा । अ॰ यदि ॥

यद्वत् । अ॰ प्रश्ने ॥ वितर्के ॥

यद्वा । अ॰ पक्षान्तरे ॥

यन्ता । पुं॰ मेठे । हस्तिपके ॥ सूते ॥ सारथौ ॥ यच्छति । यम॰ । तृच् ॥

यन्त्रम् । न॰ देवाद्यधिष्ठाने ॥ पात्रभेदे ॥ नियन्त्रणे । जन्द्रा॰ ताला इ॰ भा॰ ॥ बन्धने ॥ मृगबन्धनविशेषे ॥ यच्छति । यम॰ । गुधृवीपचियमीतिच. । यन्त्यतेनियम्यते॰ निगृह्णाति॰ असाधून॰बाधते॰ असाधून्॰ अनुगृह्णाति साधून् इतिचयन्त्रमितिचतुर्धरनी अकण्ठः ॥ तोप॰ अगनमूल्यादिभाषाप्रसिद्धेमहत्यस्मिन्यन्त्रे ॥ बन्दूकइतिप्रथितेसीसगुलिकोत्क्षेपणार्थे अच्यस्मिन्यन्त्रे ॥ इतिमहाभारतटीकायांनीलकण्ठ ॥ वाद्ये ॥ यथा । यन्त्रस्यगुणदोषौनविचार्यौ मधुसूदन । अहंयन्त्र भवान्यन्तो ममदोषानमेगुणा ॥ दारुयन्त्रादौ ॥ काल॰ इ॰ भा॰ ॥ यथा । ईश्वर सर्वभूतानांहृद्देशेऽर्जुनतिष्ठति । भ्रामयन्सर्वभूतानियन्त्रारूढानिमायया ॥ औषधस्यचपाकार्थयानियन्त्राणिसन्तिहि । तानिभावप्रकाशादौद्रष्टव्यानिमनीषिभि ॥ तत्केषाञ्चिन्नामानि लिख्यन्ते । जलकच्छपपाताल दोलाभूधरवालुका. । वकाद्यायन्त्रभेदा स्युर्वस्त्राद्याश्चमूषिका इतिशब्दचन्द्रिका॥

यन्त्रकम् । न॰ यन्त्रकाष्ठे । कुन्द॰ इ॰ गौ॰ दे॰ भा॰ प्रसिद्धे ॥ यस्मिन्काष्ठमनेन । यम॰पूर्ववत्च । स्वार्थेक ॥

यन्त्रगृहम् । न॰ तैलशालायाम् ॥ यन्त्राणांस्थाने ॥

यन्त्रगोल. । पु॰ मटरइतिप्रसिद्धकलाये ॥

यन्त्रणम् । न॰ रक्षणे ॥ बन्धने ॥ नियमने ॥

यन्त्रणा । स्त्री॰ पीडायाम् ॥

यन्त्रपेषणी । स्त्री॰ पेषणार्थयन्त्रे । जाता॰ चाकी॰ इतिभाषाप्रसिद्धे ॥

यन्त्रिका । स्त्री॰ पत्न्या : कनिष्ठभ

गिन्याम् ॥ यथा । कनिष्ठाश्याल्लिकाहालीयन्त्रिका केलिकुञ्जिकेतिहैमचन्द्र ॥

यन्त्रित । चि० यथिते । बद्धे । नियमिते । वशीकृते ॥

यन्त्री । चि० यन्त्रवति ॥ अस्त्यर्थे० इनि . ॥

यन्मूल : । चि० यदाश्रयभूते । यत्सत्तातिरिक्तसत्ताशून्ये ॥

यम : । पु० दक्षिणाशापतौ । शमने । काले । धर्मराजे । पितृपतौ । समवर्त्तिनि । यम स यमताम्हम् । स यमताधर्माधर्मफलदानेन० नियहानुयहकुर्वतामध्ये ० यमोवैवस्वतोभगवद्विभूति ॥ अस्यानुशासनयथा । कोशलयेजगद्धाममनन्तसमुपाश्रिता । भवद्भिः परिहार्या स्तेषानास्तीहस स्थिति ॥ नमः कृष्णाऽच्युतानन्तवासुदेवेत्युदीरितम् । यैर्भावभावितैर्दूरतास्तेचत्याज्यासुदूरतद्दतिवाक्रपुराणम् ॥ सर्वेषां स यमनात्यम यच्छति० उपरमयतिप्रारब्धं क्षीणे प्राणैर्वियोजयतिइतियम ॥ आदित्ये ॥ शनौ काके । ध्वाङ्क्षे ॥ स यमे ॥ शरीरसाधनापेक्षनित्यकर्मणि ॥ उपायान्तरनिरपेक्षशरीरमात्रेणसाध्य नित्य यावज्जीवमवश्यकार्ययत्कर्म०अहिंसादि० तद्यमइत्यर्थ : ॥ अहिंसासत्यवचनब्रह्मचर्यमकल्कता । अस्तेयमितिपञ्चैतेयमावैपरिकीर्त्तिता ॥ निषिद्धानाचरणे ॥ इन्द्रियाणाविषयेभ्योनिवारणे ॥ यमान्सेवेतसततं ननित्य नियमान्बुधः । यमानपतत्यकुर्वाणोनियमान्केवलान्भजन् ॥ अहिंसासत्यास्तेयब्रह्मचर्यापरियहायमाइतिपातञ्जलसूत्रम ॥ सर्वंब्रह्मेतिविज्ञानादिन्द्रियग्रामसंयम । यमोयमितिसम्प्रोक्तोभ्यसनीयोमुहुर्मुहु ॥ यम यति । यमउपरमे । चिजन्तादच् यच्छति० अनेनवा० यमनवा । यम० । पचाद्यच्०यम समुपनिविषुचेत्यप्० वा ॥ उपरमे । उपरतिमात्रे ॥ ब्रह्मचर्यादिदशसु ॥ यथा । ब्रह्मचर्यंदयाक्षान्तिर्ध्यानसत्यमकल्कता । अहिंसास्तेयमाधुर्ये यमश्चेतियमा स्मृता : ॥

यमौ । पु० द्विवचनान्त . ०० एकयोस्त्यानकुलसहदेवयो . ॥

यमौ । त्रि० यमजे ॥ वीजेनतवायुनाभिन्नं द्वौजीवौकुक्षिमागतौ । यमावित्यभिधीयेतेधर्मेतरपुर सरौ ॥ धर्मस्तदितरोऽधर्म . ०तौपुर . सरौयया . । तेनयमौधर्मादधर्माच्चभवत इत्यर्थ : ॥ तयोर्ज्येष्ठत्वनिरूपणंयथा । यस्मिन्गर्भसुषारिण्याद्यमकयो पूर्वजन्मत । वत्सकानल

यमयोः प्रथमजन्मप्रथमसुखम् ॥ जन्मा न . पितरश्चैवतस्मिन्ज्येष्ठंप्रतिष्ठितम् ॥ जन्मप्राथम्यात्. ज्येष्ठयमयोः . नतुनिषेकप्राथम्यात्. जन्मप्राथम्यसन्देहेसुखदर्शनप्राथम्यात्। कृत्स्नुबाहतत्त्वम् ॥

यमक .। पु० सयमे । व्रते ॥ न० शब्दालङ्कारे । तल्लक्षणंयथा । अर्थेसत्यर्थभिन्नानांवर्णानांसापुनः श्रुतिः । यमकपादतद्भागगतंस्थितत्वात्यनेकताम् ॥ वर्णवृत्तविशेषे । यथा । नगणमनुहिलघुकुरु । फणिभणितयमकमिति ॥ यथा । विषमतरविषमधर । प्रहरमपिनविरमपि ॥ त्रि० यमजे ॥

यमकालिन्दी । स्त्री० सञ्ज्ञायाम् । सूर्यपत्न्याम् ॥

यमकीट. । पुं० कीटविशेषे । घुघुरे ॥

यमकोटि .। स्त्री० पुरीविशेष ॥ सा चभद्राश्ववर्षस्थनिरक्षदेशेलङ्कायाः पूर्वंपृथिव्याश्चतुर्थभागेवर्त्तते ॥ यथा । लङ्काकुमध्येयमकोटिरस्याः प्राक् पश्चिमेरोमकपत्तनञ्च । अधस्ततः सिद्धपुरंसुमेरुः सौम्येऽथयाम्येवडवानलश्च ॥ कुवृत्तपादान्तरितानितानिस्थानानिषड्गोलविदोवदन्ति इति ॥

यमघण्ट :। पुं० ज्यौतिषयोगविशेषे ॥ यथा । रवौमघाचन्द्रदिनेविशाखाश्वार्द्राकुजेचन्द्रसुतेचमूला । जीवेऽनलर्क्षंभृगुजेविधिश्चहस्तार्कजौस्या- यमघण्टयोगः ॥

यमज :। त्रि० समकालीनैकगर्भजातसन्तानद्वये ॥

यमदग्नि: पुं० ऋचीकमुनिपुत्रे । परशुरामपितरिमुनिविशेषे ॥

यमदूतक :। पुं० कृतान्तचरे ॥ काके ॥

यमदूतक :। पुं० वायसे । यमस्य चरे ॥

यमदूतिका । स्त्री० अम्लिकायाम् । तिन्तिडीवृक्षे ॥ विशेषत . क्षारभूमौप्रायशदायमदूतिका ॥

यमदेवता । स्त्री० भरणीनक्षत्रे ॥

यमद्रुम :। पुं० शाल्मलिवृक्षे ॥

यमद्वितीया। स्त्री० कार्त्तिकशुक्लद्वितीयायाम् ।

यमधार .। पुं० पार्श्वद्वयधारयुक्तास्त्रविशेषोद्विधाराखांडा० इ० भा० ॥

यमन :। पुं० यमे ॥ न० बन्धने ॥ उपरती ॥

यमनिका । स्त्री० जवनिकायाम् । व्यवधायकवाससि । तिरस्करिण्याम् ॥ यमयति । यम० । ल्युट् । स्वार्थेकन् ॥

यमपत्नी । स्त्री० धूमोर्णायाम् विजयायाम् ॥

यमप्रिय । पुं॰ वटवृक्षे ॥
यमभगिनी । स्त्री॰ यमुनायाम् ॥
यमभट । पुं॰ यमदूते ॥ चरेयमभटाः शठाः । कपटविग्रहैषूद्भटानिविद्यतवीवचसवनचाधिकारीमयि । चइन्तुशिवसुन्दरीचरणचारुपङ्केरुहस्खलन्मधुसुधासवसमपिवमृनआनीतरे ॥
यमराट् । पुं॰ यमभे । यमे ॥ यमेनसयमिनराजते । राजृ॰ । क्विप् ॥
यमराजः । पुं॰ यमे ॥
यमलम् । न॰ युग्मे । युगले ॥ द्वियिसि ॥
यमलपत्रकः । पुं॰ अश्मन्तकवृक्षे ॥ कोविदारवृक्षे ॥
यमलार्जुनका । पुं॰ श्रीकृष्णे ॥
यमली । स्त्री॰ चोटीद्वये । शाटीद्वये ।
यमलेखकः । पुं॰ चित्रगुप्ते ॥ यमस्यलेखकः ॥
यमवान् । त्रि॰ सयमिनि ॥
यमवाहन । पुं॰ महिषे ॥
यमव्रतम् । न॰ पृथ्वीपतेर्धर्मविशेषे ॥ यथा । यथायम. प्रियद्वेष्यौप्राप्तेकालेनियच्छति तथाराज्ञानियन्तव्याः प्रजास्तद्धियमव्रतम् ॥
यमस्वसा । स्त्री॰ यमुनायाम् । कालिन्द्याम् ॥ दुर्गायाम् ॥ यमस्यस्वसा ॥
यमानिका । स्त्री॰ अजमोदायाम् ॥
ब्रह्मदर्भायाम् ॥ यमेनचमिति । अन॰ वुन् ॥
यमानी । स्त्री॰ यमानिकायाम ॥
यमान्तकः । पुं॰ शिवे ॥ यमस्यअन्तकः ॥
यमी । त्रि॰ संयमविशिष्टे ॥ यमवति
यमी । स्त्री॰ यमुनायाम् ॥
यमुना । स्त्री॰ कालिन्द्याम् । सूर्यतनयायाम् । यमजसरि ॥ यच्छति । यमउपरमे । अजियमिशीङ्भ्यश्च उनन् ॥ दुर्गायाम् ॥ यथोक्तं देवीपुराणे । सङ्गमाद्यमनाद्वापिदेवीविभाव्यते । यमस्यभगिनीयातायमुनातेनसामतेति ॥
यमुनाजनकः । पुं॰ सूर्ये ॥
यमुनाप्रभव । पुं॰ तीर्थविशेषे ॥
यमुनाभित्. दृ॰ । पुं॰ बलभद्रे ॥
यमुनाभ्राता । पुं॰ कृतान्ते । यमने । यमे । यमुनायाः भ्राता ॥
यमेरुका । स्त्री॰ दण्डढक्कायाम् ॥
ययातिः । पुं॰ नहुषात्मजे पुराणप्रसिद्धेनृपतेनाहुषे ॥ यस्यायश्लोकः । यत्पृथिव्याव्रीहियवंहिरण्यंपशवः स्त्रियः । नदुह्यन्तिमनःप्रीतिंपुंसः कामहतस्यमे ॥
ययातिपतनम् । न॰ भौमतीर्थविशेषे ॥
ययोः । पुं॰ महादेवे । मोक्षमार्गे ॥ बाहुल्यनिर्देशा॰ । यायोः किदूर्द्धे च

तिर्द्दे : ॥

ययु : . पुं० अश्वमेधीयतुरगे ॥ तुरङ्गमे । स्त्री ॥ याति । याप्रापणे योर्हर्यस्यु : । यर्हि । अ० यस्मिन् अर्थे । यदार्थे ॥ यस्मिनकाले । अनद्यतनेर्हिलन्यतरस्यां ॥

यव ' । पुं० स्वनामप्रसिद्धे शूकधान्ये । मितशूके ॥ यवस्तुमितशूक स्यान्नि : शूकोतियव स्मृत : । तोक्मस्तहत्सहरितस्तत . स्यल्पश्चकीर्त्तित . ॥ यव कषायोमधुर शीतलोलेखनोमृदु । व्रणेषुतिलवत्पथ्योरूक्षोमेधाग्निवर्द्धन ॥ कटुपाकोऽनभिष्यन्दीस्वर्योवलकरो गुरु ' । बहुवातमलोवर्ण्य : स्थैर्यकारोचपिच्छिल ' ॥ कण्ठत्वगामयश्लेष्मपित्तमेद ' प्रणाशन . । पीनसश्वासकासोरुस्तम्भलोहिततृट्प्रणुत् ॥ अस्मादल्पयवोन्यूनस्तोक्मोन्यूनतर स्मृत ॥ षड्भिर्गौरसर्षपै परिमितेपरिमाणविशेषे ॥ सर्षपा: षड्यवोमध्यस्तृतियमूलं ' । मध्यानस्थूलीनापिसूक्ष्मोयवोभवतीत्यर्थ ॥ अपिच । जालान्तरगतेभानौयच्छाणुदृश्यतेरज । तैश्चतुर्भिर्भवेल्लिक्षाल्लिक्षाषड्भिस्तुसर्षप ' ॥ षट्सर्षपैर्यवस्त्वेकोगुञ्जैकातुयवैस्त्रिभि ' ॥ धोति० यूयवेशा । युभिश्रणे । अ० अप्वा ॥ यद्वा ' यवस्यफलस्य व . अवयवेचप्राणोत्यर्थ । फलपाकाशुषामितिलुप् । लुपियुक्तवत् ॥ पृ० यत्कृते ॥ कुन्दयवे ॥ यव सदृशबीजत्वात् ॥ अङ्गुलिस्थयवाकाररेखाविशेषे ॥ यथा । तज्जनीमूलसम्भूतौयवौपुत्रार्थदौकमात् । मध्यमायांयवश्चैवाङ्गुष्ठेऽपूर्वे धनप्रद : ॥ अपिच । मध्यमायायद्यियवोदृश्यतेचसुशोभन । तदान्नसञ्चितद्रव्यप्राप्तोप्यङ्गुष्ठकेयवे ॥ अस्यापिचक्रमहूष्ठे यवपूर्वा दृश्यते । तदापितामहाद्दौनाभजित लभतेधनम् ॥

यवक । पुं० शूकशून्ययवे ॥

यवक्यम । त्रि० यवभवने "वितस्थे चे ॥ यवानाभवन क्षेत्रम् । यवयक्केतियत् ॥

यवक्षार । पुं० यवाग्रजे । पाक्ये ॥ यवानाक्षार ॥ यवक्षारोलघु स्निग्ध . सुसूक्ष्मोवह्निदीपन । निहन्तिशूलवातामश्लेष्मश्वासगलामयान् ॥ पाण्डुर्शोग्रहणीगुल्मानानाहप्लीहहृदामयान् ॥ सोराष्ट्र० भा० प्रसारे ।

यवचोर । पुं० चिक्कसे । यवचूर्णे ॥

यवगण्ड : । पुं० यूनोगण्डस्थव्रणविशेषे । युवगण्ड ॥ ०(*)०

यवज ' । पुं० यवक्षारे ॥ यवान्जाय॥

यवज्योऽव्रम् । न॰ तवचीरे ॥
यवतिक्ता । स्त्री॰ लताप्रभेदे । महातिक्तायाम् । दृढपादविसर्पिण्याम् । सूक्ष्मपुष्पायाम् ॥
यवतैलम् । न॰ यवचूर्णादियुक्तपक्वतैलविशेषे ॥ यथा । यवचूर्णार्द्धकुडव मञ्जिष्ठार्द्धपलेनतु । तैलप्रस्थमतस्तु र्धकाञ्जिकेसाधितोजयेत् ॥ ज्वरदाहमहारोगमङ्गानाञ्चाप्रहर्षणम् ॥
यवद्वीप । पु॰ सप्तखण्डात्मके॰जम्बुद्वीपविशेषे ॥
यवन । पुं॰ देशविशेषे ॥ वेगाधिकाश्वे ॥ गोधूमे ॥ गर्जरद्रव्ये ॥ तुरुष्के ॥ सुदाम्न . पितरिनृपान्तरे ॥ जातिविशेषे । यथाते:पुत्रस्य तुर्वसोर्वंशे ॥ यथोक्तं मात्स्ये । यदोस्तुजातायदवस्तुर्वसोर्यवना सुता । द्रुह्योस्तुतनयाभोजाअनोस्तुम्लेच्छजातय ॥ पुरोस्तुपौरवोवंशोयत्रजातोसिपार्थिवद्गुति ॥ मुनिविशेषे ॥ यथा । जातंदिनद्वयतीवसिष्ठश्चास्त्रीचगर्गोयवनोदशाहम् । जन्माद्यमासकिलभागुरिश्च चोरेविवाहेमिचकर्णवेधे ॥ त्रि॰ वेगिनि ॥
यवनद्विष्टः । पुं॰ गुग्गुलौ ॥
यवनप्रियम् । न॰ मरिचे ॥
यवनाचार्य्यः । पुं॰ ज्योतिःशास्त्रकर्त्तरिमुनिविशेषे ॥
यवनानी । स्त्री॰ यवनानांलिप्याम् ॥ इन्द्रवरुणेत्यादिना॰ नुगागमोङीष् च ॥
यवनारि । पुं॰ श्रीकृष्णे ॥
यवनाल । पु॰ देवधान्ये । जूर्णाव्हये । बीजपुष्पिकायाम् । जुवार॰ बाजरा॰इ॰भा॰ ।
यवनालज । पुं॰ यवक्षारे ।
यवनिका । स्त्री॰ जवनिकायाम् ।
यवनी । स्त्री॰ यवनस्त्रियाम् ॥ यवनस्यस्त्रीजातेरितिङीष् ।
यवनेष्ट । पुं॰ लशुने ॥ राजपलाण्डौ ॥ निम्बे ॥ पलाण्डौ ॥ न॰ सीसके ॥ मरीचे ॥ गृञ्जने । सलगम॰इ॰भा॰प्र॰ ॥
यवनेष्टा । स्त्री॰ खर्जूर्याम् ॥
यवफल : । पुं॰ वंशीत्वक्सारे ॥ यवइवफलान्यस्या ॥ मांस्याम् ॥ कुटजे ॥ प्लक्षवृक्षे ॥
यवमध्यम् । न॰ चान्द्रायणप्रभेदे ॥
यवमय । त्रि॰ यवस्वविकारे ॥ यवस्यायामितिमयट ॥
यवलास । पुं॰ यवक्षारे ॥
यवशाकम् । न॰ वास्तूकशाके । बथुवा॰इ॰भा॰प्र॰ ॥ प्रायशोयवमध्येस्याद्यवशाकमितस्ततः ॥
यवशूक : । पुं॰ )
यवशूकज : । पु॰ )यवक्षारे ॥
यवसम् । न॰ घासे . गवादादनीयतृणे

॥ यौति॰ यूयते वा । युमिश्रणे ऽमिश्रणे च । अरियुभ्यां किदित्यसच् । संज्ञापूर्वकत्वान्नवृद्धिः ॥

यवसुरम् । न॰ यवजातसुरायाम् ॥

यवागूः । स्त्री॰ यवद्रव्यविशेषे ॥ षड्गुणजलपक्वघनद्रवद्रव्यविशेषे । आबायाम् ॥ यथा । यवागूः षड्गुणे तोये संसिद्धा घनसिक्थिका । पृथग्द्रव्यैस्तु विरचैः सयुक्ता ज्वरिणे हिता ॥ यवागूर्दीपनी लघ्वी हृद्याग्नी वस्तिशोधनी ॥ श्रमग्लानिहरी पथ्या ज्वरे चैवातिसारके ॥ यौति॰ यूयते वा यु॰ । स्युमंचिभ्यो ऽन्युजागूजक्नुचक्रुत्यागूच् ॥

यवाग्रजः । पुं॰ यवक्षारे । यवादग्रजायते स्म । जनी॰ । पञ्चम्यामिति डः ॥

यवानः । त्रि॰ वेगिनि ॥

यवानिका । स्त्री॰ अजमोदभेदायाम् । अजवायन॰ इ॰ भा॰ । यवान्याम् ॥ दुष्टो यवः । इन्द्रवरुणेति॰ ङीषानुकौ । ततः स्वार्थे॰ स्वार्थेवा कन् ॥

यवानी । स्त्री॰ यमान्यामोषधौ । यवानिकायाम् ॥ अस्या नामानि गुणाश्च । यवानिको ग्रगन्धा च ब्रह्मदर्भा ऽजमोदिका । सैवोक्ता दीप्यको दीप्यस्तथा स्याद्यवसाह्वया ॥ यवानीपाचनी रुच्या तीक्ष्णोष्णा कटुका लघुः । दीपनी च तथा तिक्ता पित्तला शुक्रशूलहृत् ॥ वातश्लेष्मोदरानाहगुल्मप्लीहकृमिप्रणुत् ॥ दुष्टो यवः । स्वार्थे॰ इन्द्रवरुणेति सूत्रस्थ यवाद्दोष इति वार्त्तिकात्॰ यवशब्दस्यानुगागमस्ततो ङीष्च । अयमेवास्या दोषो यदुत यवत्वजातेरभावेपि तदाकारानुकृतिरिति ॥

यवानीशाकम् । न॰ यवान्याः शाके ॥ यवानीशाकमाग्नेयं रुच्यं वातकफप्रणुत् । उष्णं कटु च तिक्तञ्च पित्तलं लघु शूलहृत् ॥

यवापत्यम् । न॰ यवक्षारे ॥

यवाम्लजम् । न॰ सौवीरके ॥

यवासः । पुं॰ यासे । दुःस्पर्शायाम् । रोदन्याम् । दुरालभायाम् । जवासा॰ इ॰ भा॰ ॥ खदिरे ॥ यौति । यु॰ वदतन्यज्ञीति॰ आस ॥

यवासकः । पुं॰ यवासे ॥ स्वार्थेकः ॥

यवासशर्करा । स्त्री॰ यवासरसघटितशर्करायाम् । सुधामोदके । तवराजे ॥

यवासा । स्त्री॰ गुण्डासनीतृणे ॥

यवाह्वः । पुं॰ यवक्षारे ॥

यविष्ठः । त्रि॰ कनिष्ठे ॥ अयमेषामतिशयेन युवा । अतिशायनइतीष्ठन् । स्थूलदूरेति॰ यणादिलोपः गुणौ ॥

यवीयान् । त्रि॰ अतितरुणे ॥ कनिष्ठे ॥ अयमनयोरतिशयेन युवा ।

दिश वन विभज्योपपदेन यशो सुना-
मितीयसुन् । अथ तद्वयुवेष्वादि
नाय यादिति. यगु गौ ॥
यवोत्थम् । न० सौवीरके ॥
यवास । त्रि० यवक्वे ॥ इत्यमाभय
मश्चेत्म् । यवयवकाणप्रिकाद्वत ॥
यवेभ्योहितवा । खलयवेतियत् ॥
पु० मासे ॥ वैश्यक्षे ॥
यशःपटह । पुं० ढक्कायाम् । महा
राजमगाणसमयेश्वयस्य० यशो
सकाशात्पापराज्यस्यस्वकीयत्वस्
चनायताड्यमानवाद्यस्यचढोल०इ
तिख्यातस्यैकतोवान्तीयस्यनाम्नि
॥ यश ख्यापक पटह । शाक
पार्थिवादि ॥
यश शेष: । पुं० मरणे ॥ त्रि०
मृते ॥
यशदम् । न० यसदे ॥
यश: । न० सुख्यातौ, कीर्त्तौ । सम
ज्ञायाम् ॥ दानादिप्रभवाकीर्त्तिः
शौर्यादिप्रभवंयश: । इतिमाधवी-
। अतएवयश: कीर्त्त्योर्भेदोदृश्यते ।
यश : कीर्त्तिपरिभ्रष्टोजीवन्नपिन-
जीवतीतिक्वचित्प्रयोग. धर्मनि
मित्ताजीवतोलोकश्लाघारूपाप्रसि-
द्धिर्यश: ० मृतस्यख्याति कीर्त्ति
रितिकेचित् । तन्नसाधु । कीर्त्ति
स्तेन्यपदूतिकेतिप्रयोगदर्शनात् ॥
अशूते० व्याप्नोति । अशूव्याप्तौस

ख्यातिच । यशोर्द्देवनेयुट् चेत्यसुन्०
प्रकृतेर्युड्गमश्च । विश्वतत्त्वे ॥
यशस्कर । त्रि० कीर्त्तिकारके । सु
ख्यातिजनके ॥ यश: करोति ।
कृञ्० । कृञोहेत्विति टे टौ ॥
यशस्करी । स्त्री० विद्यायाम् । टित्वा
न्ङीप् ॥
यशस्य । त्रि० यशस्करे ॥ यशसे हि
ते ॥ यशसोर्निमित्ते ॥ यशसोनि
मित्तंसयोगउत्पातोवा । गोद्व्य-
च्खादिनायत् ॥
यशस्या । स्त्री० जीवन्त्याम् ॥ ऋद्धि
नामौषधौ ॥
यशस्वान । त्रि० यशस्विनि ॥
यशस्वी । त्रि० यशोविशिष्टे । कीर्त्ति
मति । यशोऽस्यस्य । अस्मायामेधा
स्रजोविनिरितिविनि . ।
यशस्विनी । स्त्री० वनकार्पास्याम् ॥
यवतिक्तायाम् ॥ महाज्योतिष्मत्या
म् ॥ कीर्त्तिमत्याम् ॥ पलङ्क पु-
र: ख्यायानाडार ॥ यथा । यश
स्विनीभङ्खवर्णापिङ्गलापूर्वदेश-
गा । याम्यभागस्यमूर्धादिपादाङ्गुष्ठा
न्तमाश्रिता ॥
यशोद: । पु० पारदे ॥ त्रि०यशोदा
तरि ॥
यशोदा । स्त्री० नन्दपत्न्याम् ॥ यशो
ददाति । देङ्पालने । आतश्चेतिक:
। यशोददातिवा । डुदाञ् । ।

आतङ्गतिच : ॥

यशोधन । त्रि॰ स्वयशोरक्षके । य शोधनानांप्रियशोगरीय : ॥

यशोधरेय : । पुं॰ बाहुले । शाक्यमुने : पुत्रे ॥

यशोवती । स्त्री॰ मेरोश्चक्रपाटाख्यो-र्ध्वमेखलायांईशानदिशि॰ईशानपुर्याम् ॥ यथोक्त श्रीमृगेन्द्रसंहितायाम् । ज्वलल्ललाटदृग्दग्धस्मरस्तत्र यशोभृत । पुरीयशोवतीसर्वरत्नमारुद्रसेविता ॥ ज्वललाटतीयेना ग्न्यादग्धीकामकालीयेन॰यतएवतथाविधसकलजगदरिविनाशाद्॰-यशोभृतर्द्दशाननाथस्यसर्वरत्ननिर्मितारुद्रै सेविताच॰यशोवतीनाम पुरीस्थथ : ॥ ( * )

यष्टव्य : । त्रि॰ यज्ञेषु यजनीये ॥

यष्टि : । पुं॰ ध्वजदण्डे ॥ पुं॰स्त्री॰ हारलतायाम् ॥ भार्ग्याम् ॥ मधुयष्ट्याम् ॥ शस्त्रभेदे । दण्डे । लगुडे ॥ तन्तौ ॥ यजे : क्तिन्॰-क्तिज्वा ॥

यष्टिक : । पुं॰ जलकुक्कुटे ॥ दण्डे ॥

यष्टिका । स्त्री॰ मौनगोधिकायाम् । वाप्याम् ॥ लगुडे । यष्ट्याम् । छडी॰इ॰भा॰ ॥ हारभेदे ॥ मधुयष्ट्याम् ॥ स्वार्थेक : । इत्व : ॥

यष्टिपश : । पुं॰ लगुडयाष्टिषि । यष्टिश्चादवी । छडीबरदार॰इ॰भा॰

। लठैत॰इतिच ॥

यष्टिमधु । न॰ यष्टिमधुकायाम् ॥

यष्टिमधुका । स्त्री॰ क्लीतकी । मधुयष्टिकायाम् । मुलहठी॰इतिख्यातौषधी ॥ यष्टि : मध्विवशाखा : । कप् ॥

यष्टीतिक । त्रि॰ याष्टीके । लठैत॰इ॰भा॰ ॥ यष्टिर्हेतिर्यस्यस ॥

यष्टी । स्त्री॰ यष्टिमधुनि ॥ यष्टीहिमागुरु स्वादीचक्षुष्याबलवर्णकृत् । सुस्निग्धाशुक्रलाकेश्यास्वर्यापित्तानिलास्त्रजित् ॥ व्रणशोथविषच्छर्दितृष्णाग्लानिक्षयापहा ॥ वह्वादित्वात्पक्षे ङीष् ॥

यष्टीकम् । न॰ यष्टिमधुनि ॥

यष्टीपुष्प . । पुं॰ पुत्रजीववृक्षे ॥

यष्टीमधु । न॰ ⎫
यष्टीमधुकम् । न॰ ⎬ यष्ट्याम् । मधु-
यष्टीमधूकम् । न॰ ⎭ यष्टिकायाम् ॥

यष्टा । पुं॰ यजमाने । यागकर्त्तरि ॥ यजति । यजदेवपूजासङ्गतिकरणदानेषु । तृच् ॥

यष्ट्याह्वयम् । न॰ मधुयष्ट्याम् ॥

यसदम् । न॰ रङ्गसदृशे । रीतिहेती जस्तइतिभाषा ॥ यसदंतुवरं तिक्तं शीतलंकफपित्तहृत् । चक्षुष्यंपरममेहानूपाण्डुश्वासंचनाशयेत् ॥

यस्क : । पुं॰ मुनिविशेषे ।

यक्ष : । त्रि॰ महति ॥ यास्कनैन ।

या० । शिवयज्ञजिह्वे लि० यन्०धा तोर्ड्खोऽकुगागमश्च ॥ अन्येतु०यज शिर्जकारस्यश्चकारोनिपात्यतद्रत्याहुः ॥ यजमाने ॥

या । स्त्री० याचायाम् ॥ चासौ ॥ धू सिने ॥ त्यागे ॥ वारणे ॥ यौगे ॥ स मञ्चायाम् ॥ याने । यानम् । यो० सम्प्रदाद्दित्वात्क्लिप ॥

याच : । पु० देवसर्ग विशेषे ॥

याग ।पु०देवतोद्देशेनद्रव्यत्यागे।यज्ञे॥ तत्रश्रौताग्निकृत्यहविर्यज्ञाः सप्त यथा । अन्याधानम्० तदेशाग्निहो त्रम् । १ । दर्शपौर्णमासौ । २ । पिण्डपितृयज्ञः । ३ । आग्रयणम् । ४ । चातुर्मास्य । ५ । निरूढ पशुबन्ध । ६ । सौत्रामणि । ७ । श्रुत्यार्ताग्निकृत्यपाकयज्ञा . सप्तय था । औपासनम । १ । वैश्वदेव । २ । स्थालीपाक । ३ आग्रयण म् । ४ । सर्पबलि । ५ । ईशान बलि । ६ । अष्टकान्वष्टका । ७ श्रौताग्निसप्तसंस्थायथा । सोमया ग ० सप्तवाग्निष्टोम : । १ । अत्य ग्निष्टोम : । २ । उक्थ्य । ३ । षोडशी । ४ । वाजपेय । ५ । स द्विविध ० सत्या० कुरु च । अतिरा त्र । ६ । अप्तूर्याम । ७ उत्त रक्रमतोऽश्ववीयथा । महाव्रतम् । १ । सर्वतोमुखम् । २ । राजसूय । ३ । पौण्डरीकम् । ४ । अभि जत् । ५ । विश्वजित् ६ । अश्व मेध . । ७ । बृहस्पतिसव : । ८ । आङ्गिरस । ९ । अमनान्यष्टादश । १० । इत्यादिश्रौतसूत्रम ॥ गन्धादिनादेवपूजायाम् ॥ गन्ध पुष्पादिनादेवपूजायागोभिधीयते ॥ इज्यतेऽनेनायबा । यजदेवपूजास ङ्गतिकरणदानेषु । घञ् ॥ यजनवा । भाववचनाश्चेतिभावेघञ ॥

यागमण्डप. । पुं० म०यजनगृहे ॥ या गायमण्डप ॥

याचक . । चि० वनीयके । याचनकी । मार्गणे । अर्थिनि । याञ्चाकर्तरि ॥ याचति । टुयाचृयाञ्चायाम् । ण्वुल्तृचावितिण्वुल् ॥ तृणादपिल घुस्तूलस्तूलादपिचयाचक । वायु नाकिन्ननीतोऽसौकिस्मिन्प्रार्थनश ङ्कया ॥ जगत्पतिर्हियाचित्वाविष्णु र्वामनतागत । कोन्योऽधिकतरस्त स्येयोर्थीयातिभलाघवम् ॥

याचन् । चि० याचकी ॥ याचति । टु याचृ० । लट शतृ ॥ मुखभङ्गस्वरोदी नोगात्रस्वेदोमहद्भयम् । मरणेयानि चिन्हानितानिचिह्नानियाचत. ॥

याचनम् । न० याञ्चायाम. ॥ याचे र्भावेल्युट ॥

याचनक । चि० याचकी ॥ याचति टुयाचृ० । ण्वु : । स्वार्थेकन ॥

याचना । स्त्री॰ याञ्चायाम्॥ याचेश्‌ रादित्व्यन्तात्‌॰ ग्यासश्रन्थोयुच। टाप्‌ ॥

याचमान : । त्रि॰ याचके ॥ यथा । मवीनदीनभावस्य याचमानस्यमानिन॰ । वचोजीवितयोरासीत्पुरोनि. सरणेरण : ॥ इतिवररुचि . ॥

याचित ॰ । त्रि॰ प्रार्थिते । टुयाचृ॰ । क्त : । न॰ याचनवृत्तौ । मृते । मृतन्तुयाचित प्रोक्तमितिमनु :॥

याचितकम् । न॰ याञ्चालब्धे ॥ याचितेनर्निवृत्तम्‌ । अपमित्ययाचिताभ्याककनाविति‌कन्‌ ॥ प्रत्यर्पणीयत्वेनयाञ्चयायत्प्राप्तमलङ्काराद्दिवस्तुतत्‌याचितकम्‌ । कार्यानन्तर वस्तुस्वामीयत्पुनर्गृह्णाति॰ तदित्यर्थ : । मगनीको॰ इ॰ भा॰ ॥

याचिष्णु : । त्रि॰ याचके ॥

याच्यम्‌ । त्रि॰ याचितुंयोग्ये ॥ टुयाचृ॰ । ऋहलोर्ण्यत्‌ । यजयाचेति कुत्वनिषेध : ॥

याञ्चा । स्त्री॰ याचने । अभिशस्तौ । याचनायाम्‌ । अर्थनायाम्‌ । भिक्षायाम्‌ । अर्दनायाम्‌ । मांगना इ॰ भा॰ ॥ याचनम्‌ । टुयाचृ॰ । यजयाचेतिनङ् ॥

याज : । पुं॰ वाजि । प्रसादने । अन्ने । भक्ते ॥

याजक : । पुं॰ याज्ञिके ॥ राजकुञ्जरे ॥ ऋत्विजि ॥ यथा । आग्नीध्राद्यधनैर्वार्याऋत्विजोयाजकास्ततेइत्यमर । यजमानेनधनैर्वार्या : धनानिदत्त्वा॰ इष्टसम्पादनायव्रियन्तेप्रार्थ्यन्ते येआग्नीध्रप्रभृतयस्तेऋत्विजोयाजकाश्चकथ्यन्ते ॥ बहुयाजकग्रामयाजकयोर्निन्दायथा । अब्राह्मणास्तुषट्‌प्रोक्ताऋषिभिस्तत्त्वदर्शिभि : । आद्योराजभृतस्तेषांद्वितीय ॰ क्रयविक्रयी ॥ तृतीयोबहुयाज्य : स्याच्चतुर्थोग्रामयाजक : । पञ्चमस्तुभृतस्तेषांग्रामस्यनगरस्यच ॥ अनादित्यांस्तुय. पूर्वांसादित्यांस्चैवपश्चिमाम्‌ । नोपासीतद्विज: सन्ध्यांसषष्ठोऽब्राह्मण: स्मृत :॥ यजति । यज॰ । ण्वुल्‌ ॥ पुरोहिते ॥

याजनम्‌ । न॰ ब्राह्मणस्यकर्मविशेषे । यागक्रियाकारणायाम्‌ । यागकराणाइ॰भा॰ ॥ षड्विधिस्तुतुष : कुर्याद्याजनाध्यापनंजपम्‌ । होममन्तर्जलादीनितस्याप्यफलंभवेदितियाज्ञवल्क्य ॰ ।

याजमानम्‌ । न॰ यजमानस्यभावकर्मणो : ॥ युवादित्वादण्‌ ॥

याजि : । पुं॰ यष्टरि ॥ यागकर्त्तरि ॥ यागे ॥ यजति । यज॰ । ब-

सिवपियजिराजीत्यादिना॰ङ्वञ् । प्रार्थनायाम् ।
याजुष . । त्रि॰ यजुर्वेदसम्बन्धिनि ॥
याज्ञवल्क्य । पुं॰ यजुःशाखाविशेषस्यप्रवर्त्तके॰मुनिविशेषे । गङ्गाराघौ । योगेशे । योगीश्वरे ॥ यज्ञस्यवल्का ' वक्ता॰यज्ञवल्का . । यज्ञवल्कस्यगोत्रापत्यम् । गर्गादिभ्योयञ् ॥
याज्ञसेनी । स्त्री॰ द्रौपद्याम् ॥ याज्ञसेनस्यापत्यंस्त्री । अण । ङीप् ॥
याज्ञिक : । पुं॰ याजके । आध्वर्यवादियज्ञकर्मकुशले ॥ यज्ञकाण्डद्रष्टरिऋषौयज्ञमधीते॰वेत्तिवा । क्रतूक्थादोतिठक् ॥ कुशे । रक्तखदिरे । पलाशे अश्वत्थे ॥
याज्ञिक्यम् । न॰ याज्ञिकानां॰धर्मे॰ आम्नायेच । छन्दोगौक्थिकेति॰॰ ञ्य : ॥
याज्य: । त्रि॰ याजनीये । यजमाने । यष्टुंयोग्य : । यज॰ । ऋहलोर्ण्यत् । यजयाचेतिकुत्त्वनिषेध . । याजयितुंयोग्योवा ॥ न॰ यागलब्धधनादौ ।
याज्या । स्त्री॰ यज्ञाङ्गसाधने । होतृपाठ्यायामृचि ॥ इज्यतेऽनया । यज॰ । ऋहलोर्ण्यत् । यजयाचरुचप्रवचर्चश्चेतिकुत्त्वाभाव ' ।
यात : । त्रि॰ गते ॥ यत्प्रापणे । ङ्गः ॥ न॰ अङ्कुशवारणे ॥ पादकर्मयत प्रोक्तयातमङ्कुशवारणमिति हलायुध ' ॥
यातना । स्त्री॰ प्रगाढायांवेदनायाम् । कारणायाम् । तीव्रवेदनायाम ॥ यतनिकारोपस्कारयो ' । च स्वाणिजन्तात्॰ण्यासश्रन्थो तियुच् ।
यातयाम । त्रि॰ जीर्णे । पक्वे सतिप्रहरादिव्यवहिते॰भोदनादौ॰ शैत्यप्राप्ते ॥ यथा । ' यातयामंगतरसंपूतिपर्युषितञ्चयदिति ॥ यातोगतोयामउपभोगकालोयस्य । परिभुक्तोज्झिते । भुक्तात्युज्झिते ॥ यथा । दर्भा : कृष्णाजिनमन्त्रा ब्राह्मणाहविरग्नय : । अयातयामान्येतानिनियोज्यानिपुन . पुन ' ॥
यातायातम् । न॰ गमनागमने ।
यातु । न॰ राक्षसे ॥ पुं॰ काले । याति । या॰ । कमिमनिजनिगाभायाहिभ्यश्चेतितु ' । अर्त्तेर्चादि । त्रि॰गन्तरि । पथिके ॥
यातुघ्न . । पुं॰ गुग्गुलौ ॥
यातुधान : । पुं॰ राक्षसे ॥ यातूनिरक्षांसिदधाति॰पुष्णाति॰स्वजातिपोषकत्वात् । डुधाञ्॰ । बहुलमन्यत्रापीतियुच् । ल्युटिति क्युट्वा ।
याता । पुं॰ सारथ्यादौ । स्त्री॰ प

याम्यांपश्चकदास्त्रभं गुरुदिन प चन्द्र शौदश्यपि । पुष्योरोहिणिकारवि- भं गुरुजीषष्ठीमनु : पश्चिमे•सौम्ये विल्कुजभानवीयमकरौदिग्वैहितौ यातिथि•रितिकश्चित् ॥

याथातथ्यम् । न• यथातथभावे ॥ ब्रा ह्मणादित्वात्ष्यञ् ॥ यथातथा ॥ स्वार्थे ष्यञ् ॥

याथार्थ्यम् । न• सत्यार्थतायाम् । वास्तवार्थे ॥ यथा भवस्तद्दृष- तोजन्मनिरीक्षयतद्विष . । स्वप- तोजागरूकस्ययाथार्थ्यं वेदकस्तवे- तिसुरे ' क्रताविष्णो : स्तुति : । कीविदकोवेत्ति । विदोलटोवेतिण- लादेश : ॥

याद पति : । पुं• समुद्रे ॥ वरु णे ॥ यादसांपति : ॥

यादईश : । पुं• समुद्रे ।

यादव. । पुं• केशवे । श्रीकृष्णे ह- र्षौ ॥ न• गोमहिष्यादौ । याद बन्धने ॥ यदोरपत्यम् । अण् ॥ यदूनामिदम् । तस्यदमित्यण् ॥

यादवी । स्त्री• दुर्गायाम् ॥ यदूना मियम् । अण् ॥

याद : । न• जलजन्तौ । यातिवेगेन । या• । असुन् बाहुलकात्• दुक् ॥ यद्वा । याति । क्विप् । या मत्तिघद्• । असुन् । यांदस्यतिवा । दसुउपक्षये । क्विप

यादसांनाथ : । पुं• वरुणे ॥

यादसांपति ' । पुं• समुद्रे ॥ वरुणे ॥ तत्पुरुषेकृतीत्यलुक् ॥

यादृश : । त्रि• यादृशि । ऐसा• इ• भा• ॥ यद्वद्दृश्यते• यमिवपश्य तिवा । दृशिर• । त्यदादिष्विस्यत्र क्वोपिवाच्यइतिक्स: । आसर्वनाम्न । इत्यत्वे तिदीर्घ : ॥

यादृच्छिक : । त्रि• यदृच्छयाप्राप्ते । स्वप्रयोजनसङ्कल्पशून्ये ॥

यादृक् । त्रि• यथाविधे । यादृशी ॥ यमिवपश्यति• यद्वायदृश्यते । दृशिर्• । त्यदादिषुदृशइतिक्विन् । आसर्वनाम्नइत्यात्वम् ।

यादृश : । त्रि• यादृशि ॥ त्यदादिषु दृशोनालोचनेकञ्चेतिकञ् । पू र्ववद्विग्रहादिकम् ।

यादोनाथ : । पुं• समुद्रे ॥

यादोनिवास : । न• जले ॥

यानम् । न• युग्ये । पत्रे । रथादिवाह ने ॥ गतौ । शत्रोरास्कन्दने । वि- जिगीषोररिम्प्रति यात्रायाम् ॥ यथा । परस्यचक्रयश्रीत्वास्वस्यहितं निरीक्ष्यच । रात्रायामनुकारस्य मित्याहुर्नयकोविदा : । यानच । या• ल्युट् ॥ यान्त्यनेनवा । करणेतिल्युट् ।

यानपात्रम् । न• निष्पद्यानविशे- षे । वहित्रके । बोहित्थे । वहने ।

पोते । अश्वाजकृतिसागान्यजगभा
षाप्रसिद्धे । सभुद्रशाग्ने ॥
यानपात्रकम् । न० यानपात्रे ॥
यानमुखम् । न० रथादे पुरोभागे ।
धुरि । बोढृबत्सभस्थाने ॥ यानस्य
मुखम्० पुरोभाग ॥
यापकम् । त्रि० प्रापके ॥
यापनम् । न० वर्तने ॥ कालक्षेपे ॥
निरसने । निरासे ॥ यातेर्ण्यन्ता
ल्ल्युट् । अर्तिह्रीव्यादिनापुगाग
म . ॥
यापित । त्रि० अपसारिते ॥ प्रस्था
पिते ॥
यापा । स्त्री० जटायाम ॥
याप्य : । त्रि० यापनीये ॥ क्षेपणीय
कालादौ ॥ निन्दिते । गर्हिते ॥
याप्यतेऽस्मा । या० । ण्यन्तात् ।
अचोयत् ॥ क्वाचित्के ॥ व्याधिविशे
षे ॥ यथा । साध्यायाप्याअसाध्या
श्च व्याधयस्त्रिविधा . स्मृता ।
सुखसाध्य कष्टसाध्यो द्विविध
साध्यउच्यते॥यापनीयस्तुतविद्यात्
क्रियाधारयतेहिताम् । क्रियायान्तु
निवृत्तायासद्योयस्तुविनश्यति ॥
प्राप्ताक्रियाधारयतिसुखिनयाप्यमा
तुरम् । प्रपतिष्यद्विवागारस्तम्भोय
थ नयोजित . ॥ साध्यायाप्यत्वमा
यान्तियाप्याश्चासाध्यतांतथा । घ्नन्ति
प्राणानसाध्यास्तु नराणामक्रियाव

ताम ॥ अक्रियावतांचिकित्सारहि
तानाम् ॥
याप्ययानम् । न० शिबिकायाम् । पाल
की० हि० भा० । मञ्चापाया० हि०
गौ० दे० भा० ॥ याप्यैरधमैर्यान
म् । याप्यस्याधमस्यग्यायानम् ॥
याभ . । पुं० न० मैथुने ॥
याम । पुं० दिवसस्य० रात्रेश्च०
चतुर्थभागैकभागे । प्रहरे ॥ याति ।
या० । अर्तिस्तुसुहुस्रुक्षिमन् ॥ क्षय
मे ॥ उपरतिमात्रे । यमे ॥ यमनम्
। यम . समुपनिविषुचेतिपक्षेघञ् .
यामकौ । पुं० २ पुनर्वसौ . ॥
यामघोषा । पुं० कुक्कुटे ॥ यामेघोषो
स्य ॥
यामघोषा । स्त्री० यन्त्रविशेषे । याम
नाल्याम् । घट्याम् । घडी० हि०
भा० ॥
यामतूर्य्य । प्रहरावसानसूचकेवाद्
नीययन्त्रे ॥ यामस्यतूर्य्य ॥
यामदग्न्य । पुं० परशुरामे ॥
यामनादी । पुं० कुक्कुटे ॥
यामनाली । स्त्री० नाल्याम् । यामघो
षायाम् ॥
यामनेमि . । पुं० शचीपतौ । इन्द्रे ॥
यामलम् । न० युगले ॥ तन्त्रशास्त्रवि
शेषे ॥ तल्लक्षणयथा । सृष्टिश्चज्यो
तिषाख्याननित्यकृत्य प्रदीपनम् ।
क्रमसूत्रंवर्णभेदोजातिभेदस्तथैवच

। युगधर्म्मसङ्ख्यातो यामलस्याष्टलक्षकम् ॥ ततषड्विधम् यथा आदिब्रह्मविष्णुरुद्रगणेशादित्यभेदतः । षड्विध यामलप्रोक्तंशाराशोमक्रमसम्मतम् ॥ तथाहि ॥ यामला षट्चसङ्ख्याता खचादादावादियामले । द्वाविंशच्चसहस्राणिचयस्मिंश्चद्दानिच ॥ द्वितीयेब्रह्म सञ्ज्ञेतु द्वात्रिंशतिसङ्ख्यया । सहस्राणिशतान्यशतान्येवकथितानिच ॥ २ ॥ तावत्सङ्ख्यासहस्राणिशतानिपरिसङ्ख्यया । विंशतिश्चतथासंख्याश्लोकानिविष्णुयामले ॥ ३ ॥ कालसङ्ख्यासहस्राणिवेदसङ्ख्याशतानिच । पञ्चपर्ष्ठिस्तथा श्लोका कनिष्टे रुद्रयामले ॥ ४ ॥ नवश्लोकसहस्राणित्रयोदशशतानिच । द्वाविंशतिस्तथाश्लोका गणेशयामलेऽभवे ॥ ५ ॥ रविसङ्ख्यासहस्राणि आदित्याख्येतु यामले ॥ ६ ॥

यामती । स्त्री॰ रात्रौ ॥

यामाता । पुं॰ जामातरि ॥

यामार्द्धम् । न॰ प्रहरार्द्धे ।

यामि॰ । स्त्री॰ स्वसरि । भगिन्याम् ॥ कुलस्त्रियाम् ॥ याति । या॰ । बाहुलकान्मिः ॥ आस्याम ॥ रात्री ॥

यामिकभट : । पुं॰ प्रहरिके । चौकीदार॰ इतिभाषा ॥

यामित्रम् । न॰ लग्नात्सप्तमेभवने ॥

यामित्रवेध । पुं॰ विवाहादौवर्ज्जनीयेवेधविशेषे ॥ यथा । लग्नाच्छुभाच्छुत . क्रूरा सौम्यावसप्तमेयदि । तदायामित्रवेधः स्याद्विवाहतश्च वर्जयेत् ॥ मुहूर्तचिन्तामणौतु । लग्नाच्चन्द्रान्मदनभवनगेखेटेनस्यादिहपरिणयनम् । किंवावाणाशुग ५५ मितलवगेयामित्रस्यादशुभकरमिदम् ॥ किवेति । यदाधिष्ठितराशेर्नवमांशमारभ्य॰ वाणाशुग५५मितलवगे॰ पञ्चपञ्चाशन्मितनवांशगे चन्द्रे लग्नेवायामित्र सूक्ष्म स्यात् । यथा । मेषे पञ्चमनवांशेभौमोस्ति॰ तदा(तु)तुलायापञ्चमनवमांशस्थचन्द्रोनिषिद्ध । अन्येष्टौनवांशास्तुलायांशुभाः एवंविधसूक्ष्मयामित्रमशुभकरस्यादिति । विशेषमाह गुरुः । चन्द्रात्सप्तमराशिस्थास्त्याज्या सूर्यादयोग्रहाः ॥ दामित्रावलवन्तश्चेद्र्वलहीनानतादृशाः ॥

यामिनी । स्त्री॰ रात्रौ ॥ भीतिहेतु स्वाश्लिन्दितायामायस्याः । हनूपतापः॰ ग्रादित्तिनिर्दोयामिन्नि : । ङीप् ॥ हरिद्रायाम् ॥

यामिनीपति : पुं॰ चन्द्रमसि ॥ यामिन्या : पति : ॥ कर्पूरे ॥

यामी । स्त्री॰ आस्याम् ॥ यमसम्बन्धिन्याम् ॥ दक्षिणदिशि ॥

यामुनम् । न॰ चक्षुष्ये । सौवीराञ्जने ॥ यमुनायाभवम् । अण् ॥ यद्वा । यमुनायाइदम्॰तद्दच्छ्रामत्वात् ॥ देशविशेषे ॥ कुम्भल्याकारेप्रस्तरे ॥ यमुनाजले ॥ यथा । त्रिभि सारस्वतोयमम्रभिस्त्वथयामुनम् । नामं द्वदशभिर्मासैर्गाङ्गमर्थैवजौर्यैति ॥ त्रि॰ यमुनातीरवासिनि ॥ यमुना सम्बन्धिनि ॥

यामुनेष्टकम् । न॰ सीसके ॥

यामेय । पु॰ भागिनेये ॥

याम्य । पुं॰ अगस्त्यमुनौ ॥ चन्दने ॥ यम॰यम् । यमाच्चेतिण्य ॥ न॰ भरणीनक्षत्रे ॥

याम्या । स्त्री॰ अवाच्याम् । दक्षिणस्यादिशि ॥ भरणीनक्षत्रे ॥

याम्यायनम् । न॰ दक्षिणायने । याम्यायनेहरौसुप्ते सर्वकर्माणिवर्जयेत् ॥ याम्येअयनम् ॥

याम्योद्भूत । पु॰ शीतालवृक्षे ॥

यायजूक । पुं॰ इज्याशीले । भूयो भूयोयागकर्त्तरि ॥ पुन पुन भृशंवायजते । यजदेवपूजादौ । क्रियासमभिहारे॰इतियङ् । यजजपदशायङइत्यूक ॥

यायावर । पु॰ अश्वमेधीयाश्वे ॥ जरत्कारुमुनौ त्रि॰ अश्वहममणशीले ॥ पुन पुनरतिशयेमयाति॰तच्छील । या॰ । यश्वयङइतियाते र्वरच् ॥

याथी । पु॰ वैरिणमुद्दिश्यजिगमिषौ राज्ञि ॥ याति । या॰ । यश्चादित्वाणिनि । आतोयुक्॥विनध्वरे ॥

याव । पु॰ अलक्ते । लाक्षारसे ॥ यौति॰यूयतेवा । यु॰ । अच्॰दृष्टो रव्वा । यवएव । प्रज्ञाद्यण् ॥ पाकप्रभेदे ॥

यावक । पु॰ कुल्माषे अलक्तके । यौति । यु॰ । कृञादिभ्योवुन् । तत । प्रज्ञाद्यण् ॥ यद्वा । यवस्यविकार । अण् । यवादिभ्यइतिस्वार्थेकन् ॥ यावान्ने ॥

यावज्जीवम् । न॰ यावदायुषि । जीवनपर्यन्ते ॥

यावत् । अ॰ कार्त्स्न्ये ॥ अ धारणे ॥ प्रशसायाम् । परिच्छेदे ॥ माने ॥ अधिकारे ॥ सम्भ्रमे ॥ पक्षान्तरे ॥ अवधौ ॥ यत्परिमाणमस्य । तद्वितादितिःइत्यवचनेनान्त्योऽनुनासिकपितद्वितास्थापिता । तेन॰डावतु ॥

यावान् । त्रि॰ परिमाणविशेषे । जितना॰इतिभा॰ ॥ यत्परिमाणमस्य । यत्तदेतेभ्य परिमाणेवतुप । आसर्वनाम्नइत्यात्वम् ॥

यावतिथ । त्रि॰ यावतापूरणे ॥ तस्यपूरणेडट् । वतोरिथुक् ॥

यावदर्थ । त्रि॰ दैन्यनिर्वाहाधिकस्य छाद्गुन्धे ॥ यावदर्थसेवार्थीयस्य । स

ष्ठमपद्लोपीसमास । यावताम
र्थेदिङ्निर्बाहीयेन•इत्यञा ॥

यावन । सिह्लके । नागोरीगंदइति
प्रसिद्धधूपे ॥ यवनदेशेभव । तत्र
भवइत्यण् ॥ याव्यतेवा । यौतेर्थ्यं
न्तात्ल्युड्वा । जुवार•यौन्हरीइति
ख्याते धान्यप्रभेदे ॥ यावनोलोहि
त : स्वादुर्लोहित ' श्लेष्मपित्तजि
त् । अवृष्यस्तुवरोरूच क्लेदकृत्क
थितोलघु ' ॥

यावनाल । पुं• धान्यभेदे । वृत्त
तण्डुले । दीर्घनाले । दीर्घशरे । छेचे
त्री । इक्षुपत्रके । यावने । जुवार•
इ•भा• ॥

यावनालशर : । पुं• शरविशेषे । न
दीजे । दृढत्वचि । वारिसम्भवे । ख
रपत्रे । जोहुरली•इतिभाषा ॥

यावनाली । स्त्री• यावनालशर्करायाम् । हिमोत्पन्नायाम् । हिमशर्करायाम् ॥

यावशूक । पुं• यवक्षारे ॥ इतिरत्न
माला ॥

यावस । पु• न•घासे ॥ तृणसङ्घा
ते ॥ यूयते । यु• । वहियुभ्याणि
दित्यासच् ॥

याव्य । त्रि• मिश्रणीये ॥

याशोधरेय . । शाक्यमुनिपुत्रे ॥

याष्टीक : । त्रि• यष्ट्यायोधिनि । य-
ष्टिप्रहरणमस्य । ष्टिहेतिकै ॥ यष्टि ' प्रहरणमस्य ।
शक्तियष्ट्योरीकक् । स्त्रियांङीपि•
याष्टीकी ॥

यास : । पुं• दुरालभायाम् । यवासे ॥
यास स्वादु सरस्तिक्तस्तुवर ' शी
तलोलघु ' । कफमेदोमदभ्रान्ति
पित्तास्रकुष्ठकासनुत् ॥ तृष्णाविसर्प
वातास्रवमिज्वरहर स्मृत : । य
वासस्यगुणैस्तुल्या बुधैरुक्तादुराल
भा ॥ यसनम् । यसुप्रयत्ने । भावे
घञ् ॥ यासोऽस्त्यस्य । अर्श आद्यच्
॥ याति । बाहुलकादसच् .

यासा । स्त्री• मदनशलाकापक्षिणि

यासापद्मम् । न• विकसितोत्पले ॥
सद्योविकसितपद्म यासापद्म प्रचक्ष
ते ॥

यास्क ' । पुं• मुनिविशेषे ॥ यस्क-
स्यापत्यम् । शिवादिभ्योण् । बहु
त्वे• यस्का : ॥

यियक्षमाण : । त्रि• यष्टुमिच्छति ॥
यजतेः सन्नन्ताच्छट शानच् ॥

यियक्षु : । त्रि• यष्टुमिच्छौ ॥ यजे .
सन्नन्तादुप्रत्यय . ॥

यियासत् । त्रि• यातुमिच्छति ॥ या
तेसन्नन्ताच्छट : शत्रादेश : ॥

यियासित . । त्रि• जिगमिषिते । या
तुमिष्टे ॥ याते : सन्नन्तात्कर्मणि
क्त ' ॥

यियासु : । त्रि• यातुमिच्छौ ॥ या-
ते : सन्नन्तादुप्रत्यय : ॥

युक्तम् । न॰ हस्तचतुष्टये ॥ चि॰युक्ते । अपृथग्भूते । मिलिते ॥ औपयिके । न्यायगतद्रव्ये ॥ युक्तिसिद्धे । यथार्थे ॥ स्थिते ॥ नियुक्ते ॥ अवहिते । अप्रमत्ते । निरस्तीतमसि । समाहितचित्ते । ईश्वरायेवैतानिकर्माणिनममफलायेत्येवमभिप्रायवति ॥ परिमिते ॥ पुं॰अभ्यस्तयोगे ॥ यथा । योगीतुद्विविध प्रोक्तोयुक्तयुञ्जानभेदत । युक्तास्यसर्वदाभानचिन्तासहकृतोपर ॥ युज्यतेस्म । युजिर्योगेक्त ॥

युक्तदण्ड । पु॰ यथापराधदण्डे॰नृपे ॥ उद्वेजयतितीक्ष्णेनमृदुनापरिभूयते । दण्डेनन्पतिस्तस्माद्युक्तदण्ड प्रशस्यते ॥

युक्तरसा । स्त्री॰ रास्नायाम् । काटाआम्रलो॰इ॰गौ॰दे॰भा॰ । एलापर्णीम् ॥ युक्तोरसोयस्या . ॥

युक्ता । स्त्री॰ एलानी॰इ॰गौ॰दे॰भा॰ ॰प्र॰वृत्तविशेषे ॥

युक्ति . । स्त्री॰ न्याये ॥ कार्यकारणयोरभेदसाधने॰न्यायोयथा । मृदिसदात्मनाघटेप्रागसति॰मृदियतोनस्यात्॰तस्मात्॰कार्यकारणयोरभेदएव । कार्यकारणयोरन्यत्वे॰-एककारणज्ञानात्॰सर्वकार्यज्ञानमस्यादित्यादि: । योगे । योजनायाम् ॥ रोकव्य-हारे ॥ धर्मशास्त्रविरोधेतुयुक्तियुक्तोविधि स्मृत ॥ अनुमाने ॥ अपूर्वार्थप्राप्तौ ॥ सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्येषुषड्गुणेषु ॥ शास्त्रदीपिकायायुक्तिशब्दस्य॰प्रमाणपरतयाव्याख्यानात्॰प्रत्यक्षादिषट्सुप्रमाणेषु ॥ योजनम् । युजौ स्त्रियाक्तिन् । नाट्यालङ्कारविशेषे ॥ तल्लक्षणंयथा । युक्तिरर्थावधारणमिति ॥ उदाहरणयथा । यदिसमरमपास्यनास्तिमृत्योर्भयमितियुक्तमितोन्यत . प्रयातुम् । अथमरणमवश्यमेवजन्तो किमितिमुधामलिनयथ ' कुरुध्वमिति ॥

युग ' । पुं॰ रथहलाद्यङ्गे । जूआ॰इतिभाषा ॥

युगम् । न॰ युग्मे ॥ हस्तचतुष्के ॥ वृद्धिनामौषधे ॥ कृतादिषुचतुर्षु ॥ देवानाद्वादशसहस्रवत्सरेण॰चतुर्युगंभवति । मनुष्यमानेनचतुर्युगपरिमाण विंशतिसहस्राधिकचित्वारिंशल्लक्षम् । ४३२०००० ॥ तत्रसत्ययुगस्यमानम्१७२८००० वर्षा । त्रेतायुगस्यमानम् । १२९६००० वर्षा . । द्वापरयुगस्यमानम् । ८६४००० वर्षा: । कलियुगस्यमानम् । ४३२००० वर्षा ॥ तेषांभारतवर्षवर्तित्वं यथा । चतुर्युगं

भारतेवर्षेयुगानिमुनयोऽब्रुवन् । कृतन्त्रेतद्वापरश्चकलिश्चेतिचतुर्युगम् ॥ चत्वार्याहुः सहस्राणिवर्षाणान्तुकृतंयुगम् । तस्यतावतच्छतीसन्ध्यासन्ध्यांशश्चतथाविधः ॥ इतरेषुससन्ध्येषुससन्ध्यांशेषुच त्रिषु । एकापायेनवर्त्तन्ते सहस्राणिशतानिच ॥ यदेतत्परिसङ्ख्यातमादावेवचतुर्युगम् । एतद्द्वादशसहस्रं देवानांयुगमुच्यते ॥ इतिमनु । तथाविष्णुपुराणे । चत्वारित्रीणिद्वेचैककृतादिषुयथाक्रमम् । दिव्याब्दानांसहस्राणियुगमाहुःपुराविदः ॥ तत्प्रमाणैःशतैःसन्ध्यापूर्वातत्राभिधीयते । सन्ध्यांशकस्तुतत्तुल्योयुगस्यानन्तरोहिसः ॥ सन्ध्यासन्ध्यांशयोरन्तर्यःकालोमुनिसत्तम । युगाख्यःसतुविज्ञेयःकृतत्रेतादिसञ्ज्ञितः ॥ इति ॥ योजनम्० युज्यतेवा । युजिर्योगे । घञ् । कुत्वम् । सञ्ज्ञापूर्वकत्वान्नगुणः । रथयुगेतिनिपातनाद्वा ॥

युगकीलः । पुं० युगकीलके ॥

युगकीलकः । पुं० युगकाष्ठस्यकीलके । शम्यायाम् । जुएकीकील० इ० भाषा । स्वार्थेकन् ॥

युगक्षयः । पुं० महाप्रलये ॥ युगानांक्षयोयस्मिन् ॥

युगन्धरः । पुं० यत्ररथयुगकाष्ठमासज्यतेतस्मिन्काष्ठे ॥ कूबरे ॥ युगवोढृबन्धनकाष्ठम्धारयति । सञ्ज्ञायांभृतृवृजिधारीतिखच् । अरुर्द्विषदजन्तस्येतिमुम् ॥ पर्वतविशेषे ॥

युगपत् । अ० एकदा । एकस्मिन्न० काले । युगन्यस्मिन्काले । यु० ॥ गपतक्प्रत्ययः ॥ यद्वा । युगपद्यतेस्मिन् । पद्यगतौ । क्विप्प्रत्ययः ॥

युगपत्रः । पुं० कोविदारे । रक्तकाञ्चनारवृक्षे ॥ युगपत्रमस्य ॥ युग्मपर्णश्चमार्गः ॥

युगपत्रकः । पुं० कोविदारे । रक्तकाञ्चनद्रुमे । युगयुग्मपत्रमस्य ॥

युगपत्रिका । स्त्री० शिशपावृक्षे ॥

युगपार्श्वगः । पुं० दमनकालेकाष्ठादेपितकाष्ठवाहे । प्रष्ठोहि ॥ युगस्यस्कन्धकाष्ठस्यपार्श्वंगच्छति । अन्येष्वपीतिडः ॥

युगलम् । न० युगे । युग्मे ॥ युज्यते । युजिर्योगे । वृषादिभ्यश्चित् । न्यङ्क्वादित्वात्कुत्वम् ॥ युगंलातिवा । आतइतिकः ॥ युगंयुग्ममस्यास्तीति । सिध्मादित्वाल्लच् ।

युगलाख्यः । पुं० बर्बुरवृक्षे । त्रि० युग्मनामके ॥

युगांशकः । पुं० वत्सरे ॥ युगविभाजके ॥

युगादिः । स्त्री॰ तिथिविशेषेषु ॥ यथा । वैशाखमासस्यसिताहतीया॰ न वम्यसौकार्त्तिकशुक्लपचे । नभस्य मासस्यचकृष्णपचे बयोदशीपञ्चदशी चमाघे ॥ एतायुगादय प्रोक्ता' स्वाध्यायवर्ज्जयेद्बुध । महापुण्य प्रदाश्चैताटत्तस्याक्षयकारिका ॥ विशेषमाश्मारद । कार्त्तिकेशुक्ल नवमीयादि कृतयुगस्यच । चेता दिर्माधवेशुक्लहतीयापुण्यसम्मिता- ॥ कृष्णापञ्चदशीमाघेद्वापरादिरुदी रिता । कल्यादि स्यात्कृष्णापचे नभस्येचवयोदशीति ॥ कालविशे षे ।। युगस्यबादि ॥

युगान्त । पुं॰ प्रलये ॥ युगशेषे ॥

युग्मम । न॰ द्वन्द्वे । युगले । युगे । जोडा॰ जोडी॰ इ॰ भा॰ ॥ युज्यते । युजिर्योगे । युजिरुजि तिजांकुश्चेतिमक् ।। द्वयो स्त्रोकयो रन्वये ।।

युग्मपत्र । पुं॰ रक्तकाञ्चने कोविदा रे ॥ न॰ युगलपर्णे ॥ युग्मप त्रमस्य ।

युग्मपत्रिका । स्त्री॰ शिंशपावृचे ।।

युग्मपर्ण । पु॰ कोविदारे ।। सप्त पर्णवृच ॥

युग्मफला स्त्री॰ इन्द्रवचिर्भिंड्याम् ॥ वृश्चिकाल्याम् ॥ गन्धिकायाम् ॥ यथादयम् । न॰ युग्मतिथिपूज्यता।

याम् ॥ द्वयोर्मान्यत्वे ॥

युग्य । पु॰ प्रासङ्ग्ये । शाकटे ' युगादीनावोढरि ॥ यु॰ रथाद्यङ्ग वह तितद्वहतिरथयुगप्रासङ्गमितियत् ॥ न॰ याने ॥ हस्त्यश्वादियाहने ॥ युज्यते । युजिर॰ । युग्यञ्चपत्रेइति क्यबन्तोनिपातित ॥ युगायहितो वा । उगादिभ्योयत् युगमर्हति वा । दण्डादित्वाद्यत् ॥

युङ्गी । पु॰ वर्णसङ्करजातिविशेषे । यथा । गङ्गापुत्रस्यकन्यायांवीर्येणवेश धारिण । बभूववेशधारीचयुङ्गी युङ्गीप्रकीर्तित । इ॰ ब्र॰ वै॰पु॰ ॥

युक्॰ग्॰ । त्रि॰ समाधिमति । युक्ते ॥ युज्यतेसमाधत्ते । युजस माधौदैवादिक । क्विप्चेतिक्विन् ॥

युङ् । पु॰ योगकर्तरि । मेलनकर्त्त- रि ॥ युनक्ति । युजिर्योगे । ऋत्विग् गादिनाक्विन् । युजेरसमासे॰ इ॰ नुम् । क्विन्प्रत्ययस्यकु । इतिन स्यकुत्वेन॰ सानुनासिकोङकार ॥

युजौ । पु॰ नित्यद्विवचनान्त ' ॰ अ श्विनीकुमारयो ॥

युजान । पु॰ सारथौ ॥

युञ्जान : । पुं॰ सारथौ ॥ विप्रे ॥ भावनासहकारेयसर्वज्ञेयोगिविशे- षे ॥ यथा । योगीतुद्विविध प्रो क्तोयुक्तयुञ्जानभेदत । युक्तस्यसर्व दाभानचिन्तासहकृतोऽपर ' ॥ इ॰

भा० प० ॥ युक्तश्चेति० योगभ्यासा वशत्वावगीकृत समाधिसमामाहि तोर्विभ७सिन्ति युक्तइत्युच्यते । च यनेविशिष्टयोगवत्वात्युक्तइत्युच्य ते । सर्वदेतिचिन्तासहकारविनेत्य र्थः । भानसर्वविषयाथाप्रत्यक्षम् अपरोयुञ्जान । विषयव्यावृत्त्यासा मससमाधिस्थ । अयञ्च । युञ्जान उच्यते । चिन्ताध्यानम्० तदेवका रणम्० तत्सहकारात्स्थूलसूक्ष्म- व्यवहितविप्रकृष्टानर्थानिमन प्रत्य क्षीकरोतीत्यर्थः । इतिसिद्धान्तमु- क्तावली ॥

युत् । च० कुत्सायाम् ॥

युतक । न० हस्तचतुष्टये ॥ त्रि० युक्ते । अपृथग्भूते ॥ पृथग्योगे ॥

युतकम् । न० संशये ॥ युगे । युग्मे ॥ नारीवस्त्राञ्चले । पटाञ्चले ॥ चलनार्थे । पादार्थे ॥ युक्ते ॥ यौतके ॥ स्त्रीवस्त्रप्रभेदे ॥ सूर्याये ॥ मैत्रीकरणे ॥ योनिसम्बन्धे ॥

युतयामित्रवेध । पुं० वेधविशेषे ॥ सयथा । पापात्सप्तमग शशीयदि भवेत्पापेनयुक्तोयवायत्रै नाशुविव र्जयेन्मुनिमितैदोषोप्ययकथ्यते । या मायाविपदोग्रहैसुतवध चौरेचरो- गागमोवैधव्यविवहेप्रतीचमरणं शूल चपुंस्त्वम्भं खि । अस्यापवादोयथा । तुङ्गस्थितोवानिजमन्दिरगोथपूर्णो मित्रर्क्षसौम्यग्रहगोथतदीक्षितोवा- यामित्रवेधविहितानपहत्यदोषान् दोषाकरः सुखमनेकविधं विधत्ते वृषककर्कटसि हकन्यामिथुनधनुर्मी- नतुलास्थे चन्द्रे शुभग्रहवीक्षितोवा ० युतयामित्रदोषोनास्ति ॥

युतवेध । पुं० वेधविशेषे । सयथा । चन्द्र करोतिरविणासहितोथ नाशभौमान्वित पतिविनाशकर सुचन्द्र । स्वर्भानुकेतुशनिभिस्तं- तिमादधातिनानासुखानिकविना- ग गुरुणावुधेन ॥

युधम् । न० आयोधने । जन्ये प्रधने मृधे । रणे युद्ध० लडाई० इ० भा० ॥ योधनम् । युसम्प्रहारे । भावेक्त ॥

युधरङ्ग । पुं० कार्त्तिकेये ॥

युधसार । पुं० घोटके ॥

युधाचार्य : । पुं० युधार्थमायुधविद्या प्रदेशके ॥

युत् । स्त्री० समिति । आजौ । सङ्ग्रामे । युद्धे ॥ योधनम् युध० । स म्पदादित्वात्क्विप् ॥

युधाजित: । पुं० कैकय्याभ्रातरि । भ रतमातुले ॥

युधान । पुं० क्षत्रिये ॥ युध्यते । युध० । युधिवुधिहश : किच्चेत्या नच् ॥

युधामन्यु : । पुं० नृपतिविशेषे ॥

न्द्रियार्थेषु नकर्मस्वनुषज्जते । सर्वसङ्कल्पसन्यासीयोगारूढस्तदोच्यते ॥

योगासनम् । न० ब्रह्मासने । ध्यानासने ॥

योगिदण्ड । पुं० वेत्रे ॥

योगी । त्रि० वसुरुद्रादित्यादिदेवताभक्ते ॥ हरिद्रुमाख्यपर्णे । ध्याननिष्ठे ।। निरतिशयज्ञानैश्वर्यादिशालिनि ॥ समाधिनिष्ठेऽन्तर्दृष्टौ ॥ परमहंसपरिव्राजके ॥ परवैराग्ययुक्ते ।। योगयुक्ते ॥ योगेनजिष्यसम्बन्धिनि ॥ योगारूढे ॥ सविविधोऽपरम : परमश्च । तत्रोत्पन्नतत्त्वज्ञानोऽनुत्पन्नजीवन्मुक्तिरपरम.। उत्पन्नतत्त्वज्ञानउत्पन्नजीवन्मुक्तिस्तुपरमोयोगीति ॥ सर्वे षोष्टे शरीरस्थे सुलिप्ते चन्दनेतथा । समताभावमायस्य सयोगीपरिकीर्तित.॥ आत्मौपम्येनसर्वत्र समंपश्यतियोर्जुन । सुखवायदिवा दु:खंसयोगीपरमोमत : ॥ योगोऽस्यास्ति । अतइनिठनावितीनि : कर्मयोगिणि ॥ यथा । योगिन कर्मकुर्वन्तिसङ्गं त्यक्त्वात्मशुद्धय इति ॥

योगिनी । स्त्री० योगयुक्तायानार्याम् ।। भगवत्या. सखीरूपासावरणदेवतासु । ता. कोटिविधा । तासांच तु षष्टि : प्रधाना. । तास्वष्टयोगिन्यो यथा । ततोष्टपत्रे ष्वब्जस्य पूजयेदष्टयोगिनी । शैलपुत्रींचण्डघण्टांस्कन्दमातरमेवच । कालरात्रिस्वपूर्वादिचतुर्दिक्षुप्रपूजयेत् ॥ चण्डिकामथकूष्माण्डींतथाकात्यायनींशुभाम् । महागौरींचाग्निकोणे नैरृत्यादिषुपूजयेत् ॥ कूलान्तर्योगिन । स्त्रीस्वविवक्षायामन्त्रेभ्यो ङी वितिमान्तलक्षणोङीप् ॥ पश्चात्व योगिनीचक्रम् ॥ मङ्गलादिषु । यथा मङ्गलापिङ्गलाधन्याभ्रामरीभद्रिका तथा । उल्कासिद्धिसङ्कटाचयोगिन्यो ष्टौप्रकीर्तिता : ॥

योगिनीचक्रम् । न० तिथिविशेषे दिग्विशेषावस्थिति योगिनीषु ॥ यथा । ब्रह्माणीसंस्थितापूर्वे प्रतिपन्नवमीतिथौ । माहेश्वरीचोत्तरेच द्वितीयादशमीतिथौ । स्थिताग्नेये चकौमारीतृतीयैकादशीतिथौ । नारायणीचनैरृत्येचतुर्थीद्वादशी तिथौ ॥ पञ्चम्यांचत्रयोदश्यांवाराही दक्षिणे तथा । षष्ठ्यांचैवत्रयोदश्यामिन्द्राणीपश्चिमे स्थिता ॥ सप्तम्यांपौर्णमास्यांचचामुण्डावायुगोचरे । अष्टम्यमावास्ययोश्चमहालक्ष्मीशगोचरे ॥ योगिनीगणमुख्येनैवगमनादि प्रकारयेत् ॥ अपिच । नवमीप्रतिपत्पूर्वे० वह्निरुद्रेग्निकोणके ।

अयोदशवर्षेशाख्ये॰ वेदादित्ये चमे ऽस्ति । चतुर्दशवर्षेपश्चात्॰प ूर्णि मासुनिमाकृते । द्वापरयोत्तरे दर्शा हमीशानेचयोगिना ॥ बालेशुभप्र दापूष्टे वांछितार्थप्रदायिनी ॥ इ च्छिर्या धनइन्ते चसम्म् खेस्त्युदायि नी ॥

योगीन्द्र । पुं॰ शिवे । योग पर मात्मचिन्तनम्॰ तद्वत्सुश्रेष्ठ ॥

योगीश । पुं॰ शिवे ॥ विष्णौ ॥ च न्ये योगिनोयोगान्तरायैर्हन्यन्ते॰ स्व स्वरूपात्प्रमाद्यन्ति॰ अयन्तुतद्रहि तत्वात्तेषामीश ॥ याज्ञवल्क्य मुनौ ॥

योगीश्वर .। पुं॰ शिवे ॥ योगिनामी श्वरः ॥ याज्ञवल्क्यमुनौ ॥

योगीश्वरी । स्त्री॰ दुर्गायाम् ।' यथा । योगिशक्तिद्योदेता ' सनकान्ता स्वपोवला' । तेषास्वामीतथायोगी ईश्वरीप्रभुपालना ॥ आत्मेन्द्रियम नादीनांसंयोगोयोगउच्यते । तेषां वायोजनादोगी योगेश्वर्येविवोधने तिदेवीपुराणम्

योगेश । पुं॰ याज्ञवल्क्ये ॥

योगेश्वर .। पुं॰ सदाशिवे ॥ सर्वज्ञे सर्वज्ञशक्तौभगवति । श्रीकृष्णे ॥ सर्वेषामणिमादिसिद्धिशालिना योगिनामीश्वर । सर्वयोगसिद्धौ नामीश्वर ॥

योगेश्वरी । स्त्री॰ वराटदेशस्थितायां महदुर्गायाम् ॥ वन्ध्याकर्कोटक्याम् ॥

योगेष्टम् । न॰ सीसके । नागे । सी- साङ्कितिप्रसिद्धे धातौ ॥ योगेधातु- सम्बन्धे इष्टम् । सप्तमीतिसमास ॥

योग्यम् । न॰ ऋद्धिनामौषधौ ॥ वृद्धि नामौषधौ ॥ पुं॰ पुष्यनक्षत्रे ॥ त्रि॰ प्रवीणे ॥ योगार्हे ॥ उपाये योग्येनार्थं कस्यमस्याज्जनस्य ॥ शक्ते ॥ युज्यते । युजिर॰ । ऋह लोर्ण्यत् ॥ यद्वा । योगायप्रभवति । योगाद्यच्च ॥ अभ्यासे ॥ यथा । अपर ' प्रणिधानयोग्ययामरुत प ञ्चशरीरगोचरानितिरघु ' । प्रणि- धानयोग्ययासमाध्यभ्यासेनवशमन यदितिसम्बन्ध .॥

योग्यता । स्त्री॰ वाक्यार्थज्ञानहेतौ । अर्थावाधे ॥ अग्निनासिञ्चेदिति नप्रमाणम्॰ योग्यताविरहात् ॥ भावेतल् ॥ शाब्दबोधकारणविशे षे ॥ सतुपदार्थानांपरस्परसम्बन्धे बाधाभाव ' । इतिसाहित्यदर्पण ॥ न्यायमते॰ तत्पदार्थेतत्पदार्थ वत्ता । यथा । पदार्थेतत्रतद्वत्ता योग्यतापरिकीर्तिता । एकपदार्थे ऽपरपदार्थस म्बन्धोयोग्यतावृत्यर्थ । तज्ज्ञानाभावाच्चवह्निनासिञ्चतो त्यादौनशाब्दबोध ॥ चमतायामि तिलोकप्रसिद्धि ' ।

योनाल . । पु॰ यवनाले । जूर्णाह्वये । देवधान्ये । जुन्हरी॰ जुवार॰ इ॰ प्र॰ धान्ये ॥

योनिः । पुं॰ स्त्री॰ आकारे ॥ कारणे ॥ तोये ॥ स्मरमन्दिरे । भगे । वराङ्गे । उपस्थे । रतिगृहे । जन्मवर्त्मनि । गर्भाधानस्थाने . तस्यलक्षणंयथा । शुभ कमठपृष्ठाभोगगजस्कन्धोपमोभग । वामोन्नतश्चेत्कन्याज . पुत्रजोदक्षिणोन्नत ॥ आखुरोमागूढमणि सुश्लिष्ट स हृत . पृथु । तुङ्गः कमलवर्णाभ शुभो अश्वत्थदलाकृति ॥ कुरङ्गखुररूपोयस्तु चुल्लिकोदरसन्निभ । रोमशोविवृतास्यश्च दृश्यनासोतिदुर्भग . ॥ शङ्खावर्त्तो भगोयस्याः सागर्भं मिहनेच्छति । चिपिट कर्पराकार किञ्चरोपदृदोभग ॥ वंशवेतसपत्राभोगजरोमोञ्चनासिक . । विकट . कुटिलाकारोलम्बगल्लस्तथाशुभ . ॥ अपिच । शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्तासाप्रकीर्तिता । तस्यास्तृतौयेत्वावर्तेगर्भशय्या प्रतिष्ठिता ॥ यौति । युमिश्रणे । वह्निश्रीतिनि ॥ प्रकृतौ ॥

योनिकन्दः । पु॰ योनिरोगविशेषे ॥

योनिकूट । पु॰ वैवाहिकविचारोपयोगिनि॰ योटकविशेषे । सयथा । तोयेशाश्विभयोस्तुरङ्ग उदितो बाताख्ययो कासरः पूर्वाभाद्रधनिष्ठयोस्तु गपतिर्यामान्त्ययो कुक्कुर । मैत्रोग्नोन्त्यभयोर्जलश्रवणयोः कीशोऽभिजिद्देवयोर्दिभ्रं ब्राह्मशशाङ्कयोरहिरपि ज्येष्ठानुराधर्क्षयो ॥ वातायु शिवमूलयोस्तु सरमा गौरर्यमोयान्त्ययोर्व्याघ्रश्चित्रविशाखयो फणिपुनर्वस्वोस्तु मार्जारक । आखु पित्रभगर्क्षयोस्तु कथितायोनिस्तुभानामियं वैरञ्चापितयोर्द्वयोरपि महत्पाणिग्रहेवर्जयेत् ॥ गोव्याघ्रं गजसिंहमश्वमहिषं श्वैणस्व बभ्रूरगं वैरं वानरमेषकञ्च सुमहत्तद्वद्विडालोन्दुरम् । लोकानां व्यवहारतो न्यदपिच ज्ञात्वा प्रयत्नादिदं दम्पत्योर्नृपभृत्ययोरपि सदा वर्ज्यं शुभस्यार्थिभि . ॥ एकयोनिषु सम्पत्तिर्दम्पत्यो सङ्गमे सदा । भिन्नयोनिषु मध्या स्यादरिभावोमचेत्तयो . ॥ अपवादश्च । योनेरभावेनोद्वाह कार्यं सतु वियोगदः । राशिवश्यस्य यद्यस्ति कारयेन्नतु दोषभाग् इति ॥

योनिज । त्रि॰ योनिनि सृतशरीरे ॥

योनिदेवता । स्त्री॰ पूर्वफल्गुनीनक्षत्रे ॥

योनिमुद्रा । स्त्री॰ देवतापूजायांप्रदर्शनीयाङ्गुलीरचितयोन्याकारमुद्रा

कारविशेषे ॥
योनिरोग । पु॰ भगन्दरे ॥
योन्यर्श । न॰ भगजातरोगविशेषे । कन्दसञ्ज्ञे ॥
योषा । स्त्री॰ अबलायाम् । नार्याम् ॥ योषति॰ योषयतिवा । युषसौत्र सेवायाम् । पचाद्यच् ॥ युष्यते॰ योष्यतेवा । घञ् ॥
योषित् । स्त्री॰ स्त्रीमात्रे । योषायाम् ॥ सात्त्रिविधा । यथा । योषितस्त्रि विधाब्रह्मन्पृथिव्या मूढचेतसाम् । साध्वीभोग्याच कुलटाता . सर्वाः स्वार्थतत्परा . ॥ परलोकभयात्सा ध्वीतथेहयशसात्मन । कामजेच्छा स्वकुरुतेभर्त्तुं स्नेहस्सन्ततम् १ ॥ भोग्याभोग्यार्थिनीशश्वत्कामजे छे ऽयवीवलम् । कुरुतेप्रतिसेवास्वनच भोग्याद्दृढंचयम् ॥ वस्त्रालङ्कारस भोगसुस्निग्धाहारमुत्तमम् । यावत् प्राप्नोतिसाभोग्यातावच्चयगाप्रिया ॥ २ ॥ कुलाङ्गारसमानारीकुलटा कुलनाशिनी । कपटात्कुरुतेसेवा स्वामिनोनचभक्तित. ॥ सदापुंयोग मांशसुमनसामदनातुरा । आहारा दधिकजारप्रार्थयन्तीनवनवम् ॥ जारार्थेस्वपतितातहन्तुमिच्छतिपुंश्च ली । तस्यांयो विश्वसेन्मूढोजीवन तस्यनिष्फलम् ॥ कथितायोषित · सर्वोत्तमाधममध्यमा · । स्वात्मा रामाविज्ञानन्तिमनसातानपण्डिता ॥ योषते युष्यतेवा । युष॰ । हसृ रुहियुषिभ्यइति ॥ अवध्या सर्व भूतानायोषित · इत्यतामिति ॥
योषिता । स्त्री॰ योषिति ॥ युषेर्णिज न्तात्कर्मणिक्त · ॥
योषित्प्रिया । स्त्री॰ हरिद्रायाम् ॥
यौक्तिक । पु॰ नर्मसचिवे । त्रि॰ युक्तियोग्ये ॥
यौगपद्यम् । न॰ एककालतायाम् ॥
यौगिक : । त्रि॰ योग्ये ॥ योगनित्यम र्हति । छेदादित्वाट्ठञ् ॥ प्रकृतिप्र त्ययोगलभ्यार्थंशाचके ॥ योगायप्र भवति । योगाद्यच्चेति॰ ठञ ॥ यो गरूढास्वरूढाश्चयौगिकाश्चेतितेत्रिधा वादितेयादिशब्दायौगिका : । अ- दित्याअपत्यमिति॰ कृदिकारादक्ति नइतिङीषन्तात्स्त्रीभ्योढगितिढक् प्रत्ययेनकेवलयोगार्थएव ॥
यौजनशतिक । त्रि॰ शतयोजनया- यिनि ॥ योजनानांशतम्॰ योजन शतम् । योजनशतगच्छति । ठञ् ॥ पु॰ आचार्ये । योजनशताद्भिगम नमर्हति । ततोभिगमनमर्हतीति अवक्तव्यमितिठञ् ॥
यौजनिक । त्रि॰ योजनमात्रयायि नि ॥ योजनगच्छति । योजनंगच्छ तीतिठञ् ॥
यौतकम् । न॰ यौतुके । परिणयनल

ख्ये यौधने ॥ युतकयोनिसम्बन्ध । तत्रभवम् । तत्रभवइत्यण् ॥ युत योर्वधूवरयोर्वा० इदम् । तस्येदमि त्यण् ॥

यौतवम् । न० द्रव्ये । परिमाणे । यौतेर्बाहुलकाद्भावे० कर्तरिवातुन् । यौतु यौधनम्० योधकोवा । तस्येदम । अण् ॥

यौतुकम् न० यौतके ॥

यौध । पु० योध । योधएव । स्वा-र्थिक प्रज्ञाद्यण् ॥

यौधिष्ठिर । त्रि० युधिष्ठिरसम्बन्धि नि ॥ सायौधिष्ठिरीसेनागाङ्गेयश रताडिता । प्रतिव्रतपाठशीलाना विशेषतनुतांगता ॥ युधिष्ठिरस्या यम् । तस्य इमित्यण् ॥

यौधिष्ठिरि । पुं० युधिष्ठिरात्मजे ॥ कुर्वादिण्य बाधित्वा० बाह्वादित्वा दिञ् । बहुत्वे० युधिष्ठिराः । यञञञइतिलुक् ॥

यौन । पुं० कन्यादानादिसम्बन्धे ॥ न० योनिसम्बन्धाधीनपापे ॥

यौवतम् । न० युवतीनांवृन्दे ॥ परि माणे० । युवतीनांसमूह । यौते शतन्तादुगितश्चेतिङीपि० यनद्वात्तादेरञित्यञ् ॥ लास्यभे दे ॥

यौवनम् । न० वयस्थाविशेषे । तारु ण्ये ॥ यूनोभावः । हायनांतेत्यण् अन्निितिप्रकृतिभाव ॥ कौमारप ञ्चमाब्दान्तपौगण्डदशमावधि । कै शोरमापञ्चदशाद्यौवनन्तुतत परम् ॥ नवयौवनलक्षणयथा । दरोद्भि न्नस्तनकिंचिच्चलाक्षमे दुरस्मितम् । मनागभिस्फुरद्भावनव्य यौवनमुच्य ते ॥ नव्ययौवनकारकमौषध यथा अश्वगन्धानागबल गुडमांसविधिवि धाम् । रूपभवेद्यथातद्वन्नवयौवनधा रिणाम् ॥ इति यवतिवृन्दे । युवतीनांसमूह । अवहियूनस्ति रिति० स्त्रीयुवतिश इ । तस्मा न्निवादित्वादणिवियत्विति० पुवद्भा वेऽन्निितिप्रकृतिभाव ॥

यौवनकण्टक । पु० न० युवगण्ड । वयस्फोटे ॥

यौवनलक्षणम् । न० लावण्ये । कुच ॥

यौवनाश्व । पुं० मान्धातरिनृपे ॥ यौवनाश्वोथमांधाताचक्रवर्त्यवनी प्रभु । सप्तद्वीपवतीमेक शशासा च्युततेजसा ॥ यावत्सूर्य उदेतिस्म यावच्चप्रतितिष्ठति । सर्वंतद्यौवना श्वस्यमांधातु क्षेत्रमुच्यते ॥ इति वह्निपुराणम् ॥

यौवनाश्वक । पुं० मांधातृनृपे ॥

यौष्माक । त्रि० युष्मदीये ॥ युवयो र्युष्माकंवाऽयम् । युष्मदस्मदोरन्य तरस्यांखञ्चेत्युक्तेः पक्षेऽण् । प्रकृतेर्युष्माकादेश ॥

यौष्माकीण । त्रि॰ युष्मत्सम्बन्धिनि । युष्मदीये । यौष्माके ॥ युवयोर्युष्माकंवाऽयम् । युष्मदस्मदोरितिखञ्तस्मिन्नणिचयुष्माकास्माकौ ॥

॰ * ॰

---

र । पुं॰ पावके । दहने ॥ तीक्ष्णे ॥ कामाग्नौ । रेफे ॥ लघुमध्ये ऽ।ऽ पु॰ न॰ ॥

रंहन् । त्रि॰ रममाणे ॥

रंह. । न॰ वेगे ॥ रमतेऽनेन । रमक्रीडायाम् । रमेर्हुक्चेत्यसुन् । हुगागमश्च ॥ रंहत्यनेनवा । रंहगतौ । असुन् अचैवंवदन्ति रहेरसुनासिद्धे॰ रहेरसुनि॰ रंहूतिमाभूदिति॰रमेरितिसूत्रम् । तथाच । स्यान्मध्योग्नचतुष्कंमहसोर हसस्तथेतिद्विरूपकोश । एवञ्च॰ रंह ' सङ्गोऽसुगाणां जगदुपकृतये नित्ययुक्तस्ययस्यतौतिप्रीतिप्रसन्नो न्वहमहिमरुचे सोऽन्वतात्स्यन्दनोवइतिपाठोऽनुप्रासरसिकानांप्रामादिकइति ॥ सवेगगतिवचनेस्य प्रयोग ॥ वेगाख्यगुणे ॥

रकार । पु॰ रेफाख्यवर्णे ॥ वासरूपविधिना॰ रात्कारप्रत्ययोपिभवति । रकारादीनिनामानिशृणवतो ममपार्वतीतिलिङ्गात् ॥

रक्त । पुं॰ बन्धूके ॥ लोहितवर्णे यथा । पाणिपादतलौरक्तौनेत्रान्तनिनखानिच । जिह्वाताल्वधरोष्ठौचसप्तरक्तोधनीभवेदितिसामुद्रिकम् ॥ कुसुम्भे । हिङ्गुले ॥ न॰ कुङ्कुमे ॥ ताम्रे ॥ प्राचीनामलके ॥ पद्मके ॥ सिन्दूरे ॥ हिङ्गुले ॥ रक्तचन्दने ॥ शरीरस्थसप्तधात्वन्तर्गतधातुविशेषे ॥ रुधिरे ॥ असृजि लोहिते । अस्रे । क्षतजे । शोणिते । कीलाले । लग्जे । रक्तत्॰ बू॰ भा॰ प्र॰ ॥ रक्तस्यस्वरूपमाह । यद्रसोयकृत्याततत्रजकपित्तत ॥ रागपाकस्वसम्प्राप्यसभवेद्रक्तसंज्ञक ॥ रक्तसर्वशरीरस्थ जीवस्याधारउत्तम . ॥ स्निग्ध गुरुचलस्वादुविदग्ध पित्तवद्भवेत् ॥ जीवस्याधारउत्तमइति । यतआह । जीवोवसति सर्वस्मिन्देहेतत्रविशेषत । वीर्येरक्तेमलेयस्मिन्क्षीणेयातिक्षयञ्चयात् इति ॥ वीर्येरक्तेमलेचशरीरारम्भके । वाग्भटोक्तपरिमाणमिते शुद्धे जीवोवसति॰ नतुदुष्टे प्रवृद्धे रक्तस्यावघोपदेशस्यवैयर्थ्यंप्रसङ्गात् । पित्तवद्भवेत्॰ अम्ल भवेदित्यर्थ ॥ रक्तस्यस्थानमाह । । यकृत्प्लीहा चरक्तस्यमुख स्थानंतयो , स्थितम् । अन्यत्रापिस्थितमतांरक्तानांपोष

र्भवेत् ॥ इति ॥ रक्तदोषनाशक मौषध यथा । ब्रह्मयष्टिफलं पिष्ट- वारिणानुलेपत । तेनघृष्ट रक्त दोष प्रणश्यतिनसंशय ॥ रज्- तिस्म॰ रज्यतेवा । रञ्जरागे । गत्य र्थेतित्त । कर्मणिक्तोवा ॥ त्रि॰ अनुरक्ते ॥ नील्यादिरञ्जिते ॥ लो- हिते ॥ क्रीडारते ॥

रक्तक । पुं॰ अम्लाने ॥ बन्धूके ॥ रक्तवस्त्रे ॥ रक्तशिग्रौ ॥ रक्तैर- ण्डे ॥ न॰ हिङ्गुले ॥ त्रि॰ अनुरा- गिणि ॥ विनोदिनि ॥ रक्तपुष्पत्वा त्॰ रक्त । स्वार्थेकन् ।

रक्तकन्द । पुं॰ विद्रुमे ॥ राजपला ण्डौ ॥ रक्तालौ ।

रक्तकन्दल । पुं॰ प्रवाले ॥

रक्तकमलम् । न॰ रक्तोत्पले ॥ कोक- नदे ॥

रक्तकम्बलम् । न॰ रक्तोत्पले ॥ यथा पाद्मे । रक्तकमलै कुमुदै पुष्पै कह्लारैरक्तकवजैरिति ॥

रक्तकरवीरक । पुं॰ रक्तप्रसवे । ग- णेशकुसुमे । चण्डीकुसुमे । भूत द्राविणि । रविप्रिये । लालकनेर॰ इतिभाषाप्रसिद्धे ॥

रक्तकाञ्चन । पुं॰ रक्तकोविदारद्रु- मे । चमरिके ॥

रक्तकाण्डा । स्त्री॰ रक्तपुनर्नवाया- म् ॥

रक्तकाष्ठम् । न॰ पतङ्गे ॥

रक्तकुमुदम् । न॰ रक्तकैरवे ॥

रक्तकुसुम । पुं॰ पारिभद्रे ॥ धन्वन- वृक्षे ॥

रक्तकेशर : । पुं॰ पारिभद्रे ॥ पुन्ना- गवृक्षे ॥

रक्तकैरवम् । न॰ रक्तकुमुदे ॥

रक्तकोकनदम् । न॰ रक्तोत्पले ॥

रक्तखदिर । पुं॰ रक्तसारे । बहुश- ल्ये । याज्ञिके ॥

रक्तगन्धकम् । न॰ बोले ॥

रक्तगुल्म । स्त्रीणांरक्तजगुल्मरोगे ॥ तस्यौषध यथा । द्विजयष्टीत्रिकटुक चूर्णंपीत हरेच्छिव । तिलक्वाथेन- संयुक्त रक्तगुल्म स्त्रियाहर ॥

रक्तघ्न । पुं॰ रोहितकवृक्षे ॥

रक्तघ्नी । स्त्री॰ दूर्वाविशेषे । गांठिया- दूर्वाइ॰गौ॰दे॰भा॰प्र॰ ॥

रक्तचन्दनम् । न॰ स्वनामप्रसिद्धेच न्दने । पत्राङ्गे । कुचन्दने । ताम्र सारे ॥ रक्तशीत गुरुस्वादुच्छर्दितृ- ष्णास्रपित्तहृत् । पित्तनेत्रहित वृष्य ज्वरव्रणविषापहम् ॥ रक्तश्वतत्च न्दनञ्च ॥ रक्तसारे ॥ रक्तचन्दनमि व । रक्तसारत्वात् ॥

रक्तचित्रक । पुं॰ क्षुपविशेषे । काले । कालमूले । दाहके । चि- त्राङ्गे । लालचिता॰इ॰गौ॰दे॰भा षाप्र॰ ॥

रक्तचूर्णम् । न० सिन्दूरे ॥ रक्तवर्णचूर्णमात्रे ॥

रक्तजन्तुक । पु० भूनागे ॥ रक्तवर्णजन्तुमात्रे ॥

रक्तजिह्व । पु० सिंहे ॥ त्रि० रक्तवर्णजिह्वायुक्ते ॥

रक्तझिण्टी । स्त्री० कुरुवकी ॥

रक्ततुण्ड । पु० शुकपक्षिणि ॥ त्रि० लोहितमुखयुक्ते ॥

रक्ततुण्डक । पु० भूनागे ॥

रक्तत्रपा । स्त्री० गोमूत्रिकायाम् ॥

रक्तत्रिवृत् । स्त्री० रक्तवर्णत्रिवृतायाम् त्रिपुटायाम् । ताम्रपुष्पिकायाम् ॥

रक्तदन्तिका । स्त्री० चण्डिकायाम् ॥ तत्स्थाने ॥

रक्तदला । स्त्री० नलिकायाम् ॥ त्रिविल्लिकायाम ॥

रक्तधातु । पु० गैरिके ॥ ताम्रे ॥

रक्तनाल । पुं० जीवशाके ॥

रक्तनासिक । पुं० पेचके ॥ त्रि० लोहितनासिकाविशिष्टे ॥

रक्तप । पुं० यातुधाने । राक्षसे ॥ रक्तपिबति । धा० । चालीतुपेतिक. त्रि० रक्तपानकर्त्तरि ॥

रक्तपट । पुं० बौद्धभिक्षुविशेषे ॥ साङ्ख्यभिक्षौ ॥

रक्तपत्रिका । स्त्री० नाकुल्याम् ॥ रक्तपुनर्नवायाम् ॥

रक्तपद्गी । स्त्री० समङ्गायाम् । क्षुद्रक्षुपविशेषे ॥

रक्तपद्म । पु० न० रक्तोत्पले । कोकनदे ।

रक्तपल्लव । पु० अशोकवृक्ष ॥ लोहितपत्रे ।

रक्तपा । स्त्री० जलौकायाम् ॥ डाकिन्याम् ॥ रक्तपिबति । धा० चालीतुपसर्गक. ॥

रक्तपाक्षी स्त्री० वृहत्याम् ॥

रक्तपाता । स्त्री० जलौकायाम् ॥

रक्तपाद । पु० शुकपक्षिणि ॥

रक्तपादी । स्त्री० लज्जालौ ॥ हंसपद्याम् ॥

रक्तपायी । स्त्री० रक्तपाशोके ॥

रक्तपायिनी । स्त्री० जलौकायाम् ॥

रक्तपारद । पुं० न० हिङ्गुले ॥

रक्तपिण्डम् न० जपापुष्पे ॥ द्र० शब्दरत्नावली ॥

रक्तपिण्डक : । पुं० रक्तालौ । रतालू० द्र० भा० ।

रक्तपित्तम् । न० रोगविशेषे ॥

रक्तपित्तहा पुं० रक्तवल्याम् ॥

रक्तपुच्छिका । स्त्री० ब्राह्मण्याम् । बाह्मनीतिप्रसिद्धजन्तुविशेषे ॥

रक्तपुनर्नवा । स्त्री० रक्तपुनर्नवाख्याके । मण्डलपत्रिकायाम् । रक्तकाण्डायाम् । रक्तपुष्पिकाया

कन्दे । यवनेष्टे ॥ रञ्जनस्य मधुर कटु कन्द नालमप्युपदिशन्ति कषायम् । पनसस्य यमुशन्ति सतिक्तमूरशीलवणमस्थिवदन्तीति राजनिर्घण्ट ॥

रक्तला । स्त्री॰ काकतुण्ड्याम् ॥

रक्तलोचन । पुं॰ कपोते ॥ त्रि॰ लोहितलोचनयुक्ते ॥ रक्तलोचनेश्वरः ॥

रक्तवटी । स्त्री॰ मसूरिकायाम् ॥

रक्तवर्ग . । पुं॰ किंशुके ॥ दाडिमे बन्धूके ॥ लाक्षायाम् ॥ निशाद्वये कुसुम्भपुष्पे ॥ मञ्जिष्ठायाम् ।

रक्तवर्ण । पुं॰ इन्द्रगोपे ॥

रक्तवृन्त . । पुं॰ वार्त्ताकौ ॥

रक्तवर्षाभू । स्त्री॰ रक्तपुनर्नवायाम् ॥

रक्तवसन । पुं॰ सन्न्यासिनि ॥ त्रि॰ लोहितवस्त्रवति ॥ न॰ रक्तवर्णवस्त्रे ॥

रक्तवात । पुं॰ रोगविशेषे ॥ नारिकेलस्य वै मूलं छागीक्षीरेण संयुतम् । पिबेच्च त्रिविधस्तस्य रक्तवातो विनश्यति ॥

रक्तवालुका । स्त्री॰ सिन्दूरे ॥

रक्तबिन्दु । पुं॰ रुधिरस्य कणे ॥

रक्तबीज । पुं॰ दाडिमे । शुम्भनिशुम्भयोः सेनापतावसुरविशेषे ॥

रक्तबीजका । स्त्री॰ तरदीवृक्षे ॥

रक्तवृन्ता । स्त्री॰ शेफालिकायाम् ॥

रक्तवृष्टि । स्त्री॰ रुधिरवर्षणरूपे उत्पातविशेषे ॥ तत्फलं शस्त्रोद्योगे यथा रक्ते शस्त्रोद्योगे । मांसास्थिवसादिभिर्मरकं । धान्यहिरण्यत्वक्फलकुसुमाद्यैर्वर्षितैर्भयं विद्यात् ॥

रक्तशालि । पुं॰ रक्तवर्णधान्यविशेषे ॥ ताम्रशालौ । शोणशालौ ॥

रक्तशासनम् । न॰ सिन्दूरे ॥

रक्तशिग्रुः । पुं॰ रक्तशोभाञ्जनवृक्षे । रक्ते । मधुरे ॥ रक्तो मधुरः रक्तकण्ठानामिति दर्शनात् । सचासौ शिग्रु । रक्तोवर्णो नपुष्पे यावा ॥

रक्तशीर्षक । पुं॰ सरलद्रवे ।

रक्तशृङ्गिकम् न॰ विषे ॥

रक्तसंज्ञ । पुं॰ कुङ्कुमे ॥

रक्तसन्दशिका । स्त्री॰ जलौकायाम् ॥

रक्तसन्ध्यकम । न॰ रक्तकह्लारे । उत्पले ॥ रक्तसन्ध्येव । इवार्थे कन् । केचित् ॥ रक्तां सन्धीनकति । वक्रकुटिलायां गतौ । मूलविभुजादित्वात्को वा ॥

रक्तसरोरुहम् । न॰ रक्तपद्मे ॥ रक्तञ्चतत्सरोरुहञ्च ॥

रक्तसर्षप । पुं॰ राजिकायाम् ॥

रक्तसञ्ज्ञा । स्त्री० रक्तताम्राने ॥

रक्तसार । पुं० रक्तखादिरे ॥ अ
म्लवेतसे ॥ न० रक्तचन्दने ॥ पतत
ङ्गे । बक्कम० इतिख्याते ॥

रक्तसौगन्धिकम् । न० रक्तकह्ला
रे । रक्तसौधी० इ० भा० प्र० ॥ र-
क्तवर्णचिक्कणविकासिपुष्पवृक्षे ॥
रक्तोत्पलतत्सौगन्धिकञ्च ॥

रक्तस्राव । पुं० रक्तपतने ॥

रक्तहंसा । स्त्री० रागिणीविशेषे ॥

रक्ता । स्त्री० गुञ्जायाम ॥ लाक्षाया
म् ॥ मञ्जिष्ठायाम् ॥ उष्ट्रकाण्डया-
म् ॥

रक्ताकार । पुं० प्रवाले ॥

रक्ताक्तम् । न० रक्तचन्दने ॥
त्रि० शोणितमिश्रिते ॥

रक्ताक्ष । पुं० कासरे । महिषे ॥
क्रूरे ॥ पारावते ॥ चकोरे ॥ सा-
रसे ॥ षष्टिवत्सरान्तर्गतवत्सरवि
शेषे ॥ दुर्भिक्ष मरण रोगोधान्यौष-
धिप्रपीडनम् । मावरोगोभवेद्दे वि-
रक्ताक्षेऽमरवन्दिते ॥ ५८ ॥ त्रि०
रक्तनेत्रवति ॥ रक्तेअक्षिणीयस्य-
स । अक्ष्णोदर्शनादित्यच् ॥

रक्ताङ्ग । पुं० भौमग्रहे ॥ कम्पि
ल्ले ॥ प्रवाले ॥ मत्कुणे ॥ मण्ड-
ले ॥ कृकलासे ॥ न० विद्रुमे ॥ धी
रे । रक्तचन्दने ॥ कुङ्कुमे ॥

रक्ताङ्गा । स्त्री० जीवन्तिकायाम् ॥

रक्ताङ्गी । स्त्री० मञ्जिष्ठायाम् ॥

रक्तातिसार । पुं० रोगविशेषे ॥ पित्त
कृत्सुयदात्यर्थद्रव्यमश्नातिपैत्तिके ।
तद्दोषाज्जायतेशीघ्र रक्तातीसार
उल्वण ॥ वत्सकातरुत्त्वगार्द्रादा-
डिमफलसम्भवाच्चकच । त्वग्युग
लपलमानविपचेदष्टाङ्गसम्मितेतो-
ये ॥ अष्टमभाग शेष क्वाथ मधुना-
पिबेत्पुरुष । रक्तातिसारमुल्व
णमतिशयित नाशयेदुग्रतम् ॥ कु
टजदाडिमक्वाथ ॥ गोदुग्धनव-
नीतन्तुमधुनासितयासह । लीढ
रक्तातिसारेतुग्राहक परम मह-
त् ॥ नवनीतावलेह ॥ पीत मधु-
सितायुक्त चन्दनतण्डुलाम्बुना
। रक्तातिसारजिद्रक्तपित्ततृड्दाह
मेहनुत् ॥ चन्दनमचर्व्वं तम । च-
न्दनकल्क ॥

रक्ताधार । पुं० चर्मणि ॥

रक्तापहम । न० बोले ॥

रक्तापामार्ग । पुं० क्षुद्रापामार्गे ।
आघट्टके ॥

रक्ताम्बरम । न० वह्निशिखाख्यकुसु
म्भरञ्जितेवस्त्रे ॥ काषायवस्त्रे ॥
त्रि० तद्वति ॥

रक्ताम्र । पुं० कोशाम्रे ॥

रक्ताम्लान । पुं० कुरवके ॥

रक्तार्क । पुं० अर्कपर्णे । विकीर-
णे ॥ रक्तार्कपुष्प मधुर सतिक्तकु

छक्तमिश्र कफनाशनश्च । आखोर्वि षहन्तिचरक्तपित्त सङ्ग्राहिगुल्म-श्वयथौहित तत् ॥

रक्तार्म्मम् । न० नेत्ररोगविशेषे ॥ तल्लक्षणं यथा । पद्माभ मृदुरक्तार्मेय न्मासचीयतेसिते ॥

रक्तार्बुद. । पु० उपपापोद्भवेरोगविशेषे ॥

रक्तार्श । न० अर्शोरोगविशेषे ॥

रक्तालु । पुं० रक्तपिण्डालौ । रक्तकन्दे । लोहितालौ । रतालु० रतगडा० हू० भा० प्र० कन्दे ॥

रक्ताशोक . । पुं० वृक्षविशेषे ॥

रक्तिका । स्त्री० गुञ्जायाम । रत्ती० घुघची० चिरमिठी० हू० भा० प्र० भिल्लभूषणायाम् ॥ राजिकायाम ॥ रक्तिकापरिमाणे ॥

रक्तिमा ॥ पु० लोहितत्वे ॥

रक्तेक्षु । पु० रक्तवर्णेक्षौ । सूक्ष्मपत्रे ॥

रक्तैरण्ड । पु० आम्रे । हस्तिकर्णे । रुबौ ॥

रक्तेर्वारु । पुं० इन्द्रवारुण्याम ॥

रक्तोत्पल : । पुं० शाल्मलिवृक्षे ॥ न० कोकनदे । रक्तसरोरुहे ॥

रक्तोत्पलाभ । पुं० शोणवर्णे । त्रि० तद्वति ॥

रक्तोत्पलम् । न० गैरिके ॥

रक्ष : । पु० म त्स्यग्रहणसमर्थे ॥ रक्षति । रक्षपालने । पचाद्यच् ॥

रक्ष : सभम् । न० रक्ष : समूहे ॥

रक्षक । त्रि० रक्षितरि ॥ अनाथमात्मदीनारक्षका : सर्वदेवता : ॥ रक्षति । रक्ष० । ण्वुल् ॥

रक्षणम् । न० पालने ॥ रक्षल्युट् ॥ आपदर्थेधनरक्षेद्दारान्रक्षेद्धनैरपि । आत्मानसततरक्षेद्दारैरपिधनैरपि ॥ त्रि० रक्षके । पालके ॥ रक्षति० पालयति । रक्ष० । नन्द्यादित्वाल्ल्यु ॥

रक्षणि । स्त्री० त्रायमाणायालतायाम् ॥

रक्षणीय । त्रि० रक्ष्ये । रक्ष० । अनीयर ॥

रक्षन् त्रि० रक्षितरि । रक्षति । रक्ष० । शतृ ॥

रक्ष । न० राक्षसे । निर्ऋतिप्रभृतौ । रावणादौ । रक्षन्त्यस्मात् । रक्ष० । सर्वधातुभ्यऽसुन ॥ निर्दये ॥ यथा । दृष्ट्वातुविकलान्व्यङ्गानन्धान्रोगिणस्तथा । दयानजायतेयस्यसरक्षइतिमेमति ॥

रक्षा । स्त्री० जतुनि । रक्षणे । बाधानिवृत्तौ ॥ योगयुक्तोजनार्दन चिन्तयेदितियत्साच्चिन्तकस्यपरारक्षेत्यहमन्ये । यथोक्त सहस्रनामभाष्ये । नित्य स चिन्तयेदेव योगयुक्तोजनार्दनम् । सास्यरक्षा परामन्येकोहिनस्यच्युताश्रयमिति ॥ रक्षणम् । रक्ष० । गुरोश्चहल

क्त्य । टाप् ॥ भस्मनि ॥ श्रावणापौर्णमास्यान्तु रक्षाबन्धनमिष्यते । यथा । पौर्णमास्यां हरेरक्षाबन्धनं विधिपूर्वकम् । अजराजकुमारत्वात्केचिदिच्छन्तिसाधव ॥ तत्र भद्रासङ्गावेलामतिक्रम्य प्रकुर्य्यात् । तथा च स्मृतिः । भद्रायां द्वे न कर्त्तव्ये श्रावणीफाल्गुनी तथा । श्रावणी नृपतिं हन्ति ग्रामान् दहति फाल्गुनी ॥ विधिश्च भविष्योत्तरे । उपाकर्मदिने प्रोक्तमृषीणाञ्चैव तर्पणम् । ततोऽपराह्णसमये रक्षापोटलिकां शुभाम् ॥ कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषिताम् । वस्त्रैर्विचित्रैः कार्पासैः क्षौमैर्वा मलवर्ज्जितैः ॥ विचित्रं ग्रथितं सूत्रं स्थापयेद्भाजनोपरि । उपलिप्तगृहमध्ये दत्त्वा चतुष्कं न्यसेच्छुभं पीठम् । तत्रोपविशेद्राजा सामात्यः सपुरोहितः ससुहृत् ॥ तदनु पुरोधा नृपतेः रक्षां बध्नीत मन्त्रेण । येन बद्धो बली राजा दानवेन्द्रो महाबलः । तेन त्वां प्रतिबध्नामि रक्षे मा चल मा चल ॥ यदाबध्नन्दाक्षायणा इत्यादि वैदिकोऽप्यत्र मन्त्रः पठनीयः ॥ ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चान्यैश्च मानवैः । कर्त्तव्यो रक्षणाचारो विप्रान् सम्पूज्य शक्तितः । अनेन विधिना यस्तु रक्षिकाबन्धमाचरेत् । स सर्वदोषरहितः सुखं संवत्सरं वसेत् । इति ॥

रक्षापत्र । पुं० भूर्जवृक्षे ॥ न० भूर्जत्वचि ॥

रक्षिका । स्त्री० रक्षायाम् । रखडी० इ० भा० ॥

रक्षित । त्रि० त्राते । गोपायिते । गुप्ते ॥ रक्ष्यतेस्म । रक्ष० । क्त० ॥

रक्षिता । त्रि० रक्षाकर्त्तरि । रक्षके ॥ यथा । आयव्ययज्ञो लोकज्ञो देशोत्पत्तिविशारदः । कृताकृतज्ञो भृत्यानां ज्ञेयः स्यादेषरक्षिता ॥

रक्षी । त्रि० रक्षके ॥ अवश्यं रक्षति । रक्ष० । णिनि ॥

रक्षिवर्ग । पुं० अनीकस्थे । राजरक्षकगणे । अवश्यं रक्षन्ति । रक्ष पालने । आवश्यकेति णिनि । रक्षिणां वर्गः ॥

रक्षोघ्न । पुं० सिद्धार्थे । सितसर्षपे ॥ भल्लातकवृक्षे ॥ न० काञ्जिके ॥ हिङ्गुनि ॥

रक्षोघ्नधूप । पुं० गुग्गुल्वगुरुसर्जरसवचागौरसर्षपचूर्णलवणनिम्बपत्रव्यामिश्रे घृतसंयुक्ते ॥

रक्षोघ्नी । स्त्री० वचायाम् ॥ दुर्गायाम् ॥

रक्षोजननी । स्त्री० रात्र्याम् ॥ राक्षसमातरि ॥

रक्षोहा । त्रि० रक्षसां हन्तरि ॥ पुं०

गुग्गुलौ ॥

रघ्वग । पु॰ चार्वा ॥ रघ॰ । यज याचेतिनङ् ॥

रघु । पु॰ सूर्यवंशीयदिलीपराज पुत्रे । श्रीरामचन्द्रस्यप्रपितामहे । लङ्घते, लघिगतौ । लघिवंह्योर्न लोपश्चेतिकुर्नलोपश्च । बालमूलल घ्वलं गुलीनाबालोरत्वमापद्यते॰ इतिर त्वम् ॥ रङ्घतेनाश गच्छतीतिव्युत् पत्त्या॰ व्यष्टिसमष्टिरूपेऽन्नमयको षे ॥

रघुकार । पु॰ कालिदासकवौ ॥ रघुकाव्यविशेषं करोति । डुकृञ्॰ । कर्मण्यण् ॥

रघुनन्दन । } रामचन्द्रे ॥
रघुनाथ ।

रघुपति । पु॰ श्रीरामे ॥ यथा । यदुपते क्वगतामथुरापुरीरघुपते क्वगतोत्तरकोशला । इतिविचिन्त्य कुरुष्वमनः स्थिरनसदिदंजगदित्य वधारयेतिरूपगोस्वामी ॥

रघुवंश । पु॰ रघो सन्ततौ ॥ रघोर्वंशः । कालिदासकृते काव्यविशेषे ॥

रघुवंशकेतु । }
रघुवंशतिलक । पु॰ } श्रीरामे ॥
रघुवर । }

रघूद्वह । पु॰ श्रीरामे ॥ उद्वहति । वह॰ । पचाद्यच् । रघूनामुद्वहोना यकः ॥

रङ्क । त्रि॰ कृपणे ॥ मदे ॥ रमते । रमेर्बाहुलकात्कः ॥

रङ्कु । पुं॰ शबलपृष्ठे । मृगविशेषे । रमते॰ रज्यतेवा । मृगय्वादित्वात् साधु ॥ जनपदविशेषे ॥

रङ्ग । पु॰ रागे ॥ नृत्ये ॥ नृत्यस्थाने ॥ रणक्षितौ ॥ टङ्कणे ॥ खादिरसारे ॥ पु॰ न॰ त्रपुणि । आपूषे । वङ्गे । कुरूप्ये । पिच्चटे । पूतिगन्धे । रांग॰ इ॰ भा॰ ॥ तद्विशेषो यथा । धवलमृदुलघुस्वच्छस्निग्धमुष्णासहं हिमम् । सूत्रपत्रहरकान्तं च पुष्टमुदाहृतम् ॥ खुरकामिश्रकश्चापि द्विविधरङ्गमुच्यते । उत्तमखुरकतत्र मिश्रकस्त्वहितमतम् ॥ तस्याशुद्धस्य दोषोयथा । रङ्गोविधत्ते खलुशुद्धिहीनस्तथाह्यपक्वश्चकिलासगुल्मौ । कुष्ठानिशूल किलवातशोथं पाण्डुप्रमेह स्तुभगन्दरञ्च ॥ विषोपम रङ्गविकारवृन्द श्वयथुकृच्छ्रा णिकफज्वरञ्च । मेहाश्मरीविद्रधिरक्तरोगान्नानो पिकुर्यात् कथितान्विकारान् ॥ तस्यशोधन यथा । वङ्गनागौप्रतप्तौ च गालितौतौनिषेचयेत् । त्रिधा त्रिधाविशुद्धिः स्याद्रविदुग्धेपिच त्रिधा ॥ तैलतक्रकाञ्जिकगोमूत्र कुलत्थक्वाथेषुप्रत्येकंत्रिधात्रिधा । ततोऽर्कदुग्धत्रिधा ॥ अथमारण विधि । मृत्पात्रे द्राविते रङ्गे

चिञ्चाम्लत्वचोरज । चिपत्वाब
ञ्ज चतुर्थांशमयोद्वयंप्रचालयेत् ॥
चिञ्चाचमिलो । रज . सूर्णम् । च-
योर्दर्वीलोहकी०करच्छुलो ॥ ततो
द्वियाममात्रेणवङ्गभस्मप्रजायते । च
यभस्मसमतालंचिप्त्वाम्लेनविमर्द
येत् ॥ ततोगजपुटेपक्त्वापुनरम्लेन
मर्दयेत् । तालेनदशमांशेनयाममे
कातत पुटेत् ॥ एवदशपुटे पक्व
वङ्ग भवतिमारितम् ॥ अस्यगुणायथा
। रङ्ग लघुसररूक्षकुष्ठमेहकफक्रमो
न् । निहन्तिपाण्डुमश्वासचक्षुष्य पि
त्तलमनाक ॥ सिंहोगजौघन्तुयथा
निहन्तितथैवरङ्गोऽखिलमेहवर्गम् ।
देहस्यसौख्य प्रबलेन्द्रियत्व नरस्यपु
ष्टि विदधातिनूनम् ॥ रङ्गति । रगि
गतौ । पचाद्यच् ॥ रज्यत्यस्मिन्०
रज्यतेऽनेनवा । रञ्जरागे । अकर्त्त
रिचेतिघञ् । कुनुम् ॥

रङ्गकार । त्रि० वस्त्रादौनारङ्गकर्त्तरि
। रगरेज०कृ०भा० ॥

रङ्गकाष्ठम् । न० पतङ्ग ॥

रङ्गजम् । न० सिन्दूरे ॥

रङ्गजीवक । पु० चित्रकरे ॥

रङ्गद । पु०टङ्कणे ॥ खादिरसा
रे ॥

रङ्गदा । स्त्री० स्फटिकायाम् ॥

रङ्गदायकम् । न० कङ्कुष्ठ ॥

रङ्गद्दढा । स्त्री० स्फटिकायाम् ॥

रङ्गपत्री । स्त्री० )

रङ्गपुष्पी । स्त्री० ) नीलीवृक्षे ॥

रङ्गभूति । स्त्री० कोजागरपूर्णि
मायाम् ॥

रङ्गभूमि . । स्त्री० मल्लभूमौ । ना
ट्यभूमौ ॥

रङ्गमध्री । स्त्री० वीणायाम् ॥

रङ्गमाणिक्यम् । न० माणिक्यरत्ने ॥

रङ्गमाता । स्त्री० कुट्टन्या.म् ॥ जतु
नि । लाक्षायाम ॥ चुक्याम् ॥

रङ्गमातृका । स्त्री० लाक्षायाम् ॥

रङ्गलासिनी । स्त्री० शेफालिका-
याम् ॥

रङ्गवीजम् । न० रूप्ये ॥

रङ्गशाला । स्त्री० नाट्यशाले । नाच
घर० इतिभाषाप्र० ॥

रङ्गसङ्गमम् । न० यसदे । जस्त०
कृ० भा० ॥

रङ्गाङ्गा । स्त्री० स्फटिकायाम् ॥

रङ्गाजीव. । पुं० चित्रकारे ॥ रङ्गे
णाजीवति । जीव० । कर्मण्युपपदेतिकः
॥ रङ्ग. आजीवोऽस्येतिवा ॥

रङ्गारि . । पु० करवीरे ॥

रङ्गावतारकः । पु० रङ्गावतारि
णि । शैलूषे । भरते । नटे ॥ नृत्य
गीतस्थानेगीतवाद्यादिनातदनुगु-
णतयाप्रसङ्गिनि ॥ कृ० प्रायश्चि
त्तविवेक . । नटगायनव्यतिरिक्तोर
ङ्गावतरणजीविनिश्चितकुक्क-

भट्ट : ॥
रङ्गावतारी । पुं॰ नटे ॥
रङ्गिणी । स्त्री॰ कैवर्त्तिकायाम् ॥ शतमूल्यां ॥
रङ्गोपजीवी । पुं॰ नटमल्लादिवृत्तौ ॥ रङ्गोपजीविप्रभृतीनामन्नादानान्नरकप्राप्तिरुक्ता । विष्णुपुराणे २ अंशे ॥ यथा । रङ्गोपजीवीकैवर्त्त. कुण्डाशीगरदस्तथा । सूचीमाहिषिकार्श्चैवपर्वकारोचयोद्विज : ॥ आगारदाहीमित्रघ्न शाकुनिर्ग्रामया जक : । रुधिरान्धेपतन्त्येतेसोमविक्रीयतिचये इति ॥
रङ्घ : न॰ रहसि ॥ इतिभरतद्विरूपकोष . ॥
रचनम् । न॰ ग्रन्थने । निर्माणे ॥
रचना । स्त्री॰ कुसुमप्रकारादे ' पक्षा वल्यादेश्वरचने । परिस्पन्दे ॥ रचप्रतियत्ने । चुरादिरदन्त : । ण्यासश्रन्थोयुच् ॥ रच्यते॰ इतिवा ॥ यथाक्रमेणस्थापने । निवेशे । स्थितौ ॥ निर्मितौ ॥ यथा । असाधारणचमत्कारकारिणीरचनाहि निर्मिति : तत्पर्याया सन्दर्भ : । गुम्फ : । सन्धनम् ॥ ग्रन्थनम् ॥
रचित . । त्रि॰ कल्पिते । कृते ॥ स्थापिते ॥ रच॰ । कर्मणिक्त : ॥
रज : । पुं॰ रेणौ । धूलौ ॥ परागे ॥ आर्त्तवे ॥ गुणान्तरे । रञ्जयति । रञ्जरागे । घञर्थेकप्रत्यय : ॥ न॰ स्त्रीकुसुमे ॥
रज ' श्रय : । पुं॰ शुनि । रजसिशेते । शीङ्॰ । अधिकरणेशेतेरित्यच् ॥
रज सारथि : । पुं॰ वायौ ॥
रजक : । पुं॰ निर्णेजके । वस्त्रधावके ॥ अयस्तीवरपत्न्यांधीवराज्जात सङ्करजाति वासांसिफलके : ग्रक्ष्णेनि र्णिज्याद्रजक . शने । अतोन्ययाहिकुर्वीतदण्डा स्याद्रुक्ममाषकम् ॥ रज्यति । रञ्ज॰ । नृतिखनिरञ्जिभ्यइति॰ ष्वुन् । असि॰ अके॰ अनेवरञ्जेर्नलोप . । षित्वान्ङीषि॰ रजकी । भाष्यमते॰ क्वुन् । टाप् रजिका ॥ शुके ॥ रजकोधातकश्शुकावितिहैम. ॥
रजतम् । न॰ दुर्वर्णे । रूप्ये ॥ अस्योत्पत्तिर्यथा । त्रिपुरस्यवधार्थाय-निर्निमेषैर्विलोचने । निरीक्षयामासशिव : क्रोधेनपरिपूरित ॥ ततस्तूल्कासमपतत्तस्य कस्माद्विलोचनात् । ततोरुद्र:समभवद्वैश्वानरमिवज्वलन् ॥ द्वितीयादपतच्चाश्रुबिन्दुस्तु वामकात् ॥ तस्माद्रजतमुत्पन्नमुक्तकर्मसुयोजयेत् । कृत्रिमञ्चभवेत्तच्चिरङ्गादिरसयोगत : । पश्चाश्यगुणान्रूप्ये ॥ कारेदन्तिदन्तयो : ॥ श्वेतिते ॥ रुदे

। शैले ॥ खर्णे । रजतिरज्यतेऽनेनवा । रञ्ज० । पृषिरञ्जिभ्याकिदिस्यतच् ॥ त्रि० शुक्ले ॥

रजतद्युति । पुं० हनुमति ॥

रजतप्रस्थ । पुं० कैलासाचले ॥

रजताचल । पु० रौप्यपर्वते ॥

रजताद्रि: । पुं० कैलासपर्वते ॥

रजनम् । न० खर्णे । सुवर्णे । कुसुमादिरागे ॥ रज्यतेनेन । रञ्ज । क्युन् ॥

रजनि । स्त्री० निशि । रात्रौ ॥ रजन्ति० अनुरक्ताभवन्ति० रागिणोऽस्याम् बाहुलकाद्रञ्जेरनिनलोपश्च ॥

रजनिकर । पुं० चंद्रे ॥

रजनी । स्त्री० नीलिन्याम् ॥ रात्रौ ॥ हरिद्रायाम् ॥ जतुकायाम् । लाक्षायाम् ॥ रजन्त्यनुरक्ताभवन्त्यस्यां रागिण । रञ्ज० । घिपे: किच्चेतिघकारादनि । कित्वान्नलोप: । बाहुलकाद्वा० रजनि । गौरादित्वान्ङीष् ॥

रजनीकर: । पु० हिमांशौ ॥

रजनीगन्धा । स्त्री० पुष्पविशेषे ॥

रजनीचर । पुं० राक्षसे । रात्रिचरे ॥ रजन्यांचरति । चरेष्ट: ॥ चौरे ॥ यामिकभटे ॥

रजनीजलम् । न० नीहारे । ओस० इ०भा० । रजन्याजलम् ॥

रजनीपुष्प । पुं० पूतिकरञ्जे ॥

रजनीमुखम् । न० प्रदोषे ॥ रजन्यामुखमिव ॥

रजनीहासा । स्त्री० शेफालिकापुष्पे हारशृङ्गार० पारिजात० इ० लोक प्रसिद्धे ॥ रजन्याहासोयस्या: ॥

रज । न० गुणान्तरे । प्रकृतिगुणविशेषे । रागद्वेषात्मकेदु खहेतौ ॥ रजोरागात्मकंविद्धितृष्णासङ्गसमुद्भवम् । तन्निबध्नातिकौन्तेयकर्मसङ्गेनदेहिनम् । आर्तवे । स्त्रीपुष्पे ॥ परागे । सुमनोरजसि ॥ रेणुमात्रे । धूलिमात्रे ॥ निषिद्धाऽनिषिद्ध रजोयथा । आयुष्कामीनसेवेततथासम्मार्जनीरज.। तथाश्वरथधान्यानागवाश्चैवरज शुभम् ॥ अशुभञ्चविजानीयात्खरउष्ट्राजाविकेषु च । गवारजोधान्यरज: पुत्रस्याङ्गभवंरज: ॥ एतद्रजोमहाशस्त महापातकनाशनम् ॥ अजारज खररजस्तथासम्मार्जनीरज । स्त्रिय: पादरजोराजन् शक्रादपिहरेच्छ्रियम् इ०ल०चं० ॥ रञ्जयति० रजनम् ० रज्यतेऽनेनवा । रञ्ज रागे । भूरञ्जिभ्याकिदित्यसुन् । नलोप: ॥ अहनि ॥ दिवसे ॥ असृगदृनीरजसीउच्यते० इतिनिरुक्तोक्ते ॥ सन्धिहोनंरजोहीनशि

रःभाम्ि वर्जितम् । सुद्राद्दीनहस्त
ःहपन सिद्धिकरनहीतिलक्ष्यम् ॥
रजःसानु । पु० मेघे ॥ चित्ते ॥
रजस्वल । पु० महिषि । सैरिभे । त्रि०
सरजस्के ॥ रजोऽस्यस्य । रज
कृषीतिवलच् ॥
रजस्वला । स्त्री० स्त्रीधार्मिण्याम् । च
त्याम् । श्वात्रेय्याम् । पुष्पवत्या
स्त्रियाम् । उदक्यायाम् ॥ द्वादशा
द्वत्सराद्दूर्ध्वं मापञ्चाशत्समा । स्त्रि
य । मासिमासिभगद्वाराप्रकृत्यै
वार्त्तवंस्रवेत् ॥ तत्र । प्रथमेऽहनि
चण्डालीद्वितीयेब्रह्मघातिनी । तृ-
तीयेरजकीप्रोक्तायथावर्ज्यातथाङ्ग-
ना ॥ शुद्धाभर्त्तुश्चतुर्थेह्निस्नाताबाद
वर्पेत्रयो । दैवेकर्मणिपैत्रेचप-
ञ्चमेह्निशुद्ध्यति । रजोस्यस्या ।
रज कृष्यासुतिपरिषदोवलच् ।
तसोमत्वर्थइतिभत्वम् ॥ सिहक-
र्कटस्थयोर्नद्याम् ॥ यथा । सिहक-
र्कटयोर्मध्ये सर्वानद्योरजस्वला : ।
तासुस्नान नकुर्वीतवर्जयित्वासमु-
द्रगा ॥ उपाकर्मणिचोत्सर्गेप्रेत-
स्नानेतथैवच । चन्द्रसूर्योपरागेचर
जोदोषोनविद्यते ॥ दशवर्षाधिका
यानार्याम् ॥
रजि : । पु० चन्द्रवंशीयराजविशे-
षे ॥
रजित । त्रि० चाकृष्टे ॥ रञ्जे एयं-
न्तात्कर्मणिक्त । रञ्जेर्णौमृगरम-
णाइत्युपधानकारलोप ॥
रजोगुण । पुं० अप्रीत्यात्मकेप्रकृते-
र्गुणे ॥ अप्रीतिरात्मभावोयस्य । उ
पष्टम्भकचलश्चरज । सत्त्वतमसी
स्वयमक्रियत्वात्स्वकार्यप्रवृत्ति प्रत्य
वसीदन्तीरजसोपष्टभ्येते । उत्साहप्र
यत्न कार्यते । तदिदमुक्तमुपष्टम्भक
रजइति । कस्मादित्यतउक्तं । चलमि
ति । तदनेन । रजस . प्रवृत्त्यर्थत्त्व
दर्शितम् । यद्दु खहेतुस्तद्दु खा
त्मकरज ॥ रजःकार्येहास्यहर्षादौ ॥
रजोनिमीलित । त्रि० रजोगुणान्ध
त्ते ॥ अपथेपदमर्पयन्तिहिश्रुतव-
न्तोपिरजोनिमीलिता ॥
रजोबलम् । )
रजोरसम् । ) न० अन्धकारे ॥
रजोविशाल । पुं० भूर्लोके ॥ मध्ये
रजोविशाल सत्त्वधर्माधर्मानुष्ठा-
नपरत्वात् । दु : खबहुलत्वाच्च । रजो
विशालइतिसाङ्ख्याचार्या : ॥
रजोहर पुं० रजके ॥
रज्जु : । स्त्री० वेण्याम् ॥ बन्धनसाध
नवस्तुनि । शुल्वे । वराटके । गुणे
। डोरी । रस्सी । इ० भा० । सृज्यते ।
सृजविसर्गे । सृजेरसुमच । चात्
सलोपउप्रत्ययश्च । सस्यसुत्वेनश : ।
जश्त्वेनज ॥ मध्यगुरो० ।ऽ। ॥
रज्यमान : त्रि० लोहितायमाने ॥

रञ्जेर्दैवादिकात्कर्त्तरिशानच् । च निर्दिताभितिनलोप ॥

रञ्जक । पुं० कुसुम्भादिना वस्त्रादि रागकर्त्तरि ॥ कम्पिल्लके ॥ प्रीति जनके ॥ न० हिङ्गुले ॥

रञ्जन : । पुं० रागजनने ॥ मुञ्जट णे ॥ न० रक्तचन्दने ॥ हिङ्गुले ॥ प तङ्गे । वक्कम्० कु० भा० ॥ वर्णान्त रापादने ॥ रञ्जयति । रञ्जरागे । ण्य न्त ० । युच्० ल्युड्वा ॥

रञ्जनक : । पु० कट्फले ॥

रञ्जनी । स्त्री० गुण्डारोचनिकायाम् ॥ नील्याम् ॥ मञ्जिष्ठायाम् ॥ शे- फालिकायाम् ॥ हरिद्रायाम् ॥ प र्पट्याम् ॥ रञ्जयति । रञ्ज० । ल्यु ट् । षिलोपश्चस्यानिवत्त्वादशन यो । स्वेतिवानलोपोन ॥ रज्यतेऽनये तिविग्रहेतु० करणे तिल्युटिभवत्ये व । रञ्जे क्युन्निति वा ॥

रञ्जनीय । त्रि० रागोत्पादनयोग्ये ॥

रटित । त्रि० कथिते ॥ रटे कर्म णिक्त ० ॥ न० कथनमात्रे ॥

रण . । पु० कोणे । वीणादिवादने ॥ क्वणे । पु० न० युधि । समरे । यु द्धे ॥ रणनम् ० रणन्ति ० शब्दायन्तेऽ स्मिन्निति वा । रणशब्दे । वशिरण्यो रित्यप् ॥ रणति । रण . पचाद्यच्वा ॥

रणन् । पु० ध्वनति ॥

रणतूर्य्यम् । न० सङ्ग्रामपटहे । च भयडिण्डिमे । युद्धवाद्ये ॥

रणप्रिय : । पु० श्येनविहगे ॥ न० उ शीरे । वीरणस्यमूले ॥

रणमत्त . । पुं० हस्तिनि । द्विपे ॥

रणमुष्टि : । पु० विषमुष्टिक्षुपे ॥

रणरङ्ग : । पु० रणकातरहस्तिनि । प्र तिमे ॥

रणरण : । पु० मशके ॥ न० उद्घाहने

रणरणक :। पुं० उत्कण्ठायाम् ॥ का मे ॥

रणसङ्कुलम् न० तुमुले । व्याकुले र णे ॥ रणस्यसङ्कुलम ॥

रणसमुद्यम . । पु० युद्धोद्योगे ॥

रणाङ्गनम् । न० युद्धस्थले ॥

रणालङ्कार : । पुं० कङ्कपक्षिणि ॥

रण्ड . । त्रि० अर्द्धचर्मावच्छिन्नावयवे ॥ धूर्त्ते ॥

रण्डक : । पुं० अफलद्रुमे ॥

रण्डा । स्त्री० मूषिकपर्ण्याम ॥ विध वायाम् ॥ रमन्तेऽस्य । रमक्रीडा याम् । अमन्ताड्ड . । टाप् ॥

रण्डाश्रमी । पु० अष्टचत्वारिंशद्वत्स रोपरिभार्याविहीने ॥ यथा । च त्वारिंशद्वत्सराणासाष्टानाचपरेय दि । स्त्रियावियुज्यतेकश्चित्सतुर ण्डाश्रमीमत ॥

रतम् । न० मैथुने । सुरते ॥ तद्द्वि विधम् । यथाहवात्स्यायन ० । बाह्यमाभ्यन्तरञ्चेतिद्विविधंरतम्

च्यते । तत्राद्यं चुम्बनाश्लेषनखद
न्तक्षतादिकम् । द्वितीयं सुरत
साक्षान्नानाकारेणकल्पितमिति ॥
चि० गुह्ये ॥ अभिरते । अनुरक्ते
रमणम् । रम० । नपुंसकेभावेक्त
। अनुदात्तोपदेशेतिनलोप : ॥

रतकील । पुं० कुक्कुरे ॥

रतकूजितम् । न० रतिकालकथाया
म् । मणिते ॥

रतगुरु : । पुं० भर्त्तरि हृदयेशे ॥

रतज्वर : । पुं० काके ॥

रतताली । पुं० विङ्गे ॥

रतताली । स्त्री० कुट्टन्याम् ॥

रतनाराच : । पुं० नारीणांशीत्कारे
॥ स्मरे ॥ शुनि ॥ विङ्गे ॥

रतनिधि : । पुं० खञ्जने ॥

रतराग । पुं० सुरताभिलाषे ॥

रतर्द्धिकम् । न० दिवसे ॥ सुखस्ना-
ने ॥ अष्टमङ्गले ॥

रतव्रण : । )
रतशायी । ) पुं० कुक्कुरे । शुनि ॥

रतहिण्डक : । पुं० स्त्रीचौरे ॥ लम्प-
टे ॥

रतान्दुक : । पुं० कुक्कुरे ॥

रताम्भी । स्त्री० कुम्भकर्ण्यां ॥

रतामर्द : । पुं० कुक्कुरे ॥

रतायनी । स्त्री० वेश्यायाम् ॥

रतार्थिनी । स्त्री० मैथुनाभिलाषिण्या
म् ॥ कामुक्याम् ॥

रति : । स्त्री० स्मरदारेषु । कामदेव-
सपत्न्याम् ॥ षाषाढिस्थानस्था-
यादेव्याम् ॥ सुरते ॥ गुह्ये ॥ रा-
गे ॥ अनुरागे ॥ यथा । भगवान्०
ब्रह्म०कात्स्न्येनचिरन्वीच्यमनीष
या । तदध्यवस्यत्कूटस्थोरतिरात्म
न्यतोभवेत्इति ॥ रम्यतेऽनया
रम० । क्तिन् । अनुदात्तोपदेशवन
तितनोत्यादीनामनुनासिकलोपो-
झलिक्ङिति०इतिमलोप:॥ चेत
परितोषे ॥ इष्टार्थसंयोगजनितायां
क्रीडायाम् ॥ इच्छाविशेषे ॥ य
था । यूनोरन्योन्यविषयस्थायिनी-
च्छारति : स्मृतेतिरसार्णवसुधा-
कर : ॥

रतिकुहरम् । न० भगे । योनौ ॥

रतिकूजितम् । न० मणिते । मैथुनश
ब्दे ॥ रते कूजितम् ॥

रतिक्रिया । स्त्री० संवेशने । मैथुने ॥

रतिगृहम् । न० योनौ ॥ रमणम-
न्दिरे ॥

रतिचक्रम् । न० कामिन्यासहक्रीड-
ने ॥ यथा । शास्त्रस्यविषयस्तावद्या
वन्मन्दरसोनर : । रतिचक्रेप्रवृत्ते
तुनशास्त्रं नापिचक्रम : ॥

रतिनाग : । पुं० षोडशबन्धान्तर्गतप
ञ्चदशबन्धे । तल्लक्षणं यथा ॥ पीड
येदूरुयुग्मेनकामुकंकामिनीयदि ।
रतिनाग : समाख्यात : कामिनी

नामनोरम ॥

रतिपति । पु॰ कामदेवे ॥ रते पति ॥ देशविशेषस्थस्त्रीणास्था-नविशेषितस्याविर्भावोयथा । वाचि श्रीमाथुरीणाजनकजनगद्स्थायिनी नाकटाक्षे॰द्रलेगौडाङ्गनाना॰सु ललितजघनेचोत्कलप्रेयसीनाम् । तैलङ्गीनानितम्बे॰सजलघनरुचीके रलीकेशपाशे॰कार्णाटीनाकटौच-स्फुरतिरतिपतिर्गुर्ज्जरीणास्तनेषु ॥

रतिपाशक । पु॰ रतिबन्धविशेषे ॥ यथा । पीडयेदूरुयुग्मेनकामुकोयदिसुन्दरीम् । रतिपाशस्तथाख्यातः का मिनीनासुखावह ॥

रतिप्रिय । पुं॰ कामदेवे ॥ रति प्रियायस्य । सुरतप्रिये ॥

रतिबन्ध । पुं॰ पद्मासनादिषोडश सु ॥ तेयथा । पद्मासनोनागपाशो लतावेष्टोऽर्द्धसम्पुटम् । कुलिश सु न्दरञ्चैवतथाकेशरएवच ॥ हिल्लो लोनरसि होपिविपरीतस्तथापर । क्षुब्धोवैधेनुकश्चैवमुत्कठस्तुतत परम् ॥ सिंहासनोरतिर्नागोवि द्याधरस्तुषोडश ॥

रतिमदा । स्त्री॰ अप्सरसि । स्वर्वे श्यायाम् ॥

रतिमन्दिरम् । न॰ योनौ ॥ मैथुन गृहे ॥

रतिमित्र । पुं॰ रतिबन्धविशेषे ॥ यथा । पातयेदूरुयुग्मेचकामुकय दिकामुकी । रतिमित्रस्तथाख्यात कामिनीनासुखावह ॥

रतिरमण । पु॰ कामदेवे ॥

रतिलक्षम । न॰ निधुवने ॥

रतिलाभ । पु॰ सुरतसुखप्राप्तौ ॥ यथोक्त रतिरहस्ये । सस्ततावपुषि मीलन दृशोर्मूर्च्छनाचरतिलाभल क्षणम् । श्लेषयेत्स्वजघन मुहुर्मुहु सीत्करोतिगलगद्गदाकुलेति ॥

रतिसत्त्वरा । स्त्री॰ चिरञ्जीवायाम् । पिण्डिङ्गशाक॰इ॰गौ॰दे॰ भा॰ ॥

रतिसुन्दर । पु॰ रतिबन्धविशेषे ॥ यथा । नारीपदद्वयंकामीधारयेद्ध दयेयदि । धृतकठोरमेत्कामीबन्ध स्याद्रतिसुन्दर ॥

रतू । स्त्री॰ देवनद्याम् सत्यवाचि ॥ ऋदितिसौत्रोधातु । तस्य ऋ तेरम्चेतिकू चमागमश्च ॥

रतोद्वह । पुं॰ कोकिले ॥

रत्यङ्गम् । न॰ भगे । योनौ ॥ रते सुरतस्यअङ्गम् ॥

रत्नम् । न॰ स्वजातिश्रेष्ठे ॥ जातौ जातौयदुत्कृष्ट तद्रत्नमभिधीयते ॥ मणौ ॥ धनार्थिनोजना सर्वेरम न्तेस्मिन्नतीवयत् । ततोरत्नमिति प्रोक्त शब्दशास्त्रविशारदै ॥ तत्तु पाषाणभेदोस्तिमुक्तादिचतदुच्यते तानिनवधानिरूपितानियथा । व

च गारुत्मतपुष्परागौमाणिक्यमेव च । इन्द्रनीलश्च गोमेदस्तथा वैदूर्यमित्यपि ॥ मौक्तिकविद्रुमश्चेति रत्नान्युक्तानि वै नव। रत्नानि भक्षितानि स्युर्मधुराणि सराणि च। चक्षुष्याणि च शीतानि विषघ्नानि धृतानि तु ॥ मङ्गल्यानि मनोज्ञानि ग्रहदोषहराणि च॥ माणिक्यं तरणेः सुजातममलं मुक्ताफलं शीतगोर्माहेयस्य तु विद्रुमो निगदितः सौम्यस्य गारुत्मतम्। देवेज्यस्य च पुष्परागमसुराचार्यस्य वज्रं शनेर्नीलं निर्मलमन्ययोर्निगदिते गोमेदवैदूर्यके ॥ रत्नानां शोधनमारणविधिर्वज्रशब्दे द्रष्टव्यः। रमयति । रम क्रीडायाम् । रमतेऽस्मिन्वा । रमेस्तच्चेतिन । नेट् । माणिक्ये ॥ वज्रे । सगणे ॥ ऽ० ॥

रत्नकन्दल । पुं० प्रवाले ॥

रत्नकूटः । पुं० पर्वतविशेषे ॥

रत्नगर्भः । पुं० समुद्रे ॥ रत्नानि गर्भेऽस्य ॥ कुबेरे ॥

रत्नगर्भा । स्त्री० भूमौ ॥ रत्नानि गर्भेऽस्याः ॥ उपचाराद्गुणवत्पुत्रायाम् ॥

रत्नचषकः । पुं० न० स्फटिकादि मणिपात्रे ॥

रत्नद्वीपः । पुं० न० रत्नप्रचुरद्वीपविशेषे॥

रत्नधेनुः । स्त्री० महादानविशेषे ॥

रत्ननिधिः । पुं० खञ्जनपक्षिणि ॥

रत्नपञ्चकम् । न० सुवर्णादिपञ्चसु ॥ यथा । सुवर्णरजतमुक्तालाजावर्त्तप्रवालकम् । रत्नपञ्चकमाख्यातं मुनिभिः क्रमवेदिभिः ॥

रत्नपरीक्षा । स्त्री० मणिविचारे ॥ तत्र मणीनां तावद्गुणप्रधानार्थमाह । रत्नेन शुभेन शुभं भवति नृपाणामनिष्टमशुभेन । यस्माद्दतः परीक्ष्य दैवं रत्नाश्रितं तज्ज्ञैः ॥ द्विपहयवनितादीनां स्वगुणविशेषेण रत्नशब्दोऽस्ति । इह तूपलरत्नानामधिकारो वज्रपूर्वाणाम् ॥ रत्नानामुत्पत्तिप्रदर्शनार्थं मतभेदमाचार्याणामाह । रत्नानि बलाद्दैत्याद्दधीचतोऽन्ये वदन्ति जातानि । केचिद्भुवः स्वभावाद्वैचित्र्यं प्राहुरुपलानाम् ॥ वज्रेन्द्रनीलमरकतकर्केतनपद्मरागरुधिराख्याः । वैदूर्यपुलकविमलकराजमणिस्फटिकशशिकान्ताः ॥ सौगन्धिकगोमेदकशङ्खमहानीलपुष्परागाख्याः । ब्रह्ममणिज्योतीरससस्यकमुक्ताप्रवालानि ॥ वेणातटे विशुद्धं शिरीषकुसुमोपमं च कौशलकम् । सौराष्ट्रकमाताम्रं कृष्णं शूर्पारसम्भूतम् ॥ ईषत्ताम्रं हिमवति मतङ्गजं वल्लपुष्पसङ्काशम् । आपीतं कालिङ्गं श्यावं पौण्ड्रेषु सम्भूतम् ॥ ऐन्द्रं षडश्रियुक्तं याम्यं सर्पास्यरूपमसितं च । कदलीकाण्डनिकाशं वैष्णवमिति सर्वसंस्थानम् ॥ वारुणमव-

लागुच्छोपमभवेत्कर्णिकारपुष्पनि-
भम् । शृङ्गाटकस स्थान व्याघ्राक्षि
निभश्चहीतभुजम् ॥ वायव्यश्चयवो
पममशोककुसुमप्रभं समुद्दिष्टम् ।
स्रोत: खनिप्रकीर्णकमित्याकरस
म्भवस्त्रिविध ' ॥ १० ॥ रक्तपीच्च
शुभं राजन्यानासित द्विजातीनाम्
। शैरीष वैश्यानांशूद्राणांशस्त्रतेऽ
सिनिभम् ॥ ११ ॥ वज्रमर्णम्
स्यपरिच्छ्र।नार्थमाह । सितसर्ष
पाष्टकांतण्डुलोभवेत् तण्डुलैस्त्रिं
शत्या । तुलितस्तद्विलचेद्दानू न द्वि
द्दानूनितिचैतत् ॥ पादत्र्यशार्द्धेन
त्रिभागपञ्चांशषोडशांशश्च । भाग
श्चपञ्चविंशतिकः स्यात्साहस्त्रिक
श्चैव ॥ १३ ॥ शुभवज्रलक्षणान्या
ह । सर्वद्रव्याभेद्य लघ्वम्भसितरति
रश्मिवत्स्निग्धम् । तडिदनलश
क्रचापोपमञ्चवज्र हितायोक्तम् ॥
अथाशुभलक्षणम् । काकपदमक्षि
काकेशधातुयुक्तानिशार्कर विद्धम् ।
द्विगुणाश्रिदग्धकलुषत्रस्तविशीर्णा
निनशुभानि ॥ यानिचबुद्बुददलि
ताग्रचिपिटवाशीफलप्रदीपानि ।
सर्वेषान्तेषांमूल्याश्शमोष्टमोक्षा
नि ' ॥ १६ ॥ वज्र नकिंचिदपि
धारयितव्यमेकेपुत्रार्थिनीभिरबला
शिरश्च तितज्ञा . । शृङ्गाटकत्रि
पुटधान्यकवत्स्थितं यच्छोणीनिभ



स्त्रशुभदं तनयार्थिनीनाम् ॥ स्वज
नविभवजीवितक्षयं जनयतिवज्रम
निष्टलक्षणम् । अशनिभयविषारि
नाशनशुभमुपभोगकरञ्चभूभृताम्
॥ इतिवाराह्यांससमतितम: ॥

रत्नपारायणम् । न० सर्वरत्नस्थाने
॥ यथा । समुद्रोपत्यकाहैमीपर्वता
धित्यकापुरी । रत्नपारायणनाम्ना
लङ्केतिममैथिली ॥

रत्नप्रभा । स्त्री० जिनानांनरकविशे
षे ॥

रत्नभूः । स्त्री० मणिप्रधानभूमौ ॥

रत्नमुख्यम् । न० हीरके ।

रत्नमुट् । त्रि० मणिचौरे ॥ रत्नं
मुष्णाति । मुषस्तेये । क्विप् ॥

रत्नराट् । पुं० माणिक्ये ॥ रत्न
श्रेष्ठे ॥

रत्नवती । स्त्री० भूमौ ॥ रत्नानि
विद्यन्तेयस्याम् । मतुप् । उगि
त्वान्० ङीप् ।

रत्नवर्षुकम् । न० पुष्पकरथे ॥ त्रि०
रत्नवर्षणशीले ॥

रत्नसानु । पुं० सुरालये । सुमेरु
पर्वते ॥ रत्नानिसानौशिखरे
ऽस्य ॥

रत्नसूः । स्त्री० भूमौ ॥

रत्नाकरः । पुं० जलनिधौ ॥ रत्ना
नामामाणिक्यमुक्तादीनामाकरः ॥

रत्नाङ्कः । पुं० विष्णुरथे ॥ रत्नचि

र्ङ्कि ॥

रत्नाचल । पु० दानार्थमणिमय पर्वते ॥

रत्नाभरणम् । न० मणिमयालङ्करणे । जडाजगहना० इ० भा० ॥ तस्य धारणगुणा । धन्य यशस्यमायुष्य श्रीमद्व्यसनसूदनम् । हर्षणका म्यमोजस्य रत्नाभरणधारणम् ॥

रत्नि । पुं० बद्धमुष्टिकरे ॥ ऋच्छ ति० अर्यतेऽनेनवा । ऋगतौ । ऋतन्यञ्जीत्युक्तेः, कत्निच् । थ ण् ॥

रथ । पुं० शताङ्गे । स्यन्दने ॥ पादे । चरणे ॥ वेतसे ॥ देहे । शरीरे ॥ रथवद्यस्यानीयैरिन्द्रियैराक्रम्यमा णत्वाच्छरीरस्य ॥ रम्यतेऽत्र० रमन्तेऽ नेनेनवा । रम० । हनिकुषीति- क्थन् । अनुनासिकलोप ॥ ए- नेनसहयोद्दरि ॥ सगणे० ॥ ऽ० ॥ पौरुषे ॥

रथकम्या । स्त्री० रथवृन्दे ॥ रथानांस मूह । खलगवरथात्तिकम्यच् ॥

रथकार: । पु० रथकार । रथस्य- कार: ॥

रथकार: । पुं० तक्षणि । वर्द्धकौ । रथनिर्माणकर्त्तरि । माहिष्यात् करण्यामुत्पन्ने जातिविशेषे । वढ ई० तखाण० इतिभाषाप्रसिद्धे ॥ माहिष्येणकरण्यान्तुरथकार प्र

जायते० इ० याज्ञवल्क्य ॥ रथं करोति । डुकृञ्० । कर्मण्यण् ॥

रथकुटुम्बी । पु० सारथौ ॥ रथकुट् म्बयितुंशीलमस्य । कुटुम्बधारणे । सुपीतिणिनि ॥ यद्वा । रथएवकुट् म्बम् । रथकुटुम्बमस्यास्ति । इ नि ॥

रथगर्भक । पुं० स्कन्धवाह्ययाने । नररथे । कर्णीरथे । प्रवहणे । ड- यने ॥

रथगुप्ति । स्त्री० वरूथे । परप्रहरणा भिघातरक्षार्थंरथस्यसन्नाहवदावर- णे ॥ रथस्यगुप्तिरावरणम् ॥

रथगोपनम् । न० रथगुप्तौ ॥

रथचरण । पु० कोकपक्षिणि । च क्रवाके ॥ रथचक्रे । पैप्या० इ०- भाषा ॥

रथद्रु । पु० तिनिशवृक्षे ॥ रथस्य द्रु: । तत्रोपयुक्तत्वात् ॥

रथद्वितीया । स्त्री० आषाढशुक्लद्विती यायाम् ॥ यथा । आषाढस्यसितेप क्षेद्वितीयापुष्यसंयुता । तस्यांरथेस मारोप्यराममाभद्रया सह ॥ यात्रो- त्सवप्रवृत्त्याथप्रीणयेच्चद्विजान्बहू- न् । ऋक्षाभावेतिथौकार्यासदासाप्रीत येममेतिस्कन्दपुराणम् । साचात्रा। माजगन्नाथम् ॥

रथन्तरम् । न० सामविशेषे ॥ रथेन- तरति । तॄप्लवनसन्तरणयो: ।

संज्ञायांभृतॄवृजीतिखच् । व्युत्पत्ति मात्र नस्ववयवार्थानुगम ॥

रथपर्य्याय । पु॰ वेतसवृक्षे ॥ रथ : पर्यायोऽस्य ॥

रथपाद · । पु॰ चक्रे ॥

रथव्रज । पु॰ रथकट्यायाम् ॥ रथानांव्रज ॥

रथपुष्पा । स्त्री॰ नदीविशेषे ॥ रथपि- नष्टि । पा॰ । क । पारस्करादि त्वात्सुट्षत्वेनिपातसिद्धे ॥

रथसाधक । पुं॰ तिनिशे ॥ रथस्य- साधक ॥

रथाङ्ग । पु॰ कोकपक्षिणि ॥ अप- स्करे । चक्राभिन्नेरथावयवे ॥ न॰- चक्रे ॥ रथस्यचाङ्गम् ॥

रथाङ्गपाणि । पु॰ विष्णौ ॥ रथाङ्ग पाणौयस्यस । प्रहरणार्थेभ्य परे निष्ठासप्तम्यौभवत ॥

रथाङ्गाह्वय ।पुं॰ चक्रवाके ॥ रथाङ्ग स्याह्वयोनामयस्य ॥

रथाङ्गी । पुं॰ श्रीहरौ ॥ रथाङ्ग चक्र मस्यास्ति । इनि · ॥

रथाङ्गी । स्त्री॰ ऋद्धिनामौषधौ ॥

रथान्तर । पुं॰ कल्पभेदे ॥

रथाभ्र । पुं॰ वेतसवृक्षे ॥

रथावरोही । पुं॰ रथस्थयुद्धकर्त्तरि । रथिनि ॥

रथावर्त्त । पु॰ धूमावतीदक्षिणार्द्धे तीर्थविशेषे ॥

रथिक : । वि॰ रथिनि । रथस्वामि नि ॥ रथोस्यास्ति । अतइनिठना विति ठन् ॥ रथेनचरतिवा · पर्पा दिभ्यष्ठन् ॥ षिद्गौरादिभ्यश्चेतिङी षि॰ रथिकी ॥

रथिका । स्त्री॰ क्षुद्ररथे । स्वार्थेकन् ॥

रथी । पु॰ स्यन्दनारोहे । रथावरोहि णि । रथस्वामिनि । रथिके ॥ रथो ऽस्यास्ति । इनि ॥

रथिन । पु॰ रथिनि । रथस्यइन । शकन्ध्वादि ॥

रथिनी । स्त्री॰ रथकट्यायाम् ॥ रथा नासमूह । खलादिभ्यइनिर्वक्त व्य ॥

रथिर · । पुं॰ रथिके । स्यास्ति । मेधारथाभ्यामिरन्निरचौवक्तव्यावि तीरच् ॥

रथी । स्त्री॰ शकट्याम् । मज्भोली ॰ इ॰ भा॰ ॥ बह्वादिभ्यश्चेतिङी ष् ।

रथोद्धता । स्त्री॰ त्रिष्टुप् ११ प्रभे दे ॥ रात्परैर्नरलगैरथोद्धता । यथा । राधिकादधिविलोडनस्थि ताकृष्णवेणुनिनदैरथोद्धता । याम् नतटनिकुञ्जमञ्जसासाजगामसलि लाहृतिच्छलात् ॥ रथवदुद्धता ॥

रथ्य : । पुं॰ रथवाहकाश्वे । रथवोढ रि ॥ रथ वहति । तद्वहतिरथयुग प्रासङ्गमितियत् ॥ रथांसे । चक्रे

॥ रथस्याङ्गम् । रथाद्यत् ॥

रथ्या । स्त्री० रथौघे ॥ रथानासमूह । खलगोरथादितियत् ॥ प्रतोल्याम् । विशिखायाम् । राजमार्गेतरमार्गे । जनसञ्चारिणिमार्गे । वर्त्मन्याम् । पथि ॥ चत्वरे ॥ रथाय हिता । यत्प्रकरणे रथाच्चेति यत् ॥ रथवहतिवा । तद्वहतीति यत् ॥

रद । पु० विलेखने ॥ दन्ते ॥ पुरुषदन्तलक्षण यथा । विवर्णैर्धनहीना सदन्ता स्निग्धघना शुभा । तीक्ष्णादंष्ट्रा समा . श्रेष्ठाजिह्वारक्तासमाशुभा ॥ अपिच । कुन्दकुड्मलसङ्काशै प्रकारैर्दशनैर्नृप.। लक्षवानरदन्ताश्चनित्य सुपरिपीडिता . ॥ हस्तिदन्ता ' खररदा : स्निग्धदन्ताशुणान्विता ।करालैर्विषमैर्दीर्घैर्दशनैर्दु . खजीविन . ॥ द्वात्रिंशद्द तारा जानएकोनोत्तमभोगवान् । त्रिंशद्द तानरायैतैसुखदु ' खस्यभागिन ' ॥ एकोनत्रिंशद्दशना . पुरुषादु ' खजीविन . । चत्वारिंशद्दद्वायेषांतेतिदु ' खस्यभाजना ॥ स्त्रीदन्तलक्षण यथा । कुन्दपुष्पसमादन्ताभाषितकोकिलासमम् । दाक्षिण्ययुक्तमशठ हसशब्द सुखावहम् ॥ नासासमासमपुटास्त्रीणाल्पकचिराशुभा । करालविष

मादन्ता क्लेशायचभयायच ॥ चौर्यापकृष्टमासाश्चदीर्घाभर्तुस्समृत्यवे । इति ॥ दन्तस्यलग्नमशुचिस्त्व यथा । दन्तवद्दन्तलग्नेषुजिह्वास्पर्शेशुचिर्भवेत् ॥ अपिच । दन्तलग्न समहार्यलेप मन्येतदन्तवत् । नतत्रबहुश . कुर्याद्यत्नमुद्धरणेपुन : ॥ भवेदशौचमत्यर्थंतृणवेधात्र्णोकृते ॥ रदति । रदविलेखने । पचाद्यच् ॥

रदच्छद : । पुं० ओष्ठे ॥

रदन : । पु० रदे । दन्ते ॥ रद्यतेनेन । रद० । करणेतिल्युट् ॥ न० उत्खनने ॥

रदनच्छद ' । पुं० ओष्ठे ॥ अधरे ॥ रदनाश्छाद्यन्तेऽनेन । छदस वरणे० चुरादि . । पुंसीतिघ : । छादेर्घेद्व्युपसर्गस्य ॥ अस्यशुभाशुभलक्षणंयथा । मांसलैस्वधनोपेताश्चवक्रैरधरैर्नृपा: । बिम्बोपमैस्वस्फुटितैरौष्ठैरूक्षैस्सखण्डितै । विवर्णैर्धनहीना सदन्ता : स्निग्धाघना शुभा : ॥

रदनी । ) पुं० हस्तिनि ॥
रदी । )

रन्तव्य ' । त्रि० रन्तुंयोग्ये ॥ रम० । तव्य ' ॥

रन्तिदेव : । पुं० साङ्कृतिपुत्रेभरतान्वयोत्पन्ने ० चन्द्रवंशीयनृपतिश्रेष्ठे ॥ यस्ययश : पुराणेप्रसिद्धम् । यस्यकथावतोयश्लोक : । नकामयेहंग

तिमीश्वरात्परामष्टर्द्धियुक्तामपुनर्भवस्य । प्राप्तिं प्रपद्ये खिलदेहभाजामन्तः स्थितोयेनभवन्त्यदुःखा॥
गरुडध्वजे । विष्णौ ॥ कुक्कुरे ॥
रन्तु । पु॰ वर्त्मनि ॥ स्त्री॰नद्याम् ॥
रधनम् । न॰ पाके ॥छदने ॥
रन्ध्रम् । न॰ दूषणे ॥ छिद्रे ॥ रमणम् । सम्पदादित्वात्क्विप् । स च्चा पूर्वकस्त्वान्नदीर्घं । रमक्रीडाधरति । मूलविभुजादित्वात्क . ॥ यद्वा । रधयति । रधिहिंसासंराध्यो । बाहुलकाद्रक् ॥ अष्टमभवने ॥ अश्वस्यकुक्षिनाभिमध्यभागे ॥ यथोक्तम् । कुक्षिनाभ्यन्तरेरन्ध्रमुपरन्ध्रं तयोपरीति ॥
रन्ध्रकपट । पु॰ जालबर्बुरके ॥
रन्ध्रकारः । त्रि॰ छिद्रस्यकारके । रन्ध्रंहितोविधेरा॰इ॰भाषा॰प्र॰ ॥ रन्ध्रं करोति । कृञोहेतुताच्छील्यानुलोम्येष्विति ट ॥ इदन्त्यय: ॥
रन्ध्रबभ्रु । पुं॰ उन्दुरौ ॥
रन्ध्रवंश । पु॰ सच्छिद्रवंशे । कीचकाह्वये । मस्करे । सुषिरास्ये ॥ अस्यगुणायथा । वंशोत्वम्लोकषायो वकिञ्चित्तिक्तोवशीतलो । मूत्रकृच्छ्रप्रमेहार्शः पित्तदाहास्रनाशनो । विशेषोरन्ध्रवंशस्तुदीपनोजीर्णनाशकः ॥रुचिकृत्पाचनोहृद्यः शूलघ्नोगुल्मनाशन ॥

रपः । न॰ पापे ॥
रभस । पुं॰ हर्षे ॥ यथा । शुचापापचधावीपरिणतिरमेध्यप्रचयभूरयंभूतावासोविस्मृशकियतींयातिनदशाम् । तदस्मिन्धीराणांक्षणमपिकिमास्थातुमुचितफलीकार कोयदहमहमेवेतिरभसइतिशिल्हणमिश्रा. ॥ पुं॰अभिधानविशेषे ॥ पौर्वापर्यविचारे ॥ त्रि॰तद्वति ॥ रभते । रभराभस्ये । अत्यविचमीत्यादिनाऽसच् ॥ तदस्त्यर्थेआद्यच् ॥
रम । पुं॰ कान्ते ॥ रक्ताशोकद्रुमे ॥ स्मरे ॥ रमते । रम॰ । पचाद्यच् ॥ रमणे ॥
रमक । पुं॰ विलासिनि । कान्ते ॥ रमते । रम॰ । रमेरस्यलोपेतिक्वुन ॥ केनापिकर्मणाधररञ्जके ॥ रमयति । क्वुन् ॥
रमठम् । न॰ ) हिङ्गुनि ॥
रमठध्वनि. । पुं॰ )
रमण । पुं॰ धवे । प्रिये । पत्यौ ॥ स्मरे । कामदेवे ॥ रमयति । रम॰ । नन्द्यादित्वाल्ल्युः ॥ वर्णवृत्तान्तरे ॥ सगणोरमणः । कविनाकथित ॥ यथा । धनदोधनद । भवतांभवतात् ॥ रासभे ॥ वृषणे ॥ महारिष्टे ॥ न॰पटोलमूले ॥ जघने ॥ जघने । ग्राम्यधर्मे । सुरते । मैथुने । क्रीडारते ॥ महा

मृग्व ॥ क्रीडने ॥

रमणकम् । न० जम्बुद्वीपस्योपद्वीप विशेषे । रम्यकवर्षे ॥ यथा । एवमेवो त्तरेचौणिवर्षाणिचतपोधन । कुरु वर्षं शिम्बुकुलाच्छ्रङ्गवानवधि स्मृ त ॥ हिरण्मयततोवर्षं श्वेताव धिनिगद्यते । रम्यकञ्चततोवर्षं नी लस्तस्यावधि . स्मृत ॥ अपिच । दक्षिणे नतुश्वेतस्यनिषधस्योत्तरेण तु । वर्षं रमणकनामजायन्ते तत्र मानवा ॥ शुक्लाभिजनसम्पन्ना . सर्वेसुप्रियदर्शना । दशवर्षसहस्रा णिशतानिदशपञ्चच ॥ जीवन्ति तेमहाभागनित्यं मुदितमानसाः ॥ इतिपाद्मे भूखण्ड ॥

रमणा । स्त्री० रमण्याम् ॥

रमणी । स्त्री० विशेषाङ्गनायाम् । ना र्याम् ॥ रमयति०रम्यत्वात्स्याम् । रम० । ल्युट् ॥ वालाख्यत्वे ॥ वेदिकायाम् ॥ • ( * ) •

रमणीय . । त्रि० सुन्दरे । शोभने । रम० । अनीयर् ॥

रमणीयकम् । न० छन्दोविशेषे । रा न्नभद्वितयरैरुदितरमणीयकम् । इतिलक्षिते ॥

रमणीयचरण . । त्रि० सुकृतिनि । पु ण्यकर्मणि ॥ रमणीयशोभनचर- णशीलयस्य ॥

रमण्य : । त्रि० रमणीये ॥ रमतेऽस्मि न् । रम० । शूरम्योश्च स्यन्य : ॥

रमति । पु० नायके ॥ नाके ॥ कामदेवे ॥ काले ॥ रमतेऽस्मिन् । रम० । रमेर्निदिश्यति ॥

रमा । स्त्री० लक्ष्म्याम् । पद्मालयाया म् । सर्वत्ररमसे यस्माद्रमातस्माद्द- विष्यसीतिविष्णुशापोक्त्येतुक्ता श्रीदेवीभागवते ॥ हालाहलोनैव- विष विष रमापर जनाव्ययमेवम न्वते । योगेनजागर्त्ति निपीयत शिव ' स्मरन्रमामुञ्चतिनिद्रयाह रि ॥ रमयति । रमक्रीडा याम् । पचाद्यचि०टाप् ॥ शशिध्वजराजक न्यायाम् । कल्किदेवपत्न्याम् ॥ शोभायाम् ॥

रमाधव : । पु० )

रमानाथ ' । पु० )

रमापति : । पुं० ) विष्णौ ॥ रमाया धवः ॥ नाथ : पतिर्वा ॥ *

रमाप्रियम् । न० पद्मे ॥

रमावेष्ट ' । पुं० श्रीवासे ॥

रमित ' । त्रि० रतिप्रापिते ॥

रमेश्वर : । पुं० विष्णौ ॥

रम्भ . । पुं० वेणौ ॥ वैणवदण्डे ॥ वानरविशेषे ॥ महिषासुरस्यपित रि रभते । रभराभस्ये । पचाद्य च् । रभेरशब्लिटोरितिनुम् ॥

रम्भा । स्त्री० कदल्याम् ॥ अपसरो भेदे ॥ दुर्गायाम् ॥ गोध्वनौ ॥ वे

भ्यायाम् ॥ रमते । रम० घञ् । टाप ॥ रम्यतेवा । घञ् ॥
रम्भातृतीया । स्त्री० व्रतविशेषकाले ॥
रम्भोरू. । स्त्री० स्त्रीविशेषे ॥ रम्भे० कदलीस्तम्भाविवऊरूयस्याः. सा। ऊरूत्तरपदादौपम्यइत्यूङ् ॥
रम्य. । पु० चम्पके ॥ चम्पकवृक्षे ॥ न० पटोलमूले ॥ प्रधानधातौ ॥ त्रि० मनोज्ञे । हृद्ये । स्वभाव सुन्दरे ॥ रम्यायाविकृतिरपिश्रिय तनोति ॥ रम्यतेक्रीड्यतेयत्र । रम० । पोरदुपधादितियत् ॥ बलकरे॥
रम्यकम् । न० पटोलमूले । नील गिरिदर्दम्र्दशवत्तमाने० वर्षवि शेषे ॥ नीलनीरजरम्यस्यरम्यकैद्दा दृशस्थिति: । जनस्तत्राव्दसहस्त्राणि न्यग्रोधफलमश्नत: ॥
रम्यपदपाठ. । पु० देवतापदस्तोभे. कालपूरणे ॥
रम्यपुष्प. । पुं० शाल्मलिपादपे ॥
रम्यफल. । पु० कारस्करवृक्षे ॥
रम्या । स्त्री० रात्रौ ॥ स्थलपद्मिन्याम् ॥
रम्र. । पुं० अरुणवर्णे ॥ शोभायाम्॥
रय: । पुं० वेगे । वेगाख्यगुणे ॥ स वेगगतिःवचनेस्वप्रयोग: ॥ प्रवाहे ॥ रयत्यनेन । रयणंवा । रयगतौ । पुंसीतिघ: । रीणात्यनेना । रीगतिरेषणयो: । पुंसीतिघ: ॥ ह्वलसेतिघभितु० संज्ञापूर्वकत्वा
द्गुणाभाव ।
रयि. । पुं० धने । जले ।
रराटी । स्त्री० ललाटे ॥
रल्लक: । पुं० कम्बले ॥ कम्बलमृगे ॥ पक्ष्मणि ॥ रमते । रम० । क्विप् । गमादीनांक्वाविति मलोप । तुक् । लाति । ला० । क्विप । रत्चासौलाश्च । स्वार्थेकन । कंप्य इतिह्रस्व ॥ यद्वा । रमणम । रमि सम्पदादिक्विप । रत्क्रीडा लक्यतेऽनेन । लकआस्वादने । घ: ॥ रत लातिवाक्वुन ॥ स्त्रीणां सि दूरसरण्याम् ॥
रल्लकभल्लकम् । न० सिन्दूरसरणौ । मागधू० भा० ॥ शिर: सिन्दूरस रणि । स्त्रीणारल्लकभल्लकमित्युक्ते ॥ सीतारल्लकभल्लभग्नहृदय स्वस्थो नलङ्केश्वरइतिलक्ष्यम् ॥ रल्लकोभ ल्लकमिव ॥
रव. । पु० ध्वनौ । स्वने । शब्दे ॥ रवणम । रुशब्दे । ऋदोरप् ॥ ल घुवर्णे० ॥
रवथ. । पु० उष्ट्रे ॥ कोकिले ॥ खरे ॥ न० कांस्ये ॥ रवे ॥ त्रि० शब्द- ने । तीक्ष्णे ॥ भण्डके ॥ चञ्चले ॥ रौति० तच्छील: । रु० । चलन शब्दार्थादकर्मकाद्युच् । युयुवत्तोयो र्णातियुक्त्वा ॥
रवथ । पुं० कोकिले ॥ रौति ।

रु० शीङ्शपिरुगमीत्यादिनाऽथप्रत्यय ॥

रवि । पु० सूर्ये । आदित्ये । दिवाकरे ॥ रसान्आदत्ते० इतिरवि । अत्ररसशब्दस्लोप श्रोत्वस्यादानमर्थं । वीगत्यादाविति धातोर्वौ तिरूपम० पृषोदरादित्वात्साधुत्वम् । पृषोदरादित्वकल्पनामूलन्तुविष्णुधर्मोत्तरवचनम् । तद्यथा । रसानाश्वतयादानाद्रविरित्यभिधीयतेइति ॥ प्रकाशानामध्येर विर्विष्णोर्विभूति ॥ रूयते० स्तूयते । रुशब्दे । अचइ. ॥

रविकान्त । पुं० सूर्यकान्तमणौ ॥

रविचक्रम् । न० नराकारसूर्यचक्रविशेषे ॥

रविज : । पुं० शनैश्चरे ॥

रवितनय । पुं० सावर्णिकेमनौ ॥ शनौ ॥ यमे ॥

रविनन्दन । पु० सुग्रीवाख्यवानरे ॥ वैवस्वतमनौ ॥ सावर्णिमनौ ॥ शनौ ॥ यमे ॥

रविनाथम् । न० बन्धुजीवके ॥ पद्मे ॥

रविपत्र । पुं० आदित्यपत्रक्षुपे ॥

रविपार्श्वग : । पुं० चण्डांशौ पार्श्विकेषु ॥ तेयथा । माठर . पिङ्गोदण्डश्चण्डांशौ, पारिपार्श्विकाः । अपिच । वाहु : शोष . खर पद्मोद्वारकोणानुकारकः । पिङ्गो यक्षश्चपुरुष प्राप्ययातप्रतापकौ ॥ आश्विनेयौतथादण्डोकुल्माष पार्श्वगारवे : ॥

रविप्रिय । पुं० आदित्यपत्रे ॥ रक्तकरवीरे ॥ लकुचे ॥ न० ताम्रे ॥ रक्तकमले ॥

रविप्रीता । स्त्री० सुवर्चलायाम ॥

रविरत्नकम् । न० माणिक्ये ॥

रविलोचन । पुं० विष्णौ ॥ रविर्लोचनमस्यविराडात्मनइतिरविलोचन ॥

रविलोहम् । न० ताम्रे ॥

रविसञ्ज्ञकम् । न० ताम्रे ॥

रविसुत । पु० सुग्रीवे ॥

रविसूनु । पुं० शनौ ।

रवीन्दम् । न० पद्मे ॥

रवीषु । पुं० कामे ॥

रशना । स्त्री० काञ्च्याम् । कटिभूषणे ॥ अश्नुते । अशूङ्व्याप्तौसङ्घातेच । अशभोजनेवा । अशिरशश्चेति युच्० धातोरशादेश : ॥ यद्वा । रशति । रशशब्देसौत्र: । बहुलमन्यत्रापीतियुच् ॥ जिह्वायाम् ॥

रश्मि । पुं । दीधितौ ॥ पक्ष्मणि । नेत्रपत्रे ॥ अश्वरज्जौ । प्रग्रहे । रथाङ्गयुक्ताश्वादीनांसंयमनरज्जौ । अश्नुतेनेनवा । अशू० । अश्नोति रशश्चेतिमि . ॥ सूर्यस्यरश्मिना

जलादानादानेयथा । तेजोभिः सर्व लोकेभ्यो ह्यादत्तेरश्मिभिर्जलम् । स मुद्रादायुसयोगाद्दह्न्त्यापोगभस्तय ॥ ततस्तुपयसाकालेपरिवर्त्तनृदिवा कर. । नियच्छत्यपोमेघेभ्य : शुक्ला शुक्लैस्तुरश्मिभिरिति ॥ अन्नयादव: । तासांशतानिचत्वारिरश्मीनांवृष्टिसर्जने । शतत्रयहिमोत्सर्गेताव दृगर्भस्यसर्जने ॥ आनन्दाश्चहिमे ध्याश्चनूतना पूतनाइति । चतु शतवृष्टिवाहास्ता सर्वाअमृताख्य इति ॥

रश्मिपति । पुं॰ आदित्यपचचुपि ॥

रस । पुं॰ गन्धरसे ॥ जले ॥ विषे ॥ वीर्ये ॥ द्रवे ॥ रोगे ॥ स्वादे ॥ रसनाग्राह्येगुणे ॥ सचकालसत्तायभूमिवियदनिलानलससर्गेणपरिणामान्तरगत. षड्विधोभवति । तत्र पृथिव्यम्बुगुणबाहुल्यान्मधुर । १ । तोयाग्निगुणबाहुल्यादम्ल . २ । पृथिव्यग्निगुणबाहुल्याल्लवण . ३ । वाय्वग्निगुणबाहुल्यात्कटुक ४ । वाय्वाकाशगुणबाहुल्यात्तिक्त : ५ । पृथिव्यनिलगुणबाहुल्यात्कषाय . ६ । आपोरसानामाधारकारणम् ॰ चैतेषाम्योनाम । अपांपृथिव्यामनुप्रवेशात्पृथिव्यप्याधारकारणमेव । तेनजलक्षितौअपितदाधारतयारसानामभिव्यक्तौकारणं । अभिव्यक्तिश्चमधुरादिरूपमन्तरेणास त्वात् ॰ मधुरादिविशेषेपिजलक्षितौ कारणं । अन्यादयस्तुचयोनीरसत यामधुरादिविशेषप्राधान्येननिमित्तकारणम् । तद्व्यतिरेकेणाम्लादि रसाभावात् । रसाभिव्यक्तेश्च॰अ न्यादिभूतत्रयसन्निधानविनानुपल ब्धेरभिव्यक्तावपि॰अन्यादीनाकारणत्वम् । अत्राहमाधवाचार्य्य : । कफवातौवातकफौवात . पित्तस्यवृद्धिशमौ । त्रिभिराद्यैस्त्रिभिरन्यै स्त्रिभिराद्यपरैस्तदन्यैश्च १ ॥ अन्त्याद्याबाद्यमाद्यान्त्यावन्त्यंकोपशममलम् । मध्यमध्येतरौमर्ध्यप्रयोगान्नयतस्त्रिकौ ॥ २ ॥ आद्यमर्ध्यंन यन्त्यन्त्यंमधुराद्या शमेतरौ । आद्यमध्यानृत्यमाद्यश्चमध्यमान्तिमम न्तिमम् ॥ ३ ॥ आद्यंमध्यश्चमध्यान्त्यमाद्यमध्यान्तिमक्रमात् । आद्यौ द्वौरसा . प्राय: प्रयोगपरिशीलिता इति ॥ ४ ॥ मधुराम्ललवणकटुतिक्तकषाया षड्रसा: । तत्रत्रिभिराद्यैर्मधुराम्ललवणै. कफवातौ यथाक्रमम्वृद्धिशमौवात: । यातइत्यर्थ. । कफेइति यातिवात:शमयातीत्यर्थ. । वातइतिवागतिगन्धनयोरित्यस्यधातोरूपम । वातइतिसर्वत्रसम्बध्यते । अन्यैस्त्रिभि । कटुतिक्तकषायै : वातकफौवृद्धिशमौ

वात . वातोवृद्धि वातिकफ ' शम यातीत्यर्थं ॥ आद्यपरैस्तदन्यैरेवपि त्तवृद्धि वातिमर्थवशाद्वचनविपरि णाम.। आद्योमधुर. तस्मात्परैरम्ल लवणकटुकैस्त्रिभि पित्तवृद्धियाति त दन्यैस्तेभ्योन्यैर्मधुरतिक्तकषायै शम याति।केचित्तुतदन्यैरित्येवम्पठित्वा सचन्यैरेवेतिविग्रहङ्कृत्वासमधुर अ न्यौतिक्तकषायौतैर्मधुरतिक्तकषा यैरितिव्याख्यानयति॥ पिण्डार्थस्तु॰ कफवातौ॰वातकफौ॰त्रिभिराद्यै स्त्रिभिरन्यैश्चयथासङ्ख्यं वृद्धिशमौ वात । पित्तञ्चत्रिभिराद्यपरैस्तद न्यैर्वृद्धिशमौवातीत्येकोर्थः . ॥ १ अन्त्येति । अन्त्यस्त्रिक : कटुतिक्त कषायाख्य .। चयाणांसमूह त्रि क । आद्यस्त्रिकोमधुराम्ललवणा ख्य :। एतौद्वौत्रिकौ॰आद्य मल वातंकोपशमौनयत : । मध्यमध्येत रौत्रिकौमध्यश्चमध्यौचविद्यान्तेयस्मि न्नसौमध्य इतरश्चतौत्रिकौ॰मधु राम्ललवणा. आद्यस्त्रिक .॰ तत्रम ध्योऽम्ल. प्रथमातिरिक्तोकारणाऽभा वात्स्वाद्यम्ललवणाकटुतिक्तकषाये षुषट्सुमध्यौलवणकटूसमध्यस्त्रि क . इतरोऽस्मादन्योमधुरतिक्तक षायाख्य :॰ एतौमध्यवातपित्तक फेषुपित्ताख्यंक्रमेणकोपशमौनयत. ।अन्त्यंकफमाद्यान्त्यौ॰आद्यस्त्रिको

मधुराम्ललवणाख्य । अन्त्यस्त्रि क कटुतिक्तकषायाख्य क्रमे णकोपशमौनयत ॥ २ ॥ ( + ) मधुराद्या षड्रसा प्रयोगेणभ- क्षणादिनापरिशीलिताअभ्यस्ता . क्रमेणआद्यमध्यमन्त्यमित्याद्दीन्प्रा योबाहुल्येन॰शमेतरौशमप्रशममभि तरकोप तेनयन्तिप्रापयन्ति । तत्र मधुरआद्यमध्यम्आद्यश्चमध्यश्चेति- द्वन्द्वैकवत्। आद्यवायुमध्य- पित्त शम नयति । अन्त्यंभवमन्त्य कफकोप नयति ॥ अम्ल ' आद्य वायुशमनयतिमध्यान्त्यम्पित्तक फौकोप नयति ॥ लवण . आद्य वायुशमंनयतिमध्यमान्तिम पित्त कफौकोप नयति॥कटुरन्तिम कफ शमंनयतिआद्यमध्यञ्चवातपित्तौ कोप नयति । तिक्त मध्यान्त्यं- पित्तकफौशम नयतिआद्यवायुंको पंनयति ॥ कषाय . मध्यान्तिमं- पित्तकफौशम नयतिआद्यवायुंको पंनयति प्रायइतिव्यभिचारात् । यथामधुरशीतापिजीवन्तीकफ शम यति । मधुरोरसोवायुंकोपयति । एवकटुकोपिरसोनैवायुशमनय- ति । एवमम्लादिष्वपिक्वचिद्व्यभि चार .॥ ३ ॥ ४ ॥ तदुक्तंचरके । रसनार्थोरसस्तस्यद्रव्यमाप ' क्षिति स्तथा ' निर्वृत्तौचविशेषेचप्रत्यया '

स्वादयस्तथ : ॥ एतेचरसा . परस्प
रसंयोगात्सप्तपञ्चाशद्भवन्तीतिचक्र
पाणिदत्त ॥ अपिच । स्वादुरम्ल
वणास्तिक्त . कटुकश्चकषायक ।
अमीतुषड्रसा ख्याता : निर्वलो
अपर पर ॥ न्यायमतेतु । रस
स्तुरसनाग्राह्योमधुरादिरनेकधा ।
सहकारीरसज्ञायानित्यत्वादिचपू
र्ववत् ॥ सहकारीति॰रासनज्ञानेर
सकारणमित्यर्थ । पूर्ववदिति ।
जलपरमाणोरसोनित्य . अन्य .
सर्वोपिरसोऽनित्यइत्यर्थ ॥ शृङ्गा
रादौ ॥ तेयथा । शृङ्गारहास्यकरु-
णारौद्रवीरभयानका . । वीभत्सा
द्भुतसञ्ज्ञौचेत्यष्टौनाट्ये रसा स्मृ
ता ॥ अयब्दात्॰शान्तोपिनवम प्रो
क्तोवात्सल्य दशम 'स्मृत । अष्टावि
त्यप्रसिद्धत्वादित्यस्यान्यत्रविस्तर ॥
देहस्थधातुप्रभेदे । रसिकायाम् ।
स्वेदमातरि । चर्मसारे । रक्तसारे
॥ भुक्तस्यपक्वस्यसारभूतोयोद्रव .
सरस . सोपिपच्यते । इतिभिष
ज ॥ अस्यस्वरूपमाह . । यथा
। सम्यक्पक्वस्यभुक्तस्यसारोनिगदि
तोरस . । सतुद्रव : सित : शीत'
स्वादु . स्निग्धश्चलोभवेत् ॥ तस्य
स्थानमाह । सर्वदेहचरस्यापिरस
स्यहृदयंस्थलम् । समानमरुता
पूर्वयदय हृदयेधृत ' ॥ तस्यकर्मा

प्याह । आरुह्यधमनीर्गत्वाधातून्
सर्वानयं रस । पुष्णातितदनुस्रो
यैर्व्याप्नोतिचतनु गुणै ॥ गुणै
शीतस्निग्धपोषकत्वै ॥ मन्दवह्नि
विदग्धस्तुकटुर्वाम्लोभवेद्रस ।
सकुर्यात्कुलान्रोगान्विषक्लत्य का
रोत्यपि ॥ पारदे॥ रसायनार्थिभि
र्लोकै पारदोरस्यतेयत । ततो
रसइतिप्रोक्त . सचधातुरपिस्मृत
॥ रागे ॥ तृष्णायाम् ॥ क्षुद्रसुख
रागे॥ सविकल्पकानन्दे ॥ रसय
ति॰आस्वाद्यते । रसआस्वादने ।
चुरादिरदन्त । एरच् ॥ रस्यते॰
आस्वाद्यतेऽनेनवा । कर्मणिघञ्
। अङ्गापस्यथानिवत्वान्नवृद्धि ॥
अपांसारोरसइत्यन्यत्र ॥ सप्ताङ्क ॥
लघ्वादिचिकते ० । ऽ ॥ मात्रामा
ने ॥ न॰ बोले ॥

रसक । पु॰ निष्क्वाथमांसे ॥ न॰
खर्परीतुत्थे ॥ येगुणास्तुत्थकेप्रोक्ता
स्ते गुणारसकेस्मृता ॥

रसकर्पूर । पु॰ न॰ कर्पूररसे ।
रसकपूर इतिख्याते ॥

रसकेशरम् । न॰ कर्पूरे । सिता
भ्रे ॥

रसगन्ध . । पुं॰ गन्धरसे । बोले ॥
गन्धवान् रसोऽस्य । राजदन्ता
दि ॥

रसगन्धक । पुं॰ गन्धरसे । बोले

॥ स्त्रर्थे कन्नूलिक ॥ गन्धके ॥

रसगर्भम् । न० रसाञ्जने । रसोग र्भोऽस्य ॥ हिङ्गुलि ॥

रसघ्न । पु० टङ्कणे ॥

रसजम् । न० रक्ते ॥ रसाञ्जने ॥ मद्यकीटे ॥ गुडे ॥

रसज्ञ । त्रि० रसिके ॥ रसं जानाति । ज्ञा० । आतोनुपेतिक. ॥

रसज्ञा । स्त्री० जिह्वायाम् ॥ टाप् ॥

रसज्येष्ठ । पुं० मधुररसे ॥ रसज्ञानामिष्ट ॥

रसज्येष्ठ । पु० मधुररसे ॥ शृङ्गार रसे ॥

रसत् । त्रि० गर्जति ॥ रसति । रस-शब्दे । लट. शतृ ॥

रसतेज: । न० रक्ते ॥

रसशब्द: । पुं० सशब्दमेघे ॥

रसदालिका । स्त्री० पुण्ड्रकेक्षौ ॥

रसद्रावी । पुं० मधुरजम्बीरे ॥

रसधातु: । पुं० पारदे ॥

रसधेनु: । स्त्री० दानार्थेक्षुरसनिर्मितधेनौ ॥

रसनम् । न० स्वदने । स्वादे ॥ ध्वनौ ॥ रसग्रहणलिङ्गेन्द्रिये । जिह्वायाम् ॥

रसना । स्त्री० राश्नायाम् ॥ काञ्च्याम् ॥ रज्जौ ॥ गन्धालिकायाम् ॥ जिह्वायाम् ॥ अस्या: शुभाशुभलक्षणं यथा । कृष्णाजिह्वाभवेद्य स्यसमलायदिवाभवेत् । नपापवान् भवेन्मर्त्यंश्चास्थूलायथाभवेत् ॥ श्वेतजिह्वानरा ज्ञेया शौचाचारविवर्जिता । पद्मपत्त्रसमाजिह्वासूक्ष्मादीर्घासुशोभना ॥ नस्थूलानातिविस्तीर्णायेषांतेमनुजाधिपा: । निम्नदीर्घाचकृष्णाचरक्तायारसनायदि ॥ सर्वविद्याप्रवक्तासौभवेन्नास्त्यत्रसंशय. ॥ रसयति । रसआस्वादने । नन्द्यादित्वाल्ल्यु ॥ रसयन्त्यनया । ग्रासग्रन्थेतियुच्वा ॥ रसति । रसशब्दे । बहुलमन्यत्रापीतिवायुच् ॥

रसनाथ । पुं० पारदे ॥

रसनायक । पुं० शिवे ॥

रसनालिट् । पुं० कुक्कुरे ॥

रसनेत्रिका । स्त्री० मन. शिलायाम् ॥

रसपाकज: । पुं० गुडे ॥

रसफल । पु० नारिकेलवृक्षे ॥

रसभवम् । न० रक्ते ॥

रसमर्दनम् । न० पारदचूर्णीकरणे ॥

रसमान । त्रि० कूजनशीले ॥ रसते: परस्मैपदित्वात् ० ताच्छील्यवयोवचनशक्तिषुचानश्प्रत्ययेनशानच् ॥

रसमारणम् । न० पारदस्यमारणे ॥

रसमूर्च्छनम् । न० पारदस्यमूर्छीकरणे ॥

रसराज । पुं॰ पारदे ॥ रसाञ्जने ॥
रसवान् । त्रि॰ सरसे ॥
रसवती । स्त्री॰ पाकस्थाने । महानसे ॥ रसा सन्त्यस्याम् । रसादिभ्यश्चेतिमतुप् । उगितश्चेतिङीप् ॥
रसलेह: । पु॰ पारदे ॥
रसविक्रयी । त्रि॰ दुग्धादिरसविक्रेतरि ॥
रसवित्द् । त्रि॰ रसज्ञे ॥
रसशेष । पुं॰ अपक्करसे ॥ भुक्तस्यपक्वस्यसारभूतोयोद्रव: सरस । स चापक्क सरसशेषइत्युच्यते ॥
रसशोधनम् । न॰ टङ्कणे ॥ पारदशुद्धौ ॥
रससिन्दूरम् । न॰ सिन्दूररसाख्यौषधे ॥
रसस्थानम् । न॰ हिङ्गुले ॥ हृदये ॥
रसा । स्त्री॰ रसनायाम् । रास्नायाम् ॥ पाठायाम् ॥ शल्लक्यामोषधौ ॥ कङ्ग्वाम् ॥ भूमौ ॥ द्राक्षायाम् ॥ काकोल्याम् ॥ रसोस्यामस्ति । अर्शआद्यच् ॥ रस्यतेवारस्यास्वादनेचुरादावदन्त । घञ्॰अज्वा ॥
रसाखन: । पुं॰ कुक्कुटे ॥
रसायनस् । न॰ रसाञ्जने ॥
रसाञ्जनम् । न॰ रसजाताञ्जनविशेषे । रसगर्भे । तार्क्ष्यशैले । रसवत्॰र सौत इतिभाषा ॥ रौत्यान्तुध्मायमानायांतत्किट्टन्तुरसाञ्जनम् । दद्रुनेतुकसंव्यदार्वीक्काथसमुद्भवम् इतिराजनिघण्ट । अपिच । दार्वीक्काथसमक्षीरपाकनोत्थाय घनम् । तदारसाञ्जनाख्य तन्नेत्रयो परम हितम् ॥ रसाञ्जनता र्क्ष्यशैलरसगर्भन्तुतार्क्ष्यजम् । रसाञ्जनकटुश्लेष्मविषनेत्रविकारनुत् ॥ उष्णरसाञ्जनतिक्तछेदनव्रणदोषहृत् । इति ॥ रसयुक्तमञ्जनम । शाकपार्थिवादि ॥
रसाढ्य: । पुं॰ आम्रातके ॥ त्रि॰ सरसे ॥
रसातलम् । न॰ पाताले ॥ रसायाभुवस्तलमध: ॥
रसात्मक । त्रि॰ रसस्वभावे ॥ रस आत्मायस्य ॥
रसादानम् । न॰ शोषणे ॥ रसानामादानम् ॥ भूमिदाने ॥
रसाधार: । पु॰ सूर्ये ॥ रसस्याधार ॥
रसाधिक । पु॰ टङ्कणे ॥ अधिकरसे ॥
रसाधिका । स्त्री॰ काकोलीद्राक्षायाम् ॥
रसाभास: । पु॰ अनौचित्यावाप्तरसे ॥
रसाम्ल । पु॰ अम्लवेतसे ॥ न॰ वृक्षाम्ले ॥ चुक्रे ॥
रसायक । पुं॰ तृणविशेषे ॥
रसायनम् । न॰ जराव्याधिजिदौषधे

॥ नसूतेनविनाकान्तनकान्तेनवि
नारसः । सूतकान्तसमायोगाद्रसा
यनमुदीरितमितिराजनिर्घण्टः ॥
भावप्रकाशेतल्लक्षणादिर्यथा । यज्ज
राव्याधिविध्वंसिवयस्तम्भकरंतथा
। चक्षुष्यंबृंहणंवृष्यंभेषजंतद्रसायन
म् ॥ दीर्घमायुः स्मृतिंमेधामा
रोग्यंतरुणंवयः । देहेन्द्रियबलंका
न्तिंनरोविन्देद्रसायनात् ॥ विशेषो
ऽस्यभावप्रकाशादिषुद्रष्टव्यः ॥ विषे
॥ काटौ ॥ तक्रे ॥ पुं० पक्षिराजे ।
गरुडे ॥ विडङ्गे ॥

रसायनफला । स्त्री० हरीतक्याम् ॥
रसायनानिफलान्यस्याः ॥

रसायनश्रेष्ठः । पुं० पारदे ॥

रसायनी । स्त्री मञ्जिष्ठायाम् ॥ गुडू
च्याम् काकमाच्याम् ॥ मह्
कारम्भे ॥ गोरक्षदुग्धायाम् ॥
मांसच्छदायाम् ॥

रसालः । पुं० आम्रे ॥ इक्षौ ॥ रस
मलति । अल० । कर्मण्यण् ॥
यद्वा । रसेनअलति० अल्यतेवा०
पूर्यते० पूरयतिवा । अजेरच०च-
व्वा ॥ पनसे ॥ कुन्दरुकौ ॥ गो
धूमे ॥ पुण्ड्रकनामेक्षौ ॥ म०बो-
ले ॥ सिह्लके ॥

रसालवटः । पुं० यक्षपुर्यांवटयक्षि-
णीस्थाने ॥

रसालसा । स्त्री० नाड्यां ।

रसाला । स्त्री० रसनायाम् । जिह्वा-
याम् ॥ दूर्वायाम् ॥ विदार्याम्
द्राक्षायाम् ॥ शिखरिणीतिप्रसिद्धा
याम् । मार्जितायाम् । अस्याः
करणप्रकारोयथा । आर्द्रमाहिषम
म्लमम्बुरहितंदध्याढकंशर्कराशुभ्रां प्र
स्थयुगोन्मितांशुचिपटेकिञ्चिच्चकि
ञ्चित्क्षिपेत् । दुग्धेनार्द्धघनेनसम्म
थनवस्त्राल्यांदृढंस्रावयेदेलाजीजल
वङ्गचन्द्रमरिचैर्योग्यैस्ततोयोजयेत्
॥ भीमेनप्रियभोजनेनरचितानाम्ना
रसालास्वयंश्रीकृष्णेनपुरापुनःपु
नरियंप्रीत्यासमास्वादिता । एषाये
नवसन्तवर्जितदिनेसंसेव्यतेनित्यश
स्तस्याद्रतिवीर्यवृद्धिरनिशंसर्वेन्द्रि
याणांबलम् ॥ ग्रीष्मे तथाशरदि ये
रविशोषिताङ्गायेचप्रमत्तवनितासुर
तातिखिन्नाः । येचापिमार्गपरि
सर्पणशीर्णगात्रास्तेषामियंवपुषि
पोषणमाशुकुर्यात् ॥ रसालाशुक्र
लाबल्यारोचनीवातपित्तजित् ।
दीपनीबृंहणीस्निग्धामधुराशिशि
रासरा ॥ रक्तपित्ततृषादाहप्रति
श्यायंविनाशयेदिति ॥ अपिच ।
अर्द्धाढकंसुचिरपर्युषितस्यदध्नः ख
ण्डस्यषोडशपलानिशशिप्रभस्य ।
सर्पिःपलंमधुपलंमरिचंद्विकर्षंशु
ण्ठ्याःपलार्द्धमपिचार्द्धपलंचतुर्णा
म् ॥ सूक्ष्मपटेललनयामृदुपाणिघृ

ष्टाकपूरघूलिसुरभीकृतपाचसस्या
एत्राहकोदरकृतासरसारसालाया
स्वादिताभगवतामधुसूदनेनेति ॥

रसान्चालाति । ला० । मूलविभु
जादित्वात्क । टाप् ॥

रसालिहा । स्त्री० श्रीर्षनालायाम् ।
पृथक्पर्य्याम् । चाकुलिया० द्र०
गौ० दे० भाषा ॥

रसाली । स्त्री० पुण्ड्रकेचौ ॥

रसाश्वासा । स्त्री० पलाशीलतायाम् ॥

रसास्वाद । पु० अखण्डवस्त्ववलम्ब
नेनापिचित्तवृत्ते सविकल्पका
नन्दास्वादने । धन्योऽहमित्याद्यान
न्दाकारवृत्तौ ॥

रसास्वादी । पु० भ्रमरे ॥ त्रि० रसा
स्वादविशिष्टे ॥ रसानाग्मास्वादी ॥

रसाङ्क । पुं० सरलद्रुमरसे ॥

रसिक । पु० सारसखगे ॥ तुरगे ॥
हस्तिनि ॥ त्रि० सरसे । रसज्ञे ।
रसिया० द्र० भा० रसोऽस्यास्ति
नुवाठन् ॥

रसिका । स्त्री० रसालायाम् ॥ इक्षुर
से ॥ कटिसूत्रे । काञ्च्याम् ॥
रसनायाम् ॥ रागवत्याम् । रसी
लौ० द्र० भा० ॥ टाप् ॥

रसिकेश्वर । पुं० श्रीकृष्णे ॥ वृन्दा
वनान्तरे रम्येरासोत्सवसमुत्सुकम्
। रासमण्डलमध्यस्थं नमामिरसि
केश्वरम् ॥

रसिकेश्वरी । स्त्री० श्रीराधिका या
म् ॥

रसितम् । न० रुते ॥ स्तनिते । मेघ
निर्घोषे ॥ त्रि० स्वर्णादिखचिते ।
सुवर्णादिलिप्ते ॥ रसशब्दे । भावे
क्त । ॥

रसितवान् । त्रि० आस्वादितवति ॥
रसआस्वादने । क्तवतुप्रत्यय । ॥
उगितश्चेतिङीपि०रसितवती ॥

रसुन । पु० कन्दविशेषे । लशुने ॥

रसेन्द्र पुं० पारदे । रसानामिन्द्रः ॥

रसोत्तम । पु० मुद्गे श्रेष्ठरसे ॥
त्रि० तद्वति ॥

रसोद्भवम् न० हिङ्गुले ॥ त्रि० रस
जाते ॥

रसोन । पुं० लशुने । रसानके ॥
रसआस्वादने०चुरादिरदन्त ।
जन्यते । पातकहेतुत्वात । जन
परिहाणे । चुरा अदन्त: । घुर
च् । घञ् वा ॥ लशुनस्तुरसोनः
स्वादुरगन्धोमहौषधम अरिष्टा
स्त्रे च्कन्दसयवनेष्टोरसोनक ॥
अस्योत्पत्तिर्यथा । यदाजहार
गरुडोजहारसुरसत्तमात् तदातस्मा
पतद्बिन्दु । सरसोनोभवद्भुवि ॥
पञ्चभिश्चरसैर्युक्तोरसेनाम्लवर्जि
त: । तस्माद्रसोनइत्युक्तोद्रव्या
णांगुणवेदिभि ॥ कटुकश्चापिमू
लेषुतिक्त पत्रेषु संस्थित: ।

राक्षस । पुं॰ कौणपे । क्रव्यादे । आशरे । रात्रिचरे । यातुधाने ॥ रक्षन्त्यस्मात् । रक्षपालने । असुन् । प्रज्ञाद्यण्॰ राक्षसः । स्वार्थिका । प्रकृतितोलिङ्गवचनान्यतिवर्तन्तइतिपुंस्त्वम् ॥ विवाहविशेषे । यथा । हत्वाछित्वाचभित्वाचक्रोशन्तींरुदतींगृहात् । प्रसह्यकन्याहरणंराक्षसोविधिरुच्यते ॥ रक्षसइवायम् । अण् । षष्टिवत्सरान्तर्गतवत्सरविशेषे ॥ यथा । कोद्रवा शालिमुद्गाश्चपीड्यन्तेवरवर्षिणि । सर्वौषधानिधान्यानिराक्षसेनिष्ठुरा प्रजा ॥

राक्षसिका । स्त्री॰ राक्षसीसङ्क्रान्तौ ॥

राक्षसी । स्त्री॰ चण्डायाम् । धनहर्यामौषधौ ॥ कौणप्याम् । राक्षसस्त्रियाम् । दंष्ट्रायाम् । डाढ दाढ॰ इ॰ भा॰ ॥ सायाह्नवेलायाम् ॥ सूर्यसंक्रान्तिविशेषे ॥ यथा । शनौ तोयासक्ते भवेद्राक्षसीसामुखायाम्जानातदामासमेकम् ॥ तामस्याप्रकृतौ ॥ अविहितहिंसाहेतुद्वेषप्रधानाराक्षसीप्रकृतिः । वैदिकानिषेधातिक्रमेणस्वभावसिद्धरागद्वेषानुसारिसर्वानर्थहेतुप्रवृत्तिहेतुभूतातामसी हिंसाप्राधान्येनद्वेषप्राबल्याद्राक्षसीत्वमस्याः ॥ रक्षसइयम् । तस्येदमित्यण् । ङीप् ॥

राक्षसेन्द्र । पुं॰ रावणे ॥

राक्षा । स्त्री॰ लाक्षायाम् । रक्ष्यतेऽनया । रक्ष॰ । गुरोश्चहलइत्य । प्रज्ञाद्यण् । अजादित्वाट्टाप ॥

राग । पुं॰ मात्सर्ये ॥ लोहितादिषु ॥ जपाकुसुमादिद्रव्ये ॥ क्रोधादौ ॥ अनुरागे । परस्परप्रीतौ । स्नेहे ॥ तल्लक्षणंयथा । सुखमप्यधिकचित्तेसुखत्वे नैवरज्यते । यतस्तुप्रणयोत्कर्षात् सरागइतिकीर्त्यते ॥ इति ॥ सुखानुशयिनि । साधनरहितस्यापि॰ सर्वंसुखजातीयमेभूयादितिविषयविशेषे । महामोहे ॥ मोहादनुभूयमानसुखमनुशेतेकश्चिच्चित्तवृत्तिविशेषोरागः । सर्वंसुखजातीयमेभूयादिति । तच्चदृष्टादृष्टसामग्र्यभावात्सम्पादयितुमशक्यम्॰ अतः सचित्तं कलुषीकरोति । यदातु॰ सुखिषुप्राणिष्वयमैत्रीभावयेत्॰ सर्वेप्येतेसुखिनोमदीयाइति॰ तदातत्सुखस्वकीयमेवसम्पन्नमितिभावयतस्तत्रराणोनिवर्तते । यथास्वस्यराज्यनिवृत्तावपिपुत्रादिराज्यमेवस्वकीयराज्यं तद्वत् । निवृत्ते चरागे॰ वर्षाव्यपायेजलमिवचित्तं प्रसीदति ॥ रज्यतेविषयेषुपुरुषोऽनेनेति व्युत्पत्त्या॰ कामे । गर्वे । ततृतत्फलतृष्णायाम् ॥ प्राप्तोविषय । क्षयकारणेसत्यपिनक्षीयतामित्येवमा

कारश्चित्तवृत्तिविशेषोरञ्जनात्मारा
ग ॥ सदाकामाभिनिविष्टस्वरूपो
भिष्वङ्गोराग . ॥ शोभनाध्यासनि
बन्धनोविषयेषुरञ्जनात्मकश्चित्तवृ-
त्तिविशेषोऽत्यन्ताभिनिवेशरूपोरा-
ग : ॥ रागोलिङ्गमबोधस्यचित्तव्या
यामभूमिषु । कुत : शाद्वलतातस्य
यस्याग्नि : कोटरेतरो ' ॥ रागाद
य . सन्तुकाममतङ्गोवोपराध्यति ।
उत्खातदंष्ट्रोरगवद्‌विद्याकिंकरिष्य
तीतिचाचार्य : ॥ सितादीनांवि-
कारविशेषे ॥ यथा । सितामध्वा-
दिमधुरोद्राक्षादाडिमजोरस : ।
विरलश्चेत्‌कृतोरागइति ॥ गान्धा-
रादौ ॥ नृपे ॥ चन्द्रे ॥ सूर्ये ॥ लाक्षा
दौ ॥ रक्तिमन्यपि ॥ रञ्जने ॥ गा
नशास्त्रोयरागेषु ॥ यथा । भरतम-
ते० हनुमन्मतेचराग : षड्विध ' ।
तेषांनामानियथा । भैरव : १ कौ
शिक ' २ हिन्दोल : ३ दीप-
क . ४ श्रीराग : ५ मेघ : ॥ हनु-
मद्भरतयोर्मतेप्रत्येकमेषांपञ्चरागि
ण्य सोमेश्वरकलानाथयोर्मतेप्र-
त्येकमेतेषांषड्रागिण्य : । एतेषांप्र-
त्येकमष्टौपुत्रा : एकैकापुत्रभार्या-
च ॥ कलानाथसोमेश्वरमतेषड्रागा
यथा । श्रीराग ' १ वसन्त : २ पं
चम : ३ भैरव : ४ मेघ : ५ नट
नारायण : ६ । इतिनामासङ्गीत



शास्त्रम् ॥ अथरागस्यव्युत्पत्तिसङ्
ख्यास्थानानि । येस्तुचेतांसिरञ्ज-
न्तिजगत्‌स्थितवर्त्तिनाम् । तेराग
इतिकथ्यन्तेमुनिभिर्भरतादिभि .
॥ गोपीभिर्गीतमारब्धमेकैकंकृष्ण
सन्निधौ । तेनजातानिरागाणांस-
हस्राणितुषोडश ॥ रागेषुतेषुषड्
त्रिंशद्रागाजगतिविश्रुता' ॥ काल
क्रमेणतत्रापिक्कासएवतुदृश्यते ॥
केचिद्दन्तिरागा : सर्वेसन्तीति
निश्चितम । मेरोरुत्तरत : पू-
र्वेपश्चिमेदक्षिणेतथा ॥ समु-
द्रकण्ठेयेदेशास्तत्रामीषांप्रचारणा
। तथाच । अङ्गवङ्गकलिङ्गते
लिङ्गभूलिङ्गद्राविड़सुरङ्गपूपलङ्कखिल
ङ्गसौवीरकीरकाश्मीरनाभीरनाहो
रसिन्धुजालन्धरमगमगधनिषधम
लयहोहयगजाङ्गयमालवजालवम
रुमरुचोलोत्कलकुन्तलसिंहलहरि
केलकेरलकोशलमक्षिवालमद्रभद्र
सौविदर्भवातकिञ्जातगुजरातगुञ्ज
रकांजरगौडद्रविडोड्रान्तर्वेदिका
श्चोपाञ्चालसौराष्ट्रशवरलोहावरव
शकोकशवरूपकामरूपहरिगर्भवि
दर्भदुर्मटवाटकोकटदेवेङ्गनटङ्गन
नाटभोटकवाटकरहाटकर्णाटकुन्ति
कावन्तिककनकाङ्गकान्यकुब्जभोज
काम्बोजतोजतुखारविहारवलिहा
रराजगेहविदेहवाह्लीकपश्चरीकगो

राग .

गस्तानस्तादिदेशेषु रागा प्रचरन्ती ति । यस्यश्रवणमात्रेणरज्यन्ते स कला : प्रजा : । सर्वानुरञ्जनाद्वेतो स्तेनरागइतिस्मृत ॥ अथरागा : । भाद्रीमालवरागेन्द्रस्ततोमल्लारसं ज्ञित : । श्रीरामस्ततत : पश्चाद्वस न्तस्तदनन्तरम् ॥ हिन्दोलश्चाथक र्णाटएतेरागा : षडेवतु । षट्त्रि शद्रागिणीतश्चक्रमश : कथितामया ॥ धानसीमामसीचैवरामकीरीच सिन्धुडा । आशावरीभैरवीचमाल वस्यप्रिया इमा : ६ । वेलावलीपू रबीचकानडामाधवीतथा । कोडा केदारिकाचापिमल्लारदयिताइमा: ६ ॥ गान्धारीशुभगाचैवगौरीकौमा रिकातथा । वेलोयारीचवैरागीश्री रागस्यप्रियाइमा . ॥ ६ ॥ तुडीचप ञ्चमीचैवललितापठमञ्जरी । गुर्जं रीचविभाषाचवसन्तस्यप्रियाइमा ' ६ ॥ मायूरीदीपिकाचैवदेशकारीचपा हिडा । वराडीमोरहाटीचहिन्दोल स्यप्रियाइमा ६ ॥ नाटिकाचाथभू पालीरामकेलीगडातथा । कामो दाचापिकल्याणीकर्णाटस्यप्रियाइ मा ' ६ । ३६ ॥ अथकालनियम : । विभाषाललिताचैवकामोदीपठ मजरी । रामकीरीरामकेलीवेलोया रीचगुर्जरी देशकारीचशुभगा पञ्चमीचगडातुडी । भैरवीचाथकौ

राग :

मारीरागिण्योदशपञ्च ॥ एता ' पूर्वाह्णकालेतुगीयन्तेगायनोत्तमै. । वराडीमायूरीकोडावैरागीचाथ- धानुषी ॥ वेलावलीमोरहाटीसमे तारागयोषित : । गेयामध्याह्नका लेतुयथाभरतभाषितम् ॥ गान्धारी दीपिकाचैवकल्याणीपूरबीतथा । कानडाग्रावरीचैवगौरीकेदारपाहि डा ॥ मायूरीमालसीनाटीभूपाली सिन्धुडातथा । सायाह्नेताश्चरा- गिण्य : प्रगायन्तिचतुर्दश ॥ पुरु- षावस्तुभूषाख्यारागास्ते मालवादय । प्रदोषेचापराह्णेचरजन्यांगान- गोचरा . ॥ दशदण्डात्पररात्रौस र्वेषागानमीरितम् । मेघमल्लाररा- गस्यगानवर्षासुसर्वदा ॥ श्रीपञ्च- मींसमारभ्ययावच्छयनोत्सवहरे । तावद्वसन्तरागस्यगानमुक्त मनीषि भि . ॥ शक्रोत्थानसमारभ्ययावद्दु र्गामहोत्सवम् । गीयतेतद्ध्रुवैर्नित्य मालसीसामनोहरा ॥ सर्वेषामिह रागाणारागिणीनाञ्चसर्वश । र- ङ्गभूमौनृपाज्ञायाकालदोषोनविद्य ते ॥ रागस्यालापायेदादौतत्पश्चा त्तदनन्तरम् । नान्यपश्चात्प्रगातव्या नृपाज्ञायांनदूषणम् ॥ रागा षडथ रागिण्य षट्त्रिंशश्चारुविग्रहा आगताब्रह्मसदनात्ब्रह्माणसमुपास ते ॥ अथध्यानम् । नितम्बिनीचु ।

ब्धितवक्त्रपद्म शुकद्युति कुण्डलवान्मत्त । रुङ्गीतशालीप्रविशन्प्रदेशमालाधरोमालवरागराज ॥ १ ॥ नीलोत्पलकर्णयुगेवहन्ती श्यामासुकेशीचसुमध्यभागा । इक्षुस्महासाम्बुजरम्यहस्तासाधानसीपद्मसुचारुनेत्रा ॥ १ ॥ करेयुताम्बाम्बुजयुग्मरम्याद्भुतस्ततस्ताक्षविलोकयन्ती । कण्ठस्फुरन्मौक्तिकारलहारासामालसीसङ्कथिताविचित्रा॥२॥ प्रतप्तचामीकरचारुवक्त्राकर्णा तसकमलवहन्ती । पौष्प धनु पुष्पशरैर्दधानाचन्द्राननारामकिरीप्रदिष्टा ॥ ३ ॥ महेन्द्रनीलद्युतिरम्बुजाक्षीप्रवादयन्तीकपिलाशयन्त्रम् । बिचित्ररत्नाभरणासुकेशी-सासिन्धुडाकान्तसमीपसस्था ॥ ४ ॥ जवाप्रसूनद्युतिविम्बवक्त्रासवाम्बुपद्म करयोर्दधाना । क्षौमांशुकाच्छादितगात्रयष्टिराशावरीरङ्गकलाविदग्धा ॥ ५ ॥ सरोवरस्था स्फटिकस्थमन्दिरेसरोरुहै शङ्करमर्चयन्ती । तालप्रयोगप्रतिरङ्गगीते गौरीतनुर्भैरविकासतीयम् ॥ ६ ॥ अथमल्लार: । विहारशीलोतिसुकान्तिदेह: कान्ताप्रियोधार्मिकशीलयुक्त: । कामातुर पिङ्गलनेत्रयुग्मोमल्लाररागः प्रियकृत्सुवेश: ॥ २ ॥ सङ्केतितोत्फुल्ल



तानिकुञ्जे कृतस्थिति कान्तसमागमाय । वेलावलीचम्पकमौलिनीसाबालाविचित्राभरणानिरुक्ता ॥ १ ॥ रह. सुकान्तिह्रियमाणपचरम्य वहन्तीकुचकुम्भयुग्मे । दूर्वादलश्यामतनु सकामापुरातनैसापुरन्ध्रीनिरुक्ता ॥ २ ॥ अशोकवृक्षस्थतलेविषण्णावियोगिनीवाष्पकणाञ्चिताङ्गी । विभूषिताङ्गीजटिलेश्वबालासाकानडाहैमलतेवतन्वी ॥ ३ ॥ सङ्ख्यसङ्ख्यगलेदधानाप्रसूनमालादयितेनबाला । गौरीस्वकान्ता ननचुम्बितास्यात्सासुन्दरीमाधविकानिकुञ्जे ॥ ४ ॥ सुकण्ठपीबादयतिस्वभर्तु र्गानाथमभ्यस्यतिसम्मुखेन । सदैवतालाविद्धताचमाला कोकाकलातानवतीमतासा ॥ ५ ॥ ज्योत्स्नासमुत्थोर्ध्व तौसुदेहाकेशप्रविष्टस्फुट्तवारिबिन्दु । निष्पीडयन्तीतिमिरांशुकान्त केदारिकारक्तपयोधरश्री ॥ ६ ॥ अथश्रीराग: । लीलावतारेणवनान्तराणिचिन्वन्प्रसूनानिवधूसहाय. । विलासवेशोद्युतिदिव्यमूर्त्ति: श्रीरागएषप्रथित. पृथिव्याम् ॥ ३ ॥ सध्यासुकालेगृहमध्यदेशेप्रवादयन्तीहपिनाकयन्त्रम् । धाराधराधातुबिचित्रिताङ्गीगान्धारिकागन्धसुगंनिधत्ते ॥ १ ॥ रस

राग .

स्त्रीपरदेशयानम् । प्रकामदाम्पत्य सुखेनिमग्नासापाहिडासङ्कथिता-कवीन्द्रैः ॥ ४ ॥ कर्णे दधानासुर-पुष्पयुग्मं स्फुरत्सुगन्धोजमनोहरा-ङ्गी । स्मेराननाचारुविलोलनेत्रा वराङ्गनेयकथितावडारी ॥ ५ ॥ उ त्पन्नमात्रे प्रथमापराधेमानंपुन. क सं मनाग्विरेण । ऋजुस्वभावान्नि-यतस्तदन्तीसामोरहाटीप्रठकेलिरु-ष्टा । ६ ॥ अथकर्णाट : । कृपाण-पाणिस्तुरगाधिरूढोमयूरकण्ठाति-सुकण्ठकान्ति . । स्फुरत्सितस्नि ग्धरस : प्रशान्त कर्णाटरागोऽह-रितालवर्णः . ॥ ६ ॥ चिरनटस्त्री-शुभरङ्गमध्ये सप्रार्थयन्तीनटिनंवस न्तम् । सुगीतताविप्रयुक्तावधाना-नटीषुनाटीपरिधानदेहा ॥ १ ॥ स्वनागकपुष्पलतादिरूढावसन्मुखी सर्वसुदवल्ली । स्वनानिशम्यवित नोतिमुग्धाभूपालिकासास्वलदु त्तरीया ॥ २ ॥ अध्यापयंतीशुक सारसारी : श्रीरामरामेतिसुवेशल क्ष्मी । वामस्तनोर्द्धस्खलितांशुक श्री ' श्रीरामकेलीकथिताकवीन्द्रे ' ॥ ३ ॥ विशेषवैदग्ध्यवतीसमस्ता न्कलाविलासैनविमोहयन्ती । ह स्वन्नितस्वापरिपुष्टदेहावडाप्रलम्बस्त नभारभव्या ॥ ४ ॥ भर्तु : सम पायसिसन्तरस्त्रीपयोधिश्वरैवसरो

राग :

रुहाणि । विचिन्वतीसौरभमोद मानाकामोदरागिण्युदिता गुणज्ञैः ॥ ५ व्याधूतानटनृत्यपरिश्रमेण वालालीलाभि . सुदतीकृतादरा । नटीनाकल्याणीकलयतिमत्त स्तोएणप्रस्थानसुखरिताकिङ्कणीका लापम् ॥ ६ ॥ अथरागरागिणीना भावनिरूपणम् । मालव . श्रीश्च हिन्दोलोमल्लारसदनन्तरम् । गाय न्तिगायकाधीरसानन्दे नचतुष्टय-म् ॥ वसन्तराग कर्णाटोशोवौरीभव त . क्रमात् ॥ धानसीमालसीचै वभैरवीमाधवीतथा ॥ सुभगापञ्चमी नाटीवेलोयारीचगुर्जरी । कामो दाचापिकल्याणीकौडाकेदारिका तुडी ॥ कौमारीमायुरीचैवदेशका रीचसिन्धुडा । रामकेलीचभूपाली रागिण्यस्त्रिंतिविंशति : ॥ आनन्दां-शाकृतिप्रेक्षागोयन्तगानकोविदैः । पूरवीकानडागौरीरामकरी-चदीपिका ॥ आशावरीविभाषाच वडारीचगडातथा । एताश्चनवरा गिण्योवीरागेगानमुत्तमम् ॥ वेला वलीचगान्धारीललितापठमञ्जरी । वैरागिरागिणीचापिमोरहाटीच-पाहिडा ॥ करुणाशाविणानोया तुसप्तैतारागोपित : ॥ रागेण रसभागेनषट्त्रिंशत्रागिणीषु च । करुणानन्दवीरेषु ज्ञापनार्थेमत

थम् ॥ इतिसंगीतदामोदरेशिव नारदसबादे १।३ अध्यायौ॥ रञ्जन म्। रञ्ज॰ भाविघञ्॥ रज्यतेऽने नेतिवा। घञ्करणेरिचकारकेस ञ्ज्ञाया मितिघञ्। घञिचभावकरणयो रितिरञ्जेर्नलोप.॥

रागचूर्ण:। पु॰ दन्तधावने। खदिरे॥ मकरध्वजे। कन्दर्पे॥ लाक्षारसे॥ फल्गुचूर्णे। गुलाल॰इ॰भा॰॥ सिन्दूरे॥

रागच्छन्न.। पु॰ कामदेवे॥ त्रि॰रागेणच्छन्ने॥

रागद। पुं॰ तैरणीक्षुपे॥ त्रि॰रागदातरि॥

रागदालि। पुं॰ मसूरे॥

रागपच्च.। पु॰ कामादिषु॥ कामसमत्सरश्चैवस्पृहाहर्षास्तथैवच। लोभमायाचदम्भश्चरागपक्षइतीरित॥

रागपुष्प। पु॰ बन्धूके रक्ताम्लाने॥

रागपुष्पी। स्त्री॰ जवायाम्॥

रागप्रसव.। पु॰ बन्धूके॥ रक्ताम्लाने॥

रागबन्धी। त्रि॰ रागप्रवर्त्तके॥

रागयुक्। पुं॰ माणिक्ये॥

रागरज्जु·। पु॰ कामदेवे॥

रागलता। स्त्री॰ रत्याम्। कामप्रियायाम्॥

रागवृन्त·। पुं॰ कामदेवे॥

रागषाडव:। पुं॰ दाडिमद्राक्षायुक्तमुद्गयूषे॥

रागसूत्रम् न॰ तुलासूत्रे॥ पट्टसूत्रे॥

रागाङ्गी। स्त्री॰)

रागाढ्या। स्त्री॰) मञ्जिष्ठायाम्॥

रागाद। त्रि॰ आस्वादस्वादानशीले॥

रागाशनि·। पुं॰ बुद्धे॥

रागिणी। स्त्री॰ विदग्धायानार्याम्॥ मेनकायाज्येष्ठकन्यायाम्॥ जयश्रीनाम्न्यालक्ष्म्याम॥ षड्रागाणाम्स्त्रीषु॥ तास्त्वहनुमन्मतेभरतमतेचत्रिंशत्प्रकारा·॥ सोमेश्वरमतेकल्लिनाथमतेचषट्त्रिंशत्प्रकारा। आसाविवरणं रागशब्देद्रष्टव्यम्॥

रागी। त्रि॰कामाद्याकुलचित्ते। कामुके। रक्तरि। अनुरक्ते॥ रागिणोदेवदैत्याश्चसदेवासुरमानुषा·॥ ययोक्तभागवतेव्यासेन। रागीविष्णु: शिवोरागी ब्रह्मापिरागसयुत:। रागवानपिचातुर्थाद्दिदेवइत्यवलक्ष्यत इति॥ रञ्ज: सम्पृचानुरुधेतित्वचीलादिषु घिनुण्॥ तृणधान्यविशेषे। लाङ्गली। बहुतरकणिशे। गुच्छकणिशे॥

राक्॰ग॰। त्रि॰ समर्थे॥ राघति। राघृसामर्थ्येक्विप्॥

राघव.। पु॰ रघुवंशजे॥ श्रीरामे॥

पुराणप्रसिद्धेचव्ये‌ब्रह्ममीने ॥ यथा । अस्तिमत्स्यस्तिमिर्नामशतयोजन विस्तृतः । तिमिङ्गिलस्तद्गिलोपित द्गिलोप्यस्तिराघव . ॥ इति ॥ ब्रह्मा ण्डाभिमानिनि ॥ रङ्कुतिनाशगच्छ तीतिरघुरन्नमय ' कोश . । तत्रवि दितः । अण् ॥

राघवायण' । पुं॰ रामायणे ॥ यथा । सेतिहासपुराणानिराघवायणभा रतम् । समाप्तिरच्छितान्येवसन्तिता निश्रुतानिते ॥ इत्यग्निपुराणम् ॥

राङ्कल : । पुं॰ द्रुमकण्टके ॥

राङ्कवम् । न॰ मृगरोमजेवस्त्रे ॥ रङ्को भवम् । रङ्कोरमनुष्येण् चेत्यण् मृगरोमजइत्यत्रमृगशब्देनपशुमात्र ग्राह्यम् । तेनकम्बलाद्यपिराङ्कवम् ॥ पुं॰ गवि ॥ रङ्को॰देशविशेषेभ व ' । पूर्ववण् ॥

राङ्कवक . । पुं॰ मनुष्ये ॥ रङ्कोभव : । मनुष्यतत्स्थयोर्वुञ् ॥

राङ्कवायण: । त्रि॰ राङ्कवार्थे ॥ रङ्को भव: । रङ्कोरमनुष्येण् चेतिष्फक् ॥

राङ्गणम् । न॰ रङ्गन्॰इ॰गौ॰भा॰ प्र॰ पुष्पविशेषे ॥

राट्॰ड् । पुं॰ राजनि ॥ राजते । रा जृदीप्तौ ॥ सत्सूद्विषेतिक्विप्

राजकम् । न॰ नृपवृंदे ॥ राज्ञांसमूह: । गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपु त्रवत्समनुष्याजाद्वुञ् ॥ पुं॰ राजनि ।

राजकदम्ब . । पुं॰ कदम्बविशेषे ॥

राजकन्या । स्त्री॰ केविकापुष्पे । भू पसुतायाम् ।

राजकर्कटी । स्त्री॰ चीनाकर्कट्याम् ।

राजकशेरु : । पुं॰ म॰जलजकंदविशे षे ॥ भद्रमुस्तायाम् ॥

राजकीय : । त्रि॰ राजसम्बन्धिवस्तु- नि ॥ राज्ञइदम् । राज्ञ : कचेति च्छ . ककारोन्तादेश ' ॥

राजकुमार : । पुं॰ राजपुत्रे ॥

राजकूष्माण्ड ' । पुं॰ वार्ताक्याम् ॥

राजकोशातकी ॥ स्त्री॰ धामार्गवे । तोरञो॰इ॰ भा॰प्र॰ फलशाकेरा जकोशातकीशीतामधुराकफवात ला । पित्तघ्नीदीपनीश्वासज्वरका सकृमिप्रणुत् ॥

राजक्षवक : । पुं॰ सर्षपे ।

राजखर्जूरी । स्त्री॰ श्रेष्ठखर्जूर्य्याम् । पिण्डखर्जूरिकायाम् । राजपिण्डा याम् । नृपप्रियायाम् ।

राजगामि । त्रि॰ राजसम्बन्धिनि ।

राजगिरि ' । पुं॰ शाकप्रभेदे । राजा द्रौ । राजशाकिन्याम ।

राजगुह्यम् । न॰ सर्वेषागुह्यानांरा ज्ञि ॥ गुह्यानांराजा । राजदन्तादि ॥

राजगृहम् । न॰ । तीर्थविशेषे ॥

राजग्रीव: । पुं॰ मत्स्यविशेषे ॥ मद्रा मंदे ॥

राजघ: । त्रि॰ तीक्ष्णे ॥ राजहन्तरि ।

राजानं हन्ति । हन्० । राजघ उप-
सङ्ख्यानात् हक् ॥ टिलोपोघत्वञ्च
निपात्यते ॥

राजचिह्नम् । न० नृपाणांसूचकील
क्षणविशेषे ॥ चिह्नानांराजा । रा
जदन्तादि ॥

राजचिह्नकम् । न० उपस्थे ॥ चिह्ना
नांस्त्रीपुंविभाजकानांराजा ॥

राजजम्बू । स्त्री० पिण्डखर्जूरे ॥
जम्बूप्रभेदे । फलेन्द्रे । फरेंदा०
इ० भा० । राजजम्बूफलस्वादुवि
ष्टम्भिगुरुरोचनम् ॥ जम्बूनांरा
जा ॥ राजदन्तादिः ॥

राजतम् । न० रजते ॥ त्रि० रज
तनिर्मिते । रूप्यमये ॥ रजतस्यवि
कारः । प्राणिरजतादिभ्योञ्
ञ् ॥

राजतरुः । पु० कर्णिकारवृक्षे ॥
आरग्वधे ॥

राजतरुणी । स्त्री० पुष्पविशेषे । महा
सहायाम् । वर्णपुष्पे । अम्लाने
। सुपुष्पे । सुवर्णपुष्पे ॥

राजता । स्त्री० राजत्वे ॥

राजताल । पु० स्वनामख्यातपा
दपे ॥ गुवाके ॥

राजतेमिषः । पु० नाटाम्रे ॥ सु
खाशे ॥ इ० त्रिकाण्डशेषः ॥

राजदण्ड । पु० राजशासने ॥

राजदन्तः । पु० अग्रोदन्तपङ्क्तिस्थ
मध्यदन्तयुग्मे ॥ दन्तानांराजा ।
राजदन्तादिषुपरम् ॥ उपरिस्थे
चोर्ध्वमध्यवर्त्तिदन्तद्वये ॥ यथा ।
राजदन्तौतुमध्यस्थावुपरिस्थौ चिकी
र्णचिदितिहेमचन्द्रः ॥

राजदेशीयः । पु० राजकल्पे । राज
देश्ये ॥ ईषदूनोराजा । ईषदसमा
प्तौकल्पब्देश्यदेशीयरः ॥

राजधत्तूरकः । पु० स्वर्णधत्तूरे । रा
जधूर्त्ते । महाशठे ॥

राजधर्मः । पु० राज्ञाकर्त्तव्येकर्म-
णि ॥ सचमनुस्मृतेःसप्तमाध्याये०
कालीपुराणस्य ॥ ८५ ॥ ८६ ॥ अ-
ध्याययोः महाभारतस्यशान्तिपर्व-
णिपद्मपुराणस्यस्वर्गखण्डे ॥ १३८ ॥
अध्यायेचद्रष्टव्यः ॥

राजधानकम् । न० राजपुरे ॥ (*) ॥

राजधानी । स्त्री० कोट्टे । राजपुरे ।
स्कन्धावारे ॥ धीयतेऽस्याम् ०इति०
धानी । करणाधिकरणयोश्चेत्यधि-
करणेल्युट् । ङीप् । राज्ञांधानी ॥

राजधान्यम् । न० श्यामाके ॥

राजधूस्तूरकः । पु० स्वर्णधूस्तूरे ॥
राजधूर्त्ते । महाशठे । मिश्रेचपु
ष्पके । भ्रान्ते । राजस्वर्णे ॥

राजा । पु० प्रभौ ॥ क्षत्रिये ॥ मृगा-
ङ्के । रजनीपतौ ॥ यक्षे ॥ शक्रे ॥
नृपे । पार्थिवे । राज्याभिषिक्तक्ष
त्रिये ॥ अभिषिक्तजनपदपुरपाल-

यिष्टपुरुषश्रेष्ठे । क्ष्माभृति । भूपे । प्रणताशेषसामन्ते ॥ अराजके हि लोकेऽस्मिन्सर्व्वतो विद्रुते भयात् । रक्षार्थमस्य सर्व्वस्य राजानमसृजत्प्रभुः ॥ अस्य व्युत्पत्तिर्विष्णुपुराणे यथा । महता राजराज्येन पृथुर्वैन्यः प्रतापवान् । सोऽभिषिक्तो महातेजा विधिवद्धर्म्मकोविदैः ॥ पित्राऽपरञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः अनुरागात्ततस्तस्य नाम राजेत्यभाषत ॥ इति ॥ राजकर्त्तव्यकर्म्माणि यथा मदालसोवाच । वत्स राज्याभिषिक्तेन प्रजारञ्जनमादितः । कर्त्तव्यमविरोधेन स्वधर्म्मस्य महीभृता ॥ अविरोधेन० धर्मशास्त्राविरोधेन । व्यसनानि परित्यज्य सप्त मूलहराणि वै । आत्मा रिपुभ्यः संरक्ष्यो बहिर्मन्त्रविनिर्गमात् ॥ अष्टधा नाशमाप्नोति स्वनक्रस्यन्दनाद्यथा । तथा राजाप्यसन्दिग्धं बहिर्मन्त्रविनिर्गमात् ॥ दुष्टादुष्टांश्च जानीयादमात्यानरिदोषतः । चरैश्चरास्तथा शत्रोरन्वेष्टव्याः प्रयत्नतः ॥ विश्वासो न तु कर्त्तव्यो राज्ञा मित्राप्तबन्धुषु । कार्ययोगादमित्रेषु विश्वसीत नराधिपः ॥ स्थानवृद्धिक्षयज्ञेन षाड्गुण्यविदितात्मना । भवितव्यं नरेन्द्रेण न कामवशवर्त्तिना ॥ प्रागात्मा मन्त्रिणश्चैव ततो भृत्या महीभृता । जेयाश्चा-



नन्तरं पौरा विरुध्येत ततोऽरिभिः ॥ यस्त्वेतानविजित्यैव वैरिणो विजिगीषते । सोऽजितात्माऽजितामात्यः शत्रुवर्गेण बाध्यते ॥ तस्मात् कामादयः पूर्व्वं जेयाः पुत्र महीभृता । तज्जये हि जयो राज्ञो राजा नश्यति तैर्जितः ॥ कामः क्रोधश्च लोभश्च मदो मानस्तथैव च । हर्षश्च शत्रवो ह्येते विनाशाय कुमहीभृताम् ॥ कामप्रसक्तमात्मानं स्मृत्वा पाण्डुं निपातितम् । निवर्त्तयेत्तथा क्रोधादनुह्रादं हतात्मजम् ॥ हतमैलं तथा लोभान्मदाद्वेनं द्विजैर्हतम् । मानादनायुषः पुत्रं हतं हर्षात्पुरञ्जयम् ॥ एभिर्जितैर्जितं सर्व्वं मरुत्तेन महात्मना । स्मृत्वा विवर्जयेदेतान् षड्दोषांश्च महीपतिः ॥ काककोकिलभृङ्गाणां बकव्यालशिखण्डिनाम् । हंसानां लोहकुक्कुटानां शिक्षेत चरितं नृपः ॥ काकात्० सर्व्वशङ्किता । कोकिलात्० माधुर्य्यम् । भृङ्गात्० अपीडयाऽर्थादानम् । बकात्० शत्रुपक्षे एकाग्रताम् । व्यालात्० दुरुपसर्पित्वम् । शिखण्डिनः चित्रता० म्० सर्पग्रहणाय मूकताम्० रात्रावात्मगोपनञ्च । हंसात्० सारग्राहित्वम् । लोहकुक्कुटात्० सन्धानम् ॥ कौशिकस्य क्रियां कुर्य्याद्विपक्षे मनुजेश्वरः । चेष्टां पिपीलिकानाञ्च काले भू

प. प्रदर्शयेत् ॥ कौशिकस्य० उलू-
कस्यराचौकाकावस्कन्दनम् पिपी-
लिकानाम्० सैनावहुत्वसंभच-
यश्च ॥ च्चेयाग्निविस्फुलिङ्गानांवी
जचेष्टावशाल्मले । चन्द्रसूर्यस्व-
रूपश्चनीच्यर्थं पृथिवीचिता ॥ च-
ग्निविस्फुलिङ्गात्० दूराद्दाह । वी
जात्० महदर्थनिष्पादनम् । उष्ण
काले० चन्द्र सुखदायो० शीतका-
लेन । एवं सूर्यं शीतेसुखदायीउ
ष्णकालेनएव कालानुसारेणसुखदु
खदातृत्वम् ॥ बधकात्पद्मसरभशू
लिन्यागुर्विणीस्तनात् । प्रजान्टपे
चाद्देयातथाचण्डालयोषित ॥
बधकात् निर्घृणत्वम् । पद्मात्०
कण्टकगोपनम् स्मितमुखताच ।
सरभात्० ह्रस्वापिमत्र नूनोद्रेक .
। यथासरभोऽष्टापद परोन्नति न
सहते । शूलिन्याश्चात्तिंज्ञापनम् ।
गुर्विण्या . स्तनात्कालेर्थादानम् ।
चण्डालयोषित्शौनिको० छागशि
रोदर्शयित्वा चन्यद्विक्रीणाति ॥
शक्रार्कयमसोमानातद्वद्वायोर्महौ
पति . । रूपाणिपञ्चकुर्वीतमहीपा
लनकर्मणि ॥ यथेन्द्रश्चतुरोमासान्
वार्योघेणवभूतलम । चाप्याययेत्
तथालोकान् परिचारैर्महीपति .
॥ परिचारैरर्थदानादिभि . ॥ मा
सानष्टौयथासूर्यस्तोय हरतिरश्मि



भि : । सूर्येणवाभ्युपायेनतथाशु
ल्कादिनान्टप . ॥ यथायम . प्रिय
द्वेष्यौप्राप्तेकालेनियच्छति । तथा
प्रियाप्रियौराजादुष्टादुष्टेसमोभवेत्
॥ पूर्णेन्दुमालोक्ययथाप्रीतिमान्
जायतेनर । एवं यत्रप्रजा सर्वा
निर्वृतास्तच्छशिव्रतम् ॥ मरुत
सर्वभूतेषु निगूढश्चरते यथा । एवं
चरेन्नृपश्चारैः पौरामात्यारिबन्धु
षु ॥ नलोभार्थैर्नकामार्थैर्नार्थार्थै
र्यस्यमानसम् । पदार्थैः क्षिप्यते
धर्मात् सराजास्वर्गमृच्छति ॥ लो
भादिप्रयोजनै । उत्पथग्राहिणो
मूढान्स्वधर्माच्चलितान्नरान् । य .
करोतिनिजेधर्मेसराजास्वर्गमृच्छ
ति ॥ उत्पथग्राहिण पापिन ॥
वर्णधर्मानसीदन्तियस्यराष्ट्रे तथाश्र
मा । राज्ञस्तस्यसुखतातपरत्रेह
चशाश्वतम् ॥ एतद्राज्ञ परकृत्य
तथैतद्द्विकारणम् । स्वधर्मस्था
पनन्टणाचाल्यतेनकुबुद्धिभि ॥पा
लनेनैवभूत्याना कृतकृत्योमहीप
ति . । सम्यकपालयिताभाग धर्म
स्याप्नोतिवैयत ॥ एवमाचरतेरा
जाचातुर्वर्ण्यस्यरक्षणे . । ससु
खोविहरत्येषशक्रस्यैतिसलोकता-
म् ॥ इतिमार्कण्डेयपुराणेमदाल
सोपाख्यानाध्याय : ॥ राजते । रा
जृ० । कनिन्युवृषौतिकनिन् ॥

दीप्रिमति ॥ उत्तरपदेचेत् श्रेष्ठार्थ
वाचक ॥
राजनम् । न॰ सामविशेषे ॥ त्रि॰
राज्ञः शूद्रायामुत्पन्ने ॥ राज्ञोऽ
पत्यम् । राजश्वशुराद्यत् । राज्ञो
जातावेवेतिवार्त्तिकात् शूद्रायामु
त्पन्ने क्षत्रियजातित्वाभावादण् ।
अन्नितिप्रकृतिभावः ॥
राजनामा । पुं॰ पटोले ॥
राजनीति । स्त्री॰ नीतिशास्त्रे । रा
ज्ञनीती ॥ षष्ठ्यान्यत्रनीतिराजनी
तिश्च ॥
राजनीलम् । न॰ मरकतमणौ ॥
राजन्यः । पुं॰ क्षत्रिये ॥ शास्त्रविधि
बोधितानिकर्माणियथा । राजन्या
नाञ्चसद्वृत्तसङ्ग्रामेभूमिशासन-
म् । अत्राग्रकीर्त्तिषडिगृहस्त शूद्रतत्त्व
मथाग्र्येदिति ॥ अन्यनिषिद्धकर्मा
णियथा । राजन्यानांकरादानवि
नावैवाह्रिकस्यच । प्रतिग्रहः स
निद्योऽपरत्रचासुखप्रदः ॥ युद्धेप
लायनञ्चैवतथाकातरतार्थिषु । अ
पालनंप्रजानाञ्चदानेधर्मेविरक्तता-
॥ धनैर्धार्याराज्यभृतानाम-
नादरः । अमात्यानामसम्मानतै
वांकर्मानवेक्षणम् ॥ भृत्यानाञ्चप
रीक्षासौनिषिद्धः क्षत्रजन्मनामिति
॥ राज्ञोपत्यम् । राजश्वशुराद्यत् ।
राज्ञोजातावेव । येवाभावकर्मणो
रितिप्रकृत्या ॥ राजपुत्रे ॥ वल्ली
॥ क्षीरिकाद्रुमे ॥ राजति । राज॰
। राजेरन्यः ॥
राजन्यकम् । न॰ क्षत्रियसमूहे ॥ रा
जन्यानांक्षत्रियाणांसमूहः । गो
त्रोक्षोष्ट्रोरभ्रराजराजन्येतिवुञ् ।
प्रकृत्याग्रवीराजन्यमनुष्ययुवानः ॥
पुं॰ राजन्यादेशे ॥ राजन्यानांविष
येदेशः । राजन्यादिभ्योवुञ् ॥
राजन्यबन्धु । पुं॰ दुष्टक्षत्रपतौ ।
राजाभासे ॥ राजन्योबन्धुरस्य ॥
राजन्वान् । त्रि॰ सुराज्ञिदेशे । यत्र
देशेस्वधर्म्मशीलोराजा॰ तत्रदेशे ॥
राजाअस्तिअस्यासौ । प्रशंसायां
मतुप् । राजन्वान्सौराज्ये॰ कृ-
तिनिपातनान्नलोपाभावः ॥ रा
जन्वती॰ भूमिः ।
राजपटोल । पुं॰ पटोले ॥
राजपटोली । स्त्री॰ मधुपटोल्याम् ॥
राजपट्टः । पुं॰ मणिविशेषे । विरा
जते ॥
राजपट्टिका । स्त्री॰ चातकपक्षिणि ॥
राजपथः । पुं॰ राजमार्गे ॥ राज्ञः
पन्थाः । ऋक्पूरित्यसमासांतः ॥
तस्यलक्षणंयथाधनूंषिदशविस्तीर्णः
श्रीमान्राजपथः स्मृतः । नृवा
जिरथनागानामसम्बाधः सुसञ्चरः
इति ॥
राजपर्णी । स्त्री॰ प्रसारिणीलतायाम् ॥

राजपलाण्डु : । पुं॰ रक्तवर्णपलाण्डौ । यवनेष्टे । राजप्रिये । महामूले । दीर्घपत्रे । रक्तकन्दे । लालकांदा॰ लालप्याज॰ह॰भा॰ ॥

राजपीलु । पुं॰ महापीलुवृक्षे ॥

राजपुत्र । पुं॰ बुधग्रहे ॥ महाराजात्मजे ॥ राजनन्दने । युवराजे । राजकुमारे । भर्तृदारके ॥ कुमाररक्षाकर्त्तव्याराज्ञायत्नेनसर्वदा ॥ तथाहि । राजपुत्रस्यरक्षाचकर्त्तव्यापृथिवीक्षिता । आचार्यैश्चास्यकर्त्तव्य नित्यमुक्तैश्चरक्षणम् ॥ धर्मकामार्थशास्त्राणिधनुर्वेदञ्चशिक्षयेत् । रथेचकुञ्जरेचैनव्यायामंकारयेत्सदा ॥ शिल्पानिशिक्षयेच्चैवनाप्तैर्मिथ्याप्रियंवदेत् । शुश्रूषानमथवक्तुयस्थकर्त्तुस्वभावतः ॥ बन्धनन्तस्यकर्त्तव्यंगुप्तेदेशेसुखान्वितम् । अविनीतकुमारंहिकुलमाशुविशीर्यते ॥ अधिकारेषुसर्वेषुविनीतंहिनियोजयेत् । आदौस्वल्पेषुतत्पश्चात्क्रमेणाथमहत्स्वपि ॥ मृगयापानमक्षांश्चवर्ज्जयेत्पृथिवीपतिः । एतान्यासेवमानाश्चविनष्टाः पृथिवीक्षितः ॥ बहवोनपश्चाद्गणयितुंसङ्ख्यानविद्यते । वृथाटनंदिवास्वप्नं विशेषेणविवर्ज्जयेत् ॥ वाक्पारुष्यंनकर्त्तव्यंदण्डपारुष्यमेवच । परोक्षनिन्दाचतथावर्ज्ज्यानीयामहीक्षिता ॥ अर्थस्यदूषणंराजाद्विप्रकारंविवर्ज्जयेत् । अर्थानांदूषणञ्चैवतथाचार्थेषुदूषणम् ॥ प्रकारणात्समुच्छेदं दुर्गादीनामसत्क्रिया । अर्थानांदूषणंप्रोक्तंविप्रकीर्णत्वमेवच ॥ अदेशकालेयद्दानमपात्रेदानमेवच । अर्थेष्वदूषणंप्रोक्तमसत्कर्मप्रवर्त्तनम् ॥ कामक्रोधंमदंमानंलोभंहर्षन्तथैवच । जेतव्यमरिषड्वर्गंसादरंपृथिवीक्षिता ॥ एतेषांविजयंकृत्वाकार्यंभृत्यजयस्ततः । कृत्वाभृत्यजयंसर्वंराजाजनपदंजयेत् ॥ कृत्वातुविजयंतेषांशत्रून्बाह्यांस्ततोजयेत् । बाह्याश्चविविधाज्ञेयास्तुल्याभ्यन्तरकृत्रिमाः ॥ गुरवस्तेयथापूर्वंतेषुयत्नपरोभवेत् । पितृपैतामहमित्रंसामन्तश्चतथारिपोः ॥ कृत्रिमञ्चमहाभागमित्रंविविधमुच्यते । तथापिचगुरुः पूर्वंभवेत्तत्रापिचाहृतः ॥ स्वाम्यमात्योजनपदोदुर्गं-सैन्यंतथैवच । कोषोमित्रञ्चधर्म्मज्ञसप्ताङ्गंराज्यमुच्यते ॥ सप्ताङ्गस्यापिराज्यस्यमूलंस्वामीप्रकीर्त्तितः । तन्मूलत्वात्तथाङ्गानांराजारक्ष्यः प्रयत्नतः ॥ षडङ्गरक्षाकर्त्तव्यात-थातेनप्रयत्नतः । अङ्गेभ्योयस्तथैकस्यद्रोहमाचरतेऽल्पधीः ॥ वधस्त

स्वतुकर्त्तव्य . शीघ्रमेवमहीक्षिता।
नराज्ञामृदुनाभाव्य मृदुर्हिपरिभू-
यते॥ नभाव्यंदारुणेनापितीक्ष्णा
दुद्विजतेजन । कालेमृदुर्योभवति
कालेभवतिदारुण ॥ राजालोक
द्वयापेक्षीतस्यलोकद्वयभवेत्। भृ-
त्यै. सहमहीपाल परिहासवि
वर्जयेत्॥ भृत्याः परिभवन्तीह नृ
प हर्षवशङ्गतम्। व्यसनानिच स-
र्वाणिभूपति. परिवर्जयेत्॥ लो
कसङ्ग्रहणार्थायकृतकव्यसनोभवेत्।
शौटीरस्यनरेन्द्रस्यनित्यमुद्रिक्तचेत
सः॥ जनाविरागमायांतिसदा-
दु सेव्यभावत । स्मितपूर्वाभि-
भाषीस्यात्सर्वस्यैवमहीपतिः॥ म
ध्येष्वपिमहाभागभ्रूकुटिंनसमाच
रेत्। भाव्यंधर्मभृताश्रेष्ठस्थूललक्षे
णभूभृता॥ स्थूललक्षस्यवशगासर्वा
भवतिमेदिनी। अदीर्घसूत्रश्चभवे-
त्सर्वकर्मसुपार्थिव:॥ दीर्घसूत्र-
स्यनृपतेः कर्महानिर्ध्रुवभवेत्। रा
गेद्वेषेचकामेचद्रोहेपापेचकर्मणि॥
अप्रियेचैवकर्त्तव्येदीर्घसूत्रः प्रश-
स्यते। राज्ञासम्वृतमन्त्रेणसदाभा-
व्यंद्विजोत्तम॥ तस्यासम्वृतमन्त्रस्य
ज्ञेयाः सर्वापदोध्रुवा.। कृत्या-
न्येवतुकार्याणिज्ञायन्तेयस्यभूपतेः॥
नारब्धानिमहाभागतस्यस्याद्वसुधा
वशी। मन्त्रमूलसदाराज्यंतस्मा-



न्मूलंसुरक्षितम्॥ कर्त्तव्य पृथिवी
पालैर्मन्त्रभेदभयात्सदा। मन्त्रवि
त्साधितोमन्त्रः सम्पतानांसुखाव-
ह ॥ मन्त्रच्छलेनबहवोविनष्टा
पृथिवीक्षितः। आकारैरिङ्गितैर्ग-
त्याचेष्टयाभाषितेनच॥ नेत्रवक्त्रा
विकारैश्चगृह्यतेन्तर्गतमन.। न-
यस्यकुशलैस्तस्यवशेसर्वावसुन्धरा।
भवतीहमहीभर्त्तु सदापार्थिवन
न्दन। नैकस्तुमन्त्रयेन्मन्त्रनराजा
बहुभि. सह॥ नारोहेद्विषमांना
वनापरीक्षितनाविकाम्। येचा
स्यभूमिंजयतोभवेयु परिपन्थिनः
॥ तानानयेद्वशेसर्वान्सामादिभि-
रुपक्रमै.। यथानस्यात्कृशोभाव.
प्रजानामनपेक्षया॥ तथाराज्ञाप्रक
र्त्तव्यंस्वराष्ट्र परिरक्षता। मोहाद्रा
जास्वराष्ट्रंय. कर्षयत्यनपेक्षया॥
सोचिराद्भ्रश्यतेराज्याज्जीविताञ्चस
बान्धव:॥ भृतोवत्सोजातबल.
कर्मयोग्योयथाभवेत्। तथाराष्ट्रं
महाभागभृतकर्मसमभवेत्। योरा
ष्ट्रमनुगृह्णातिराजास्वपरिरक्षति-
॥सञ्जातमुपयाचेत्तु विन्दतेसुमह
त्फलम्। राष्ट्राद्धिरण्यं धान्यञ्चमही
राज्ञासुरक्षिता॥ नित्यस्वेभ्यः
परेभ्यश्चयथामातायथापिता। नि
त्यंराजास्वराष्ट्रय: कर्षत्यन्यस्यचे
क्षया॥ गोपितानिसदाकुर्यात्-

सविभागीप्रियाणिच । अजस्रमुपयोक्तव्य फलतेभ्यस्तथैवच ॥ धर्मकर्मदमायत्त विधानेदैवमानुषे । तयोर्दैवमचिन्त्यहिपौरुषेविद्यतेक्रिया ॥ एवमहींपालयतोऽस्यभर्त्तुर्लोकानुरागः परमोभविष्य । लोकानुरागप्रभवाचलक्ष्मीर्लक्ष्मीवतश्चैवपराचकीर्त्ति ॥ इतिमात्स्ये १९४ अध्याय ॥ रजपूतइतिलोकप्रसिद्धे वर्णसङ्करजातिविशेषे ॥ यथा । वैश्यादम्बष्ठकन्यायाराजपुत्रस्यसम्भव इतिपराशरपद्धति ॥ करणकन्यायाञ्चक्षियाज्जातश्चेतिपुराणम् ॥

राजपुत्रकम् । न० राज्ञ · पुत्राणांसमूहे । राजपुत्राणांसमूह . । गोत्रोक्षोष्ट्रोरभ्रेत्यादिनावुञ् ॥ पुं० राजाम्ने ॥

राजपुत्रिका । स्त्री० राजकन्यायाम्॥ शरारिपक्षिणि ॥ जात्याम् ॥ राज्ञपुत्रिकेव ॥

राजपुत्री । स्त्री० राजकन्यायाम् । मालात्याम् ॥ रेणुकाख्यौषधौ ॥ ॥ कटुतुम्ब्याम् ॥ राजरीतौ ॥ छुच्छुन्दर्याम ॥

राजपुष्प । पु० नागकेशरवृक्षे ॥

राजपुष्पी । स्त्री० )

राजप्रिया । स्त्री०) करुणीवृक्षे ॥

राजफणिज्झक । पु० नागरङ्गवृक्षे॥

राजफलम् । न० पटोले ॥

राजफला । स्त्री० जम्बू ॥

राजवदर । पु० उत्तमकोलौ । नृपश्रेष्ठे । नृपवदरे । राजवल्लभे । पृथुकोले । तनुबीजे । मधुरफले । राजकोले ॥ न० रक्तामलके ॥ लवणे ॥ लवल्याम् ॥

राजवला । स्त्री० गन्धालिकायाम् । प्रसारण्यामोषधौ ॥ वलानावलप्रदानाराजेव । राजदन्तादि ॥

राजभद्रिका । स्त्री० हारीतपक्षिणि ॥

राजभूयम् । न० राजत्वे ॥

राजभोगीणम् । न० राज्ञ शरीरायहिते ॥ राज्ञोभोग शरीरम् तस्मैहितम् । आत्मन्विश्वजनभोगोत्तरपदात्ख ॥

राजभोग्य । पुं० पियालवृक्षे ॥ न० जातीकोषे । जातीफले ॥

राजभोजी । पु० वाजपेययज्ञे ॥

राजमण्डूक । पु० वृहद्भेके । महामण्डूके । पीताङ्गे । वर्षाघोषे ॥

राजमल्ल । पु० नृपमल्ले । उत्सिक्ते । उद्धते ॥ राज्ञामल्ल । मल्लानाराजावा ॥

राजमार्ग । पुं० राजपथे ॥

राजमाष । पु० वर्वटे । नीलमाषे । महामाषे । चौ रा० लोबियावडा इ० भा० ॥ राजमाषोगुरु स्वादुस्तुवरस्तर्पण . सर . । रूक्षोवातकरोरुच्य स्तन्योभूरिमलप्रद · ॥

श्वेतोरक्तस्तथाकृष्णस्त्रिविध स प्रकीर्त्तित. । योमहास्तेषुभवति सएवोक्तोगुणाधिक . ॥ अपिच । राजमाषंपरंहृद्य कफपित्तहर परम् । आध्मानवातकृद्रुक्षोतत्पचतद्गुणावहम् ॥ माषाणांराजा । राजदन्तादि ' ॥

राजमुद्ग . । पुं॰ मकुष्ठके ॥

राजयक्ष्मा । पु॰ क्षयरोगे । यक्ष्मणि ॥ राज्ञश्चन्द्रमसोयस्मादभूदेषकिलामय . । तस्मात्त राजयक्ष्मेति केचिदाहुर्मनीषिण : ॥ षष्ठीतत्पुरुष ' कर्मधारयोवा । तथाहवागभट : । अनेकरोगानुगतोबहुरोगपुर सर . । राजयक्ष्माक्षय : शोषोरोगराडितिचस्मृत . ॥ नक्षत्राणांद्विजानाञ्चराज्ञोभूद्यत्य पुरा । यच्चराजाचयक्ष्माचराजयक्ष्मात तोगत : ॥ इति ॥ महापातकजचिह्नमप्ययम् । यथाहविष्णु : । अथनरकानुभूतदु : खानातिर्यक्त्वमुत्तीर्णानामानुष्येलक्षणानिभवन्ति । कुष्ठ्यतिपातकी॰ ब्रह्महा यक्ष्मी॰सुराप . श्यावदन्तक . सुवर्णहारीकुनखीगुरुतल्पगोदुश्चर्म्मत्यादिकूर्मपुराणम् ॥

राजयज्ञ . । पुं॰ अश्वमेधे ॥ राज्ञएवतत्राधिकारात् ॥ राज्ञोयज्ञ : ॥

राजयोग : । पुं॰ ज्ञानपरिपाके । व्यवहारेष्वविक्षिप्तचित्ततालक्षणे योगविशेषे । राजत्वात्सर्वयोगाना-राजयोगइतिस्मृत । राजवर्त्तोप्यमान तपरब्रह्माणमव्ययम् ॥ देहिन प्रापयेद्यस्तुराजयोग सउच्यते-इत्युक्ते : ॥ राज्ञउपयुक्तोयोग ' । योगानांराजेतिवा ॥ हठयोगोदेहआयासकर ' । अयगुरोरवाप्तश्चत्रिरायासेनमोक्षरूपपुरुषार्थप्रद . । हठवदस्याप्यष्टाङ्गानिसन्ति ॥

राजयोगी । त्रि॰ ज्ञानपरिपाकयुक्ते । व्यवहारेष्वविक्षिप्तचित्ततालक्षणयोगश्रेष्ठवति ॥

राजयोग्य ' । त्रि॰ राजार्हे ॥

राजरङ्गम् । न॰ रजते ॥

राजराज : । पुं॰ धनाधिपे । कुवेरे ॥ राज्ञायक्षाणांराजा । राजाह ' सखिभ्यष्टच् ॥ नृपेशे । सार्वभौमे ॥ सुधाकरे । चन्द्रे ॥

राजरीति ' । स्त्री॰ पित्तलविशेषे । पाकतुण्डाम् ॥ महेश्वर्याम् । कपिलायाम् ॥

राजर्षि : । पुं॰ प्रभुत्वेसतिसूक्ष्मार्थनिरीक्षणक्षमे॰प्रजापालनाधिकारिण्युत्कृतपसि निमिप्रमुखे ॥ राजाचासौऋषिश्च ॥

राजलक्ष्मा । पुं॰ युधिष्ठिरे ॥

राजवंश्य : । त्रि॰ राजवंशिनि । राजवंशोद्भवे ॥ वंशभव : । दिगादि-

स्वादत् । राज्ञोवश्य ॥ राजवशे साधुर्वा । तत्रसाधुरितियत् ॥

राजवान् । त्रि० राजमात्रयुक्तदेशे ॥ सुराज्ञिदेशेराजन्वान्स्यात्ततोन्यत्र राजवान् । राजास्त्यस्यास्मिन्वा । मतुप् ॥

राजवर्त्म । न० घण्टापथे । राजपथे ॥

राजवला । स्त्री० भद्रवलायाम् ॥

राजवल्लभ । पुं० राजादन्याम् ॥ राजाम्रे ॥ राजबदरे ॥ नारायणदासकविराजकृतद्रव्यगुणग्रन्थविशेषे ॥ त्रि० नृपतिप्रिये ॥

राजवल्ली । स्त्री० सोमवल्ल्याम् । उच्छ्या० इ० गौ० दे० भा० ॥

राजवारुणी । स्त्री० सुराप्रभेदे ॥

राजवाह । पुं० घोटके ॥ वाहानां राजा । राजदन्तादि ॥

राजवाह्य । पु० राजवाहकहस्तिनि । उपवाह्ये । विजयकुञ्जरे ॥ त्रि० राजवहनीये

राजवीजी । त्रि० राजवंश्ये । राज्ञो वीजयितुंशीलमस्य । वीजव्यजनेऽदन्त । सुपीतिणिनि ॥ यद्वा । राज्ञोवीजम् । राजवीजम् । तदस्यास्ति । अतइनि ॥

राजवृक्ष । पुं० गिरिमाल० इतिप्रसिद्धे सुवर्णके । आरग्वधे ॥ राजाचासौवृक्षश्च ॥ वृक्षाणांराजावा ॥ राजदन्तादि ॥ रोगाणांराजानं वृश्चतिवा । ओव्रश्चूच्छेदने । वाहुलकात्सुक् ॥ पियाले ॥ लङ्कास्थायिनिवृक्षे । लङ्काथूहर० इ० भा० ॥

राजवृत्तम् । न० नृपचारित्रे ॥ तच्चतुर्विधम् । यथाहकामन्दकः । न्यायेनार्जनमर्थस्यवर्द्धनंपालनं तथा । सत्पात्रेप्रतिपत्तिश्चराज्ञोवृत्तं चतुर्विधमिति ॥

राजशण । पुं० मट्टवर्षे । पाटसन० इ० भा० ॥

राजशफर । पुं० इल्लिशमत्स्ये ॥

राजशय्या । स्त्री० राज्ञः शयनीये । महाशय्यायाम् ॥

राजशाक । पुं० वास्तूके ॥

राजशास्त्रम् । न० नीतिशास्त्रे ॥ राज्ञांशास्त्रम् ॥

राजशिम्ब । पुं० निष्पावे ॥

राजशुक । पु० प्राज्ञे । शतपत्रे । नृपप्रिये । राजसूआ० इ० भा० प्र० पक्षिणि ॥

राजशृङ्ग । पुं० मद्गुरमत्स्ये ॥ न० राजच्छत्रे । कनकदण्डके ॥

राजस । पुं० राजसाहङ्कारे । इन्द्रियाणांकारणे । तैजसे ॥ त्रि० रजोगुणोद्भवे । रजोगुणप्रधाने ॥ तल्लक्षणंयथा । आरम्भरुचिताधैर्य मसत्कार्यपरिग्रह । विषयोपसे

बाचाजसं राजस गुणलक्षणम् ॥ आरम्भरुचिताफलार्थकर्मानुष्ठान शीलता ॥ अपिच । येनास्मिन् कर्मणालोकेख्यातिमिच्छति पुष्कलाम् । नचशोचत्यसम्पत्तौतद्विज्ञेयन्तुराजसमिति ॥ रजसोयम् । अण् ॥

राजसदनम् । न॰ राजगृहे । सौधे- ॥ राज्ञ ' सदनम् । योग्यत्वात् ॥ यद्वा । सदनानाराजा । राजदन्तादि : ॥ तन्नेदायथा । सौधोऽस्त्री राजसदनमुपकार्योपकारिका । स्वस्तिक . सर्वतोभद्रोनन्द्यावर्त्तादि येपिच । विच्छन्दक : प्रभेदाश्चि भवन्तीश्वरसद्मनाम् ॥

राजसधनम् । न॰ धनविशेषे ॥ यथा । कुसीदकृषिवाणिज्यशुल्कागानानुवृत्तिभि : । कृतोपकाराद्वाप्तञ्चराजसंसमुदाहृतम् ॥ अनुवृत्त्यासेवया ॥

राजसभा । स्त्री॰ नृपतिसमाजे ॥ राज्ञ : सभा । सभाराजेत्यनराजपर्यायस्यैवग्रहणान्नक्लीवत्वम् ॥

राजसयज्ञ ' । पुं॰ सकामानांयज्ञे ॥ अभिसन्धायतुफल दम्भार्थमपिचैव यत् । इज्यतेभरतश्रेष्ठत यज्ञ विद्धि राजसम् ॥

राजसर्प ' । पुं॰ सर्पविशेषे । भुजङ्गभोजिनि ॥

राजसर्षप । पुं॰ राजिकायाम् । आसुर्याम् ॥ तिस्रभिर्लिक्षाभि . परिमिते ॥

राजसायुज्यम् । न॰ राजत्वे ॥ राज्ञ सायुज्यम् ॥

राजसारस । पुं॰ मयूरे ॥

राजसाहङ्कार । पुं॰ तैजसाहङ्कारे । इन्द्रियाणांकारणे ॥

राजसाहार ' । पुं॰ रजोगुणिनाभोजने ॥ यथा । कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिन । आहारा राजसस्येष्टा दु खशोकामयप्रदा ' ॥

राजसी । स्त्री॰ दुर्गायाम् ॥ रजोगुण सम्बन्धिन्याम् ॥

राजसूय . । पु॰ राज्ञाकर्त्तव्ये यज्ञ विशेषे । नृपाध्वरे । क्रतुराजे । क्रतूत्तमे ॥ राज्ञासोतव्योऽभिषवणानिष्पादयितव्य । षुञ् अभिषवे । यद्वा । लतात्मक : ' सोमोराजासूयते॰कण्डारोऽत्र अधिकरणे क्यप् । राजसूयसूर्य्यत्यादिना निपातनाद्दीर्घ ॥

राजसूयकी । स्त्री॰ राजसूयस्य दक्षिणायाम् ॥

राजस्कन्ध : । पुं॰ घोटके ॥

राजस्वम् । न॰ करे । राजग्राह्यभागे ॥

राजस्वर्ण : । पुं॰ राजधूस्तूरके ॥

राजहंस । पुं० कलहंसे ॥ चरणैश्चञ्चुसहितैर्लोहितायैस्त्वसिता । तेराजहंसाविख्याता इत्याहुर्कोषकोविदा ॥ हंसानाराजा । राजदन्तादि ॥ कादम्बे । वालिचांस० इतिगौड़देशप्रसिद्धे । नीलहंसीयम् ॥ नृपोत्तमे ॥

राजहंसिनी । स्त्री० रसालायाप्रभेदे । राजहंसाम् ॥ निर्नीरपाचितक्षीरमाहिषतत्रवदधि । शुभ्रशर्करयैलाद्यगालितराजहंसिनी ॥ राजहंसीसुमधुराबल्यातृष्यतराश्रिमा । अत्यर्थंपित्तशमनीकिञ्चित्कफकरीस्मृता ॥

राजहर्षणम् । न० तगरपुष्पे ॥

राजहस्ती । पुं० राजगजे । मारीचे । याजकगजे । मदोत्कटे ॥

राजहासक । पुं० मत्स्यविशेषे । कातरे । कातले । राजीवे ॥

राजातन । पुं० पियालवृक्षे ॥ राजानमततति । अत० । कर्त्तरि० ल्युट् ॥

राजादन । पुं० फलाध्यक्षे । क्षीरिकायाम् न० पियाले ॥ राजभिरद्यते । अद० । कर्म्मणिल्युट ॥ किंशुके । चिपचके ॥

राजादनी । स्त्री० क्षीरिकायाम् । खिर्नी० इ०भा० ॥

राजानुजीवी । त्रि० राजोपजीविनि ॥ तस्यकर्मोयथा । मत्स्यउवाच । यथानुवर्त्तितव्यस्यान्मनोराजोपजीविना । तथातेकथयिष्यामिनिबोधगदितोमम । आज्ञासर्वात्मना-कार्याश्रुत्वाऽरविनन्दन । आचिप्यवचनन्तस्यनवक्तव्यतथावचः ॥ अनुकूलप्रियतस्यवक्तव्यञ्जनससदि । रहोगतस्यवक्तव्यमप्रियहितमवे-त् ॥ परार्थमस्यवक्तव्यस्वस्थे चेतसिभागव । स्वार्थः सुहृद्भिर्वक्तव्योनस्वयन्तुकदाचन ॥ कार्यातिपात सर्व्वेषुरक्षितव्यःप्रयत्नतः । नचहिस्यन्धनकिञ्चिन्नियुक्तेनचकर्म-णि ॥ नोपेक्ष्यमाणमानाचतथाराज्ञ प्रियोभवेत् । राज्ञस्तनतथा-कार्यवेषभाषितचेष्टितम् ॥ राजलीलानकर्त्तव्यातद्विद्विष्टं विवर्जयेत् । राज्ञ समोधिकोवानकार्यो-वेशोविजानता ॥ द्यूतादिषुतथै-वास्यकौशलञ्चप्रदर्शयेत् । प्रदर्श्य-कौशलचास्यराजानञ्चविशेषयेत् ॥ अन्तःपुरधनाध्यक्षैवैरदूतैः समागतैः । ससर्गनव्रजेद्राजन्विनापार्थिवशासनम् ॥ निःस्नेहताचावमानंप्रयत्नेनचगोपयेत् । यच्चगुह्यंभवेद्राज्ञोनतल्लोकेप्रकाशयेत् ॥ नृपेणश्राविलयत्स्यान्नतद्ब्रूयान्नृपोत्तम । नतत्संश्रावयेल्लोकेतद्राज्ञ प्रियोभवेत् । आज्ञाप्यमाने-

चान्यस्मिन् समुत्थायस्त्वरान्वित । स्वचकिङ्करवाणीति वाच्योर जावि- जानता ॥ कार्यावस्थास्वविज्ञाय- कार्यमेवतथाभवेत् । सततक्रियमा णेस्मिन्लाघवन्तुव्रजेद् ध्रुवम् । रा ज्ञ प्रियाणिवाक्यानिनचात्यर्थपु न पुन नहास्यशीलश्चभवेन्न चापिभ्रुकुटीमुख । नातिवक्तान- निर्वक्तानचमत्सरिकस्तथा । षा तारसभाचिरश्चैवनभवेत्तुकथञ्चन ॥ दुष्कृतानिनरेन्द्रस्यनतुसङ्कीर्तयेत् क्वचित् । वस्त्रमुल्यमलङ्कारराज्ञा दत्तञ्चधारयेत् औदार्येणनतद्द द्यमन्यस्मैभूतिमिच्छता । तस्यैवो पासनञ्चैदिवास्वप्न विवर्जयेत् ॥ नानिर्दिष्टे तथाद्वारे प्रविशेतकदाच न । नन पश्येत राजानमयोग्यासु- चभूमिषु । राज्ञस्तुदक्षिणेपार्श्वेवा मेचोपविशेत्तथा । पुरस्ताच्चतथाप श्चादासनन्तुविगर्हितम् ॥ जृम्भानि ष्ठीवनकासक्रोधं पर्यङ्किकाश्रयम् । भ्रुकुटीवान्तमुद्गारंतत् समीपेविव- र्जयेत् ॥ स्वयन्नचनकुर्वीतस्वगुणा ख्यापनंतथा । स्वगुणाख्यापनेचैव परमेवप्रयोजयेत् ॥ हृदयनिर्मलं कृत्वापराभक्तिमुपाश्रितैः । अनु जीविगणैर्भाव्यनित्य राज्ञामतन्द्रि तै ॥ शाठ्य लौल्यम्पैशुन्यं ना- स्तिक्य क्षुद्रतांतथा । चापल्यञ्च



परित्याज्यनित्य राजानुजीविना ॥ श्रु तेनविद्याशिल्पैश्चसयोज्यात्मानमा त्मना । राजसेवाततः कुर्याद्भूत येभूतिवर्द्धिनीम् ॥ नमस्कार्या सदाचास्य पुत्रवल्लभमन्त्रिण । स चिवैश्चास्यविश्वासोनतुकार्य क थञ्चन ॥ अपृष्टश्चास्यनब्रूयात्का मब्रूयात्तथायदि । हितपथ्यञ्च वचन हितैः सह सुनिश्चितम् ॥ चित्तञ्चैवास्यविज्ञेयनित्यमेवोप- जीविना । भर्त्तुराराधनकुर्याच्चित्त ज्ञोमानव सुखम् ॥ रागापरागौ चैवास्यविज्ञेयौभूतिमिच्छता । त्यजे द्वृत्तिविरक्तस्तुरक्तोऽत्तिन्तुकारयेत् । विरक्त कारयेन्नाशविपक्षाभ्युदयन्तथा । आशावर्द्धनकङ्कृत्वाफलनाशकरो तिच अकोपेपिसकोपास्तु प्रसन्नो ऽपिचनिष्फल । वाक्य समन्द ब दातिवृत्तिच्छेदकरोतिच ॥ प्रदेश वाक्यमुदितोनसम्भावयतेन्यथा । आराधनासुसर्वासुसुप्तवच्चविचेष्टते ॥ कथासुदोषक्षिपतिवाक्यभङ्ग करो- तिच । लक्ष्यतेविमुखश्चैवगुणस- ङ्कीर्त्तनेऽकृते ॥ दृष्टि क्षिपत्यथान्य त्रक्रियमाणेचकर्मणि । विरक्तलक्ष ण्चैतच्छृणुरक्तस्यलक्षणम् ॥ दृ ष्ट्वाप्रसन्नोभवति वाक्य गृह्णाति चादरात् । कुशलादिपरिप्रश्नै- स प्रयच्छतिचासनम् ॥ विरक्तदर्शने

चास्यरहस्ये चनग्रहते । जायते-हृष्टवदनः श्रुत्वातस्यतुतत्कथाम् ॥ अप्रियाण्यपिवाक्यानि तदुक्तान्यभिनन्दते । उपायनञ्चगृह्णाति स्तोकमप्यादरात्तथा ॥ कथान्तरेषुस्मरतिप्रहृष्टवदनस्तथा । इतिरक्तस्यकर्त्तव्यासेवारविकुलोद्ह ॥ आपत्स्वनत्यजेत्पूर्वं विरक्तमपि सेवितम् । मित्र नचापत्सु तथाच भृत्य त्यजन्तियेनिर्गुणमप्रमेयम् । प्रभुं विशेषेणचतेव्रजन्तिसुरेन्द्रधामामरवृन्दजुष्टम् ॥ इतिमत्स्यपुराणे राजधर्मेऽनुजीविवृत्तिनामाध्यायः ॥ १९० ॥

राजान्नम् । न० आन्ध्रदेशोद्भवशालिविशेषे । राजार्हे । दीर्घशूकके । धान्यश्रेष्ठे ॥ राजस्वामिकभक्ते ॥

राजाम्र । पुं० न० आम्रविशेषे । राजफले । मधुरे । कामाङ्गे । टङ्के ॥ राजाम्र तुवरं स्वादुविशदं शीतलगुरु । ग्राहिरुच्यविवन्धाध्मवातकृत्कफपित्तनुत् ॥

राजाम्लः । पुं० अम्लवेतसे ॥

राजार्कः । पुं० सितार्कवृक्षे । वसुके । मन्दारे । सदापुष्पे । अलर्के ॥

राजार्हम् । न० जोङ्गके । अगुरुणि ॥ त्रि० राजयोग्ये ॥ राजानमर्हति । अच् ॥

राजार्ह्वा । स्त्री० जम्ब्वाम् ॥

राजालावुः । स्त्री० स्वादुतुम्ब्याम् । महातुम्ब्याम् । शाकालाब्वा ॥

राजालुकः । पुं० महाकन्दे । मूलके ॥

राजावर्त्तः । पुं० उपरत्नभेदे । आवर्त्तमणौ । रेवटी० इ० भा० प्र० ॥ राजावर्त्तः प्रमेहघ्नश्छर्द्दिहिक्कानिवारणः ॥ विराटदेशज हीरके । विराटजे ॥ राजपट्टे ॥

राजाहिः । पुं० द्विमुखसर्पे । विषायुधे । अहीरणौ ॥ अहीनांराजा । राजदन्तादिः ॥

राजिः । स्त्री० वीथ्याम । पङ्क्तौ ॥ रेखायाम् । निरन्तरंपङ्क्तिसाधारणे ॥ राजति । राज० । इन् । वसिवपियजिराजीत्यादिना० इञ् वा ॥

राजिका । स्त्री० आसुर्य्याम् । क्षवे । क्षुधाभिजनने । राजसर्षपे । राई० इ० भा० ॥ राजिकाकफपित्तघ्नीतीच्णोष्णारक्तपित्तकृत् । किञ्चिद्रूक्षाग्निदाकण्डूकुष्ठकोष्ठकृमीन्हरेत् । अतितीक्ष्णाविशेषेणतद्वत्कृष्णापिराजिका ॥ केदारे ॥ रेखायाम् । पङ्क्तौ ॥ राजति० राजयतिवा । राज० । ण्वुल् ॥

राजिकाफल । पुं० गौरसर्षपे ॥

राजिफला । स्त्री० चीनाकर्कट्याम् ॥

राजिमत्फला । स्त्री० राजकोशात-

क्याम् ॥

राजिल । पुं० डुण्डुभसर्पे ॥ राजि लोनिर्विषसर्प . ॥ राजि . रेखाऽस्यास्ति । सिध्मादित्वाल्लच् ॥ यद्वा । राजिलाति । लाऽऽदाने । आतोनुपेतिकः ॥

राजी । स्त्री० निम्छिद्रपङ्क्तौ ॥ कृदिकारादितिङीष् ॥

राजीफल . । पुं० पटोले ॥

राजीव । पुं० हरिणप्रभेदे ॥ राजीवस्तुमृगोत्रेयोराजीभि परितोवृत ' । राजीवस्तुगुणोज्ञेय ' नृपतीनसमोजने . ॥ राट्खडङ्गतिख्यातेवृहन्मत्स्यविशेषे ॥ हस्तिनि॥ सारसपक्षिणि ॥ न०नलिने । पद्मे ॥ राजीरेखाऽस्यास्ति । अन्येभ्योपिदृश्यतइतिवार्त्तिकाद्व । केशरस्थराज्यस्यास्तीतिवा ॥ त्रि०राजीपक्षिणि ॥

राजीवलोचन ' । त्रि० कमलनयने ॥

राजेन्द्रः । पुं० श्रीरामचन्द्रे ॥ मण्डलेश्वराद्दशगुणराजनि ॥ यथा । चतुर्ग्रामपर्यन्तमधिकारोनृपस्यच । योराजातच्छतगुणः सएवमण्डलेश्वर . ॥ तस्माद्दशगुणोराजाराजेन्द्र . परिकीर्त्तित ' ॥ ब्र०ब्र०वैवर्त्तपुराणे ॥

राजोद्विजनसंज्ञकः । पुं० भूतांकुशवृक्षे ॥

राज्ञी । स्त्री० राजप्रियायाम् । नृपते पत्न्याम् । राणी०ब्र०भा० ॥ भास्करस्यभार्यायाम् ॥ कांस्ये ॥ नील्याम् ॥ त्रैलोक्यात्मनकोशस्थपश्चिमदिग्भागे ॥ राज्ञावरुणेनाधिष्ठितत्वात् । सन्ध्यारागयोगाद्वा ॥

राज्यम् । न० नीवृति । जनपदे । देशे । विषये । उपवर्त्तने ॥ तल्लक्षणमुक्तवरदातन्त्रे । यथा । लक्षाधिपस्य राज्यं स्यात्साम्राज्यं दशलक्षके । शतलक्षं महेशानिमहासाम्राज्यमुच्यते ॥ इति ॥ अपिच ॥ स्वाम्यमात्यौपुरराष्ट्रकोशदण्डौसुहृत्तथा । सप्तप्रकृतयोह्येता . सप्ताङ्ग - राज्यमुच्यते ॥ इति ॥ राज्ञ . कर्म भावोवा ॥ पत्यन्तपुरोहितादिभ्योयक् ॥ राज्यनैच्छयति पिबाद्दत्त तत्परिणामवित् । यत्प्रविष्ट. पुरुषआत्मानंनाववुध्यते ॥

राज्यक्ता । स्त्री० पिष्टराजिकादधिलवणमिश्रितवास्तूकादौ । रायता० ब्र०भा ॥राज्यक्ताथातिरोचन्यापाचन्यातांस्तुभक्षयेत् ॥ तान्वटकान् ॥

राज्यमूलम् । न० मन्त्रसंरक्षणे ॥

राज्याङ्गम् । न० राज्यस्योपाये । प्रकृतौ । स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गवलेषु ॥ राज्यस्यराजकर्मणोङ्गंसाधनम् । स्वामी० राजा० पुरो

हितकृतिश्रीधरः । अमात्योमन्त्री । सुहृत् मित्रम् । कोशोभाण्डागार । राष्ट्र देश । पर्वतादीनि दुर्गाणि । बलसैन्यम् । उक्तञ्चकामन्दकीये । स्वाम्यमात्यश्चराष्ट्रञ्चदुर्गं-कोशोबलंसुहृत् । परस्परोपकारी दृसप्ताङ्ग राज्यमुच्यते । पौरश्रेण्या सहाष्टाङ्गमपिराज्यप्रकीर्त्तितमिति ॥ सप्ताङ्गस्यापिराज्यस्यमूलस्वामी-प्रकीर्त्तित । तन्मूलत्वात्तथा ङ्गानांराजारक्ष्य प्रयत्नत ॥ षड ङ्गरक्षाकर्त्तव्यातथातेनप्रयत्नत । अगेभ्योयस्त्वथैकस्यद्रोहमाचरतेऽ-ल्पधी ॥ वधस्तस्यतुकर्त्तव्य . शी घ्रमेवमहीक्षिता ॥

राटि । स्त्री॰ युद्धे । राड॰ कृ॰भा॰ प्र॰ ॥

राडि । स्त्री॰ भरारिखरी ॥

राढ । पुं॰ मदनद्रुमे । मयनफलाख्ये ॥

राढक । पुं॰ स्वनामाख्यातेदेशे ॥ यथा । प्राच्यामागधशोणौवखारेन्द्रोगौडराढका: । इतिज्योतिषतत्त्वम् ॥

राढा । स्त्री॰ जनपदविशेषे । सुम्भेषु ॥ शोभायाम् ॥ गौडदेशेपुरीविशेषे ॥

राढि । स्त्री॰ युद्धे ॥

राढीय: । त्रि॰ राढदेशोद्भवे ॥

रात । त्रि॰ दत्ते ॥

रात्रम् । न॰ ज्ञाने ॥ यथा रात्रञ्चज्ञानवचनज्ञानपञ्चविधस्मृतम् । तेनेदपञ्चरात्रञ्चप्रवदन्तिमनीषिण: ॥

रात्रक । पुं॰ पणावधृग्टहाम्लवर्षवासिनि । सवत्सरमभिव्याप्यवेश्यावेश्मनिवासिनि ॥ न॰ पञ्चरात्रे ॥

रात्रि । स्त्री॰ सूर्यकिरणानवच्छिन्नकाले । निशायाम् । निशीथिन्याम् । त्रियामायाम् । रात॰ कृ॰ भा॰ ॥ तस्या कारणयथा । यद्यादित्यचक्रं गाढासुमेरोभूगोलकोद्भवा । छायाभवेत्तदारात्रि । स्यात्तद्विरहाद्दिनम् ॥ इतिवह्निपुराणम् ॥ हयकालपत्नी । पञ्चसङ्ख्यायाम् ॥ रातिसुखम् । रा॰ । राशदिभ्याक्रिप् ॥ रात्रे पूर्वीत्तरीयामौवेदाभ्यासेनतौनयेत् ॥ हरिद्रायाम् ॥

रात्रिचर । पुं॰ राक्षसे ॥ रात्रौचरति । चरेष्ट । रात्रे कृतिविभाषेतिपक्षेमुमभाव ॥ त्रि॰ रात्रौगमनकर्त्तरि ॥

रात्रिचरी । स्त्री॰ राक्षस्याम् ॥ टित्त्वान्ङीप् ॥

रात्रिजलम् । न॰ कुज्झटिकायाम् । रात्रेर्जलम् ॥

रात्रिजागर । पुं॰ कुक्कुरे ॥ त्रि॰

रात्रौजागरणकर्त्तरि ॥

रात्रिजागरद । पु॰ मशके ॥

रात्रिञ्चर । पु॰ यातुधाने । राक्षसे ॥ रात्रौचरति । चरेष्ट । रात्रेः कृतिविभाषेतिपक्षेमुम् ॥ त्रि॰ रात्रौगमनकर्त्तरि ॥

रात्रिञ्चरी । स्त्री॰ राक्षस्याम् ॥

रात्रिन्दिवम् । अ॰ अहोरात्रयोः ॥ रात्रौचदिवाच । अचतुरेत्यादिनाऽधिकरणार्थयोर्द्वन्द्वसमासान्तो-निपातितः । अव्ययान्तत्वादव्ययम् ॥

रात्रिपुष्पम् । न॰ उत्पले ॥

रात्रिमट । पुं॰ राक्षसे ॥ अटति । अटगतौ । पचाद्यच् । सप्तमीतियोगविभागात्समासः ॥ रात्रौअटतिवा । रात्रेः कृतिविभाषेतिमुम् ॥

रात्रिमणिः । पुं॰ चन्द्रे ॥ रात्रेर्मणिरिव ॥

रात्रिवास । पुं॰ अन्धकारे ॥ रात्रौवासोऽस्य ॥

रात्रिवास । न॰ रात्रौशयनकालीनपरिधेयवस्त्रे ॥ यथाशयनस्थास्यकारेषुरात्रिवासोदिनेतथा। स्नानास्वरकुवेशस्य वऽर्येक्रफ्रभोजनम् ॥

रात्रिविगमः । पुं॰ प्रभाते ॥ रात्रेर्विगमोऽत्र

रात्रिविश्लेषगामी । पुं॰ चक्रवाके ॥

रात्रिवेद । पु॰ कुक्कुटे ॥

रात्रिवेदी । पु॰ कुक्कुटे ॥

रात्रिहास । पु॰ श्वेतोत्पले ॥

रात्रिहिण्डकः । पुं॰ अन्तःपुररक्षके ॥

रात्री । स्त्री॰ निशायाम् । रात्री ॥ कृदिकारादितिपाक्षिकोङीष् ॥

रात्रौ । अ॰ निशि ॥

रात्र्यन्ध । त्रि॰ रात्रौदृष्टिहीननरे । रतन्धा॰इ॰भा॰ ॥ तन्नाशकौषधयथा । देवदारोस्त्वचेचूर्णमजामूत्रेणभावयेत् । एकविंशतिवारमक्षिणीतेनचाञ्जयेत् ॥ रात्र्यन्धतापटलतानश्येदितिविनिश्चयः ॥ इतिगारुडे ॥ १८८ ॥ अध्यायः ॥ काकादौ ॥

राद्ध । त्रि॰ पक्वे । सिद्धे ॥ सख्ये ॥ राध्यति । राध॰ ॥ राधेरनिटः क्तः ॥

राद्धान्तः । पुं॰ सिद्धान्ते ॥ राद्धः सिद्धोन्तोनिश्चयोयस्मिन् ॥

राधः । पुं॰ वैशाखमासे । माधवे ॥ राधा॰विशाखा॰तद्वतीपौर्णमासी॰राधी । साऽस्मिन्नस्ति । साऽस्मिन्पौर्णमासीत्यण् ॥

राधनम । न॰ साधने ॥ प्राप्तौ ॥ तोषे ॥

राधना । स्त्री॰ भाषणे ॥

राधरङ्क । पुं॰ सुनासीरे ॥ सीरके ॥ घनोपले ॥ शीकरे ॥ इ॰ मेदिनी ॥

राधरङ्कु । पुं॰ राधरङ्कार्थे ॥ इति हेमचन्द्र ॥ *

राध । न॰ ऐश्वर्ये ॥

राधा । स्त्री॰ गोपीविशेषे । तस्यानामानियथा । राधारासेश्वरीरासवासिनीरसिकेश्वरी । कृष्णप्राणाधिकाकृष्णप्रिय.कृष्णस्वरूपिणी ।कृष्णवामाङ्गसम्भूतापरमानन्दरूपिणी। कृष्णावृन्दावनीवृन्दावृन्दावनविनोदिनी ॥ चन्द्रावतीचन्द्रकान्ताशतचन्द्रनिभानना । नामान्येतानि साराणितेषामभ्यन्तराणिचेति ॥ राधेत्येवञ्चसंसिद्धाराकारोदानवाचक । स्वयंनिर्वाणधात्रीयासाराधापरिकीर्त्तिता इतिब्रह्मवैवर्त्तपुराणम् । राध्नोतिसकलान्कामांस्तोराधेतिकीर्त्तितेतिदेवीभागवतम् । राध्नोतिसाधयतीत्यर्थ : ॥ महालक्ष्म्याम् ॥ यथा । अन्मायामोहितास्त्वब्रह्मविष्णुशिवादय . । वैष्णवास्तांमहालक्ष्मींपराराधावदन्तिते ॥ यदङ्गाज्ञामहालक्ष्मी प्रियानारायणस्यच ॥ धन्विनाचिभभेदे । वेधविशेषे ॥ विशाखानक्षत्रे ॥ आमलक्याम् ॥ विष्णुक्रान्तायाम् ॥ विद्युति ॥ राध्नोति

कार्यमनया । राधसंसिद्धौ । गुरोश्चहलकृत्यकार ॥ यद्वा । राधयति । अच् । टाप् ॥

राधाकान्त : । पुं॰ श्रीकृष्णे ॥

राधाकृष्ण । पुं॰ राधाऽविनाभूतकृष्णे । श्रीकृष्णे । द्विभुजे । मुरलीधरे ॥ राधानामोच्चारणानन्तरकृष्णनामोच्चारणे विधियथा । नारद उवाच । आदौराधासमुच्चार्यपश्चात्कृष्णं विदुर्बुधा : ॥ निमित्तमस्माभक्त वदभक्तजनप्रिय ॥ श्रीनारायणउवाच । निमित्तमस्यत्रिविध कथयामिनिशामय, जगन्माताचप्रकृति पुरुषश्चजगत्पिता ॥ गरीयसीतिजगतामाता शतगुणै : पितु : । राधाकृष्णेतिगौरीशेत्येवशब्द : श्रुतौश्रुत ॥ कृष्णराधेशगौरीतिलोकेनचकदाश्रुत . । प्रसीदरोहिणीचन्द्रगृहाणार्घ्यमिदमम । गृहाणार्घ्यंमयादत्तंसञ्ज्ञयासहभास्कर । प्रसीदकमलाकान्त गृहाणममपूजनम् ॥ इतिदृष्टसामवेदेकौथुमेमुनिसत्तम । राशब्दोच्चारणादेव स्फीतोभवतिमाधव . ॥ धाशब्दोच्चारत . पश्चाद्धावत्येवससम्भ्रम . । आदौपुरुषमुच्चार्य पश्चात्प्रकृतिमुच्चरेत् । सभवेन्मातृगामीचवेदातिक्रमणेमुने ॥ इ॰ ब्र॰ वै॰ पु॰ ॥

राधातनय : । पुं॰ कर्णनामनि ॥ राधायास्तनय : ।।

राधावल्लभ : । पुं॰ श्रीकृष्णे ॥

राधावल्लभी । पुं॰ सम्प्रदायविशेषे ॥

राधावल्लभीय : । त्रि॰ सम्प्रदायविशेषयुक्ते वैष्णवे ॥ न । तत्तिलकविशेषे ॥ यथा ॥ आनासामूलमाश्रित्यशिरोमध्यगतं मुने । हरिपादाकृतनासा मूलमाश्रित्ययत्नत : । हरिमन्दिरवत्सर्वं तद्राधावल्लभीयकम् । श्रीराधावल्लभीयं यत्तिलकं सुमनोहरम् । गोकुल तत्तुविज्ञेय यद्गिमध्ये सुर गितम इतिपद्मपुराणम् ॥

राधाभेदी । पुं अर्जुने ॥

राधावेधी । पुं॰ अर्जुने ॥

राधासुत । पुं॰ कर्णे । चम्पाधिपे । अङ्गराजे । अर्कतनये ॥

राधेय : । पु॰ राधासुते । कर्णे ॥ राधाया : अपत्यम् । स्त्रीभ्योढक् ॥

राभसम् । न॰ उपक्रमे ॥

राम : । पुं॰ राघवे । दशरथतनये । श्रीरामचन्द्रे ॥ राम : शस्त्रभृतामहम् । युद्धकुशलानांमध्ये रामोऽखिलराक्षसक्षयकर : परमवीरोभगवद्विभूति : ॥ अयमवतारस्त्रेतायुगान्तेरावणादिवधार्थ : ॥ रेणुकेये । परशुरामे ॥ हलायुधे । बलभद्रे ॥ भार्गवोराघवोगोपस्त्रयोरामा : प्रकीर्तिता : ॥ राशब्दोविश्ववचनोमश्चापीश्वरवाचक : । विश्वेषामीश्वरोयोहितेनराम : प्रकीर्तित : ॥ रमतेरमयासार्धंतेनरामविदुर्बुधा : । रमाया रमणस्थ. न रामंरामविदोविदु : । राश्चेतिलक्ष्मीवचनोमश्चापीश्वरवाचक . । लक्ष्मीपतिगतिरामप्रवदन्तिमनीषिण : ॥ नाम्नासहस्रं दिव्यानास्मरणे यत्फल भवेत् । तत् फललभतेनूनंरामोच्चारणमात्रत : ॥ वरुणे । हये ॥ पशुभेदे ॥ न॰वास्तुके ॥ कुष्ठौषधौ ॥ तमालपत्रे ॥ त्रि॰चारौ । मनोरमे ॥ सिते ॥ असिते । श्यामे ॥ परमात्मनि ॥ रमन्तेयोगिनोनन्तेनित्यानन्दे चिदात्मनि । इतिरामपदेनासौपरंब्रह्माभिधीयते ॥ इतिपद्मपुराणम् ॥ रमते । रमक्रीडायाम् । ज्वलितिकसन्तेभ्योण : ॥ यद्वारमन्तेसत्यज्ञानानन्दलक्षणे योगिनोऽस्मिन्ननेन वा । हलश्चेतिघञ् ॥ रमयतीति वा ॥ मथुराचविलोमेनमध्यमोनंयदक्षरम् । योनस्मरतिलोकेस्मिन्स्तन्मध्य तन्मखोपरि ॥ रामोपासकस्तिलकयथा । श्रीरामोपासनायस्तिलकतूर्ध्वंपुण्ड्रकम् । भ्रुवोर्मध्ये

सबिन्दु. स्वात्यदिविप्रमनोहरम् ॥
रामकरी । स्त्री० रामकलीरागिण्याम् ॥
रामकर्पूरक : । पुं० स्वनामाख्यातेतृणे ॥
रामगिरि ' । पुं० स्वनामप्रसिद्धे०पर्वते॥ चित्रकूटपर्वते०इतिकश्चित्॥
रामचन्द्र : । पु० श्रीरामे । रावणारी ॥
रामजननी । स्त्री० रेणुकायाम् ॥ कौशल्यायाम् ॥ रोहिण्याम् ॥
रामठ . । पु० अङ्कोठवृक्षे ॥ न० हिङ्गुनि ॥ रामठदेशोद्भवत्वादुपचार: । रमन्तेऽनेनवा । रम० । रमेर्वृद्धिश्चेत्यठ ' ॥ रमयतिवा ॥
रामठी । स्त्री० नाडीहिङ्गुनि ॥
रामण : । पुं० गिरिनिम्बे ॥ तिन्दुके ॥
रामणीयकम् । न० मनोहरत्वे । रमणीयत्वे ॥ रमणीयस्वभाव: । योपधाद्गुरूपोत्तमाद्वुञ् ॥
रामण्यकम् । न० रमणीयतायाम् ॥
रामतरणी । स्त्री० लताविशेषे ॥
रामतरुणी । स्त्री० तरुणीपुष्पे । सेवती०इ०भाषाप्र० ॥
रामतीर्थम् । न० गोमत्याम् प्रसिद्धे ॥ सूर्य्यारके ।
रामदूत : । पुं० हनूमति ॥ यथा । मनोजवंमारुततुल्यवेगंजितेन्द्रियंबुद्धिमतांवरिष्ठम् । वातात्मजंवानरयूथमुख्यंश्रीरामदूतंमनसास्मरामीतिरामायणे ॥ रामस्यदूत . ॥
रामदूति । स्त्री० तुलसीविशेषे । विशल्यायाम् ॥
रामदूतिका । स्त्री० नागिन्याम् । नागपुष्प्याम् ॥
रामदूती । स्त्री० पर्णपुष्प्याम् । विशल्यायाम् ॥
रामनवमी । स्त्री० चैत्रशुक्लनवम्याम् ॥ रामनवमीव्रतेपारणकालस्तु । नवमीचाष्टमीविद्धात्याज्याविष्णुपरायणै । उपोषणंनवम्यांवैदशम्यामेवपारणमिति ॥
रामपद्म् । न० तीर्थविशेषे ॥
रामपूग . । पुं० पूगभेदे । कामीने । मुनिपूगे । सुरेवटे ॥
रामभद्र . । पु० श्रीरामे ॥
रामलवणम् । न० रोमके । सांभर० इ० भा० ॥
रामवल्लभम् । न० त्वचे ॥ त्रि० रामप्रिये ॥
रामबाण : । पुं० औषधविशेषे ॥ यथा । पारदामृतलवङ्गगन्धकभागयुग्ममरिचेनमिश्रितम । तत्रजातिफलमर्द्धभागिकंतिन्तिडीफलरसेनमर्द्दितम् ॥ वह्निमान्द्यदशवक्त्रनाशनोरामबाणइतिविश्रुतोरस ' । सङ्ग्रहग्रहणिकुम्भकर्णकामामवा-

तखरदूषणं जयेत् ।। दीयतेतुशा वकानुमानत सद्यएवजठराग्नि-दीपन । रोचक कफकुलान्तका रक श्वासकासवमिजन्तुनाशन ।। पारदभाग.१ विषभाग १लवङ्गभा ग १ गन्धकभाग . १ मरिचभा गा ८ जातीफलभागौ २ रामबा णोरसोऽजीर्णे ॥ रामस्यशरे। राम शरे ॥

रामवीणा । स्त्री० वीणाप्रभेदे ॥

रामशर: । पु० शरतृणभेदे । राम काण्डे ॥

रामशीतला । स्त्री० आरामशीतला याम् ॥

रामसख । पुं० सुग्रीवे ॥ रामस्यस खा । टच् ॥

रामसेनक । पुं० भूनिम्बे ॥ कट् फले ॥

रामह्रद । पुं० तीर्थविशेषे ॥

रामा । स्त्री० उत्कृष्टयोषिति । रमते गीतकलाभिरिति० रमयतिपुरुष मितिवापुरुषरमणकारिण्यामबला याम् ॥ रम० । ज्वलादित्वाण ॥ हिंगुलिन्याम् । कष्टकार्यां म् ॥ स्वल्पकन्यायाम् ॥ आरामशीतला-याम् ॥ अशोके ॥ गोरोचनाया म् ॥ गैरिके ॥ हिंगुले ॥

रामानुज: । पुं० लक्ष्मणे ॥ श्रीकृष्णे ॥ आधुनिकवैष्णवसंप्रदाये ॥ न० तिलकविशेषे ॥ यदूर्द्ध्वपुण्ड्रं तिलक शोभनतन्मनोहरम् । तन्मध्यपीत रेखं चश्रीमद्रामानुजविदु ॥

रामायणम् । न० वाल्मीकीयेमहा काव्ये । कृत् वाकृणावशवत्पन्ने महदाख्याने । रामेणरावणवधका व्ये । कुशलवोपदिष्टचतुर्विंशतिस हस्रश्लोकसङ्ख्याकआदिकाव्ये ।। य था । प्राप्तराज्यस्यरामस्यवाल्मी किर्भगवानृषि । चकारचरितङ्कृ त्स्नं विचित्रपदमर्थवत् ॥ चतुर्विं शत्सहस्राणिश्लोकानामुक्तवानृष-षि: । तथासर्गशतान्पञ्चषट्का ण्डानितथोत्तरम् ॥ तत्रशतकोटिसङ्ख्य कमपि । चरितरघुनाथस्यशतकोटि प्रविस्तरम् । एकैकमक्षरंपुंसामहा पातकनाशनम् ॥ तत्तुसम्पूर्णं ब्रह्म लोकेस्थितमित्यंतिज्ञम् ॥ रामस्यअ यनचरितम् । पूर्वपदादितिणत्वम् ॥

रामालिङ्गनकाम: । पुं० रक्ताम्लाने ॥

रामावल्लोपम: । पुं० चक्रवाके ॥

रामावरज: । पुं० लक्ष्मणे ॥ श्री कृष्णे ॥

रामिल । पुं० रमणे ॥ कामे ॥

राम्भ । पुं० व्रतिनोवंशवेद्दण्डे ॥ र म्भस्यवेणोर्विकार: । पलाशादि भ्योवेत्यण् ॥

रायभाटी । स्त्री० आकोल० कृ० गौ० प्र० । नदीस्रोतोविशेषे ॥

रायस्पोषः। पुं॰ धनपुष्टौ ॥ रायो धनस्यपोष. । अलुक्समासः । छान्दसोविसर्गस्यसकार. ॥

राल.। पुं॰ स्वनामप्रसिद्धे॰ यक्षधूपे ॥ अस्यनामानिगुणाश्चयथा। रालस्तुसालनिर्यासस्तथासर्जरसः स्मृतः। देवधूपोयक्षधूपस्तथासर्वरसश्चसः ॥ रालोहिमोगुरुस्तिक्त. कषायोग्राहकोहरेत्। दोषास्वेदवीसर्पज्वरव्रणविपादिकाः ॥ ग्रहभग्नाग्निदग्धांश्चमूलातीसारनाशनः ॥

रालकार्य्यः। पुं॰ सालवृक्षे ॥

राव। पुं॰ शब्दे। ध्वनौ ॥ रवणम्। रुशब्दे। भावेघञ् ॥

रावणः। पुं॰ लङ्केश्वरे। दशग्रीवे। पौलस्त्ये। पङ्क्तिग्रीवे॥ रावणोलोकरावणइतिन्यायात्॰ रावयति। रु॰। नन्द्यादित्वाल्ल्यु। तदुक्तं सुन्दरकाण्डे। यस्माल्लोकत्रयंचैतद्रावितं भयमागतम्। तस्मात्त्वं रावणोनामनाम्नावीरो भविष्यसीति ॥ यद्वा। विश्रवसोपत्यम्। शिवादिभ्यो॰ विश्रवसोविश्रवणरवणावादेशौनिपातितौ॰अण्च ॥

रावणगङ्गा। स्त्री॰ सिंहलदेशस्थनदीविशेषे। येतुरावणगङ्गायांजायन्ते कुरुविन्दकाः। पद्मरागाघनं राग बिभ्राणा स्फुटार्चिषः ॥

रावणारिः। पुं॰ श्रीरामे ॥ रावणस्यअरिः ॥

रावणिः। पुं॰ रावणस्यज्येष्ठपुत्रे। इन्द्रजिति ॥ अन्याश्चरावणकुमारे ॥ रावणस्यापत्यम्। अतइञ् ॥

राशि। पुं॰ पुञ्जे। उत्करे। कूटे। धान्यादिसमूहे ॥ मेषादिस्वरूपे ज्योतिश्चक्रस्यद्वादशांशे ॥ तत्संस्थानं यथा। विषुवत्क्रान्तिवृत्तैक्यात्पूर्वभागस्थितास्थिरा.। मेषाद्याः राशय. क्रान्तिवृत्तस्थः पूर्वदिक्क्रमात् ॥ तेयथा। मेषोवृषोथमिथुनं कर्कटः सिंहएवच ॥ कन्यातुलावृश्चिकश्च धनुर्मकरएवच ॥ कुम्भोमीनश्चविज्ञेयाराशयोद्वादशैवते ॥ रश्यते॰रशतिवा। रशइतिसौत्रोधातुः स्वनार्थः। बाहुलकादिण्। णिजन्तादचइर्वा ॥ यद्वा। अश्नुते। अशूव्याप्तौ। अशिपणाय्योरुडायलुकौचेति॰ इण्॰ धातोरुडागमश्च ॥ गणिते ॥

राशिचक्रम्। न॰ मेषादिद्वादशराश्याद्युपलक्षिते। भचक्रे। ज्योतिषचक्रे ॥ सप्तविंशतिभैर्ज्योतिश्चक्रं स्तिमितवायुगम्। तदंशोभवेद्राशिर्नवर्क्षचरणाङ्कितः ॥ तद्विवरणं यथा। भचक्रं भ्रुवयोर्बद्धमाक्षिप्तंप्रवहानिलैः। पर्यत्यजस्रं तन्नद्धाग्रहकक्षायथाक्रमम् ॥ उप

रिष्वल्पमहतीकक्षास्वाधः स्थित
श्च । महत्याकक्षयाभागामहान्तो
ऽल्पास्तथाल्पया ॥ कालेनाल्पेनभ
गणं भुङ्क्तेऽल्पभ्रमणाश्रितः । ग्र
हः कालेनमहतामण्डलेमहतिभ्र
मन् ॥ स्वल्पयातुबहून् भुङ्क्ते
भगणान् शीतदीधितिः । महत्या
कक्षयागच्छन् ततः स्वल्पं शनैश्च
रः ॥ मन्दादधः क्रमेणस्युश्चतुर्था
दिवसाधिपाः । वर्षाधिपतयस्तद्व
त्तृतीयाः परिकीर्त्तिताः ॥ ऊ
र्द्ध्वक्रमेणशशिनोमासानामधिपाः
स्मृताः ॥ होरेशाः सूर्यतनयादधो
ऽधः क्रमशस्तथा । भवेद्भकक्षा
तिग्मांशोर्भ्रमणं षष्टिताडितम् ।
सर्वोपरिष्टाद्भ्रमति योजनैस्तैर्भ
मण्डलम् ॥ तत्रकक्षाक्रममाह ।
ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाभि
धीयते । तन्मध्ये भ्रमणं भानामधो
धः क्रमशस्तथा ॥ मन्दामरेज्यभू
पुत्रसूर्यशुक्रेन्दुजेन्दवः । परिभ्रम
न्त्यधोधः स्थाः सिद्धविद्याधराघ
नाः ॥ रविर्मासं निशानाथः सपा
दद्दिवसद्वयम् । पक्षत्रयं भूमिपुत्रो
बुधोऽष्टादशवासरान् ॥ वर्षमेकं सु
राचार्य्यः ऽष्टाविंशद्दिनं भृगुः ।
शनिः सार्द्धद्वयं वर्षं स्वर्भानुः सार्द्ध
वत्सरम् ॥ एवं प्रमाणात्सकलाः
स्वराशिं भुञ्जतेग्रहाः ॥ इतिराशि



भोगः ॥

राशिविभागः । पुं० अश्विन्यादिन
क्षत्रैर्मेषादीनाविभजने ॥ यथा ।
सपादद्वयनक्षत्रैरश्विन्यादिभिरेवच
। राशयः कथितास्तेमेषादिद्वाद
शक्रमात् ॥ तथाहि । अश्विनीभर
णीकृत्तिकापादोमेषः १ । कृत्ति
काशेषपादत्रयरोहिणीमृगशिरोऽर्द्ध
वृषः २ । मृगशिरःशेषार्द्धमार्द्रा
पुनर्वसुपादत्रयमिथुनम् ३ । पुन
र्वसुशेषपादेकपुष्याश्लेषाकर्कटः ४
। मघापूर्वफल्गुन्युत्तरफल्गुनीप्र
थमपादःसिंहः ५ । उत्तरफल्गुनी
शेषपादत्रयहस्ताचित्रार्द्धंकन्या ६
। चित्राशेषार्द्धस्वातीविशाखापाद
त्रयतुला ७ । विशाखाशेषैकपादो
ऽनुराधाज्येष्ठावृश्चिकः ८ । मूलं
पूर्वाषाढोत्तराषाढाप्रथमपादोधनुः
९ । उत्तराषाढाशेषपादत्रयश्रवणा
धनिष्ठार्द्धंमकरः १० । धनि
ष्ठाशेषार्द्धंशतभिषापूर्वभाद्रपाद
त्रयकुम्भः ११ । पूर्वभाद्रशेषपाद
उत्तरभाद्ररेवतीमीनराशि १२ ।
रिति ॥ उक्तञ्च । सप्तविंशतिभै
र्ज्योतिश्चक्रंस्तिमितवायुगम् । तद
ष्टांशोभवेद्राशिर्नवर्क्षचरणाङ्कितकृ
ति ॥

राष्ट्रः । पुं० न० उपवर्त्तने । चक्रे ।
नीवृति । देशे । विषये ॥ उपद्रवे

॥ राजति । राजृ० । ष्ट्रन् । अर्थे
तिष्ठ ' ॥
राष्ट्रनिवासी । त्रि० जानपदे । देश
वासिनि ॥
राष्ट्रिका । स्त्री० कण्टकारिकायाम्
॥ राष्ट्रमस्त्यस्याः । अतइनिठना
वितिठन् ॥
राष्ट्रिय . । पुं० नाट्योक्त्याराजश्याले
॥ राष्ट्रेऽधिकृतः । राष्ट्रावारपारा
द्घखाविति घ । घस्येयादेश . ॥
राष्ट्रीय । पुं० राष्ट्रिये ॥ त्रि० राष्ट्र
सम्बन्धिनि ॥
रास: । पु० कोलाहले ॥ ध्वनौ ॥
भाषाशृङ्खलके ॥ विलासे । गोपानां
गोपीभि सहक्रीडाविशेषे ॥ रास
ते । रासृशब्दे । अच् ॥ गर्ज्जिते ॥
रासगोष्ठी । स्त्री० हल्लीषके ॥ तल्लक्षण
यथा । पृथुसुवृत्त मसृण वितस्तिमा
त्रोन्नतकौविनिखन्यशङ्कुकम् । आ
क्रम्यपद्भ्यामितरेतरन्तुहस्तैर्भ्रमो
यखलुरासगोष्ठीतिहरिवंशटीकायां
नीलकण्ठ: ॥
रासन: । पुं० रसे ॥ रसनया गृह्यते
। ग्रहणद्युत्यण् ॥
रासभ: । पुं० गर्द्दभे । रासते ।
रासृ० । रासिवल्लिभ्याञ्च श्यभच् ॥
रासभवन्दिनी । स्त्री० मल्लिकायाम ॥
रासभी । स्त्री० गर्दभ्याम् । गधी० इ०
भा० ॥ जातिलक्षणोङीष् ॥



रासमण्डलम् । न० श्रीकृष्णस्यरासक्री
डास्थले ॥
रासेरस . । पुं० रासगोष्ठ्याम् ॥ रा
से ॥ शृङ्गारे ॥ रससिद्धौ ॥ रसा-
वासे ॥ षष्ठीजागरके ॥ उत्सवे ॥
परिहासे ॥
रासेश्वरी । स्त्री० राधायाम् ॥
रास्ना । स्त्री० स्वनामख्यातलताविशे
षे । नाकुल्याम । सुरसायाम् ।
भुजङ्गाक्ष्याम् । रायसन० जेत० इ०
भा० प्र० ॥ रास्नातुत्रिविधाप्रोक्तामू
लपत्र दण तथा । ज्ञेयौमूलदलौ-
श्रेष्ठौतृणारास्नातुमध्यमा ॥ इ०
रा० नि० ॥ अपिच । नाकुलीतुव-
रातिक्ताकटुकोष्णाविनाशयेत् ।
भोगिलूताब्रश्चिकाखुविषज्वरकृमि
व्रणान् ॥ इ०भा०प्र० ॥ रास्नाश्वा
सामवातघ्नोतिराजवल्लभ . ॥ एला
वती० इ०दे०भा०प्र० औषधिविशे-
षे । एलापर्ण्याम् । सुवहायाम् ।
युक्तरसायाम् । कांटाआमरूली०
इ०गौ०दे०भा०प्र० ॥ अस्यागुणाय
था । रास्नामपाचनीतिक्तागुरूष्णाक
फवातजित् । शोथश्वाससमीरा-
स्रवातशूलोदरापहा ॥ कासज्वर-
विषाशीतिवातिकामयहिध्महृत् ॥
राति० रायतेवा । रासते० रसतेवा
। रादाने । रसआस्वादने० रास
शब्देवा । रास्नासास्नेतिसाधु: ॥

राहुः । पुं० तमोग्रहे । स्वर्भानौ । सैंहिकेये ॥ रहति० गृहीत्वात्यजति चन्द्रार्कौ । रहत्यागे । बाहुलका-दुण् ॥

राहुगृहम् । न० कन्याराशौ ॥ राहो गृहम् ॥

राहुग्रहः । पुं० )

राहुग्रासः । पुं० ) उपरागेचन्द्रसूर्ययोर्ग्रहणे ॥

राहुच्छत्रम् । न० आर्द्रके ॥

राहुदर्शनम् । न० राहोश्चाक्षुषज्ञाने । ग्रहणे ॥

राहुभेदी । पुं० विष्णौ ॥

राहुमूर्धभित् । पुं० केशवे ॥

राहुरत्नम् । न० गोमेदके ॥

राहुलसूः । पुं० बुद्धे । सुगते ॥

राहुस्पर्शः पुं० उपरागे ॥

राहुहा । पुं० विष्णौ ॥

राहूच्छिष्टः । पुं० )

राहूत्सृष्टः । पुं० ) लशुने ॥

रिक्तः । त्रि० शून्ये ॥ यथा । रिक्तहस्तोननोपेयाद्राजानंदेवतांगुरुमिति ॥ निर्धने ॥ न० वने ॥ रिच्यतेस्म । रिचवियोजनसम्पर्चनयोः । क्तः ।

रिक्तकम् । त्रि० शून्ये ॥ स्वार्थे कन् ॥

रिक्ता । स्त्री० चतुर्थीनवमीचतुर्दशीषु तिथिषु ॥

रिक्थम् । न० धनमात्रे । वसुनि ॥ रिच्यते । रिचिर्विरेचने । पातृतुदिवचिरिचीतिथक् ॥

रिक्थहारी । त्रि० दायादे ॥

रिक्थादः । पु० पुत्रे ॥

रिक्थी । त्रि० धनहारिणि ॥

रिखा । स्त्री० लिखायाम् । कौश० कृ० भा० इतिहेमचन्द्रः ॥ लख्यते । लखआलोचने । घञ् । पृषोदरादिः ॥

रिङ्खणम् । न० स्खलने ॥ धर्मादिस्खलने ॥ बालानांहस्तपादाभ्यांचलने । रिखिगतौ । भावेल्युट् ॥

रिङ्गणम् । न० स्खलने ॥ धर्मादिस्खलने ॥ बालानांहस्तपादाभ्यांचलने । रौगणा० कृ० भा० प्र० ॥ औचित्यात्पिच्छिलादेःस्खलनरिङ्गणं क्वचित् ॥ रिगिगतौ । भावेल्युट् ॥

रिङ्गन् । त्रि० जानुभ्यांगच्छति ॥ गच्छति ॥

रिधमः । पुं० कामे ॥ वसन्ते ॥

रिपुः । पुं० शत्रौ । अहितकारिणि ॥ आभ्यन्तरारिपवोयथा । कामक्रोधौलोभमोहौमदोमात्सर्यमेव च । आभ्यन्तराङ्कमेणोक्तारिपवस्तत्त्ववेदिभिः ॥ अनित्याः शत्रवोबाह्याविप्रकृष्टाश्चतेयतः । अतःसोऽभ्यन्तरान्नित्यान्षट्पूर्वंमजयद्रिपून् ॥ अनिष्टंरपति । रपव्य

क्षायावाचि । रपेरिश्चोपधायाइति कु ॥ लग्नात्षष्ठभवने ॥ चोरक नामगन्धद्रव्ये ॥
रिपुघातिनी । स्त्री० लताविशेषे । कुचिक्कायाम् । कुचुइ० गौ० दे० भा० प्र० ॥ शत्रुनाशकारिण्याम् ॥
रिपुद : । पुं० दक्षिणोत्तरद्वारगृहे ॥
रिपुभम् । न० षष्ठराशौ ॥
रिप्फम् । न० व्ययभवने ॥
रिप्र : । त्रि० अधमे । कुत्सिते ॥ रीयते । रीङ्स्रवणे । लीरीङोर्ह्रस्व . पुट्चतरौस्लेषणकुत्सनयोरि तिरप्रत्ययोधातोर्ह्रस्व : प्रत्ययस्यपु ट्च ॥
रिभेद् । पुं० अरिभेदे ॥
रिरंसा । स्त्री० रन्तुमिच्छायाम् ॥ रमे : सन् ॥ अप्रत्ययात् । टाप् ॥
रिरंसु : । त्रि० रन्तुमिच्छौ ॥ रमे : सन्नन्तादुप्रत्यय : ॥
रिरक्षा । स्त्री० रक्षितुमिच्छायाम् ॥
रिरक्षिषु : । त्रि० रक्षितुमिच्छौ ॥
रिरी । स्त्री० पित्तलि ॥
रिश्य : । पुं० मृगे ॥
रिष्ट । पुं० खड्गे ॥ फेनिले । रीठा० इ० भा० ॥ न० एनसि । पापे ॥ क्षेमे । कुशले ॥ अशुभे । अकल्याणे ॥ अभावे । नाशे ॥ क्षेमाशुभाभावेषु ॥ रेषणम् ० रिष्यतेस्मै तिवा । रिषहिंसायाम् । क्त ॥
रिष्टक । पुं० फेनिले । रीठा० इ० भा० ॥
रिष्टि: । पुं० खड्गे । असौ ॥ स्त्री० शुभे ॥ रेषति । रिष० क्तिन् ॥
रिष्फम् : । न० व्ययभवने ॥
रिष्य . । पुं० मृगप्रभेदे ॥ रिष्यती । रिष० । अघन्यादित्वात्साधु : ॥
रिष्व : । त्रि० हिंस्रे ॥ न० शस्त्रे ॥ रिष्यतेऽनेन । रिष० । सर्वनिघृष्व रिष्वेतिसाधु : ॥
री । स्त्री० गतौ ॥
रीठा । स्त्री० रीठाकरञ्जे ॥
रीठाकरञ्ज । पुं० स्वनामख्याततरौ । गुच्छके । गुच्छपुष्पके । गुच्छफले । फेनिले ॥
रीठक : । पुं० पृष्ठवंशे ॥
रीढा । स्त्री० अवमाननायाम् । अव ज्ञायाम् ॥ रेहणम् । रिहवधे । औणादिक : क्त : । स्त्रीत्व लोका त् ॥
रीण . । त्रि० स्रुतजलादौ । क्षरिते । स्रुते ॥ रीयतेस्म । रीङ्स्रवणे । क्त । स्वादयओदित : । ओदित श्चे तिनत्वम् ॥ णत्वे ॥
रीति । स्त्री० स्यन्दे । गतौ ॥ प्रचारे ॥ लोहकिट्टे ॥ दग्धस्वर्णादिम ले ॥ सीमनि ॥ स्रवणे ॥ स्वभा वे । रूपे । लक्षणे । भावे । आत्म

नि । प्रकृतौ । सहजे ॥ पित्तले ॥ पित्तलन्त्वारकूटं स्यादारीरीतिश्च कथ्यते । राजरीतिर्ब्रह्मरीति कपिलापिङ्गलापिच ॥ रीतिरप्युपधातुः स्यात्ताम्रस्य यसदस्य च । पित्तलस्य गुणा ज्ञेयाः स्वयोनिसदृशा जनैः स योगजप्रभावेण तस्यान्येपि गुणाः स्मृताः रीतिकायुगल रूक्ष तिक्तं च लवणं रसे ॥ शोधनं पाण्डुरोगघ्नं कृमिघ्नं नातिलेखनम् । कांस्यशब्दे स्वेदितव्य । शोधनेमारणे विधिः ॥ वैदर्भ्यादौ ॥ रीतिरात्मा काव्यस्य । विशिष्टा पदरचना रीतिरितिच वामनसूत्रे । गुणभेदेनतद्विभागमाह । ओज । प्रसाद माधुर्य्यं गुणत्रितयभेदत । गौड वैदर्भ्यं पाञ्चालीरीतयः परिकीर्त्तिताः प्रत्येकमेषां लक्षणानि यथा । ओजः समासभूयस्त्वं मांसलं पदडम्बरम् । व्यक्तार्थं पदमग्राम्यं प्रसाद । परिकीर्त्तित । शब्दार्थयोस्तु रसवन्मधुर परिकीर्त्तितम् । सर्वलोकावगम्य यद्ग्राम्यं तदभिधीयते ॥ सुश्राव्यमपि गम्भीरं प्रसन्नमुपनागरम् । ग्राम्यं यथा । कान्ते मन्येऽप्यसौधन्यो यस्त्वामद्य विवाहयेत् । नाल्पेन तपसा लभ्या सुन्दरस्त्रीसमागमः ॥ उपनागर यथा । तन्वित्वदधरं मृदुनाविदं नविदो जना ' वसुधायां सुधाभावान्मृषा स्वर्गं यियासव ॥ शब्दालङ्कार तत्स्याद्यदनुप्रासभासुरम् । वर्णावृत्तिरनुप्रासः पादेपादेविधीयते पदावृत्तिस्तु यमकमादिमध्यान्तसर्वगम् । क्रमेणरीतित्रयाणामुदाहरणानि । गङ्गोत्तुङ्गतरङ्गसङ्गतजटाजूटाग्रजाग्रत्फणिस्फूर्जत्फूत्कृतिभीतिसम्भृतिचमत्कारस्फुरत्सम्भ्रमा । आनन्दामृतवापिकां विदधतीचित्ते गिरीशप्रभोस्त्वां पायान्नवसङ्गमेभगवतीलज्जावतीपार्वती ॥ भवतोविरहव्याधिमधिगम्य ससम्भ्रमा । कामिनीयामिनीकान्तकृतान्तमिव पश्यति ॥ हन्तालि सन्तापनिवृत्तयेऽस्याः । किन्तालवृन्तं तरलीकरोषि । उत्तापशान्तिरतोपहेतुर्नतन्वीनव्यजनापमेयः ॥ इति काव्यचन्द्रिका ॥ अपिच । वैदर्भीसाथपाञ्चालीगौडीयावन्तिकातथा । लाटीयामागधीचेतिषोढारीतिर्निगद्यते ॥ रीयते । रीणाति वा । रयणं वा । रीस्रवणे । रीगतिरेषणयो । क्तिन् । क्तिन्वा ॥

रितिकम् । न० पुष्पाञ्जने ॥

रीतिका । स्त्री० कुसुमाञ्जनेपित्तले ॥

रीतिपुष्पम् । न० कुसुमाञ्जनेरीतिकायांध्मायमानायांजातिमले ॥ रीतेः पित्तलस्य पुष्पमिव० तम्मल-

स्वात् ॥

रोतिहेतुः । पुं० रङ्गे । वङ्गे ॥ रीतेर्हेतु ॥

रु: । पुं० शब्दे ॥

रुक: । त्रि० बहुप्रभेदे ॥

रुक्प्रतिक्रिया । स्त्री० रोगनिवारणे । चिकित्सायाम् ॥ रुज प्रतिक्रियानिरसनम् ॥

रुक्मम् । न० काञ्चने ॥ धूस्तूरे ॥ लौहे ॥ नागकेशरे ॥ रोचते । रुच दीप्तौ । युजिरुजितिजाकुत्वेति मक् ॥

रुक्मकार: । पुं० स्वर्णकारे ॥ रुक्म करोति । कृञ्० । कर्मण्यण् ॥

रुक्मकारक: । पुं० स्वर्णकारे ॥ रुक्मकारएव । स्वार्थेक: ॥

रुक्मवती । स्त्री० पङ्क्तिच्छन्द: १० प्रभेदे ॥ तल्लक्षणं यथा । रुक्मवती सायत्रभमसगौ ॥ यथा । कायमनोवाक्यै:परिशुद्धैर्यस्यसदाकसहिषिभक्ति: । राज्यपदेहर्म्यालिरुदारा रुक्मवतीविघ्न: खलुतस्य ॥ इयमेव० चम्पकमाला० रूपवतीचबोध्या ॥ त्रि० स्वर्णवति ॥

रुक्मवेदी । स्त्री० काञ्चनवेदिकायाम् ॥ रुक्महिरण्य तन्मयाभिरिष्टकाभिश्चितावेदी० रुक्मवेदी ॥

रुक्माङ्गद: । पं० परमभागवतेनृप तितिशेषे ॥

रुक्मिणी । स्त्री० कृष्णस्यप्रधानमहिष्याम् । लक्ष्म्याम् । हरिप्रियायाम ॥

रुक्मिणीव्रतम् । न० व्रतविशेषे ॥

रुक्मिदर्प्प: । पु० )

रुक्मिदारी । पु० ) बलरामे । बलभद्रे ॥

रुक्मी । पु० भीष्मकात्मजे । रुक्मिणीभ्रातरि ॥

रुक्मिभित् । पु० बलदेवे ॥

रुक्ष: । त्रि० अप्रेम्णि । परुषे ॥ अचिक्कणे । अस्निग्धे ॥ रूक्ष० इत्युभयोर्भाषा ॥ रुक्षयति । रुक्षपारुष्ये । पचाद्यच् ॥ यद्वा । रुहेरीणादिक: स: ॥

रुग्ण: । त्रि० रोगादिनाकुटिलीकृतेभुग्ने । वक्रे ॥ रुज्यतेस्म । रुजो भङ्गे । क्त: । ओदितश्चेतिनत्वम् ॥ रोगिणि

रुक्(ग्) । स्त्री० शोभायाम् ॥ तेजसि ॥ द्युतौ ॥ इच्छायाम् ॥ रोचते । रुचदीप्तौ । क्विप् । शारिकाशुकवाचि ॥

रुच: । त्रि० शोभमाने ॥ रुचेरिगुपधेतिक: ॥

रुचक: । पुं० बीजपूरे ॥ निष्के ॥ दन्ते ॥ कपोते ॥ एरण्डे ॥ न० सर्जिकाक्षारे ॥ अश्वस्याभरणे ॥ माल्ये ॥ सौवर्चले ॥ यथा । र-

चकरोचनमग्निदीपनपाचनपरम्। सक्षारवातनुन्नातिपित्तलविशदल-घु॥ उद्गारशुद्धिदंसूक्ष्मंविबन्धानाहशूलहृत्॥ माङ्गल्यद्रव्ये॥ उत्कटे॥ रोचनायाम्॥ विडङ्गे॥ लवणे॥ पुं॰ न॰ राजवेश्मविशेषे॥ वनान्तरे॰। रोचतेऽनेन। रुचदीप्तावभिप्रीतौच। अन्तर्भावितण्यर्थं। क्रुन् शिल्पिसंज्ञयोरिति क्रुन्॥

रुचा। स्त्री॰ इच्छायाम्। दीप्तौ॥ शोभायाम्॥ शारिकाशुकवाचि॥

रुचि। पुं॰ प्रजापतिविशेषे। आकूतीपतौ रौच्यमनोः पितरि॥

रुचि। स्त्री॰ दीप्तौ॥ शोभायाम्॥ अभिष्वङ्गे। उत्कटानुरागे॥ अभिलाषे॥ रोचते। रुच॰। इगुपधात्किदितीन्॥ बुभुक्षायाम्॥ गोरोचनायाम्॥ आलिङ्गनविशेषे॥ तल्लक्षणंयथा नायिकायानायकस्यसम्मुखेजान्वोरुपर्युपविश्यवक्षसिवक्षोदत्त्वायदवस्थानमितिकामशास्त्र॥

रुचिकर। त्रि॰ रोचने॥

रुचित। त्रि॰ इष्टतमद्रव्ये॥ रुचेः कर्तारक्त॥ यद्वा। रोचते। रुच॰। रुचिवचीतिकितच।

रुचिफलम्। न॰ अमृताङ्के। अमृतफले॥

रुचिरम्। न॰ मूलके॥ कुङ्कुमे। लवङ्गे। त्रि॰ सुन्दरे॥ सौम्ये॥ मिष्टे। रोचते। रुच॰। इषिमदिमुदीतिकिरच्।

रुचिरा। स्त्री॰ गोरोचनायाम्॥ अतिजगतीछन्द १३ प्रभेदे॥ तल्लक्षणादियथा। जभौसजौगितिरुचिराचतुर्ग्रहैः। यथा। पुनातुवोहरिरतिरासविभ्रमी॰परिभ्रमन्वनरुचिराङ्गनान्तरेसमीरणोल्लसितलतान्तरालगीयथामरुत्तरलतमालभूरुहः॥ इतिमाचान्तरेपियथा। समञ्चतुष्फलकलितसकलदलसंशोभितकुण्डलरुचिरा। नकुचपयोधरमिश्रफणिपतिवरभणितमिदव्रतंरुचिरा॥ यथा। कस्यतनुर्मनुजस्यसितासितसङ्गममधिविधितः पतिता। यस्यकृतेकरभोरुविषीदसिमिश्चिरातपनिष्ठतेवलता॥

रुचिराञ्जनः। पुं॰ शोभाञ्जने॥

रुचिराश्वः। पुं॰ नृपतिविशेषे॥ शोभनतुरगे॥ त्रि॰ तद्वति॥

रुचिष्यः। त्रि॰ इष्टवस्तुनि॥ रोचते॰ रुच्यसेवो। रुच॰। रुचिभुजिभ्याकिष्यन्॥ अभिप्रेते॥

रुची। स्त्री॰ दीप्तौ॥ रुक्रुचीरुचयः समाइत्येकार्थसङ्ग्रहः। कृदिकारादितिङीष्॥

रुच्यः। पुं॰ कतकवृक्षे॥ शालिधा

न्य ॥ पथ्यौ॥न॰सौवर्चले॥त्रि॰ मनोज्ञे । सुन्दरे ॥ रोचते॰ रुच्यते वा । रुच॰ । राजसूयेतिसाधु ॥
रुच्यकन्द । पु॰ सूरणे ॥
रुग् । स्त्री॰ रोगे ॥ रुजतिदेहम् । रु-जोभङ्गे । क्विप् ॥ रोजनवा.सम्प दादिक्विप् ॥ कुष्ठौषधौ ॥
रुजा । स्त्री॰ रोगे ॥ भङ्गे ॥ रुजति । रुजो॰ । भिदादिपाठात्॰रुजार्था-नामितिनिर्देशाद्वाऽङ्टाप् ॥ द्रु गुश्वेतिकोश ॥ कुष्ठे ॥ मेष्याम्॥
रुजाकर । पु॰ व्याधौ । न॰कर्मर ङ्गफले ॥ त्रि॰पीडाकारिणि ॥
रुजासह । पुं॰ धन्वनद्रुमे ॥
रुणत्कारा । स्त्री॰ सुव्रतायाम् । सुख-सन्दोह्यायागवि ॥
रुण्ड । पुं॰ कबन्धे ॥
रुण्डिका । स्त्री॰ द्वारपिण्ड्याम् । देह ल्याम् ॥ दूतिकायाम् ॥ रणभूमौ ।
रुतम् । न॰ वाशिते । तिरश्चांशब्दे । कूजिते ॥
रुदथ. पु॰ कुक्कुटे ॥ शुनि ॥ शि शौ ॥ रोदिति । रुदिर्अश्रुविमोच ने । रुदिविदिभ्याङिदित्यथ॑ ॥
रुदन्तिका । ) स्त्री॰
रुदन्ती । ) स्त्री॰ क्षुद्रक्षुपविशेषे । स्रवत्तोयायाम् । सञ्जीवन्याम् । रो माञ्चिकायाम् । चणपत्र्याम् ॥ अ स्या स्वरूपयथा । चणपत्रसमप

त्र क्षुपस्रवत्तयाकृति । शिशिरेज लबिन्दूनास्रवन्तीतिरुदन्तिका ॥ रु दन्तीवह्निकृत्तक्ष्यापित्तघ्नीचरसाय-नी ॥
रुदितम् । न॰ क्रन्दिते । क्रुष्टे ॥ रु-दिर्॰ । भावेक्त ॥ त्रि॰तद्वति ॥
रुद्ध: । त्रि॰ नद्योप्राकारादिनाकृतवे ष्टने । वेष्टिते । वलयिते । संवी-ते । आवृते ॥ रुध्यतेस्म । रुधिर्-आवरणे । क्त. ॥
रुद्र । पु॰ गणदेवताविशेषे ॥ एका-दशरुद्रेषु ॥ तेषांनामानियथा । अजैकपादहिर्बुध्नोविरूपाक्षोथरैव-त । हरश्चबहुरूपश्चत्र्यम्बकश्चसुरे-श्वर ॥ सावित्रश्चजयन्तश्चपिनाकी चापराजित. । एतेरुद्रा:समा ख्याताएकादशगणेश्वरा. । एते षामानसानान्तु त्रिशूलवरधारिणा म् । कोटयश्चतुरशीतिस्तत्पुत्रा श्चाक्षमामता ॥ दिक्षुसर्वासुये रक्षांप्रकुर्वन्तिगणेश्वरा. पुत्रपौत्र सुतास्त्वेतेसुरभीगर्भसम्भवा. ॥ द्युतिमाल्ये ५ ध्याय ॥ शिवे । शम्भौ । ईशे ॥ रोदयत्यसुरान् । स द्वारकालेप्रजा. स हरन्रोदय तिवा । रुदिर्॰ । रोदेर्णिलुक्च तिरक्प्रत्ययलुक् ॥ सर्वंगतरुजाद्रा वणात्॰ रोदनहननाद्वारुद्र: । त थाचस्कान्दे । रुज. सर्वंगता

यस्माद्रुद्रास्त्रयामिजगल्लक्ष्म् । गीटन हन्मियस्माच्चरुद्रस्तस्माद्रुद्र प्रिये ॥ यद्वा । रुत वेदात्मकशब्द कल्पादौ ब्रह्मणे राति॰ददाति । गादाने । आतोनुपसर्गेक ॥ यद्वा । रुता नादेनमकान जगदिद द्रावयतिरञ्ज यतीति॰नादात्मकत्वाद्रुद्र ॥ यद्वा । रुतानादेन॰प्रणवरूपेण॰वेदरूपेण वा॰ दापयति॰॰ इष्टमर्थमितिरु द्र 'यद्वा । रुत संसारदुःखतद्धेतु-वाद्रावयतीतिरुद्र तदुक्तरुतदु ' खस्तद्धेतु विद्रावयतिय प्रभु । रुद्रइत्युच्यतेतस्माच्छिव ' परम कारणमिति ॥ विष्णुरुद्रयोरभेदो यथाकौर्मे । सर्वेवदेशोभगवान्म हादेवोनसंशय । मन्यन्तेयेजग द्योनिं विभिन्न विष्णुमीश्वरात् ॥ मोहादवेदनिष्ठाद्वा तेयान्तिनरक नरा. वेदानुवर्त्तिन रुद्र देव ना रायण तथा । एकीभावेनपश्यन्ति मुक्तिभाजोभवन्तिते ॥ श्रीमद्भागवते देव्याहौरुद्रौपरिकीर्त्तितौ । यथा । इच्छयाब्रह्मणोवत्स्ना दूरदानार्थ सुद्र भौ । मूलरुद्रस्यांशभूतोरुद्रनामा द्वितीयकइति ॥ आदित्यपत्रवृक्षे ॥ एकादशाङ्के ॥ न॰ रौद्ररसे ॥

रुद्रकोटी । स्त्री॰ तीर्थविशेषे ॥

रुद्रगण ' । पुं॰ शिवपार्षदसमूहे ॥

रुद्रचण्डी । स्त्री॰ रुद्रयामलोक्तदेवी माहात्म्ये ॥

रुद्रज । पु॰ पारदे ॥

रुद्रजटा । स्त्री॰ लताविशेषे । रौद्र्याम् । सौम्यायाम् । सुगन्धायाम् । सुपत्रा याम् । सुगन्धपत्रायाम् । पत्रवल्ल्याम् जटावल्ल्याम् ॥ अस्यागुणा । कटुरसत्वम्॰ श्वासकासहृद्रोगभूत रक्षोनाशित्वञ्चेति ॥

रुद्रपत्नी । स्त्री॰ चण्ड्याम् । दुर्गा याम् ॥ अतस्याम् ॥

रुद्रप्रिया । स्त्री॰ हरीतक्याम् ॥ रुद्रा ण्याम् ॥

रुद्रवीणा । स्त्री॰ सङ्गीतनारायणो क्ते वीणाविशेषे । रुद्र्याम् ॥

रुद्रसर्ग । पुं॰ रुद्रकर्तृकभूतवेता लादिसृष्टौ ॥

रुद्रसावर्णि . । पुं॰ द्वादशेमनौ ॥

रुद्रसू । स्त्री॰ एकादशपुत्रप्रसूम् ॥

रुद्राक्रीड ' । पुं॰ श्मशाने ॥

रुद्राक्ष. । पुं॰ स्वनाम्नाप्रसिद्धे वृक्षे । तृणमेरौ । अमरे । पुष्पचामरे ॥ अक्षफले । शिवाक्षे । सर्पाक्षे । भूतनाशने ॥ विनाभस्मत्रिपुण्ड्रेण-विनारुद्राक्षमालया । पूजितोपि महादेवोनस्यात्तस्यफलप्रदः ॥ बिनामन्त्रेणयोधत्ते रुद्राक्ष भुविमान व । सयातिनरकान् घोरान् या वदिन्द्राश्चतुर्दशेतिपद्मपुराणम् ॥ रुद्राक्षान्कण्ठदेशेदशन ३२ परि

मितान्० मस्तकेविंशतिहे ४० प ट् ६ षट् ६ कर्णप्रदेशे० कण्ठ गलकृतेद्वादशे १२ द्वादशे १२ व । बाहोरिन्दो' कलाभि १६ र्न यनयुगकृतेत्वेक १ मेक १ शिखा याम्० वक्षस्यष्टाधिक य . कलय तिशतक १०८ सस्वयंनीलकण्ठ' इतिदेवीभागवतम् ॥ मन्त्रेणेति द्विजेतरविषयम् । सर्वाश्रमाणांव र्णानांरुद्राक्षस्यधारणम् । कर्त्त व्य मन्त्रत . प्रोक्त द्विजानानान्यव- र्णिनामितिनारायणवचनात् ॥

रुद्राणी । स्त्री० शिवायाम् । भवा न्याम् । सर्वमङ्गलायाम् । रुद्रस्य स्त्री० इन्द्रवरुणभवसर्वरुद्रमृडहि- मारण्ययवयवनमातुलाचार्याणामा नुगिति० ङीषानुकौ ।

रुद्रावर्त्तः । पुं० तीर्थविशेषे ॥ अद्रि कूटस्थानस्थायापरमेश्वर्याम् । रु द्रजटायाम् ॥

रुद्रास्पदम् । न० तीर्थविशेषे ॥

रुद्री । स्त्री० रुद्रवीणायां ॥

रुधिरः । पुं० अङ्गारके । कुजे । भौ मे । मङ्गलग्रहे ॥ न०कुङ्कुमे ॥ श- रीरस्थरसभवधातौ । रक्ते । अ- स्रे । त्वग्जे । शोणिते । असृजि । लोहि०ह०भा० ॥ रुधाहि०रुध्यते वा । रुधिर् ० । इषिमदिमुदीति- किरच् ॥

रुधिराख्यम् । न० मणिप्रभेदे । यथो क्त गरुडपुराणे । हुतभुग्रूपमादा यदानवस्ययथेप्सितम् । नर्मदाया- निचिक्षेपकिञ्चिद्दीनादिभूतले ॥ तत्रेन्द्रगोपकलितशुकवक्त्रवर्णं स- स्थानत . प्रकटपीलुसमानमात्र- म् । नानाप्रकारविहितरुधिराख्य- रत्नमुत्पद्यतत्खलुसर्वसमानमेव ॥ मध्येन्दुपाण्डरमतीवविशुद्धवर्णं त च्चेन्द्रनीलसदृश पटलतुलिस्यात् । सैश्वर्यभृत्यजननकथितदेवपक्वम् ततकिलभवेत्सुरवज्रवर्णम् । इति गारुडे ॥ ७८ ॥ अध्याय ॥

रुधिरोद्गारी । पुं० षष्टिसंवत्सराणा मध्येवत्सरविशेषे ॥ तत्फलंयथा । महिषीगोहिरण्यादितास्रकांस्याद्या शेषत . । तत्सर्वंदेविविक्रीयकर्त्त व्योधान्यसञ्चय ॥ रक्तेसंवत्सरेदे विक्रूरबुद्धिर्नराधिपः । मानवा' क्रूर चेष्टाश्चखड्गमेनजयोभवेत् ॥ ५८॥

रुमण्वान् । पुं० लवणाचले ॥ लव- णमस्त्यस्मिन् । मतुप् । आसन्दी- वदिति०लवणस्यरुमण्भाव ॥ ल वणाकरवाचकरुमनृशब्दस्यैतन्निपा तननलोपाभावार्थंसत्त्वार्थंञ्च्यपि ष्टतम् ॥

रुमा । पुं० लवणाकरे ॥

रुमा । स्त्री० सुग्रीवदारेषु ॥ विशिष्टल वणाकरे ॥

रुम । पु० रमणे ॥ अरुणे ॥ रम्यतेऽस्मिन् । रमक्रीडायाम् । चकि रम्योरचोपधायाइतिरक् ॥

रुरु । पुं० मृगविशेषे । हरिणजात्यन्तरे । भारशृङ्गाख्ये ॥ रुरुर्महान् कृष्णसारइतियादव ॥ व्याघ्रे ॥ यथा । गोगोपीगोपवीतोरुरुनखविलसत्कण्ठभूषश्चिरं वः इति ॥ दैत्यभेदे । रौति । रुशब्दे । जम्बादय इतिसाधु ॥ रुशातिभ्यांक्रुन्वा ॥

रुवु । ) पुं०

रुवुक । ) पु० एरण्डे ॥ इतिरत्नमाला । रक्तैरण्डे ॥ इतिराजनिर्घण्टः ॥

रुशन् । त्रि० निन्द्यार्थाविवाचि ॥ रुशति । रुशहिंसायाम्ताच्छील्यान्नत्तौदादिकस्तस्माच्छतृप्रत्यय । रुशन्शब्द । रुशतीहिस्वा । रुशद्वचनम् ॥

रुशती । स्त्री० निन्द्यार्थाविवाचि ॥ शत्रन्तान्ङीप् । आच्छीनद्योरितिनुम् विकल्पान्नुमभाव । स्त्रियावाकुल्यौ नास्यदर्शनम् ॥

रुट् । स्त्री० क्रोधे० ॥ रुषहिंसायाम् । सम्पदादित्वात्क्विप् ॥

रुषा । स्त्री० अमर्षे । कोपे । मन्यौ । क्रोधे ॥ क्विबन्ताद्गुरिमतेनटाप् ॥

रुषित । त्रि० रुष्टे । क्रोधयुक्ते ॥ रुष्यतेस्म । रुषरोषे । क्त । रुष्यम्त्वरेतिपक्षे ०इड्विकल्प ।

रुष्ट । त्रि० रुषिते ॥ शिवेरुष्टे गुरुस्त्राता गुरौरुष्टे नकश्चन । रुष्यतेस्म । रुष० । क्त । रुष्यमत्वरसङ्घुषास्वनामितिपक्षेइडभाव ॥

रुह । त्रि० जाते ॥ आरूढे ॥ रुहे कासरिका ॥

रुहकम् । न० छिद्रे ॥

रुहा । स्त्री० दूर्वायाम् ॥ छिन्नापिरोहति । हबीजजन्मनिप्रादुर्भावे इगुपधज्ञाप्रीकिर क । टाप् ॥ महासमङ्गायाम् ॥

रुहिरुहिका । स्त्री० उत्कण्ठायाम् ॥ इतिपुराणम् ॥

रूक्षा । पुं० वृक्षे ॥ रोहति । रुह० । श्रीङ्कृपिरुह्यादिना०क्सिप् ॥

रूक्ष: । पु० वृक्षे ॥ वरकाष्ठे ॥ त्रि० अप्रेमणि । परुषे ॥ अचिक्कणे । अस्निग्धे । रूक्षा०इतिभाषायाम् ॥ रूक्षयति । रूक्षपारुष्ये । पचाद्यच् ॥

रूक्षगन्धक । पुं० गुग्गुलौ ॥

रूक्षणात्मिका । स्त्री० लक्ष्मधान्ये ॥

रूक्षदर्भ । पुं० हरिदर्भे ॥

रूक्षपत्र : । पुं० शाखोटवृक्षे ॥

रूक्षप्रिय : । पु० ऋषभौषधे ॥

रूक्षस्वादुफल । पु० धन्वनवृक्षे ॥

रूक्षा । स्त्री० दन्तीवृक्षे ॥ क्रूरायाम् ॥ अस्निग्धायाम् ॥

रूढ : । पुं॰ प्रकृतिप्रत्ययार्थमनपेक्ष्यशाब्दबोधजनकेशब्दे ॥ यथा। मुख्योलाक्षणिकोगौण : शब्द . स्यादौपचारिक : । यौगिकोयोगरूढो वारूढोवामुख्यएवस : ॥ इतिशाब्दिका ॥ अपिच । रूढमालक्षयति॰विभजतेच । रूढ सङ्केतवन्नाम सैवसंज्ञेतिकीर्त्यते।नैमित्तिकीपारिभाषिक्यौपाधिक्यपितद्भिदा ॥ यन्नामयादृशार्थेसङ्केतितमेव॰नतुयौगिकमपि॰तद्रूढम् । योगरूढन्तुपङ्कजादिकंनतथा।रूढानामेवचसञ्ज्ञापदेनाभिलप्यते । नतुरूढादिवत्सञ्ज्ञानामोऽवान्तरभेद॰ । येनविभागव्याघात॰ स्यात् । सञ्ज्ञायाश्चत्रयोभेदा नैमित्तिकीपारिभाषिकी॰औपाधिकीचेति । पाचकपाठकादयस्तुनसंज्ञा : सङ्केतशून्यत्वात् ॥ येतुरूढस्यनाम्नश्चतुर्विधत्वमाहुस्तन्मतमुपन्यस्यति । जातिद्रव्यगुणस्पन्दैर्धर्मैः सङ्केतवत्तया । जातिशब्दादिभेदेनचातुर्विध्यंपरेजगु : ॥ गोगवयादीनांगोत्वादिजात्या । पद्मनाभादीनांलाङ्गूलधनादिद्रव्येण । धन्यपिशुनादीनापुण्यद्वेषादिगुणेन । चलचपलादीनाञ्चशब्दानाकर्म्मणाऽवच्छिन्नशक्तिमत्त्वाच्चातुर्विध्यमेवरूढानामिति।यदुक्तं दण्डाचार्यैः : । शब्दैरेवप्रतीयन्ते जाति-



द्रव्यगुणक्रिया : । चातुर्विध्यादमीषान्तुशब्दउक्तश्चतुर्विधइति ॥ तदेतज्जडमूर्खादीनामन्यशून्यादीनाञ्चशब्दानामपरिग्रहापत्त्यापरित्यक्तमस्माभि . ॥ नैमित्तिकसञ्ज्ञांलक्षयति। जात्यवच्छिन्नसङ्केतवती नैमित्तिकीमता । जातिमात्रेहिसङ्केताद्व्यक्तेर्भानसुदुष्करम ॥ यन्नामजात्यवच्छिन्नसङ्केतवत्सानैमित्तिकीसञ्ज्ञा । यथागौचैत्रादि॰। सहिगोत्वचैत्रादिजात्यवच्छिन्नमेवगवादिकमभिधत्ते नतुगोत्वादिजातिमात्रम् । गोपदगोत्वेसङ्केतितमित्याकारकग्रहाद्गामानयेत्यादौ गोत्वादिनागवादेरन्वयानुपपत्तेः : एकशक्त्यग्रहस्यान्यानुभावकत्वेऽतिप्रसङ्गात् ॥ पारिभाषिकीमौपाधिकीञ्चसंज्ञांक्रमेणलक्षयति। उभयावृत्तिधर्मेणसञ्ज्ञास्यात्पारिभाषिकी । औपाधिकीत्वनुगतोपाधिनायाप्रवर्त्तते ॥ उभयावृत्तिधर्मावच्छिन्नसङ्केतवतीसंज्ञापारिभाषिकी । यथाकाशडित्थादि: ॥ याचानुगतोपाध्यवच्छिन्नसङ्केतवतीसञ्ज्ञासात्वौपाधिकी । यथाभूतदूतादि । सहिसचेतनवृत्तविशेषगुणवत्त्वात्संहारकत्वाद्यनुगतोपाधिपुरस्कारेणैवप्रवर्त्तते । इतिशब्दशक्तिप्रकाशिकायां॰जाते ॥ प्रसिद्धे ॥

रूपम्

रुहेर्गत्यर्थेति क्त । ढत्वधत्वष्टुत्वढ लोपदीर्घ ॥

रूढपद । चि० बद्धमूले ॥

रूढिः । स्त्री० शिष्टप्रयोगे ॥ प्रसिद्धौ ॥ अनादिव्यवहारसिद्धसम्बन्धवि शेषे ॥ मुख्यशब्दवृत्तिभेदे ॥ सा चस्वरूपेणजात्यागुणेन वानिर्देशा र्हवस्तुनिसंज्ञासङ्केतेनप्रव र्त्तते । यथा । डित्थ, डवित्थः गौः शुक्लइति ॥ रूढशब्दनिष्ठश क्तौ ॥

रूपम् । न० वाच्याकारे । स्वभावे ॥ सौन्दर्ये । मनोहराकृतौ । तल्लक्षणं यथा । अङ्गान्यभूषितान्येव केनचिद्भूषणादिना । येनभूषितव द्भान्तितद्रूपमितिकथ्यते ॥ श्लोके ॥ पशौ ॥ शब्दे ॥ ग्रन्थावृत्तौ नाटकादौ ॥ आकारे ॥ श्लोके ॥ अवकाशरहितपदार्थे नानाविकार विशेषे ॥ रूपन्तुषोडशविधंमोक्ष धर्मेप्रकीर्तितम् । यथा । ह्रस्वम् १ दीर्घम् २ स्थूलम् ३ चतुरस्र म् ४ वृत्तम् ५ शुक्लम् ६ कृष्णम् ७ नीलारुणम् ८ रक्तम् ९ पीतम् १० कठिनम् ११ चिक्कणम् १२ श्लक्ष्णम् १३ पिच्छलम् १४ मृदु १५ दारुणं १६ मिति ॥ चक्षुर्मा त्रग्राह्योगुणे ॥ तच्चशुक्लनीलपीत

रूपकम्

रक्तहरितकपिशचित्रभेदात्सप्तवि धम् । पृथिवीजलतेजोवृत्ति । तत्र पृथिव्यांसप्तविधम् । अभास्वरशु क्लंजले । शुक्लभास्वरंतेजसि ॥ मा त्रामात्रे ०। ॥ त्रि० उत्तरपदस्थि त्याखसदृशे ॥ यथापितृरूप पुत्र मा तृरूपाकन्या ॥ प्रापके ॥ रोपयतिवि मोहयति । रूपविमोहने । अच् ॥ यद्वा । रूप्यतेऽनेन । स्वप्नशिल्पशब्दे तिसाधु ॥ रौतिवा । रुशब्दे । स्वप्नशिल्पेतिपः रौतेर्दीर्घश्च ॥ अतिरूपन्तुनिन्दितम् ॥

रूपकम् । न० नाटके ॥ मूर्त्ते ॥ रूप्ये ॥ काव्यालङ्कारे ॥ तल्लक्षणादि यथा । विषय्यभेदताद्रूप्यरञ्जन वि षयस्ययत् । रूपकं तत्त्रिधाधिक्य न्यूनत्वानुभयोक्तिभिः ॥ अयं हि धूर्जटिः साक्षाद्येनदग्धाः पुरः क्षणात् अयमास्तेविनाशम्भुस्तार्त्ती यीकविलोचनम् ॥ शम्भुर्विश्वमवत्यद्य स्वीकृत्यसमदृष्टिताम् । अस्यामुखेन्दु नालब्धेनेन्दुनानन्दे किमिन्दुना ॥ सा ध्वीयमपरालक्ष्मीरसुधासागरोदिता । अयकलङ्किनश्चन्द्रान्मुखचन्द्रोति रिच्यते ॥ सङ्ख्याविशेषे ॥ यथा । सख्यालीप्रोच्यतेशुद्धासातिसोरू पकंभवेत् । रूपकेदंशभिः प्रोक्ताः कलङ्कोनामनामतः ॥ त्रि० । मू- र्त्तिमति ॥ पुं० । हठादिसप्तसु ॥

तेयथा। हठ 'प्रौढोऽथखचरोविभ
बश्चतुरक्रम:। निशारुक प्रतिता
ल: कथिता :सप्तरूपकोद्भतिदामो
दर: ॥

रूपकभेद । पुं० अभिनेयप्रकारे ॥

रूपतत्त्वम् । न० शीले ॥

रूपधारी । त्रि० सौन्दर्यविशिष्टे ॥

रूपधेयम् । न० रूपे ॥ रूपमेव । भाग
रूपनामभ्योधेय: ॥

रूपनाशन: । पुं० पेचके

रूपवान् । त्रि० आकारविशिष्टे ॥ सौं
दर्ययुक्ते ॥

रूपस्कन्ध: । पुं० विषयप्रपञ्चे । वास
नामयचित्तेननिरूप्यमाणेषुशब्दस्प
र्शादिषु । पञ्चेन्द्रियेषुच ॥ रूप्यन्ते
एभिर्वाविषयाकृतिकर्मकारणव्युत्प
त्तिभ्यांसविषयाणीन्द्रियाणिरूपस्क
न्ध:। रूप्यमाणपृथिव्यादीनांबाह्य
त्वेपिदेहस्थत्वादिन्द्रियसम्बन्धाच्चा
ध्यात्मिकत्वम् ॥

रूपाजीवा । स्त्री० वारस्त्रियाम् । वेश्या
याम् ॥ रूपमाजीवोस्या: ॥

रूपामाली । स्त्री० वर्णवृत्तविशेषे ॥ य
था। चत्वारोयांकर्णाआयन्तेछन्दस्ये
वहारकुर्वन्ते । भव्यावर्णापादेराज
न्ते रूपामालीवृत्त तत्कान्ते ॥ यथा
। हत्वाशत्रुंनृत्यन्तीचण्डसाचण्डी
व . कल्याणं कुर्यात् । देवेन्द्राद्या:
प्रौद्यासम्प्राप्ता :ससेवन्ते तत्पादा
भोजम् ॥

रूपास्त्र । पुं० कामदेवे ॥ रूपमस्त्रम
स्य ॥

रूपिका । स्त्री० श्वेतार्कवृक्षे ॥ ओड्र
पुष्पे ॥

रूपी । त्रि० रूपवति ॥ मूर्तिमति ॥

रूपेश्वरी । स्त्री० देवीविशेषे ॥

रूप्यम् । न० आहतरजते ॥ आहतहे
मनि ॥ तारे । चन्द्रहासे । रजते
चन्द्रलोहके । चादी० हू० भा० ॥
अस्यलक्षणगुणादयस्तथा । गुरु
स्निग्धमृदुश्वेत दाहच्छेदघनक्षमम्
। स्वर्णाढ्यचन्द्रवत्स्वच्छरूप्यं नवगु
णं शुभम् ॥ मारणायेयोग्यम् ॥
कठिन कृत्रिमंरूक्षंरक्तं पीत दलं ल
घु । दाहच्छेदघनैर्नष्ट रूप्य दुष्ट प्र
कीर्तितम् ॥ मारणायायोग्यम्रू
प्यशीतकषायाम्लं स्वादुपाकरससर
म् । वयस:स्थापनस्निग्ध लेखनवा
तपित्तजित् ॥ प्रमेहादिकरोगांश्च
नाशयत्यचिराद्ध्रुवम् ॥ तारंशरी
रस्यकरोतितापविड्बन्धनयच्छति
शुक्रनाशम् । वीर्यंबलंहन्तितनोश्च
पुष्टि महागदान्पोषयतिह्यशुद्धम्
॥ अथशोधनविधि: । पत्तलीकृत्यप
त्राणितारस्याग्नौप्रतापयेत् । निषि
ञ्चेत्तप्ततप्तानितैलेतक्रे चकाञ्जिके
॥ गोमूत्रेचकुलत्थानांकषायेचत्रिधा
त्रिधा । एवंरजतपत्राणांविशुद्धि:स

म्प्रजायते ॥ अथास्यमारणविधि. । भागैकतालकंमर्द्य याममम्लेनवीन चित् । तेनभागत्रयतारपत्राणिप- रिलिपयेत् ॥धृत्वामूषापुटेरुद्ध्वापुटे त्रिंशद्वनोपलै: । समुद्धृत्यपुन स्तालदत्वारुद्ध्वापुटेपचेत् ॥ एवंच तुर्दशपुटैस्तारभस्मप्रजायते ॥ अ न्योपिप्रकारोयथा । स्नुहीक्षीरेणस म्पिष्टंमाक्षिकंतेनलेपयेत् । तालक स्यप्रकारेणतारपत्राणिबुद्धिमान् । पुटेच्चतुर्दशपुटैस्तारभस्मप्रजाय- यते ॥ इति ॥ अथरूप्यकरणम् । मध्वाज्य गुडताम्र चक्ररेणामाक्षि- कांरसम् । धमनाच्चभवेद्रौप्यंसुवर्णं कारणंशृणु ॥ इतिगारुडे १८८ अध्याय. ॥ कार्षापणे ॥ त्रि॰ रूप वति । सुन्दरे ॥ आहतं॰ प्रशस्तं वा॰ रूपमस्यास्ति । रूपादाहतप्र शंसयोरितियत् ॥ रूप्यते । रूप रूपक्रियायाम् । ग्हान्त. ॥ अच्॰ वा ॥

रूप्यक. । पुं॰ लङ्कादिद्वीपवत्समुद्रा न्तर्वर्त्तिनिद्वीपविशेषे ॥

रूप्यमाषक: । पुं॰ कृष्णलाद्वयमि तेरूप्यमाने । हेकृष्णलेसमधृतेविज्ञे योरूप्यमाषक: ॥

रूप्यशाला । स्त्री॰ टकसाल॰ इति प्रसिद्धे रजतादिमुद्रागृहे ॥

रूप्याध्यक्ष: । पुं॰ नैष्किके ॥ रूप्यस्य अध्यक्ष. ॥

रूवुक: । पुं॰ एरण्डे ॥

रूम: । पुं॰ शकदेशे । यथा । योरू मदेशाधिपतिंशकेश्वरं जित्वागृही- त्वोज्जयिनींमहाहवे । आनीयसम् भ्राम्यमुमोचतन्त्वहोश्रीविक्रमार्कं. समसह्यविक्रम. ॥

रूषक । पुं॰ वासके ॥

रूषणम् । न॰ मिश्रणे ॥ रूष॰ । ल्युट् ॥

रूषित: त्रि॰ गुण्ठिते । गुण्डिते । रूष्यतेस्म । रूषिर्वेष्टनार्थोऽपठि तोपि॰ भ्वादौद्रष्टव्योभ्वादेराकृतिगणत्वात् । क्त: । रूक्षीकृते ॥ लिप्ते ॥ लग्ने । लग॰ इ॰ भा॰ ॥ रूष त॰ भा॰ विस्फुरणे॰ इतिकविक ल्पद्रुम: । अरूषत् ॥

रे । अ॰ सम्बोधनविशेषे ॥ यथा । सम्बोधनेऽङ्गभो:पाट्प्याटहेहैहहो ऽरेरेपिचेतिहेमचन्द्र: ॥ अनादरे ॥

रेक: । पुं॰ शङ्कायाम् ॥ नीचे । हीने ॥ विरेचने ॥ भेके । गूढव- र्त्तिसि ॥

रेका । स्त्री॰ सन्देहे ॥

रेक्णः । न॰ सुवर्णे । स्वर्णे । रिणक्ति । रिचिर् विरेचने । रिचेर्धनेघिच्चेत्य ऽसुन् । धातुप्रत्ययस्यनुट् । चित्वा त्कुत्वम् ॥

रेखा । स्त्री॰ अल्पके ॥ छद्मनि ॥

आभोगे । उल्लेखे ॥ उल्लेखस्त्वन्न दण्डाकारलिपिविशेषः । डंडी० लकीर० रेख० इ० भा० ॥ राज्याम् ॥ लिख्यते । लिखअक्षरविन्यासे । भिदादित्वादङ् चौरलयोरैकत्वम् ॥

रेखाभूमिः । स्त्री० वारप्रवृत्तिस्थले । लङ्कासुमेर्वोर्मध्यसूत्रगतदेशे ॥ यथा । यल्लङ्कोज्जयिनीपुरोपरिकुरुक्षेत्रादिदेशान्स्पृशन्सूत्रं मेरुगतं बुधैर्निगदितासामध्यरेखाभुवः । आदौ प्रागुदयोऽपरत्र विषयेपश्चाद्धिरेखोदयात्स्यात्तस्मात्क्रियतेतदन्तरभुवं खेटेष्वृणं स्वं फलमितिसिद्धान्तशिरोमणिः ॥

रेचकः । पुं० यवक्षारे ॥ जयपालवृक्षे ॥ तिलकवृक्षे ॥ क्रीडार्थंजलनिक्षेपयन्त्रे । पिचकारी० इ० भा० प्र० ॥ प्राणवायोः शनैर्वामनासापुटाद्दक्षिणनासापुटाद्वा० सव्यापसव्यन्यायेनबहिर्निःसरणे ॥ मुच्यमानस्तु रेचकइतियाज्ञवल्क्यः । श्वासइतिशेष. ॥ अनात्मोपेक्षायाम् ॥ निषेधनंप्रपञ्चस्यरेचकाख्यः समीरणः ॥ न० काङ्कुष्ठमृत्तिकायाम् ॥

रेचनम् । न० मलभेदने । प्रस्कन्दने । विरेके । विरेचने ॥

रेचनकः । पुं० काम्पिल्लके ॥

रेचना । स्त्री० काम्पिल्ले ॥

रेचनी । स्त्री० त्रिवृतायाम् ॥ दन्त्याम् ॥ गुन्द्रायाम् ॥ रोचनकायाम् ॥ रिचिर्० । ल्युट् । ङीप् कालाञ्जन्याम् ॥ काम्पिल्ले ॥

रेचितम् । न० उत्तेजिताश्वे । यथा । उत्तेजितंमध्यवेगंयोजनंस्त्रयवल्गायेति ॥ रेचनम् । रिचिर्० । क्तः ॥ त्रि० रिक्तीकृते ॥ अश्वगतिविशेषे ॥

रेची । स्त्री० अङ्कोठे ॥ काम्पिल्लके ॥

रेज. । त्रि० तेजिते ॥ रेजति । रेजतेवा । रेजृदीप्तौ । पचाद्यच् ॥

रेणुः । पुं० पर्पटे ॥ रेणुकायाम् ॥ पांशौ । पुं० स्त्री० धूलौ ॥ दीपखट्वातनुच्छायाच्छिन्नकेशनखादिकम् । अजमार्जाररेणुश्च हन्तिपुण्यंपुराकृतम् ० इ० क० लो० ॥ रिणाति० रीयतेवा । रीगतिरेषणयोः । अजिवृरीभ्योनिच्चेतिणुः ॥

रेणुकम् । न० काङ्कुष्ठभेदे ॥

रेणुका । स्त्री० मरिचाकृतिसुगन्धिद्रव्यविशेषे । द्विजायाम् । हरेणौ । भस्मगन्धिन्यामोषधौ । अस्यागुणाः रेणुकाकटुकापाकेतिक्तानुष्णाकटुर्लघुः । पित्तलादीपनी

मेध्यापाचनीगर्भपातनी ॥ बलास वातवैकल्यहृट् कण्डूविषदाहनुत् ॥ परशुराममातरि ॥ रेणुरस्यास्ति । लोमादित्वात् न् । कुसुमुकान्तात्क : ॥ रेणुरिवबा । स न्नायामिति कन् ॥

रेणुकातीर्थम् । न० तीर्थविशेषे ॥

रेणुकासुत : । पुं० परशुरामे ॥

रेणुरूषित : । पुं० गर्द्दभे ॥ त्रि० धूलिक्षिप्ते ॥

रेणुवास : । पुं० भ्रमरे ॥

रेणुसार : । पुं० कर्पूरे ॥

रेणुसारक : । पुं० कर्पूरे ॥

रेतजा । स्त्री० वालुकायाम् ॥

रेतनम् । न० वीर्ये । शुक्रे ॥

रेत : । न० वीर्ये । शुक्रे ॥ अप्सु रेत : पातनिषेधो यथा । नवामेध्यं नोमूत्रं पिवेद्भक्षोयावाजलम् । नोत्तरेदनुपस्पृश्य नाप्सु रेत : समुत्सृजेत् ॥ पारदे ॥ रिणाति । री गतिरेषणयो : । स्रुरीभ्यां तुट् चेत्यसुन् ॥ पु० । कार्ये ॥ अथातो रेतस : सृष्टिरित्यादौ रेत : शब्दस्य कार्यपरत्वेन व्याख्यानात् ॥

रेवम् । न० रेतसि ॥ पीयूषे ॥ पटवासे ॥ सूतके । पारदे ॥

रेप : । त्रि० निन्दिते । विगर्हिते ॥ क्रूरे ॥ री० बाहुलकात्प : ॥

रेपा : । त्रि० अधमे ॥ क्रूरे ॥ कृपणे ॥ रपति । रपव्यक्तायां वाचि । रपेरत एच्चेत्यसुन् ॥

रेफ : । पुं० रवर्णे ॥ रादिफ : ॥ रिफ्यते रिफतिवा । रिफ घञ् । पचाद्यज्वा । रागे ॥ त्रि० अवद्ये । कुत्सिते ॥ रिफति । रिफ कत्थनयुद्धनिन्दाहिंसादानेषु । अकर्त्तरिचेति घञ् ॥ यद्वा । रिफते । अवद्यावमाधमेति अप्रत्ययान्तो निपात : ॥

रेभणम् । न० हम्भायाम् । गोध्वनौ ॥

रेरिहाण : । पुं० वृषाङ्के । महादेवे । सदाशिवे ॥ अम्बरे ॥

रेवट : । पु० शूकरे ॥ वेणौ ॥ वातुले ॥ विषवैद्ये ॥ न० दक्षिणावर्त्तशङ्खे ॥

रेवत : । पुं० जम्बीरे ॥ आरग्वधे ॥ रेवतीपितरि० नृपतिविशेषे । बलरामश्वशुरे ॥

रेवतकम् । न० पारेवते ॥

रेवती । स्त्री० ककुद्मिकन्यायाम् । बलदेवपत्न्याम् ॥ मातृभेदे ॥ अन्त्यनक्षत्रे ॥ अस्मिन्नक्षत्रे जातस्य फलं यथा । चारुशीलविभवो जितेन्द्रिय : सत्कुले सुभवनैकमानस : । मानवो न नु भवेन्महीपतौ रेवती भवति यस्य जन्मभम् ॥ बाल

ग्रहविशेषे ॥ रैवतमनुमातरि ॥ धेनौ ॥ दुर्गायाम् ॥ रेवतीनक्षत्रे ॥ इतिगौरादिषु पाठान्ङीष् ॥ रेवत्यांजातायाम् ॥ चित्रारेवती तिनक्षत्रायोलुक् ॥ पिप्पल्यादित्वा न्ङीष् ॥

रेवत्य : । स्त्री० सामविशेषे ॥ नित्य बहुवचनान्तोत्ररेवतीशब्द : ॥

रेवतीजानि ' । पुं० रेवतीरमणे ॥ रेवतीजायायस्य । जायायानिङि तिसमासान्तोनिङादेश : । लोपो व्योर्वलीतियलोप : ॥

रेवतीभव : । पुं० शनैश्चरे ॥

रेवतीरमण . । पुं० रामे । हलायुधे । बलदेवे ॥ रेवत्यारमण . ॥

रेवतीश । पुं० बलभद्रे । रेवती रमणे ॥

रेवन्त । पुं० सूर्यात्मजविशेषे ॥ गुह्यकाधिपतौ ॥

रेवन्तप्रसू । स्त्री० सञ्ज्ञायाम् । सूर्यपत्न्याम् ॥

रेवा । स्त्री० नदीविशेषे ॥ नर्मदाया म् । मेकलकन्यायाम् ॥ रत्याम् । मन्मथयोषिति ॥ नीलीवृक्षे ॥ दुर्गायाम् ॥ रेवते । रेवृप्लवगतौ । पचाद्यच् । टाप् ॥

रेषणम् । न० वृकशब्दे ॥ हिंसाया म् । रिषहिंसायाम् । ल्युट ॥

रै । अ० दाने ॥ अनादरे ॥

रा । पु० स्वर्णे ॥ वित्ते । धने ॥ जलदे ॥ ध्वनौ । शब्दे ॥ रातिसु खम्० रायतेवा । राद्दाने । राते र्डैः ॥

रैक्व : । पुं० संवर्गविद्याविदिमुनि विशेषे ॥

रैणुकेय । पुं० परशुरामे ॥ रेणु कायाअपत्यम् । स्त्रीभ्योढक् ॥

रैभ्य ' । पुं० ऋषिविशेषे ॥ रेभस्य गोत्राऽपत्यम् । गर्गादित्वाद्यञ् ॥

रैवत : । पुं० सुवर्णालौ ॥ शैलभेदे ॥ शङ्करे ॥ जयन्ते ॥ दैत्यविशेषे ॥ वर्त्तमानकल्पीयेपञ्चमेमनौ ॥

रैवतक ' । पुं० द्वारकासमीपस्थेप र्वतविशेषे । उज्जयन्ते ॥ श्रुतिपु राणप्रसिद्धेपरमहंसे ॥ न० पारे वतवृक्षे ॥

रोक ' । पु० क्रयभेदे ॥ दीप्तौ ॥ न० नावि ॥ चरे ॥ बिले । छिद्रे ॥ त्रि० चले ॥ रोचतेऽत्र । रुच दीप्तौ । हलश्चेतिघञ् ॥ निष्ठासे ट्त्वान्न्यङ्क्वादित्वात्कुत्वम् ॥

रोग . । पुं० कुष्ठौषधौ । दोषवैषम्ये । व्याधौ आमये । गदे ॥ दुष्कर्म जानृणारोगाःयान्तिचैवक्रमाच्छम म् । जपै . सुरार्चनैर्होमैर्दानैस्त थाशमोभवेत् इतिकर्मविपाक ' ॥ रोजनम् । भावेघञ् । रुजतिवा । रुजोभङ्गे । पदरुजेतिघञ् ॥

रुज्यतेपीड्यतेदेहीमेनेतिवारोगः ॥
रोगघ्नम् । न० औषधे । त्रि० रोगनाशके ॥
रोगभूः । स्त्री० शरीरे ॥
रोगराजः । पुं० पापरोगे । राजयक्ष्मणि ॥ रोगाणांराजा । टच् ॥
रोगलक्षणम् । न० निदाने ॥
रोगशान्तकः । पुं० वैद्ये ॥
रोगशिला । स्त्री० मनःशिलायाम् ॥
रोगशिल्पी । पुं० शरालु० द्रु० गौ० दे० भा० प्र० वृक्षविशेषे ॥
रोगश्रेष्ठः । पुं० ज्वरे ॥ रोगेषुश्रेष्ठः ॥
रोगहम् । न० औषधे । भैषज्ये ॥
रोगहारी । पुं० चिकित्सके । वैद्ये ॥ रोगं हरतितच्छीलः । सुपीतिणिनिः ॥ त्रि० रोगनाशके ॥
रोगितरुः । पुं० अशोकवृक्षे ॥
रोगी । त्रि० रोगयुक्ते । व्याधिते । आतुरे । अभ्यमिते । रोगार्त्ते ॥ रोगमस्यास्ति । इनिः ॥ अथवर्च्चिकित्सार्थपरीक्षारोगितस्त्रिः ॥ तत्राहवाग्भटः । दर्शनस्पर्शनप्रश्नैःपरीक्षेतथरोगिणम । आयुरादिदृशास्पर्शाच्छीतादेःप्रश्नतोऽपरम् ॥ आयुरादीत्यत्रादिशब्दात् साध्यत्वाऽसाध्यत्वादिबोध्यम् । दृशा०दर्शनेन । अत्रसम्पदादिभ्यश्च तिभावेक्तिप् । स्पर्शात् । शीतादे । शीतोष्णमृदुकठिनत्वादिनापरीक्षणाच्च । प्रश्नतः । उदरत्वाग्वगौरवलघुत्वाऽलघुत्वा०बुभुक्षाऽबुभुक्षावलाऽवलादिना । मिथ्यादृष्टाविकाराहिदुराख्यातास्तथैवच । तथादुष्परिपृष्टाश्चमोहयेयुश्चिकित्सकाम् ॥ तत्रदर्शनेनचजिह्वामूत्रादेःकार्य्यम् ॥
रोगिवल्लभम् । न० भैषज्ये । औषधे । त्रि० रोगिप्रिये ॥
रोग्यम् । त्रि० अपथ्ये । अहिते ॥ रोगायहितम् । यत् ॥ रोगस्वभिनि ।
रोचकः । पुं० बुभुक्षायाम् । अशनायाम् । जिघत्सायाम् । कदल्याम् ॥ राजपलाण्डौ ॥ अवदंशे ॥ ग्रन्थिपर्णभेदे । निशाचरे । धनहरे । कितवे । गणहासके । नेपालदेशेभगिडवर०इतिप्रसिद्धे ॥ अस्यगुणाः । रोचकोमधुरस्तिक्तः कटुः पाकः कटुर्लघुः । तीक्ष्णोहन्ति क्रिमीन्हन्तिकुष्ठकण्डूकफानिलान् ॥ रक्षोऽश्रीस्वेदमेदोस्रज्वरगंधविषव्रणान् ॥ त्रि० रुचिकारके ॥
रोचनः । पुं० कूटशाल्मलौ ॥ श्वेतशिग्रौ ॥ पलाण्डौ ॥ आरग्वधे ॥ करञ्जे ॥ अङ्कोठे ॥ दाडिमे ॥ त्रि० रोचके । रुचिकरे ॥ रोचते । रुचदीप्तौ । अनुदात्तेतश्चेतियुच् ॥

रोचयति । नन्द्यादित्वाल्ल्युर्वा बहुलमन्यत्रापीतियुज्वा ॥
रोचनक । पु० जम्बीरे ॥
रोचनफल । पु० बीजपूरके ॥
रोचनफला । स्त्री० चिर्भिटायाम् ॥
रोचना । स्त्री० रक्तकह्लारे ॥ गोपित्ते ॥ वरयोषिति ॥ रोचते । रुच० । बहुलमन्यत्रापीतियुच् । टाप् ॥
रोचनिका । स्त्री० वंशरोचनायाम् ॥ शुण्डारोचन्याम् ॥
रोचनी । स्त्री० आमलक्याम् ॥ गोरोचनायाम् ॥ मन . शिलायाम ॥ श्वेतत्रिवृतायाम् ॥ काम्पिल्यौषधौ ॥ रोचते । रुचदीप्तावभिप्रीतौ च । करणल्युटइतिल्युट् ॥
रोचमान । पुं० अश्वग्रीवास्थरोमावर्त्ते ॥ यथा । ग्रीवायांहृदयावर्तौरोचमानोगलोद्भव इतिचिकाण्डशेष: ॥ अपिच । कण्ठेरोचमानस्तस्मिन्सौभाग्यवर्द्धनइतिवैजयन्ती ॥ त्रि० अत्यन्तदीप्यमाने ॥ रोचते । रुच० । लट . शानच् । आनेमुक् ॥
रोचित । त्रि० प्रकाशिते ॥
रोची । त्रि० रोचिष्णौ ॥
रोचिष्णु । त्रि० अलङ्कारादिनाशोभमाने । विभ्राजि । भाजिष्णौ ॥ रोचतेतच्छील । रुच० । अलङ्कृञिति० इष्णुच् ॥
रोचि . । न० शोचिषि । त्विषि । प्रभायाम् । दीप्तौ ॥ रोचतेऽनेन । रुच० । बाहुलकादिसि: ॥
रोची । स्त्री० हिलमोचिकायाम् ॥
रोच्य: । त्रि० प्रकाश्ये ॥ प्रीतिविषये ॥
रोटिका । स्त्री० रोटी० इतिभाषाप्रसिद्धेपिष्टकविशेषे ॥ अस्या करणप्रकारोयथा । शुष्कगोधूमचूर्णेनकिञ्चित्पुष्टाञ्चपोलिकाम् । तप्तकीलेदयेत्तज्ज्ञा भूयोङ्गारेपितांपचेत् । सिद्धैषारोटिकाप्रोक्तागुणानस्या: प्रचक्ष्महे । रोटिकाबलकृद्रुच्यावृंहणीधातुवर्द्धनी ॥ वातघ्नीकफकृद्गुर्वी दीप्ताग्नीनां प्रपूजिता । यवजारोटिकारुच्यामधुराविशदालघु: । मलशुक्रानिलकरीबल्याकन्तिकफामयान् ॥ पीनसश्वासकासांश्चमेदोमेहगलामयान् ॥
रोड . । पुं० क्षोदे ॥ त्रि० तृप्ते ॥
रोदनम् । न० क्रन्दने । शोकादिनास्रुपतने । रोना० हि० भा० ॥ अस्रे । अश्रुणि । आंसू० हि०भा० रुद्यते । रुदिर्अश्रुविमोचने । बाहुलकात्कर्मणिल्युट् । तच्छुभाशुभ यथा । अमलस्निग्धरुदितमदीन शुभदं नृणाम् । प्रचुराश्रुदीन रूक्षस्वरुदित नसुखावहम् ।

॥ रोदनाश्रुपतनेनमृतानानरकः यथा ॥ ज्ञानिनोमारुदन्त्येवमारोदी ' पुचसाम्प्रतम् ॥ रोदनाश्रुप्रपतनान्मृतानानरकध्रुवम् ।' स्मृतम् द्विश्चरोदननिषेधोयथा ॥ श्लेष्माश्रुबान्धवैर्मुक्तं प्रेतोभुङ्क्तेयतोऽवश' । अतोनरोदितव्य ह्निक्रिया कार्याविधानतः इति ॥

रोदनिका । स्त्री॰ यवासे ॥

रोदनी । स्त्री॰ कच्छुरायाम् । दुरालभायाम । यवासे ॥ रोदयति । रुदिर्॰ । ल्युट् । ङीप् ॥

रोद : न॰ दिवि ॥ भूमौ ॥ द्यावापृथिव्यो ॥ रोदितिसर्वमस्मिन् । रुदिर्॰ । असुन् ॥

रोदसी । अ॰ द्यावापृथिव्यो . ॥ दिवि ॥ भूमौ ॥

रोदसी । स्त्री॰ स्वर्गे ॥ भूमौ ॥ द्यावाभूम्यो : ॥ गौरादित्वात्पक्षेङीष् ॥

रोदस्यौ । स्त्री॰ द्विवचनान्त. । भूमिस्वर्गयो ' ॥

रोध : । पुं॰ नदीतीरे । कूले । रुधि । रुधिरावरणे । पचाद्यच् ॥ प्रतिबन्धे ॥

रोधक : । त्रि॰ रोधिनि ॥ रुधिर्॰ । ण्वुल् ॥

रोधन : । त्रि॰ रोधकर्त्तरि ॥ न॰ रोधे ॥

रोधवक्रा । स्त्री॰ सरिति ॥ रोधेनवक्रा ॥

रोध । न॰ तीरे ॥ रुणद्धि । रुधिर्॰ । सर्वधातुभ्यासुन्निति॰ असुन् ॥

रोधोवक्रा । स्त्री॰ नद्याम् ॥ रोधसावक्रा ॥

रोधोवती । स्त्री॰ नद्याम् ॥

रोध्र ' । पुं॰ गालवे । लोध्रे न॰ अपराधे ॥ किल्बिषे ॥ रुणद्धि ' रुधिर्॰ । बाहुलकाद्रन् ॥

रोध्रपुष्प : । पुं॰ मधूकवृक्षे ॥

रोध्रपुष्पिणी । स्त्री॰ धातकीवृक्षे ॥

रोप. । पुं॰ रोपणे ॥ इषौ । बाणे ॥ न॰ छिद्रे ॥ रोप्यतेऽनेनवा रुपविमोहने । ण्यन्त ' । घञ् ॥ यद्वा । रूयतेऽनेन । हलश्चेतिघञ् ॥

रोपक . । पुं॰ सुवर्णसप्ततितमेभागे ॥ यथाह्नविष्णुगुप्त । द्वौनारारोपकौरष्टाभिःशद्याच्यापरिकीर्त्तित । सुवर्णसप्ततितमोभागोरोपकउच्यतइति ॥

रोपणम् । न॰ विमोहने ॥ जनने ॥ प्रादुर्भावे '। रुपेर्भावेल्युट् ॥ अञ्जनविशेषे ॥ यथा । रोपणा रसकपिष्टासम्यक्समङ्गाव्य गारिणा । ष्टङ्कणीयात्तज्जलसर्वत्यजेच्चूर्णमधोगतम् ॥ शुष्कस्तत्जल सर्वपर्पटोसन्निभभवेत् । विचूर्ण्यभावयेत्सम्यक्त्रिवेलत्रिफलारसे । कर्पूरस्वरसतच्दशमांशेननि ' क्षिपेत् ।

अञ्जयेन्नयनेतेननेत्राखिलगदच्छि
द: ॥
रोपणचूर्णम् । न० नयनाञ्जनविशे-
षे ॥ यथा । शिलायारसकपिष्टास
स्यगात्राप्यवारिणा । गृहणीयात्त
ज्जलसर्वंत्यजेच्चूर्णमधोगतम् । शु
ष्क तच्चजलसर्वंपर्पटीसन्निभभवेत्
। विचूर्ण्यभावयेत्सम्यक्त्रिवेल-
त्रिफलारसे ॥ कर्पूरस्यरजस्तच्चद
शमाशेननि क्षिपेत् । अञ्जयेन्नय
नतेनसर्वदोषोपशान्तये ॥ समस्त
नेत्ररोगघ्न चूर्णमेतन्नसंशय ॥
रोपणवर्त्ति । स्त्री० नेत्राञ्जनप्रभेदे ॥
यथा । अशीतिस्तिलपुष्पाणिषष्टि
पिप्पलतण्डुला । जातीपुष्पाणि
पञ्चाशन्मरिचानिचषोडश ॥ सू-
क्ष्म पिष्टाम्बुनावर्त्ति . कृताकुसु-
मिकाभिधा । तिमिरार्जुनशुक्रा
णानाशिनीमांसवृद्धिनुत् ॥ एतस्या
अञ्जनेप्रोक्तामात्रासार्द्धहरेणुका ।
कुसुमिकावटी० रोपणी ॥
रोप्यातिरोप्य । पु० धान्यविशेषे ॥ य
था । रोप्यातिरोप्यालघव शीघ्रपा
काशुणोत्तरा । अदाहिनोदोषह-
रावल्यामूत्रविवर्द्धना ॥
रोमम् । न० जले ।
रोमकम् । न० पांशुलवणे । अयस्का
न्तप्रभेदे । पु० रूमाभिधेनगरे ॥
रोमकन्द . । पुं० पिण्डालौ ॥

रोमकपत्तनम् । न० पश्चिमैकेतुमाल-
वर्षस्थनिरक्षदेशेविद्यमानेपत्तने ॥
रूमे ॥ तच्चाधुनारूमश्याम० इति
नाम्नाप्रसिद्धम् ॥
रोमकूप । पु० रोममूले ॥

रोमकेशरम् ।
रोमगुच्छम् ।
रोमगुच्छकम्
रोमगुल्मम् । } न० चामरे । अत्र चूलके ॥

रोम । न० लोम्नि । अङ्गजे । तनूरु
हे ॥ तस्यफलंयथा । अल्परोमयुता
श्रेष्ठाजङ्घाहस्तिकरोपमा । रोमै
कैककूपकेस्यात्नृपाणान्तुमहात्म-
नाम् ॥ द्वे द्वे रोमेपण्डितानाश्रोत्रि
याणातथैवच । रोमत्रयदरिद्राणा
रोगीनिर्मांसजानुक . ॥ अपिच ।
रोमैकैकाकूपकेपार्थिवानाद्वे द्वे ज्ञेये
पण्डितश्रोत्रियाणाम् । त्र्याद्यैर्नि
स्वामानवाद्दुःस्वभाजः केशाश्चेव
निन्दिता पूजिताश्चेति ॥ रोह
ति । रुह० । नामन्सीमन्व्योम
न्रोमन्नित्यादिनासाधु । यद्वा ।
रूयते । रुगव्दे० रुङ्गतौ० भा
षणे वा मनिन् ॥
रोमन्थ पु० उद्गीर्यचर्वणे । पशूनाच
र्वितस्याकृष्यपुनश्चर्वणे । जुगार०
इ० भा० ॥
रोमभूमि स्त्री० चर्मणि ॥
रोमलता । स्त्री० रोमावल्याम् ॥

रोमवान् । त्रि॰ रोमशे । लोमविशिष्टे ॥

रोमविकार ।) पुं॰ रोमाञ्चे ।
रोमविक्रिया ।) स्त्री॰ रोमहर्षणे ।

रोमश । पुं॰ पिण्डालौ ॥ मेषे ॥ कुम्भिनि ॥ शूकरे ॥ त्रि॰ अतिशय लोमविशिष्टे ॥ रोमाण्यसन्त्यस्य । लोमादित्वात्॰ श. । रलयोरभेद ॥

रोमशफल । पुं॰ डिण्डिशे । मुनिनिर्म्मिते । डिण्डसौ॰ टिण्डा॰ चु॰ भा॰

रोमशा । स्त्री॰ दग्धावृक्षे ॥

रोमस्थकम् । न॰ स्थौणेयके ॥

रोमहर्ष । पु॰ पुलकितत्वे । रोमाञ्चे ॥

रोमहर्षण । पु॰ सूते । इतिहासपुराणानाधारकेव्यासशिष्ये ॥ यस्मात्सर्वरोमाणिवचसाहर्षितानियत् । द्वैपायनस्यभगवतस्ततोवैरोमहर्षणः ॥ भवत्स्मैवभगवान्व्याजहारस्वयंप्रभु ॥ विभीतकवृक्षे ॥ न॰रोमाञ्चे ॥ रोम्णाहर्षणम् ॥

रोमाञ्च । पु॰ रोमहर्षणे । रोमोद्गमे ॥ रोमणामञ्चनंपूजनम् । भावेघञ् ॥

रोमाञ्चिका । स्त्री॰ रुदन्तीवृक्षे ॥

रोमाञ्चित । त्रि॰ जातपुलके । हृष्टरोमणि ॥ रोमाञ्च सञ्जातोस्य । तारकादित्वादितच् ॥

रोमाली । स्त्री॰ वय सन्धौ ॥ रोमावल्याम् ॥

रोमालु । पु॰ पिण्डालौ ॥

रोमालुविटपी । पु॰ कुम्भीवृक्षे ॥

रोमावली । स्त्री॰ नाभेरुपरिलोमश्रेण्याम् ॥

रोमाश्रयफला । स्त्री॰ झिञ्झिरिष्टाक्षुपे ॥

रोमोद्गम ।) पुं॰ रोमहर्षणे ।
रोमोद्भेद ।) पुं॰ रोमाञ्चे ॥

रोल । पुं॰ पानीयामलके ॥

रोलम्ब । पुं॰ भ्रमरे ॥

रोला । स्त्री॰ मात्रावृत्तान्तरे ॥ यथा । रोलावृत्तमवेहिनागपतिपिङ्गलभणितप्रतिपदमिहचतुरधिककला विरचितपरिगणितम् । एकादशमधिविरतिरखिलजनचित्ताहरणा सुललितपदमदकारिविमलकविकण्ठाभरणम् ॥ यथा । तरतिपयोनिधिसलिलमयतिगिरिशिखरशिखोपरि॰ विशतिरसातलमटतियशस्तवसकलदिशोपरि । गगनगमनमभिनयतिसमंशशिनाश्रियमश्नुतिचित्रमिदनतथापिभवन्त भूपविसुश्रुति ॥

रोट । त्रि॰ बधके । हिंस्रे ॥ रोषति । रुष॰ । विच् ॥

रोष । पुं॰कोपे । क्रोधे ॥ अपमे

यमुदेतुमिच्छतातिमिररोषमयं धियापुर । अविभिद्यनिशाकृततम प्रभयानांशुमताप्युदीयते ॥

रोषणम् । रुषहिंसायाम् । भावे घञ् ॥

रोषण । पु॰ पारदे ॥ हेमहर्षणे ॥ उषले ॥ ऊषरे ॥ त्रि॰ क्रोधने । अमर्षणे ॥ रोषतितच्छील । रुष॰ । क्रुधमण्डार्थेभ्यश्चेतियुच् ॥

रोषमय । त्रि॰ रोषादागते । मयड्वेतिमयट् ॥

रोषित । त्रि॰ रोषंप्रापिते । रुष्टे ॥

रोह । पु॰ अङ्कुरे ॥ सादिनि ॥

रोहक । पु॰ प्रेतविशेषे ॥ त्रि॰ रोढरि । रोहकारे ॥ रुहबीजजन्मनिप्रादुर्भावे । ण्वुल् ॥

रोहण । पुं॰ गिरिप्रभेदे । विदूराद्रौ ॥ न॰ शुक्रे ॥ जन्मनि ॥ प्रादुर्भावे ॥

रोहन्त । पुं॰ द्रुमविशेषे । वृक्षात् । रुह॰ । रुहिनन्दिजीविप्राणिभ्यः षिदाशिषीतिझच् ॥ हषमार्थे ॥

रोहन्ती । स्त्री॰ लतान्तरे ॥ षित्वात् ङीष् ॥

रोहि । पुं॰ बीजे ॥ वृक्षे ॥ धार्मिके ॥ व्रतस्थाम् ॥ रोहति । रुह॰ । इपिषिरुहिवृतिविदिच्छिदिकीर्त्तिभ्यश्चेति॰ इन् ॥ गन्धमृगे ॥

रोहिण । पुं॰ भूतृणे ॥ वटवृक्षे ॥ रोहितकवृक्षे ॥ न॰ कालभेदे । रौहिणे । दिनस्यनवमेमुहूर्त्ते ॥ सचपूर्वाह्णश्राद्धस्यगौणकालत्वेनोत्तरावधि । अपराह्णश्राद्धस्यपूर्वावधि । एकोद्दिष्टश्राद्धस्यसमानकाल ॥ रोहति । रुह॰ । रुहेश्चेति॰ इनन् ॥ त्रि॰ रोहिण्यांजाते । नक्षत्रेभ्योबहुलमितिलुक् । लुक्तद्धितलुकि ॥

रोहिणि । स्त्री॰ रोहिणीनक्षत्रे ॥

रोहिणिका । स्त्री॰ रागादिनारक्तवर्णायांस्त्रियाम् ॥

रोहिणी । स्त्री॰ अश्विन्यादिषुचतुर्थनक्षत्रे । ब्राह्मयाम् ॥ तत्रजातस्यफलं यथा । स्याद्धर्मकार्येकुशलःकुलीनः सुचारुदेहोविलसत्कलेवरः । स्मराग्निनाचाकुलिताखिलाशयेयोरोहिणीजः सधनीसमानी ॥ इति ॥ रोहिणीनक्षत्रे इति गौरादिषुपाठात्ङीष् ॥ कण्ठरोगविशेषे ॥ अस्यनामानिसङ्ख्याचयथा । रोहिणीपञ्चधाप्रोक्ता कण्ठशालूकएवच । अधिजिह्वस्तथैवोपजिह्वश्चवलयोऽलासनामैकवृन्दकः ॥ ततोवृन्दः शतघ्नीचगिलायुः कण्ठविद्रधिः । गलौघः प्रस्वरस्वमासतालस्तथैवच ॥ विदारीकण्ठ

देशेतुरोगाचष्टादगस्मृता । इति ॥ र्धनौ । सोमभेष्याम् ॥ रोहित वर्णयोगात्० ङीप् नौ ॥ लोहिता याम् ॥ रोहितशब्दात्स्त्रीत्वेपक्षा या०वर्णादनुदात्तात् तोप शात्तोने तिङीप तकारस्यनकारादेशश्च ॥ तडिति ॥ कटम्भरायाम् । कटु रोहिण्याम् ॥ सोमवल्के ॥ जिना नाविद्यादेवीविशेषे ॥ बलदेवस्य मातरि ॥ सुरभिकन्यायाम् ॥ न ववर्षीयायाकन्यायाम् ॥ हरीत क्याम् ॥ वृत्तासारोहिणीस्मृतेति लक्षणात् । कपिलवर्णात्तु लाक्षा राविरेचनेप्रशस्ता ॥ काश्मर्याम् ॥ रागाद्यैरञ्जितस्त्रियाम् ॥ रोहिण्या जातायाम् ॥ चित्रारेवतीरोहि णीभ्य स्त्रियामितिनक्षत्राणेलुक् । गौरादित्वान्ङीष् ॥

रोहिणीपतिः । पुं० इन्द्रौ ॥ रोहि ण्या पति ॥ दुन्दुभे ॥

रोहिणीरमण । पुं० वृषभे ॥ वसुदे वे ॥ चन्द्रे ॥

रोहिणीवल्लभः । ) पुं० चन्द्रमसि
रोहिणीश । )
वसुदेवे ॥

रोहिण्यष्टमी । स्त्री० रोहिणीयुक्तभा द्रकृष्णाष्टम्याम्

रोहित् । पुं० अर्के । ... । स्त्री०- मृग्याम् ॥ लताप्रभेदे राइति ।

कम० । इत्यरुचित्युषिध्वइति ॥

रोहित । पु० मीनविशेषे । रोहू० इतिभाषाप्रसिद्धे ॥ अस्यलक्षण गु णाश्चयथा । कृष्णा शल्कोऽस्वे तकु चिस्तुमत्स्योय श्रेष्ठोऽसौलोहितो वृत्तवक्त्र । कोष्णा वल्यरोहितस्या पिमासस्नातश्लिस्निग्धमप्यातिवी- र्यम् ॥ अपिच । रक्तोदरोरक्तमुखो रक्ताक्षोरक्तपक्षति: । कृष्णपक्षोऽभ षश्रेष्ठोरोहित कथितोबुधै ॥ रोहित सर्वमत्स्यानावरोवृष्योर्दि तार्त्तिजित् । कषायानुरस स्वादु र्वातघ्नोनातिपित्तकृत् ॥ ऊर्द्ध्वज- त्रुगतान्रोगान्हन्याद्रोहितमुण्ड कम् ॥ अस्यपाकप्रकारोयथा । रो हितोदरखण्डाश्चकासमर्दनमर्दि ता । कटुतैलपरिभ्रष्टाहिङ्गुमे- ध्यवसयुता ॥ शकलपृष्ठसम्भृत- रोहितदधिमर्दितम् । वेसवारान्वि तपाच्यप्रलेहविधिनाभृशम् ॥ त- न्मुण्डस्यतु । रोहितस्योत्तमदेहप्रले हेनावलेपितम् । योश्नातीह न र पूर्वभवे स्मररूपभृत् ॥ रोहि त । प्रवरोमत्स्यानातिपित्तकरोगु रु । वातहापुष्टिदोहृद्य. स्निग्ध पथ्य समीरिण ॥ इति ॥ मृग विशेषे ॥ रोहितकद्रुमे ॥ हारभेदे ॥ रक्तवर्णे ॥ ऋषभाद्रिवासिगन्ध- र्वविशेषाणा.सञ्ज्ञायाम् ॥ न० कु

द्रुमे ॥ रक्ते ॥ रक्तशक्रशरासने । दण्ड आर्रे नागादौ दिविदृश्यमाने ज्योतिर्विशेषे ॥ इन्द्रधनुर्वैर्वी-व्याख्यातादिना रज्जवक्र सद्रोहितस्यात् ॥ त्रि॰ रक्तवर्णविशिष्टे ॥ रोहति । रुह॰ । रुहेश्चलोविवेतीतन् ॥ यद्वा । रोहणं रोह । सजातोऽस्य । तारकादित्वादितच् ॥

रोहितक । पुं॰ वृक्षविशेषे । रोहिणि । प्लीहशत्रौ । दाडिमपुष्पके । सदाप्रसूने । रोहिडा॰ इ॰ भा॰-प्र॰ ॥ रोहितोवर्णोस्यास्ति । अच् । स्वार्थेकन् ॥

रोहितगिरि । पु॰ पर्वतान्तरे । रोहितासइ॰ भा॰ प्र॰ ॥

रोहितगिरीय । पु॰ आयुधजीविविशेषे ॥ रोहितगिरिरभिजनो-स्यायुधजीविनः । छः ॥

रोहिता । स्त्री॰ रागादिनारक्तवर्णायांस्त्रियाम् ॥ वर्णादनुदात्तादिति पाक्षिकोङोप् तकारस्यनकारादेशश्च न ॥

रोहिताश्व । पुं॰ अग्नौ । वैश्वानरे ॥ लोहिताअश्वायस्य । वरुणस्त्वसितानश्वान्॰ कुबेर कुसुदीपमान् । हुताशन किंशुकाभान्॰ वायुर्वर्भूस्तथाश्वणोदितिशालिहोत्रात् ॥ रलयो सावर्ण्यात्रोहिताश्व ॥ रोहितोसुगोवाहनमस्त्रि

तिवा ॥ हरिश्चन्द्रनृपात्मजे ॥

रोहितिका । स्त्री॰ कोपादिनारक्तवर्णायामस्त्रियाम् ॥

रोहितेय । पु॰ रोहितके ॥ स्रोहा रौरोहितेय . स्याद्रक्तपुष्पश्चरोहितद्रुतिरत्नकोष ॥

रोही । पु॰ रोहितके ॥ अश्वत्थे ॥ वटद्रुमे ॥ अवश्य रोहति । रुह॰ आवश्यकेणिनि ॥

रोहिष : । पु॰ रौहिषे ॥ न॰ तृणान्तरे ॥

रोहीतक । पु॰ रोहितकद्रुमे ॥ रोहीतक प्लीहघातीरुच्योरक्तप्रसादन रोहीतकोयकृत्प्लीहगुल्मोदरहर स्मृत . ॥

रौक्ष्यम् । न॰ रूक्षतायाम् ॥ पारुष्ये ॥ रूक्षस्वभाव । ष्यञ् ॥

रौच्य । पुं॰ मनुविशेषे ॥ ॥ रुचे प्रजापते . पुत्रोरौच्योनामभविष्यति ॥ बिल्वकाष्ठदण्डे । बैल्व ॥

रौद्र । पु॰ घर्मे । सूर्यतेजसि । आतपे ॥ अस्यगुणायथा । आतप कटुकोरूक्ष स्वेदमूर्च्छातृषावह दाहवैवर्ण्यजननोनेत्ररोगप्रकोपण ॥ रसविशेषे ॥ षष्टिवत्सरान्तर्गतचत्वारिंशे ॥ तत्फलयथा । अल्पतोयाघना . . वकीटका . प्रबला . . . . पार्थिवादेविरौद्रे स . . . . । ५४ ॥ शृङ्गाराद्यष्ट

सान्तर्गतविशेषरसे । उग्रे ॥ त्रि॰ तीव्रे ॥ भीषणे ॥ रुद्रसम्बन्धिनि ॥ रुद्रदैवत्ये ॥ रुद्रस्येदम् । अण् ॥

रौद्री । स्त्री॰ चण्डयाम् ॥ ङीप् ॥ रुद्रजटायाम् ॥

रौप्यम् । न॰ रूप्ये ॥

रौप्यमाक्षिकम् न॰ तारमाक्षिके ॥

रौमम् । न॰ रौमके ॥ रुमायांभवम् । अण् ॥

रौमकम् । न॰ साम्भरि॰ इ॰ भा॰ प्र॰ लवणे । रौमे । वसुके ॥ रुमायाभवम् । तत्रभवइत्यण् । सञ्ज्ञायांकन् त्रि॰ रोमकीभवस्ततत्रागतोवा । मलयादित्वादण् ॥

रौमहर्षणि । पु॰ उग्रश्रवसि । सूते ॥ रोमहर्षणस्यापत्यम् । अत इञ् ॥

रौरव । पु॰ नरकविशेषे ॥ घोरे ॥ त्रि॰ चञ्चले ॥ घोरे ॥ धूर्त्ते ॥ रुरुसम्बन्धिनि ॥ रुरुर्भीरशृङ्गाख्य प्राणिविशेषः । तस्यायम् । तस्येदमित्यण् ॥

रौहिण । पु॰ चन्दनवृक्षे ॥ न॰ दिनस्यनवमेमुहूर्त्ते । यथा । अत्र पूर्वाह्णे श्राद्धमभिधायरौहिणन्तु-मखण्डयेदित्यभिधानेनपूर्वाह्णे श्राद्धस्यसङ्गवात्परोरौहिणपर्यन्तगौणपूर्वाह्णकाल प्रतीयते । तेन रौहिणं पूर्वाह्णे श्राद्धस्यगौणका-लत्वेनोत्तरावधि . अपराह्णश्राद्धस्यपूर्वावधिरित्यवगम्यते॰ ततश्च पूर्वदिनेसङ्गवात्पर रौहिणपर्यन्त तिथेर्लाभेपरदिनेमुहूर्त्तत्रयमात्र-तत्तिथिलाभेपूर्वदिनेश्राद्धम् । रौहिणान्तरूपगौणपूर्वाह्णलाभात् नपरदिनेतथात्वभावात् । उभयदिने सङ्गवलाभेपरदिने॰ शुक्लपक्षे तिथि र्ग्राह्या तिवचनात् । रौहिणस्तुदिवसस्यनवममुहूर्त्तस्तस्यज्योतिषोक्त-रोहिणीदैवतत्वात्रौहिणत्वमिति द्वितिश्राद्धतत्वम् ॥ त्रि॰ रोहिण्याजाते ॥ सन्धिवेलादौत्वनेनाण् ॥

रौहिणेय : । पुं॰ बुधग्रहे ॥ हलायुधे । बलदेवे ॥ न॰ मरकतमणौ त्रि॰ गोवत्से ॥ रोहिण्याअपत्यम् । शुभ्रादित्वाट्ढक् ॥

रौहिष पुं॰ मृगविशेषे ॥ रोहिषतथाभेदमस्ति । शेषइत्यण् ॥ रोहित मत्स्ये ॥ न॰ कतृणे । रोहितइति॰ रोहिसइतिचख्यातेतृणे ॥ रोहिषतुवरतिक्तं कटुपाकव्यपोहति । हृत्कण्ठव्याधिपित्तास्रशूलकासकफज्वरान् ॥ रोहति । रुह॰ । रुहेवृंद्धि श्चेतिटिषच् ॥

रौहिणी । स्त्री॰ स्रग्याम् ॥ दूर्वायाम् ॥

॥ रकारसमाप्तः ॥

## लकारस्यप्रारम्भः

ल । पुं॰ इन्द्रे । शक्रे ॥ लकारे ॥ लघ्वक्षरे ॰ । ॰ ॥ न॰ पृथ्वीवीजे ॥ लीयते । लीङ् ॰ । अन्येष्वपिदृश्यतइतिड ॥

लकच । पुं॰ डहौ । लकुचे । इतिशब्दरत्नावली ॥

लकुच । पुं॰ लिकुचे । डहौ । हठवल्कले । स्थूलस्कन्धे । क्षुद्रपनसे । वङ्हल॰ इ॰ भा॰ प्र॰ ॥ अस्यगुणा । आमलकुचमुष्णञ्चगुरुविष्टम्भकृत्तथा । मधुरञ्चतथाम्लञ्चदोषत्रितयरक्तकृत् ॥ शुक्राग्निनाशनञ्चापिनेत्रयोरहितन्तुतम् । सुपक्वं तत्तुमधुरमम्लं चानिलपित्तकृत् ॥ कफवन्हिकररुच्य वृष्यंविष्टम्भकञ्चतत् ॥ लक्यते । लकआस्वादने । बाहुलकादुच: ॥

लक्तक । पुं॰ जीर्णवस्त्रखण्डे । कर्पटे । लत्ता॰ इ॰ भ॰ प्र॰ ॥ द्रवद्रव्य येनपूयतेतच्च्युतोयमितिस्वामी ॥ तत्तुल्यं वस्त्रे पिवर्त्तते । मलिनत्वादिदुष्टजीर्णवस्त्रखण्डे॰ इतिमुकुट: ॥ प्रस्वेदादिमार्जनार्थैस्तस्य वस्त्रखण्डस्यसंज्ञ यमितिनव्याआहु: ॥ लक्तते । चोलजीवीर्डे । बाहुलकात्तन् । स्वार्थेकान । यद्वा । लक्यते स्म । लक॰ । क्त: । स्वार्थेकन् ॥

लक्तकर्म्मा । पुं॰ पट्टिकाख्ये । रक्तवर्णलोध्रे ॥

लक्षम् । न॰ व्याजे । अपदेशे । परद्रोहफलकातिरिक्तव्याजे ॥ शरव्ये ॥ न॰ स्त्री॰ दशायुतसङ्ख्यायाम्-१००००० लाख इ॰ भा॰ ॥ लक्षणम् । लक्षआलोचने । घञ् ॥ लक्ष्यतेवा ॥

लक्षक । त्रि॰ लक्षयितरि । लक्षयतियस्तस्मिन् ॥ यथा ॥ लक्षकंनाम लक्षयति । यादृशार्थस्यसम्बन्धवतिशक्त्युपत्ववेत् । तच्चलक्षकं नामतच्छक्तिविधुरंयदि ॥ यादृशार्थसम्बन्धवतियन्नामसङ्केतितदेवतादृशार्थेलक्षकम्॰ यदितादृशार्थेशक्तिशून्यं भवेत् । सैन्धवादयस्तुशब्दास्तुरगादिसम्बन्धिनि॰ लवणादाविवतुरगादावपिशक्ताएव । गङ्गादयस्तुतीरादावसङ्केतिता । तत्सम्बन्धिनीरादिशक्तास्तेनगृहीताएवतीरादान्वयबोधयन्तितच्चलक्षकाएव ॥

लक्षणम् । न॰ नाम्नि ॥ चिह्ने ॥ स्वरूपे ॥ फले ॥ लक्ष्यतेज्ञायतेपदार्थोनेन । लक्षदर्शनाङ्कनयो: । करणेल्युट् ॥ तद्द्विविधम् । इतरभेदानुमापकम्॰ व्यवहारप्रयोजकञ्चेतिन्यायमतम् ॥ व्याकरणमतन्तु । कृत्तद्धितसमासानामभिधानंनियामकम् । लक्षणन्त्वथअभिज्ञानातदभिज्ञानसूचकमिति ॥ सजाती

थविजातीयव्यावर्त्तकोलक्ष्यगत । कश्चिल्लोकप्रसिद्धआकारोलक्षणमिति मीमांसकाः ॥ व्यथयोपियदार्थो नानान्तर्यातिपृथक्त्वश. । लक्षणेनतुसिद्धानामन्तर्यान्तिविपश्चित इतिपूर्वाचार्या. ॥ स्वरूपतटस्थद्विधालक्षणं स्यात्स्वरूपस्यबोधोयतोलक्षणाभ्याम् । स्वरूपेप्रविष्टात् स्वरूपेऽप्रविष्टाद्यथाकाकवन्तोगृहा. स्वविलक्ष ॥ शास्त्रे ॥ इतिवैयाकरणाः ॥ पुं०रामभ्रातरि । सौमित्रौ ॥ सारसखगे ॥ लक्षेश्वरादित्यन्तात्कचेरट् चेतिनत्रस्ययस्तस्याडागमश्च ॥

लक्षणा । पुं० वृत्तिविशेषे ॥ यथा । अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेष्यते ॥ साचत्रिविधा । जहल्लक्षणा० अजहल्लक्षणा० जहदजहल्लक्षणेति । यथास्थानमासांलक्षणमनुसन्धेयम् ॥ शक्यसम्बन्धे ॥ यथा । लक्षणाशक्यसम्बन्धस्तात्पर्यानुपपत्तित: ॥ अस्यार्थ: । गङ्गायांघोषइत्यादौ० गङ्गापदस्यशक्यार्थेप्रवाहरूपे० घोषस्यान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वायत्र प्रतिसन्धीयते तत्रलक्षणयातीरस्यबोध । साच शक्यसम्बन्धरूपा । तथाहि प्रवाहरूपशक्यार्थसम्बन्धस्यतीरेगृहीतत्वात्तीरस्यस्मरणं तत: शाब्दबो

धइतिसिद्धान्तमुक्तावली ॥ शब्दानामौपचारिकीषुप्रवृत्तिषु ॥ यथा । आधारेकारणेकार्येसमीपेचोपकारके । धर्माद्यनुक्तौचेति लक्षणांसूरयोजगु ॥ मुख्यार्थानुगमानुपपत्तेर्गुणार्थप्रतिप्रतीतिकारिणीलक्षणासूरयस्तद्विदोजगु . ऊचु । कुत्रकुत्रेत्याह । आधारइत्यादि । तत्रतावदाधारेयथा । मञ्चा क्रोशन्तीति । अत्रहिमञ्चानामधिकरणभूतानामाचेतन्यात् ० रोदनलक्षणेनक्रोशनार्थेनाननुगमादानर्थक्यात्०तत्स्थानांबालानांसम्बन्धियत्क्रोशनतत्तेषुतात्स्थ्यात्मलक्षणयोक्तम् ॥ कारणेतुलक्षणायथा । शालीन्वृष्टोदेवइति । अत्रहिमुख्ययावृत्त्याशालिवर्षणस्यार्थोनन्वितइतिलक्षणया० कालोचितायांवृष्टौशालिकारणभूतायाप्रतिबन्धवैकल्ययोरसम्भावनात्० सम्पन्नमेवशालिलक्षणंकार्यमुपचर्यते । अथवा आयुर्घृतमिति । आयुष्कारणेघृते० आयुषस्तत्कार्यस्योपचार . ॥ एवकार्येपि लक्षणासम्भवति० यथा । ऊर्णा : प्रावरणा : केचिदपरे तूलावास इति । अत्रकिलसूत्रभाव विना भाविना कम्बलपटादि भावेना परिणतयो रूर्णातूलयोर्मुख्ययावृ

त्याप्रावरणत्वमसम्भावितम् । तत्
कार्य्यक्षम्बलपटात्मनएवतदुपपत्ते.
। ततश्चकम्बलेपटादौचतयोः कार
णभूतयोः कार्णाकार्पासयोरुपचार ।
कृत ॥ समीपार्थलक्षणायथा ।
गङ्गायांघोषइति । अत्रहिमुख्यया
वृत्त्याप्रवहज्जलरूप स्रोत गुणवृ
त्त्यावातद्विशेष यदिकाश्चित्गङ्गाश
ब्द कथयेत् तदान्यासम्भाव्येवग्रा
माधिकरणतेति सामर्थ्यात्तत्सा
मीप्यलक्षणात्वेनतद्यावतिष्ठते ॥
उपकारकेपिलक्षणादृश्यते यथा ।
भिक्षावासयन्तिकारीषोऽध्यापयती
ति । अत्रहिकिलनभिक्षास्तत्प्राव
रणाचलकरेणगृहीत्वागमननिषेध-
कुर्वन्ति । नापिसर्वथाऽस्मात्स्था
नान्नगन्तव्यमितिप्रणयवचनैरवस्था-
पयन्ति । अपितुप्रचुराणव्यञ्जनद्र
व्यस्तृप्तिहेतुत्वान्निरसनक्रियामुपका
रकत्वेनसम्भाव्यमाना प्रयोजक-
त्वेनोपचर्यन्ते । एव चनकारीषोङ्ग
मुत्ताधीर्व्वे तिब्रुवन्माणवकमध्याप
यति । नापितच्छरीरमनुप्रविश्यभू
तवेतालादिभिरिवैन पाठयति ।
किन्तर्हिशीतापनुत्तिहेतुतयाध्यय-
नविध्युपकारकत्वेनानुकूल्य भज
स्तत्प्रयोजकत्वेनोपचरित ॥ कि
चधर्माद्यनुकृताविति आदियक्ष
णादाकारानुकृतौश । तत्रधर्मानु

कृतौयथा । सिंहो माणवकः । गौ
र्वाहीकइति । अत्रकिलगलक्षणया
सिंहधर्माणांशौर्यादीनामनुकृत्यर्थं
माणवकेसामानाधिकरण्येनसिंह
शब्द प्रवृत्त । मुख्ययावृत्यातस्य-
सिंहत्वस्यासम्भवात् । वाहीकेति
पृष्ठवहनत्वासम्भवात्तिष्ठद्गलक्षणग
च्छन्तृणादिवलीवर्दगतधर्मानुकृ
रणायगोशब्द । सामानाधिकरण्ये-
नोपचरितवृत्तिरेवप्रवृत्त । मुख्यया-
वृत्यातथाऽनन्वयात् ॥ एवमाकारा
नुकृतौयथा । सूचिभेद्यैस्तमोभिरि
ति । अत्रहितमसोऽमूर्त्तत्वात्सूचि
भेद्यत्व मुख्ययावृत्यानसङ्गतमतोल
क्षणयातिनिविडत्वबहुमाकृति सू
चिभेद्यत्वेनानुकृता । एव नामघ
नानितमासियद्दाद्विवत्सूच्यादि-
नाभेदमप्येषाबहुशक्यमित्यर्थ । ॥
मानान्तरोपरोधमुख्यार्थस्यापरिग्रहे
जाते मुख्याविनाकृतेर्थेयावृत्ति
सैवलक्षणाप्रोक्तेतिपूज्यपादाचा-
र्य्या इतयोषायाम् ॥ प्रमाणे ॥
लक्ष्यतेऽनयेतिलक्षणा । टाप् ॥
सारस्यालक्षणाक्वचिदितिमेदिनि
कर ॥

लक्षणार्थ । पुं० लक्षणस्यप्रयोजने॥
समानासमानजातीयव्यवच्छेदे ॥
लक्षणस्यअर्थ ॥

लक्षणीय । त्रि० लक्ष्ये ॥ भाव

मीर्ये ॥
लक्षत्वम् । न० लक्षणाव्रत्यायाप्यत्वे ॥
लक्षा । स्त्री० दशायुतसङ्ख्यायाम् ॥
लक्षित . । त्रि० ज्ञापिते ॥ आलोचिते ॥ दृष्टे ॥ अङ्किते ॥ लक्षे . कर्मणिक्त ॥ लक्षणाश्रये ॥
लक्षितलक्षणा । स्त्री० लक्षितलक्षणायाम् ॥
लक्षिता । स्त्री० परकीयान्तर्गतनायिकाभेदे ॥
लक्ष्मण : । पुं० सौमित्री । श्रीरामभ्रातरि ॥ सारसे ॥ वर्त्ते ॥ न० चिह्ने ॥ नामनि ॥ लक्षयति । लक्ष० । चुर । दिव्यताख्यं रट् चतिनप्रत्ययस्य स्यमुडागमो । पीर्थ्ये के ॥ त्रि० श्रीयुक्ते सश्रीके ॥ लक्ष्मीरस्त्यस्य । यामादित्वान्न. । लक्ष्मणाधर्म्मे तिगणसूचेणा त्वंबोध्यं ॥
लक्ष्मणप्रसू : । स्त्री० सुमित्रायाम् ॥
लक्ष्मणा । स्त्री० सारसस्त्रियाम् ॥ श्वेतकण्टकार्याम् । क्षुद्रश्वेतकिन्याम् । कटुवार्त्ताक्याम् नि ' स्त्रे ह फलायाम् । चन्द्रपुष्पायाम् ॥ औषधीभेदे । पुत्रकन्दायाम् । पुत्रदायाम् । नागपत्राम् । अस्तबिन्दुच्छदायाम् । लक्ष्मणाकन्दइतिनाम । गौडदेशेप्रसिद्धे ॥ गुणास्तुयथा । पुत्रकाकारवक्तास्यबिन्दुभिर्लाञ्छितासदा । लक्ष्मणापुत्रजननी वस्तगन्धाकृतिर्भवेत् ॥ कथितापुत्रदावश्यं लक्ष्मणामुनिपुङ्गवै ' ॥ चन्द्रमत्वात्टाप ॥ दुर्योधनकन्यायाम । साम्बपत्न्यां ॥
लक्ष्म न० चिह्ने ॥ प्रधाने ॥ लक्षयति० लक्ष्यतेवा । लक्ष० । मनिन् ।
लक्ष्मी : । स्त्री० विष्णुपत्न्याम् । पद्मालयायाम् ॥ पद्मायाम् । लोकमातरि । मायाम् ॥ सम्पत्ती ॥ शोभायाम् ॥ ऋद्ध्यौषधौ ॥ वृद्धिनामौषधे ॥ फलनीवृक्षे ॥ सीतायाम् ॥ वीरभार्यायाम् ॥ स्थलपद्मिन्याम् ॥ हरिद्रायाम् ॥ शम्याम् दूर्व्यो ॥ मुक्तायाम् ॥ मोक्षप्राप्ती ॥ लक्षयति० पश्यतिनीतिम्भम् । लक्ष० । लक्षेमुंट्चेति० ईप्रत्ययस्यमुट् ॥ लक्षते० लक्ष्यतेवा दुर्गायाम् ॥
लक्ष्मी । स्त्री० लक्ष्म्यर्थेषु ॥ कृदिति ङीष् ॥ लक्ष्मीर्लक्ष्मीश्वरिश्रियामितिद्विरूपाभिधानम् ॥
लक्ष्मीकान्त : । पुं० नारायणे ॥
लक्ष्मीगृहम् । न० रक्तोत्पले ॥ लक्ष्म्यागृहमिवगृहम् ॥ लक्ष्म्यावेश्मनि ॥
लक्ष्मीजनार्द्दन : । पुं० शालग्रामविशेषे ॥ तल्लक्षणयथा । एकद्वारेचतुश्चक्रं नवीननीरदोपमम् । लक्ष्मी

जनार्द्दनञ्चैयरहित वनमालया ॥
इतिब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥
लक्ष्मीताल । पुं० श्रीतालवृक्षे ॥
तीर्थविकासपरिच्छेदविशेषे ॥
लक्ष्मीनारायण । पुं० शालिग्राम विशेषे ॥ तल्लक्षण यथा । एकद्वारे चतुश्चक्रं वनमालाविभूषितम् । नवीननीरदाकारं लक्ष्मीनारायणाभिधम् ॥
लक्ष्मीनृसिंह । पुं० शालिग्रामविशेषे ॥ तल्लक्षणन्तु । द्विचक्रं विस्तृतास्यञ्च वनमालासमन्वितम् । लक्ष्मीनृसिंहं विज्ञेय गृहिणाञ्च सुखप्रदम् ॥
लक्ष्मीपति । पुं० वासुदेवे । नारायणे ॥ लक्ष्म्याः पतिः नरपतौ ॥ पूगे ॥ लवङ्गवृक्षे ॥ सम्पत्तियुक्ते ॥
लक्ष्मीपुत्रः । पुं० कामदेवे तुरङ्गमे ॥ लवे ॥ कुशे ॥
लक्ष्मीपुष्पः । पुं० पद्मरागमणौ ॥
लक्ष्मीफलः । पुं० विल्ववृक्षे ॥ लक्ष्मीप्रद प्रियं वाफलमस्य । शाकपार्थिवादि ॥
लक्ष्मीवान् । पुं० पनसवृक्षे ॥ श्वेतरोहितवृक्षे ॥ त्रि० श्रीले । श्रीमति । श्रीसमन्विते ॥ लक्ष्मीरस्यास्ति । मतुप् । मादुपधायाश्चेतिवत्व ॥

लक्ष्मीवेष्ट । पुं० श्रीवेष्टे ॥
लक्ष्मीश । पुं० श्रीशे । विष्णौ ॥
लक्ष्मीसमाह्वया । स्त्री० रामपत्न्याम् । सीतायाम् ॥ लक्ष्मीसमसाह्वयोयस्याः ॥
लक्ष्मीसहज । पुं० चन्द्रे ॥
लक्ष्म्याराम । पुं० वनविशेषे ॥ लक्ष्म्याः आराम ॥
लक्ष्यम् न० शरवेध्ये । शरव्ये ॥ व्याजे । अपदेशे ॥ त्रि० अनुमेये ॥ लक्षणयाबोध्ये ॥ दर्शनीये ॥ लक्षणम् लक्ष्यतेवा । लक्षआलोचने । ण्यत् ॥
लक्षीकृत । त्रि० वेद्धुमिष्टे ॥
लगडम् । त्रि० चारुणि । बन्धुरे । मनोज्ञे ॥
लगितः । त्रि० सङ्गयुक्ते । लगाड़० भा० ॥ लगेसङ्गे । क्तः ॥
लगुडः । पुं० दण्डे । दण्डकाष्ठे । लाठी० इ० भा० ॥
लग्नः । पुं० स्तुतिपाठके । प्रातर्गेये ॥ न० मेषादिराशीनामुदये । त्रि० श्रुङ्गागात्मके ॥ त्रि० लज्जितेसक्ते ॥ लगतिफले । लगे० । क्षुब्धस्वान्ते तिक्तस्ये डभावोनिष्ठानत्वमपि निपात्यते ॥
लग्नकः । पुं० प्रतिभुविधोद्दिदायंविनाऽन्यकृतऋणस्य परिशोधं कर्त्तुमात्मानं स्वीकरोति० यथा । यद्य

यस्तृष्णापनयन न करिष्यति० तच्च ह करिष्यामीतितस्मिन। आमन० कृ० भा० ॥ लजतेस्म । श्रीलजी ब्रीडने । गत्यर्थेतिक्त । स्वार्थे क. ॥

लघट्। पुं० पवने। वायौ ॥ लङ्घते । लघिगतौ । लङ्घेर्नलोपश्चेत्य टि ॥

लघटिः। पुं० वायौ ॥

लघिमा। पुं० शिवैश्वर्यप्रभेदे ॥ येनलघुर्भवति० यत: सूर्यरश्मी नालम्ब्यादित्यलोकं याति ॥ लघुतायाम् ॥ लघोर्भाव.। पृथ्वादिभ्य इमनि च् ॥

लघिष्ठः। त्रि० अत्यल्पके। अयमेषा मतिशयेनलघु:। अतिशायने० इष्ठन् । भे ले ॥

लघीयान्। त्रि० अतिशयेनलघौ। लघुतरे ॥ यथालघीयान्शब्दोप देशोगरीयानपशब्दोपदेश इति ॥ अयमनयोरतिशयेनलघु:। ईयसुन् ॥

लघु:। पुं० एकमात्रवर्णे ॥ यथा । गुरोर्विभिन्नोलघुरेकमात्रोह्रस्वा दिपूर्वोपिलघुर्विकल्पात्। क्वचित् सबिन्दु: क्वचिदर्द्धबिन्दुरोकारयु क्तोपिलघु: क्वचित्स्यात् ॥ उच्चा र्यमाणास्वरितप्रयत्नात्द्विमात्रव र्णा: क्वचिदेकभावम् । भजन्ति भाषासुयस क्षतेषु विनाशमित्य बुधानयोज्यम् ॥ स्त्री० पृक्कानामौषधौ ॥ न० शीघ्रे ॥ कृष्णागुरुणि ॥ लामज्जके ॥ सत्वगुणे ॥ विशेषनचशब्दौ ॥ यथा। पुष्या श्विन्यभिजिद्धस्तालघुक्षिप्र गुरुस्तथा। अत्रपण्यरतिज्ञानभूषाशिल्प कलादिकम् ॥ त्रि० अगुरौ ॥ मनोज्ञे। नि:सारे ॥ ह्रस्वे ॥ लङ्घते । लघि०लङ्घिबंह्योर्नलोपश्चेति कुर्नलोपश्च ॥ लङ्घतेवा ॥

लघुकाम। त्रि० अल्पयाचके ॥

लघुकाय:। पुं० अल्पायुषि। छागे । बर्करे ॥ त्रि० क्षुद्रशरीरे ॥

लघुकाश्मर्य.। पुं० कट्फलवृक्षे ॥

लघुक्रिय.। त्रि० क्षिप्रव्यापारे ॥

लघुखट्विका। स्त्री० आसन्द्याम् । क्षुद्रखट्वायाम् ॥

लघुगङ्ग.। पुं० विकङ्कटकामतृणे ॥

लघुचर्भिटा। स्त्री० मृगेर्वारौ ॥

लघुजङ्गल:। पुं० लावकपक्षिणि ॥

लघुतम:। त्रि० लघिष्ठे ॥ अतिशा यनेतमप् ॥

लघुदन्ती। स्त्री० क्षुद्रदन्तीवृक्षे ॥

लघुदुन्दुभि:। पुं० ढक्कावाद्ये ॥

लघुद्राक्षा। स्त्री० काकलीद्राक्षायाम् । निर्बीजायाम् ॥

लघुनाम। न० अगुरुणि ॥

लघुपञ्चमूलम्। न० क्षुद्रपञ्चमूल

पाचने ॥ तद्यथा । शालपर्णीपृश्नि पर्णीवार्ताकीकण्टकारिका । गोक्षु र पञ्चभिश्चैते' कनिष्ठ पञ्चमूल कम् ॥ अस्यगुणा : । पञ्चमूल लघु स्वादुबल्य पित्तानिलापहम् । ना त्युष्ण ग्र हण याहिज्वरश्वासाश्मरी प्रणुत् ॥

लघुपञ्चमूली । स्त्री॰ लघुपञ्चमूले । शालपर्ण्यादौ ॥ पञ्चानांमूला नांसमाहार . पञ्चमूली । लघ्वी चासौपञ्चमूलीचे तिविग्रह' ॥

लघुपत्रिका । स्त्री॰ रोचन्याम् ॥ गु ण्डारोचन्याम् ॥

लघुपत्री । स्त्री॰ अश्वत्थीवृक्षे ॥

लघुपिच्छिल . । पुं॰ भूकर्वुदारके ।

लघुपुष्प : । पु॰ भूमिकदम्बे ॥

लघुवदर । पुं॰ क्षुद्रकोली । सूक्ष्म फले ॥

लघुवदरी । स्त्री॰ भूवदर्याम् ॥

लघुब्राह्मी । स्त्री॰ क्षुद्रब्राह्म्याम् । जलो द्भवायाम् । सूक्ष्मपत्रायाम् ॥

लघुमन्थ' । पुं॰ क्षुद्राग्निमन्थे ॥

लघुमास । पुं॰ तित्तिरिपक्षिणि ॥

लघुमासी । स्त्री॰ गन्धमांस्याम् । भूतकेश्याम् ॥

लघुराजमृगाङ्क . । पुं॰ औषधिविशे षे ॥ यथा । घृततीक्ष्णयुत सुर सास्वरसोलघुराजमृगाङ्कइतिप्रथि त: । अपहन्त्यनिलान्सबलान्बहु

लाग्निजभक्तरिपून्निवहञ्जधरद्युति लोलिम्नराज ॥ *

लघुलयम् । न॰ वीरणमूले । नलदे ॥ लङ्घतेरोगान्॰ लङ्घ्यतेवाभूम्य स्मात् । लघि॰ । लघिश्छोरिति कु' । लीयते । लीङ्श्लेषणे । अच् । लघुचतत्लयञ्च ॥

लघुसदाफला । स्त्री॰ क्षुद्रोदुम्बरे ॥

लघुहस्त' । पु॰ शीघ्रवेधिनि ॥

लघुहंसक । पुं॰ क्षतहंसे ॥

लघुहैमदुग्धा । स्त्री॰ लघूदुम्बरिका याम् ॥

लघूदुम्बरिका । स्त्री॰ क्षुद्रोदुम्बरि कायाम् ॥ लघुसदाफलायाम् ॥

लघूद्यरम् । न॰ मात्राकाले ॥ निमे षोन्मेषणे मात्राकालोलघूच्चरन्त श्चेतिपुराणम् ॥

लघ्वाशी । त्रि॰ परिमितभोज्याशिनि लघुपरिमित भोज्यञ्चाशितु शी ल यस्य ॥ निद्रालस्यादिचित्तलय कारिरहिते ॥

लघ्वी । स्त्री॰ लाघवयुक्तायाम् ॥ स्यन्दनस्यप्रभेदे ॥ पृक्कायाम् ॥ द न्त्याम् ॥ लघुस्त्रियाम् ॥

लङ्का । स्त्री॰ दक्षिणभारतवर्षस्य निरक्षदेशेविद्यमानायारक्ष' पुर्या म् । अधुनाशैलन्॰ इतिख्याता याम् ॥ जम्बूद्वीपस्योपद्वीपविशेषे शाखायाम् ॥ शाकिन्याम् ॥

कुलटायाम् ॥ धान्यविशेषे । अरालचिपुटायाम् ॥ लङ्कयतेसुखमस्याम् । लकआस्वादने । चुरादि । एरच् । घञ्वा । पृषोदरादित्वान्नुम् । नुम्यनुपधत्वान्नलि . ॥ यद्वा । रमन्तेऽस्याम् । वाहुलकात्कोलत्वञ्च ॥

लङ्कादाही । पु० हनूमति ॥

लङ्काधिपतिः । लङ्कापतिः । पुं० रावणे ॥

लङ्कापिका । स्त्री० पृक्कायाम् । पिडिङ्शाक० इ० गौ० दे० भा० प्र० ॥

लङ्कामलय । पु० लङ्काद्वीपस्थमलयशैले ॥

लङ्कायिका । स्त्री० ) लङ्कारिका । स्त्री० लङ्कायिकायाम् ॥

लङ्कास्थायी । पुं० वृक्षविशेषे । लङ्कास्थास्याम् । लङ्कासिज० इ० गौ० दे० भा० प्र० ॥

लङ्केश । पुं० रावणे ॥

लङ्कोपिका । स्त्री० पृक्कौषधौ ॥ लङ्कायामुप्यते । टुवप्बीजसन्ताने । क्वुन् । बाँचस्पतीतिवस्वउ. ॥

लङ्कोयिका । स्त्री० पृक्कायाम् ॥ लङ्कायामूयते । अयीतन्तुसन्ताने । क्वुन् ॥

लङ्ग । पुं० लङ्गे ॥ बिङ्गी । लाङ्

इ० गौ० भा० प्र० विटे ॥

लङ्गूलम् । न० लाङ्गूले । पुच्छे ॥

लङ्घनम् । न० उपवासे ॥ कर्षणे ॥ चतुष्प्रकारासंशुद्धि पिपासामारुतातपौ । पाचनान्युपवासश्च व्यायामश्चेतिलङ्घनमितिचरकोक्तौ यथानिर्णीतत्वात् ॥ अनशने ॥ लङ्घनेनक्षयं नीतेदोषे सन्धुक्षितेऽनले । विज्वरत्वंलघुत्वञ्चक्षुच्चैवास्योपजायते ॥ इत्यनशनरूपस्य लङ्घनस्यफलकथनात् ॥ त्रिरात्रं पञ्चरात्रं वाद्दशरात्रमथापिवा । लङ्घनं सन्निपातेषु कुर्यादारोग्यदर्शनादितिचक्रपाणिदत्त : ॥ क्रमणे ॥ प्लवने ॥ अश्वतृतीयगतौ ॥ प्लुतन्तुलङ्घनं पक्षिमृगगत्यनुकारकमितिहेमचन्द्रोक्तौ ॥ क्रमणे । यथा । नचाग्निंलङ्घयेद्धीमान् नोपदध्यादधः . क्वचित् । नचैनं पादतः कुर्यान्मुखेननधमेद्बुधः ॥

लजकारिका । स्त्री० लज्जालौ । वराहक्रान्तायाम् । समङ्गायाम् । तिलगम्भायाम् । नमस्कार्याम् ॥

लज्जा । स्त्री० मन्दाक्षे । त्रपायाम् सुशीलस्यभार्येयम् । पद्मशान्तिम ॥ कृतेऽकरणीयेपरज्ञानसशङ्क्याद्युत्वं ॥ अकरणीयाप्रवृत्तिजनकोऽत्र : करणस्यवृत्तिविशेषे ॥ लज्जनम । ओलस्जीव्रीडने ।

गुरोश्चइलदृत्य । भर्लाजभ्भ-
ग्नि । टाप् । लज्जालौ ॥
लज्जालु । पु० स्त्री० वराहक्रान्ताया
म् । नमस्कार्याम् । खदिरपत्रिका
याम् । सङ्कोचिन्याम् ॥ लज्जा
लु शीतलातिक्ताकषायाकफपि-
त्तनुत् । रक्तपित्तमतीसारयोनिरो
गान्विनाशयेत् ॥
लज्जाशील । त्रि० अपत्रपिष्णौ । ल
ज्जिते ॥
लज्जितः । त्रि० लज्जायुक्ते । सल
ज्जे । ह्रीणे । ह्रीते ॥ लज्जासञ्जा-
तास्य । तारकादित्वादितच् ॥
लज्जिरी । स्त्री० लज्जालौ ॥
लज्या । स्त्री० लज्जायाम् ॥ इतिश-
ब्दरत्नावली ॥
लञ्ज । पु० पदे ॥ कच्छे ॥ पुच्छे ॥
लञ्जिका । स्त्री० वेश्यायाम् ॥
लट । पु० प्रमादवचने । दोषे । ल
टति । लटबाल्ये । अच् ॥
लटक । पु० दुर्जने ॥ संज्ञायांकन् ॥
लटपर्णम् । न० त्वचे ॥
लट । पुं० दुर्जने ॥
लट्वः । जातिविशेषे । नट० इ० भा० ॥
रागभेदे ॥ तुरङ्गमे ॥ इत्युणादि-
कोष ॥
लट्वा । स्त्री० करञ्जप्रभेदे । फले । च
वर्षे ॥ पक्षिविशेषे ॥ कुसुम्भे ॥
लटति । लट० । अशूप्रुषिलटीति
कन् । टाप् ॥
लडह । त्रि० मनोज्ञे ॥ इतित्रिका
ण्डशेष ॥
लड्ड । त्रि० दुर्जने ॥ इतिशब्दरत्ना-
वली ॥
लड्डुकः । पुं० मोदके । लड्डू० लाडू०
इ० भा ॥ लड्डुकोदुर्जरोगुरुरिति-
राजवल्लभ ॥ दधिशाल्यस्तथादुग्ध
कानिक्यामाषपर्पटा । गुरुखार्द्र
ककूष्माण्डशालूकामिषमत्स्यजाः ॥
नालिकेरप्रियालस्त्रमज्जाकूष्माण्ड-
कादय । एतेषांलड्डुकाः प्रो-
क्ता सम्भवन्त्यन्यतोपिच ॥
लण्डू । पु० लण्डनइतिख्यातेइङ्ग्ल
ण्डपुरे ॥
लण्डुज । पु० लेण्डुजे । इङ्रेजे ॥
लता । स्त्री० प्रियङ्गौ ॥ शाखाया-
म् ॥ पृक्कायाम् । ज्योतिष्मत्या-
म् ॥ लताकस्तूरिकायाम् ॥ मा-
धव्याम् ॥ दूर्वायाम् ॥ शाखिशा
खायाम् ॥ अशनपर्ण्याम् ॥ कैव
र्त्तिकायाम् । सारिवायाम् ॥ वल्
ल्याम् । प्रतती ॥ लतति । ल-
ति । सौत्रोवेष्टनार्थे । लतयाघा
तैवा । पचाद्यच्टाप् ॥
लताकस्तूरिका । स्त्री० लताकस्तूर्या
म् । दक्षिणदेशजायाम् । मुष्कदा
ना० इतिख्यातायाम् ॥ लताकस्तू
रिकातिक्तास्वादीवृष्याहिमालघुः ।

चक्षुष्याऽद्द्नौम्नि प्रतष्ठावस्थास्य दिगक्षत् ॥

लताजिह्व । पु॰ सर्पे ॥ लतेवजिह्वाऽस्य ॥

लतातरु पुं॰ तालवृक्षे ॥ नारङ्गवृक्ष ॥ शालवृक्षे ॥

लताद्रुम । पुं॰ लताशाले । अश्वकर्णाह्वये । तार्क्ष्ये ॥

लतापनसः । पु॰ चलाले । चित्रफले । सुखाशे । नाटाम्रे । तरमुर्ज्ञ ति॰तरबूज्ञ॰चख्याते ॥

लतापूका । स्त्री॰ समुद्रान्तायाम् । पिण्डिङ्गशाक॰ष्ठू॰गौ॰दे॰भा॰प्र॰॥

लताफलम् । न॰ पटोले । लतायाः फले ॥

लताभद्रा । स्त्री॰ भद्रालीवृक्षे ॥

लतामणिः । पु॰ विद्रुमे । प्रवाले ॥

लतामरुत् । स्त्री॰ पृक्कायाम् ॥

लतायष्टि । स्त्री॰ भण्डीर्याम् । मञ्जिष्ठायाम् ॥

लतायावकम् । न॰ प्रवाले ॥

लतारसन । पुं॰ सर्पे ॥

लतार्क । पुं॰ दुद्रुमे । हरितवर्णपलाण्डौ ॥ लतासुअर्क्यतेअर्च्यतेवाविरुक्तलक्षणयानिरुच्यते । अर्कस्तवने॰अर्चपूजायांवाघञ् ॥

लतार्कक । पुं॰ दुद्रुमे ॥ स्वार्थेकन् ॥

लतालक । पुं॰ गजे । हस्तिनि ॥

लतावेष्ट । पु॰ देशविशेषे ॥ रतिबन्धप्रभेदे ॥ यथा ॥ बाहुभ्यांपादयुग्माभ्यांवेष्टयित्वास्त्रियभवेत् । लघुलिङ्गताडनयोनौलतावेष्टोयमुच्यते ॥

लतावेष्टितकम । पुं॰ आलिङ्गनभेदे ॥

लताशङ्कुः । पु॰ शालवृक्षे ॥

लताश्रम । पु॰ लतामण्डपे ॥ लताविशिष्ट आश्रम ॥

लतिका । स्त्री॰ लतायाम् । स्वार्थेकन् । प्रत्ययस्थादितीत्वम् ॥

लत्ता । स्त्री॰ योगविशेषे ॥ यथा । चराहुपूर्णेन्दुसिता । स्वपृष्टे॰भसप्तगोजातिशरे ७ । ६ । २२ । ५ मितद्धि । सलत्तयन्त्यऽकशनीज्यभौमा सूर्याष्टतर्काग्निजित १२८। ६३ पुरस्तात् ॥ अस्या फलंयथा । रवेर्लत्ताविसहरीनिस्व कोजीविनिर्दिशेन्मरणम् । चान्द्रीनाशकुर्याद्बौधीनाशंवदन्त्येवर ॥ सौरीमरण करोतिबधूविनाश ब्रह्मस्य तेर्लत्ता । मरण लत्ताराहो कार्यविनाश भृगोर्वदन्ति ॥

लत्विका । स्त्री॰ गोधायाम् । लतिसौत्र । क्वदिभिदिलतिभ्यः कित्
दितितिकन् ॥ लत्वायाम् ॥

लपनम् । न॰ आनने । मुखे ॥ लप्यतेनेन । लपव्यक्तायांवाचि । करणेल्युट् ॥ भाषणे ॥

लपितम । न॰ वचने ॥ लप॰ । भावे क्त ॥ त्रि॰ उक्ते । कथिते ॥ लप्यतेस्म । लप॰ । क्त ॥

लप्सिका । स्त्री॰ सर्पिः पयोभ्यां पक्व खाद्यवस्तुनि । लपसी॰ ल्लापसी तिच॰ ख्यातायाम् ॥ सा यथा । समितासर्पिषाभ्रष्टाशर्करापयसि-क्षिपेत् । तस्मिन्घनीकृतेन्यस्येल्लवङ्गमरिचादिकम् ॥ सिद्धैषालप्सिका ख्यातागुणानस्यावदाम्यहम् ॥ लप्सिकात्र वृष्यावल्या पित्तानिलापहा । स्निग्धाश्लेष्मकरीगुर्वीरोचनीतर्पणीपरम् ॥

लब्ध । त्रि॰ प्राप्ते ॥ सातेभवतुसुप्रीतादेवीशिखरवासिनी । उग्रेणतपसालब्धोययापशुपति पतिरिति लभ्यतेस्म । डुलभष्प्राप्तौ ॥ क्त ॥

लब्धप्रशमनम । न॰ न्यायलब्धधनस्य सत्पात्रे प्रतिपादने ॥ राज्ञ्यप्यचिरलब्धस्यशमनंपरिपन्थिनाम् । रक्षनप्रतिकाराभ्यालब्धप्रशमनविदुः ॥

लब्धलक्ष्य । त्रि॰ आयुधविदि । लक्ष्याद्प्रच्युतशरे ॥ लब्धं लक्ष्यं येन ॥

लब्धवर्णः । पु॰ विचक्षणे ॥ विदुषि । पण्डिते ॥ लब्धोवर्णः स्तुतिर्येन ।

लब्धव्यः । त्रि॰ प्राप्तव्ये । लभ्ये ॥

लब्धप्रवेशः । त्रि॰ प्राप्तप्रवेशे ॥

लब्धा । स्त्री॰ नायिकाभेदे ॥

लब्धि । स्त्री॰ प्राप्तौ ॥ डुलाभष्॰ । स्त्रियांक्तिन्नावादिभ्य ॥

लभस । पु॰ धने ॥ याचके ॥ वाजिबन्धनरज्जौ ॥ रभते । डुलभष्॰ । अत्यविचमितमीत्यादिना॰ असच् ।

लभ्य । त्रि॰ युक्ते ॥ लब्धव्ये ॥ लभ्यते । डुलभष॰ । पोरदुपधादितियत् ॥ लाभे ॥

लमक । पु॰ ऋषिविशेषे ॥ रमते । रम॰ । रमेरश्च लो वा ॥ लक्ष्य न् ।

लम्पट । पु॰ षिङ्गे ॥ मूर्खे ॥ यथा श्रीभागवते । यथैहिकामुष्मिककामलम्पटः सुतेषु दारेषु धनेषु चिन्तयन् । शङ्कत॰ विद्वान्कुकलेवरात्ययात् ॰ यस्तस्ययत्न श्रमएवकेवलमिति ॥ ऐहिकामुष्मिककामेषु ॰ लम्पटोमूर्खः सुतादिषु योगक्षेमं चिन्तयन् ॰ कुत्सितस्य कलेवरस्य॰ अत्ययात् मृत्योः शङ्कते । तथाविद्वानपि सन्नृप । शङ्कत॰ तस्ययत्न श्रमएवेत्यर्थः ॥ लोलुपे ॥

लम्पाकः । पु॰ लम्पटे ॥ देशविशेषे ॥

लम्पापटह । पुं॰ वाद्यप्रभेदे । पटहे ॥

लफ । पु॰ प्लुतगतौ । लाफ॰ इ॰ भा॰ ॥

लम्ब । पु॰ नर्त्तके ॥ अङ्गे । कान्ते उत्कोच ॥ अंशभेदे ॥ क्षेत्रादौ लम्बमानरेखासूत्रे ॥ त्रि॰ दीर्घे ॥ लम्बते । लबिअवस्रंसने । अच् ॥

लम्बकर्णः । पुं॰ अङ्कोठपादपे ॥

कृगन्ने । राचसी ॥ हस्तिनि ॥ श्ये नपचिणि ॥ दीर्घग्रीवे ॥ चि॰ दीर्घग्रीववति ॥

लम्बकर्णी । स्त्री॰ गोविशेषे ॥

लम्बकेश । पुं॰ विष्टरे ॥ सतुविवाह कालेवरोपवेशनार्थसार्द्धद्वितयबा-मावर्त्तवलिताधोमुखाअसङ्ख्याताद्भर्भा. । यथा । ऊर्द्ध्वकेशीभवेद्ब्रह्मा लम्बकेशस्तुविष्टर । दक्षिणावर्त्तकोब्रम्हावामावर्त्तस्तुविष्टर ॥ केशो ऽत्रायम् । त्रि॰ दीर्घकेशयुक्ते ॥

लम्बदन्ता । स्त्री॰ सैंहलीपिप्पल्याम । त्रि॰ बृहद्दशनविशिष्टे ॥

लम्बन: । पुं॰ कफे ॥ लम्बते । लवि॰ । नन्द्यादित्वाल्ल्यु ' ॥ न॰ नाभिलम्बितकण्ठिकादौ । लअ न्तकायाम् ॥

लम्बमान: । त्रि॰ लम्बायमानेवस्तुनि ॥

लम्बबीजा । स्त्री॰ सैंहल्यांपिप्पल्याम् ॥

लम्बा । स्त्री॰ पद्मालयायाम् ॥ गौर्याम् ॥ तिक्ततुम्बयाम् ॥ दुग्धदुग्धि कविशेषे ॥ हिमालयकन्याविशेषे ॥

लम्बिका । स्त्री॰ घण्टिकायाम् । उपजिह्वायाम् । तालूर्ध्वसूक्ष्मजिह्वायाम् ॥

लम्बित: । त्रि॰ लम्बमानेमाल्यादौ ॥ शब्दिते ॥ स्रसिते ॥ लम्बते । लवि॰ । क्त ' । इट् ॥

लम्बोदर: । पुं॰ श्रीगणेशे । गजानने ॥ उदाने ॥ त्रि॰ चाद्यूने । औदरिके ॥ लम्बमुदरंयस्यस: ॥

लम्बोष्ठ । पुं॰ )
लम्बौष्ठ । पुं॰ ) उष्ट्रे त्रि॰ लम्बितौष्ठे ॥ लम्बावोष्ठौयस्यस ' । ओत्वोष्ठयो: समासेवा ॥

लम्भनम् । न॰ प्राप्तलम्भे । लाभे ॥ ध्वनौ ॥

लम्भनीय । त्रि॰ प्रापणीये ॥

लम्भा । स्त्री॰ वाटशृङ्खलायाम् ॥

लम्भित । त्रि॰ प्रयुक्ते ॥ प्रापिते याचिते ॥ लभेर्ण्यन्तात्कर्मणि क्त ' । रभेरशब्लिटोरितिनुमागम ' ॥

लम्भुक । त्रि॰ लम्भनशीले । लब्धरि ॥

लय ' । पुं॰ विनाशे ॥ संश्लेषे ॥ तौर्यत्रिकसाम्ये । गीतवाद्यपादादिन्यासानांक्रियाकालयो: साम्ये ॥ लयनम् । लीङ्श्लेषणे । एरच् ॥ लीयन्तेऽस्मिन्त्वेतनेन वा ॥ प्रलये ॥ मोक्षे ॥ लीयतेऽस्मा न्नहयमस्मिन्निति॰ सुषुप्तौ ॥ अखण्डवस्त्वनवलम्बनेनचित्तवृत्तेर्निद्रायाम् ॥ न॰ उशीरे । लीयते ॥ लीङ् ॰ । पचाद्यच्

लयनम् । न॰ गृहे । वेश्मनि ॥ ली यतेऽस्मिन् । लीङ् । ल्युट् ॥

लयपुत्री । स्त्री॰ नर्त्तक्याम

लयारम्भ । ) पुं॰ सर्वर्वेश्मिनिनटे ॥
लयालम्ब । )

लल । पुं॰ विलासे ॥ लडति । लडविलासे । ललतेवा । ललईप्सायाम । पचाद्यच् । पूर्ववडलयोरैक्यम् ॥ ईप्सायाम ॥

ललज्जिह्व । पुं॰ क्रमेलके । उष्ट्रे ॥ शुनि ॥ त्रि॰ हिंस्रे ॥

ललत् । त्रि॰ विलासयुक्ते ॥ उन्मन्थनविशिष्टे ॥ जिह्वाक्रियाविशिष्टे ॥ सचेपे ॥ ललते । कर्त्तरिशत ॥ ईप्साविशिष्टे ॥ उपसेवायुक्ते ॥ भाषणविशिष्टे ॥

ललदम्बु । पुं॰ लिम्पाके ॥

ललन । पुं॰ वाले ॥ साले ॥ प्रियासे ॥ न॰ केलौ ॥ चालने ॥ अतिविस्तारवदनाजिह्वाललनभीषणा ॥

ललना । स्त्री॰ विशेषाङ्गनायाम् । कामिन्याम् । नारीभेदे ॥ जिह्वायाम् ॥ ललते । लल॰ चुरादीनां णिजितिपक्षे । ल्युट् ॥ लडति । लडविलासे । बहुलमन्यत्रापीतियुच् । डलयोरैक्यम् । टाप् ॥

ललनाप्रिय । पुं॰ कदम्बे । कामिनीवल्लभे ॥ न॰ ह्रीबेरे ॥

ललन्तिका । स्त्री॰ लम्बने । आनाभिलम्बिकण्ठिकायाम् ॥ किञ्चिदवलम्बमानकण्ठभूषणे ॥ लडति । लड॰ । लट शत्र । उगितश्चेति ङीप् । डलयोरेकत्वम् । ललन्त्येव । स्वार्थेकन् ॥ गोधायाम् ॥

ललाक : । पुं॰ मेहने ॥

ललाटम् । न॰ अलिके । गोधौ ॥ भाले ॥ ललंभ्रुवोरुपरिस्थाने । विलासमीप्सावा॰अटति॰ । अटगतौ । कर्मण्यण ॥ लडतिललतेवा । लडललधातुभ्यांबाहुलकादाटच् ॥ अस्य शुभाशुभलक्षणमुक्तं गारुडे यथा । उन्नतैर्विपुलैः शङ्खैर्ललाटैर्विषमैस्तथा । निर्द्धनाधनवन्तश्चअर्द्धेन्दुसदृशैर्नराः ॥ आचार्याः शुक्तिविशालैः शिरालैः पापकारिणः । उन्नताभिःशिराभिस्तु स्वस्तिकाभिश्चेश्वराः ॥ निम्नैर्ललाटैर्बधार्हाः क्रूरकर्मरतास्तथा । संवृत्तैश्चललाटैश्चकृपणाउन्नतैर्नृपाः । ललाटोपस्थतास्तिस्रोरेखाश्च शतवर्षिणाम् । नृपत्वं स्याच्चतसृभिरायुः पञ्चनवत्यथ ॥ अरेखेणायुर्नवतिर्विच्छिन्नाभिश्चपुंश्चलाः । केशान्तोपगताभिश्चअशीत्यायुर्नरोभवेत् ॥ पञ्चभिः सप्तभिः षड्भिः पञ्चाशद्द्विभिस्तथा । चत्वारिंशच्चवक्राभिस्त्रिंशदभ्रूलग्न

गामिभि ॥ विशतिर्वामवक्राभि
रायु चन्द्राभिरल्पकम् । नपृथू
बालेन्दु निर्भ भ्रुवौचायललाटकम्
॥ शुभमर्द्धेन्दु सस्थानमतुङ्ग स्याद
सीमशम् । इति ६५ अध्याय ॥
ललाटकम् । न० प्रशस्तललाटे ॥
ललाटमात्रे ॥
ललाटन्तप । पुं० सूर्ये ॥ ललाट
तपति । तपसन्तापे । असूर्यलला
टयोरितिखश् । मुम् ॥
ललाटिका । स्त्री० स्वर्णादिकृतेभाल
भूषणे । पत्रपाश्यायाम् । पानेपा
टी० विन्दीबेना० टीकाटीको० इ
तिख्याते ॥ ललाटस्यालङ्कार ।
ललटेभवोऽलङ्कारोवा । कर्णल
लाटात्कनलङ्कारे ।
ललामम् । न० पुं० लाञ्छने ।
ध्वजे ॥ शृङ्गे ॥ प्रधाने ॥ भूषाया
म् ॥ रम्ये ॥ बालधौ ॥ पुण्ड्रे ।
अश्वादीनाभालेऽन्यवर्णचिह्ने ॥
तुरङ्गे ॥ प्रभावे । अश्वस्यभूषाया
म् ॥ लडनम् । लडवाल्ये० ल
डविलासेवा । सम्पदादित्वात्क्विप्
। डलयोरेकता । ललमतिअमग
त्यादौ । कर्मण्यण् ॥
ललामकम् । न० पुरोभागेन्यस्ते
ललाटपर्यन्तमागतेशिखालविमा-
ल्ये ॥ ललाममिव । इवार्थेकन्
॥ मुण्डमालायाम् ॥

ललाम । न० अश्वे ॥ चिह्ने ॥ शृ-
ङ्गे ॥ पताकायाम् ॥ रम्ये ॥ प्रधा
ने ॥ भूषायाम् ॥ पुण्ड्रे ॥ पुच्छे
॥ प्रभावे लडनम्० लल् । लल
माअमति । अम० । बाहुलकात्
कनिन् ॥
ललामी । स्त्री० उत्क्षिप्तिकायाम् ।
कर्णाभरणविशेषे ॥
ललित १ । पुं० प्रातर्गेयरागविशेषे
॥ यथा । प्रातर्गेयास्तुदेशाखीललि
त . पठमञ्जरी । विभाषाभैरवीचै
वकामोदीगौडकीयपि ॥ अस्यस्व
रूपयथा । प्रफुल्लसप्तच्छदमाल्यधा
रीयुवातिगौरोऽलसलोचनश्री ।
त्रिनि सरन्वासगृहात्प्रभातेवि
लासिवेशोललित प्रदिष्ट ॥ न०
स्त्रीणांशृङ्गारभावजक्रियाविशेषरू-
पेहावविशेषे॥ सुकुमारविधानेनभ्रू
नेत्रादिक्रियासचिवकरचरणाङ्गवि
न्यासोललितम् । तथाच । सुकु
माराङ्गविन्यासिमसृणाललितभवेत्
। यथा । सभ्रूभङ्ग करकिशलयाव-
र्त्तनैरापतन्तीसाक्षिप्यन्तीललित-
ललितालोचनस्याञ्जनेन । विन्य
स्यन्तीचरणकमलेलीलयास्वैरयाति-
निः शङ्काचप्रथमवयसानर्त्तिताप
ङ्कजाक्षी ॥ भ्रूनेत्रादिक्रियाणांलि
सुकुमारविधानत . । हस्तपादाङ्ग
विन्यासस्तथाललितंविदुरित्यन्ये

पि ॥ अनाचार्य्योपदिष्ट स्याल्ललित रतिचेष्टितमित्यन्ये । अपिच । विन्यासभङ्गिरङ्गानांभ्रूविलासमनोहरा । सुकुमाराभवेद्यत्रललितत दुदीरितम् ॥ विषमवृत्तप्रभेदे । यथा । नयुगसकारयुगलञ्चभवतियदिचे तृतीयके । तदुदितमुरुमतिभिर्ललितयदिशेषमस्यसकलयथोक्तता ॥ यथा । व्रजसुन्दरीसमुदयेनमुदितमनसासमपीयते । हिमकरगलितमिवामृतकललितमुरारिमुखचन्द्रविच्युतम् ॥ त्रि० ईप्सिते ॥ कोमले ॥ ललिते । मधुरे ॥ लडेर्ललेर्वाभावेक्तः । डलयोरभेदः ॥ सुन्दरे ॥

ललितकान्ता । स्त्री० मङ्गलचण्डिकायाम् ॥

ललिता । स्त्री० देवीविशेषे ॥ गोपीविशेषे ॥ नदीविशेषे ॥ सागराद्दक्षिणात्पूर्वंमहादेवावतारिता । वैशाखशुक्लपक्षस्यतृतीयायांनरस्तुय. । कुर्य्याद्दैललितास्नानसशम्भुसदनंव्रजेत् ॥ कस्तूर्याम् ॥ लघुसिकाभेदे ॥ मेघरागस्यरागिण्याम् ॥

ललितासप्तमी । स्त्री० भाद्रशुक्लसप्तम्याम् ॥

ललितिका । स्त्री० शान्तनुतीर्थे ॥

लल्ल : । पुं० आचार्य्यविशेषे । वराहमिहिरसुते ॥

लव : । पुं० लेशे ॥ विनाशे ॥ छेदने कालभेदे । अष्टादशनिमेषाःकाष्ठात्रयस्त्वणइतिहेमचन्द्रोक्ते ॥ पक्षिविशेषे । लवा० हि० भा० प्र० गोपुच्छलोमसु ॥ रामनन्दने ॥ लवोन्मृष्टोलव : । वाल्मीकिना० लवैर्गोपुच्छलोमभिरुन्मृष्टोगर्भक्लेदोयस्य ॥ नवाशे ॥ लवनम्० लूयतेवा । लूञ्छेदने । ऋदोरप् ॥ विलासे । इतिविनाशस्थानेपाठो विश्वहेमचन्द्रयो ' सम्मत : ॥ न० लामज्जके ॥ जातीफले ॥ लवङ्गे ॥

लवङ्गम् । न० देवकुसुमे । श्रीसञ्ज्ञे । श्रीपुष्पे । वारिसम्भवे । भृङ्गारे । लौंग० हि० भा० प्र० ॥ गुणास्तु । लवङ्गं कटुकंतिक्तं लघुनेत्रहितमतम् । दीपनपाचनरुच्यं कफपित्तास्रनाशकृत्॥ तृष्णाछर्द्दिं तथाध्मानशूलमाशुविनाशयेत् । कास श्वासञ्चहिक्काञ्चक्षयञ्चक्षपयति ध्रुवम् ॥ लुनाति० लूयतेवा । लूञ्० । तरत्यादिभ्यश्चेत्यङ्गच् ॥

लवङ्गकम् । न० } लवङ्गे
लवङ्गकलिका । स्त्री० }

लवंगलता । स्त्री० पुष्पविशेषे । गन्धराजइतिकश्चित् ॥

लवण । पुं० समुद्रविशेषे ॥ राक्षसभेदे । लवणासुरे ॥ रसविशेषे । पटौ ॥ पृथ्व्यग्निगुणबाहुल्याल्लव

वास्यचसम्मत । अस्यगुणायथा । लवण . शोधनोरुच्य: पाचन. कफपित्तद । पुंस्त्ववातहर : कायशैथिल्यमृदुताकर ॥ सोति युक्तोऽचिपाकास्रपित्तकोष्ठचयापक्रत् ॥ अपिच । लवणोरुचिकृद्रसोग्निदायीपचन स्वादुकरश्च रसितोनितराजरास्रपित्त शितिमानश्चददातिकुष्ठकारी ॥ पुनश्च । लवण . छेदनस्तीच्ण पाचनोदीपन सर स्निग्धोरुचिकर : स्यन्दीहृष्टिशुक्रघ्नरोलघुरिति ॥ पुनश्च । अस्थिभेदं ॥ न० सैन्धवादौ ॥ तथाहि । सामुद्रयत्तुलवणमक्षीव यशिरस्ततत् । सैन्धवोस्त्रीशीतशिव माणिमन्थश्चसिन्धुजं ॥ रोमक वसुक पाक्य विडश्चक्रतकेदृयम् । सौवर्चलेऽचरुचके तिलक तत्मे चके क्रत्यमर : । लवणमेचयोर्हि प्रायश . सैन्धवमिनेतिविशेष : पूर्वोक्तणकालेषाम्लानांप्रायशोलवणहितम् । शुलानाहविवन्धघ्न लवण सैन्धवं वरमितिसिद्धयोगोक्तर सङ्ग्रह . । चि० लवणरसयुक्त । सलवणे । सलूणा० इ० भा० ॥ लुनातिजाड्यम् । लूञ् ० । न न्द्यादित्वाल्ल्यु : । लवणाङ्गुगिति लिंगाणत्वम् ॥ लवणेनस ह्हष्ट : । लवण : सूप० लवणायवागू० लवणंशाकम् । ससृष्टेर्थेनातस्य ठञो लवणाङ्गुगितिलुक् ॥ लवणो स्त्यस्यास्मिन्वा । अर्शआद्यच् ॥

लवणाब्धिशुक्ता । स्त्री० महाज्योतिष्मत्याम् ॥

लवणक्षार : । पुं० क्षारविशेषे । लोणारे ॥

लवणखानि . । स्त्री० रुमायाम । सांभरलवणोत्पत्तिस्थाने ॥ लवणाकरमात्रे ॥

लवणतृणम् । न० लोणतृणे । तृणाम्ल । पटुतृणके । अम्लकाण्डे ॥

लवणत्रयम् । न० विडरुचकसैन्धवेषु ॥

लवणधेनु । स्त्री० दानार्थलवणादिनिर्मितधेनौ ॥

लवणपञ्चकम् । न० सैन्धवादिषु ॥ सैन्धव रुचकाश्चैवविड सामुद्रका गडम् ॥

लवणमद : । पुं० लोणारे । लवणक्षारे ॥

लवणा । स्त्री० नदीविशेषे । त्विषिमहाज्योतिष्मत्याम् ॥ लोनाख्यप्र० इतिकश्चित् ॥

लवणाकर : । पुं० लवणोत्पत्तिस्थले ॥ रुमायाम् ॥

लवणाकरजम् । न० लोणारे ॥

लवणाचल । पुं० दानार्थलवणादिकृतपर्वते ॥

लवणाब्धि । पुं॰ लवणोदे । क्षारा
ब्धौ ॥
लवणाब्धिजम् । न॰ सामुद्रलवणे ॥
लवणाम्भाः । पुं॰ लवणाब्धौ॥ लवणं
क्षारमम्भोयस्य ॥
लवणारजम् । न॰ लोणारक्षारे ॥
लवणाष्टकम् । न॰ सैन्धवादिषु ॥
तेयथा ।लवणाष्टकमेतच्चसैन्धवञ्चसु
वर्चलम् । विड समुद्रसञ्जातमुद्भि
द रोमक गडम ॥
लवणोत्तमम् । न॰ सैंधवे ॥
लवणोत्थम् । न॰ लोणारक्षारे ॥
लवणोद । पुं॰ लवणार्णवे ॥ लव
णमुदकंयस्य । उत्तरपदस्यचेत्युद
कस्योदादेश ॥
लवनम् । न॰ छेदने । अभिलावे ।
लूणनादृति भाषाप्रसिद्धे ॥ लूञ्॰
ल्युट् ॥
लवली । स्त्री॰ फलवृक्षविशेषे । यो
षिज्जायाम् । अयिमायाम ।लोना॰
हू॰ गौ॰ दे॰ भा॰ प्र॰ ॥
लवपति । पु॰ नर्वाशिशि ॥
लवली । स्त्री॰ सुगन्धमूलायाम् ।
कोमलवल्कलायाम् । नोयाडि॰
हू॰ गौ॰ दे॰ भा॰ प्र॰ फलवृक्षे
॥ अस्यफलगुणायथा । लवलीफल
मस्राम्रं कफपित्तहरंगुरु । विश
द रोचन रूक्ष स्वादम्ल तुवर रसे ॥
लवाक : । पुं॰ छेदनद्रव्ये ॥

लवाणक : । पुं॰ दात्रादौ ॥
लूयतेऽनेन । लूञ्॰ । आयकोलूधूञ्
छिधाञ्भ्यश्चलायाक . ॥
लवि । त्रि॰ छिदुरे ॥
लवित्रम् । न॰ दात्रे ॥ लूयतेऽनेन ।
अर्तिलूध्वित्यादिना॰ इत्र . ॥
लशुन । पुं॰ न॰ रसोने ॥ अस्यप
र्यायादयोयथा । रसोनोलशुनोरि
ष्टोम्लेच्छकन्दोमहौषधम् । महाक
न्दोरसोनोन्योगृञ्जनोदीर्घपत्रक :
॥ गन्धाकृतिरसैस्तुल्योगृञ्जनस्तुप
लाण्डुना । दीर्घनालाग्रपत्रत्वाद्
भिद्यतेसौपलाण्डुत . ॥ अश्नाति
॰ अश्नुतेवा । अशभोजने॰ अशू
व्याप्तौवा । अश्रेर्लश्चेत्युनन् ॥
लष्व. । पु॰ नर्तके ॥ लष्यते । लष
कान्तौ । सर्वनिघृष्वेतिसाधु : ॥
लसत् । त्रि॰ उल्लसति ॥ प्रकाशमा
ने ॥
लसमान । त्रि॰ दीप्यमाने ॥
लसा । स्त्री॰ हरिद्रायाम् ॥
लसिका । स्त्री॰ लालायाम् ॥
लसितम् । न॰ चेष्टिते ॥
लसीका । स्त्री॰ इक्षुरसे ॥ त्वङ्मास
मध्यगेरसे ॥
लस्त । त्रि॰ श्लिष्टे ॥ क्रीडिते ॥ शि
ल्पयुक्ते ॥ लड्गतेस्म । लसश्लेष
णक्रीडनयो : । क्त ॥
लस्तक : । पुं॰ धनुर्मध्यभागे ॥

स्वार्थे कन् ॥

लस्तकी । पुं० कार्मुके । धनुषि ॥

लहरि: । स्त्री० )
लहरी । स्त्री० ) तरङ्गे ॥ महातरङ्गे । उल्लोले ॥ कल्लोले ॥

ला । स्त्री० दाने ग्रहणे ॥ लाति क्विप ॥

लाक्षकी । स्त्री० सीतायाम् ॥

लाक्षणिक. । त्रि० लक्षणाभिज्ञे ॥ लक्षणमधीते० वेदवा । क्रतूक्थादिसूत्रान्ताट्ठक् ॥ लक्षणयार्थं तत्रादृते ॥ लक्षणागम्यैर्थे ॥

लाक्षा स्त्री० राक्षायाम् । जतुनि । यावे । अलक्ते । द्रुमामये ॥ लाक्षा वर्ण्या हिमा बल्या स्निग्धा च तुवरा लघुः । अनुष्णा कफपित्तास्रहिक्काकासज्वरप्रणुत् । व्रणोर: क्षतवीसर्पक्रिमिकुष्ठगदापहा । अलक्तकोगुणैस्तद्वद्विशेषाद्व्यङ्गनाशन. ॥ लक्ष्यते । लक्षमिन्त्यघोगेसुरादि: । बाहुलकात्स: । यद्वा लक्ष्यते । लक्ष आलोचने । घञ् । पृषोदरादित्वात्० लाक्षारोचनेतिनिर्देशाद्वादीर्घ: ॥ लक्ष्यतेऽनयावा । गुरोश्च हलइत्य. । प्रत्ययः । अजादित्वाट्टाप् ॥

लाक्षातरु: । पुं० पलाशवृक्षे ॥

लाक्षातैलम् । न० लाक्षादितैलमिति प्रसिद्धे पक्वतैलविशेषे ॥ तद्विविध स्वल्पं बृहच्चेति ॥

लाक्षापुष्पा । स्त्री० गुलाबाख्यश्वेतपुष्पे ॥

लाक्षाप्रसाद । पुं० पट्टिकालोध्रे ॥

लाक्षाप्रसादन । पुं० रक्तलोध्रे । क्रमुके । पट्टिकायाम् ॥ लाक्षाप्रसीदत्यनेन । षट्लृ० । करणेति ल्युट् ॥

लाक्षावृक्ष । पु० कोशाम्रे ॥ पलाशवृक्षे ॥

लाक्षिक । पु० लक्षाभिज्ञे ॥

लाक्षिका. । पु० लक्ष्याभिज्ञे ॥ अध्येतरिवेदितरिच० क्रतूक्थादिसूत्रान्तेलक्षणो० इतिवार्त्तिकाट्ठक् ॥

लाघवम् । न० आरोग्ये ॥ अप्रभुत्वे अनादरविशेषे । लघिमनि ॥ कार्येऽल्पमिच्छैतु पौलाघवम्० गौरवप्रतिहनश्चियदे ऽपने स्वत्वजनम्भवति । तदेव लघवकार्यचित्तिर्यगगमनहेतु यथावायो । यथा कारणान्नात्सिपट स्वहेतुलाघवम्० गुरुत्वे मन्दानिवृत्ति ॥ लघुत्वगुणे ॥ लघोर्भाव । युवादित्वादगु पूर्वादिष्वण् ॥

लाङ्गलम् । न० कुसुमविशेषे ॥ भूमिकर्षणयन्त्रविशेषे । गोदारणे

। सीरे । हले ॥ तपराजे । ताले ॥ गृहदारुविशेषे ॥ लिङ्गे ॥ लङ्गति । लगिगतौ । बाहुलकात् कलच्॰ दीर्घश्च ॥

लाङ्गलग्रह : । पु॰ कृषकौ ॥

लाङ्गलचक्रम् । न॰ कृषिकर्मणिहलाकारेचक्रविशेषे ॥

लाङ्गलदण्ड पु॰ ईषायाम् । हलयुगयोर्मध्यकाष्ठ ॥ लाङ्गलस्यदण्ड ॥

लाङ्गलपद्धति । स्त्री॰ सीतायाम् । हलरेखायाम् ॥ लाङ्गलस्य पद्धति ॥

लाङ्गलिक पु॰ स्थावरविषभेदे ॥

लाङ्गलिका । स्त्री॰ लाङ्गलीवृक्षे ॥

लाङ्गलिकी । स्त्री॰ अग्निशिखौषधौ ॥ लाङ्गलपुष्पविशेषोऽस्त्यस्या । अतइनिठनाविति ठन् । आतेरितिगौरादित्वाद्ङीष् ॥

लाङ्गली । पु॰ बलदेवे ॥ हलिनि ॥ नारिकेले ॥ सर्पे ॥ लाङ्गलमस्त्यस्य । इनि : ॥

लाङ्गली । स्त्री॰ लाङ्गलाकारपुष्पजलशाकविशेषे । शारदायाम । तोयपिप्पल्याम् ॥ कांचडा॰ इ॰ गौ॰ दे॰ भा॰ लाङ्गलाकारोऽस्त्यस्या । अच् । गौरादि । ।

लाङ्गुलम् । न॰ पुच्छे ॥

लाङ्गुली । पुं॰ कपिकच्छ्वाम् ॥

लाङ्गूलम् । न॰ पुच्छे । लूमे । वालहस्ते । वालधौ ॥ लङ्गति । लगि॰ । खर्जपिञ्जादिभ्यऊरोलचाविस्थूलच्॰ लङ्गेर्वृद्धिश्च ॥ शेफसि । शिश्ने ॥ कुसूले ॥

लाङ्गूलिका । स्त्री॰ पृश्निपर्ण्याम् ॥

लाङ्गूली । पु॰ वानरे ॥ ऋषभनामौषधौ ॥

लाज : । पु॰ आर्द्रतण्डुले ॥

लाजा । पु॰ भूम्निअक्षतौ । भ्रष्टधान्ये ॥ एतेचव्रीहयोभ्रष्टालेलाजाइतिसंज्ञिता । यवाद्ययश्चभ्रष्टास्ते धानापरिकीर्त्तिता ॥ लाजास्स्युर्मधुरा शीता लघवोदीपनाश्चते ॥ लाजास्वस्यथधानास्युतर्षा पित्तनाशना । गौधूमयावनालेत्या किंचिदुष्णाश्चदीपना ॥ तृषातीसारवमने-धातुसाम्यकरं परं मन्दाग्निविषमाग्नीनावालस्यविरयोषिताम ॥ देयश्चसुकुमाराणालाजमण्डःसुसंस्कृत ॥ अपिच । येषांस्युस्तण्डुलास्तानिधान्यानिसतुषाणिच । भ्रष्टानिस्फुटितान्याहुर्लाजाइतिमनीषिण. लाजा. स्युर्मधुरा शीतालघवोदीपनाश्चतेस्वल्पमूत्रमला रूक्षावल्या. पित्तकफच्छिद ॥ छर्द्यतीसारदाहास्रमेहमेदस्तृषापहा ॥ न॰ उशीरे ॥ लज्यते । लज भर्जने ॥ घञ् ॥

लाजा । स्त्री॰ अक्षते ॥

लाञ्छन : । पुं॰ रागीधान्ये ॥ न॰

नामनि ॥ चिह्ने ॥ लाञ्छ्यते । लाञ्छिलक्षणे ल्युट् ॥

लाट । पुं॰ देशविशेषे ॥ स यथा । अवन्तीत पश्चिमेतुवैदर्भी दक्षिणोत्तरे । लाटदेश समाख्या तस्तत्रैश्रीशक्तिसङ्गमे ॥ अशुके । वस्त्रे ॥ जीर्णभूषणादिषु ॥

लाटानुप्रास । पुं॰ शब्दालङ्कारेषुवृत्तिप्रभेदे ॥ यथा शाब्दस्तु लाटानुप्रासोभेदेतात्पर्यमात्रत ॥ शब्दगतोनुप्रास । शब्दार्थयोरभेदेप्यन्वयमात्रभेदाल्लाटजनवल्लभत्वाच्च॰लाटानुप्रास ॥ एषपदानुप्रासश्चत्यन्ये । पदानांस. । सवृत्ति लाटानुप्रास . उदाहरणम् । यस्य नसविधेदयितादवदहनस्तुहिनदीधितिस्तस्य । यस्यचसविधेदयितादवदहनस्तुहिनदीधितिस्तस्य ॥ पदस्यापि ॥ अपिशब्देनसवृत्तिसमु च्चीयते । उदाहरणम् । वदनवरवर्णिन्यास्तस्या . सत्यसुधाकर: । सुधाकर: क्वनुपुन: कलङ्कविकलोभवेत् ॥

लाप .। पुं॰ कथने । लपनम् । लप॰ । घञ् ॥

लाभ : । पुं॰ मूलधनादधिकार्जिते । विक्रेतापटादीनांमूल्यादधिकयाचिद्रव्ये । फले । इष्टप्राप्तौ ॥ आत्मलाभात्परोलाभो नास्तीति विदुषांमतम् ॥ प्राप्तौ ॥ लभ्नादेकादशस्थाने ॥ लभ्यते । डुलभष् प्राप्तौ । अकर्तरीतिघञ् । स ञ्ज्ञायामित्यस्यप्रायिकत्वात् ॥ उत्कृष्टपुरुषार्थलाभेसम्भवत्यधमंकामयमानोमूर्ख: ॥

लामज्जकम् । न॰ वीरणमूले । नलदे । उशीरवत्पीतच्छविलृणविशेष ॥ लामज्जकं हिमं तिक्तं लघु दोषत्रयास्रजित् । त्वगामयस्वेदकृच्छ्रदाहपित्तास्ररोगनुत् ॥

लालनम् । न॰ अत्यन्तस्नेहकरणे । प्रेमपूर्वकबालकादरणे ॥ यथा । लालनेबहवोदोषास्ताडनेबहवोगुणा । तस्मात्पुत्रञ्चशिष्यञ्चताडयेन्नतुलालयेत् ॥ चतुर्वर्षावधि सुतान्लालयेत्पालयेत्पिता । ततषोडशवर्षान्तगुणानविद्याश्च शिक्षयेत् ॥ विंशत्यब्दाधिकान्पुत्रान्प्रेरयेद्गृहकर्मसु । ततस्तांस्तुल्यभावेनमत्वास्नेहंप्रदर्शयेत् ॥

लालस । पुं॰ लालसायामर्थेषु ॥ त्रि॰ उत्सुके ॥ भृश लसनमित्यर्थेयङन्तादच् . ॥

लालसा । स्त्री॰ औत्सुक्ये ॥ तृष्णातिरेके ॥ महाभिलाषे ॥ याञ्चायाम । लोले ॥ दोहदे ॥ लालसायाम् । औणादिकोप्रत्यय ॥ यद्वा । लसकान्तौ । भृशलसन

मित्यर्थे यङन्तात् । टाप् ॥ यद्वा । ललसनम् । लसदीप्तौ । यगन्त. । अप्रत्ययात् । टाप् ॥

लालसीकम् । न० पिच्छिले ॥ विजिले ॥

लाला । स्त्री० स्पन्दिकायाम् । स्यन्दिन्याम् । मुखस्रावे । लाल० दू० भा० ॥ लालयते । लल० । चुरादिः । पचाद्यच् ॥

लालाटिक । पुं० चास्त्रविशेषे ॥ मौहूर्त्तिकानायोगविशेषे ॥ यथा । लग्ने १ केँ व्ययलाभयो १२ । ११ भृगुसुतेकर्मस्थिते १० भूमिजे० राहौधर्मविनाशयो ६ । ८ रविसुते । द्यूने ७ ऽ रिसून्वो ६ । ५ विधौ । बन्धौ ४ ज्ञे० सहजार्थयो ३ । २ सुरगुराविव ललाटोद्भवयोगेनाशमुपैतिमानवपतिः पूर्वादिकाष्ठागत ॥ यथालग्ने सूर्ये स्थितेसतिपूर्वस्यालालाटिकोयोगः स्यात् । एव द्वादशैकादशस्थानस्थितेशुक्रे० आग्नेय्याम् । दशमस्थिते कुजे दक्षिणस्याम् । नवमाष्टमस्थानस्थे राहौनैरृत्याम् । सप्तमस्थे शनौपश्चिमायाम् । षष्ठपञ्चमस्थानस्थितेविधौवायव्याम् । चतुर्थस्थानस्थितेबुधे उत्तरस्याम् । तृतीयद्वितीयस्थानस्थितेगुरावैशान्यांलालाटिकोयोग ' इति । एव लला

टोद्भवेयोगेपूर्वादिदिशाङ्गतोनृपो नाशमुपैतीत्यर्थ' ॥ प्रकारान्तरञ्च यथा । दिनेशाधिष्ठितोराशिर्यदा लग्नगतस्तदा । यातुर्मृत्युप्रद ' प्राच्यादिशिसूर्योललाटग ॥ सूर्यस्वराशितस्तस्माद्द्वादशेलग्नगेगृहे । एकादशेवाग्नेय्यादिशिशुक्रो ललाटग ' ॥ ललाटग कुजोयाम्येदशमेलग्नगेगृहे ॥ लग्नगेनवमेराशावष्टमेवापिनैरृते । ललाटग ' सैंहिकेयोयातुर्द्राङ्निधनप्रद ' ॥ लग्नगेसप्तमेराशौशनि . प्रत्यग्ललाटग । षष्ठराशौलग्नगतेपञ्चमेवापिचन्द्रमाः । ललाटगोवायुदिशियातुर्मृत्युप्रदस्तदा ॥ चतुर्थराशौलग्नस्थेबुध . सौम्येललाटग. राशौतृतीयेलग्नस्थेद्वितीयेचेन्द्रपूजित ' । ललाटगश्चन्द्रमौलेर्दिशियातुर्विनाशदः । लालाटिनिर्दिगधीशैर्दिग्वलिविहगैललाटगैवापि । प्रतिभगुर्जे प्रतिशशिर्जेकालाशुहोवसन्त्यजैर्याचाम् ॥ स्पष्टमाह मार्त्तण्डे । लग्नेऽर्केन्दु अशुक्रसौरिगुरव ' प्राप्तिव्ययेविद्भृगूखे शुक्रार्ककुजेन्दुजा अगतपो मृत्यो : सितज्ञासुरा ' । द्यूनेशुक्रकुजार्कजारिपुसुतेचन्द्रज्ञशुक्रा ' सुखे चेतेत्रिकयो ' सितज्ञगुरव प्राच्यादिलालाटिनः ॥ चि० प्रभोःभौ

लदृशि निसेवके। प्रभुभावनिदर्शिनि ॥ ललाटकीपप्रसादचिह्नं ललाटमेवावपश्यति । संज्ञायाल लाटकुक्कुट्यौपश्यतीतिठक् ॥ का र्याक्षमेसेवके ॥ दूरेस्थित्वाप्रभोर्ल लाट पश्यतिनतुकार्येषूपतिष्ठत इत्यर्थः ॥ त्रि॰ ललाटसम्बन्धिनि ॥

लालाभक्ष:। पुं॰ नरकविशेषे ॥

लालामिक.। त्रि॰ ललामग्राहिणि ॥ ललामंगृह्णाति । प्रतिकण्ठार्थं ललामस्रेतिठक् ॥

लालामेह । पुं॰ प्रमेहविशेषे ॥ यथा। लालातन्तुयुत मूत्र लालामेहेनपिच्छिलम् । प्रमेहतीतिशेष । औषधन्तु । गुडूच्या: स्वरस पिबेत्मधुनासवमेहजित् । हरिद्राचूर्णयुक्तोवारसोधात्र्या: समाहित: ॥

लालाविष:। पुं॰ लूतादौ ॥

लालास्राव:। पुं॰ ऊर्णनाभे ॥

लालिक.। पुं॰ महिषे ॥

लालित । त्रि॰ पालिते ॥ उपस्कृते ॥

लालित्यम् । न॰ ललितस्यभावे ॥ ष्यञ् ॥

लाव. । पुं॰ पक्षिविशेषे । लवा॰ इ॰ भा॰ प्र॰ ॥ अस्यप्रभेदामांसगुणाश्चयथा। लावाविष्किरवर्गे स्युस्ते चतुर्धासतावुधै. । पांशुलोगौरकोन्योस्त्रिपौण्ड्रकोदर्भकस्तथा ॥ लवाविष्किरा. स्निग्धाज्वरघ्नाग्राहिणोहिमा । पांशुल. श्लेष्मलस्तेषुवीर्योष्णोनिलनाशन: ॥ गौरोलघुतरोरूक्षोवह्निकारीत्रिदोषजित् । पौण्ड्रक पित्तकृत्किञ्चिल्लघुर्वातकफापह ॥ दर्भकोरक्तपित्तघ्नोहृद्रामयहरोहिम. पौण्ड्रक स्निग्धहृत: ॥ लावयति। लूञ् ॰। स्वार्थेण्यन्त:। अच् ॥ छेदे ॥

लावक.। पुं॰ लावपक्षिणि । लघुजङ्गले ॥

लावणम् । न॰ लवणे ॥ नस्ये ॥ इतिरत्नमाला ॥ त्रि॰ लवणेनसंस्कृते ॥ इतिहेमचन्द्र: ॥ लवणसम्बन्धिनि ॥

लावणिक.। पुं॰ लवणवणिजि ॥ लवणपण्यमस्य । लवणाट्ठञ् ॥ त्रि॰ लावण्यवति ॥ लावण्यंकान्तिविशेषोस्यास्ति। अतइनिठनाविनिठन्। ठस्येक । यस्येतिचेत्यल्लोपेहलस्तद्धितस्येतियलोप ॥ लवणेनसंस्कृते ॥

लावण्यम् । न॰ कान्तिविशेषे ॥ तस्यलक्षणंयथा। मुक्ताफलेषुच्छायायास्तरलत्वमिवान्तरा । प्रतिभातियदङ्गेषुलावण्यंतन्निगद्यते ॥ लवणस्येदं विदादेस्यत्ष्यञ् लवणम्

। अर्शआदिभ्योऽच् । लवणस्यभाव । दृढादित्वात्ष्यञ् ॥ यद्वा । लवणाल्लिट्० सैव । चतुर्वर्णादित्वात्स्वार्थेष्यञ् ॥ रूपे ॥

लावण्यार्जितम् । न० विवाहकाली नेश्वश्रुराभ्यांदत्तेधने ॥ यथा । प्रीत्यादत्तञ्चयत्किञ्चित्० श्वश्र्वावाश्वसुरेणवा । पादवन्दनिकंयत् तत्लावण्यार्जितमुच्यते ॥ लावण्यशीलनेपुण्यादि० तथापादप्रणतायैशीलादिमत्यैवास्त्रियैश्वशुरादिनादत्तंतृतीय स्त्रीधनमित्यर्थ . ॥

लावा । स्त्री० लावपक्षिणि ॥

लावु : । ) स्त्री०
लावुकम् । ) न० तुम्ब्याम् ।

लावुका । स्त्री० तुम्बिकाभेदे ॥

लावुकी० सूचवीणायाम् ॥ इ० छा० ली० ॥

लावू । स्त्री० तुम्ब्याम् ॥

लाषुक : । त्रि० लषनशीले ॥ लष्यति० लषतिवातच्छील ' । लषका मौ ॥ लषपतपदेत्युकञ् ॥

लास ' । पुं० नृत्यमात्रे ॥ स्त्रीणांनृत्ये । यूषे ॥ लसनम् । लसश्लेषणक्रीडनयो । घञ् ॥

लासक . । पुं० लास्यकारिणि । नर्त्तके ॥ केकिनि । मयूरे ॥ वेष्टके ॥ लसति । लस० ण्वुल् ॥

लासिका । स्त्री० नृत्यकारिण्याम् ॥ नर्तक्याम् । लसति । लस० ण्वुल् । प्रत्ययस्थादितीत्वम् ॥

लास्फोटनी । स्त्री० आस्फोटन्याम् । वेधनिकायाम् ॥

लास्यम् । न० नृत्ये । सुकुमारनृत्ये । तालयाश्रये ॥ पुंनृत्य ताण्डवं प्राहु : स्त्रीनृत्य लास्यमुच्यते ॥ अपिच । छुरित यौवनञ्चेतिलास्यंद्विविधमुच्यते । यत्राभिनयाद्यैर्भावैरसैराश्लेषचुम्बनैः ॥ नायिकानायकौरङ्गे नृत्यतश्छुरित हितम् । मधुरवल्लीलाभिर्नटीभिर्यत्रनृत्यते ॥ वशीकरणविद्याभतल्लास्य यौवनंमतमिति ॥ लस० । ऋहलोर्ण्यत् ॥ तौर्यत्रिके ॥ पुं० नर्त्तके ॥

लास्यकम् । न० नृत्ये ॥

लास्या । स्त्री० नर्त्तक्याम ॥

लिकुच : । पु० लकुचे । डहौ । वडहलइ० भा० प्र० ॥ लक्यते । लक आस्वादने । बाहुलकादुचप्रत्यय . । पृषोदरादि : ॥ न० चुक्रे ॥

लिक्षा । स्त्री० लिक्षायाम् ॥

लिक्षा । स्त्री० यूकाण्डे । लिक्षिकायाम् । लीक० लीख० इ० भा० प्र० केशकीटे । यूकाभेदे ॥ लक्ष्यते । लक्षआलोचने । घञ् । पृषोदरादित्वादस्येत्वम् ॥ परि

मापविशेषे । कचायाष्टके ॥ यथा । त्रसरेणवोऽष्टौविज्ञेयालिक्षैकापरिमाणत । इतिमनु ॥ अपिच । जालान्तरगतेभानौयत्सूक्ष्मंदृश्यतेरज:। तैश्चतुर्भिर्भवेल्लिक्षालिक्षाषड्भिस्सर्षपइति ॥

लिक्षिका । स्त्री० लिक्षायाम् ॥

लिखनम् । न० लेखने ॥ अखण्डनीयायांविधिलिपौ ॥ यथा । यस्ययल्लिखनंपूर्वंयत्रकालेनिरूपितम् । तदेवखण्डितुंराधेसमर्थोनाहमस्यको विधि ॥ विधातुश्चविधाताच येषांयल्लिखनंकृतम् । ब्रह्मादीनांचरुद्राणानतत्खण्ड्यंकदाचन ॥ इ० ब्र० वै० पु० ॥

लिखित पु० धर्मशास्त्रप्रवर्त्तके मुनिविशेषे ॥ न० वर्णसंस्थाने । लिपौ ॥ लिख्यतेस्म । लिखअक्षरविन्यासे । क्त ॥ त्रि० लिखितपत्रादौ ॥ यथा । प्रमाणंलिखितंभुक्तिसाक्षिणश्चेतिकीर्त्तितम् ॥ इतिमिताक्षरायांयाज्ञवल्क्य: ॥

लिखिताक्षरविन्यास: । पुं० लिपौ ॥

लिगु: । पुं० मूर्खे ॥ भूप्रदेशे ॥ मृगे ॥ न० चित्ते ॥ लिगति । लगेसङ्गे । खरुशङ्कितिकुप्रत्ययान्त: साधु: ॥

लिङ्गम् । न० चिह्ने ॥ शिवमूर्त्तिविशेषे ॥ यथा । नेहलिङ्गार्चनात्किञ्चित्पुण्यमभ्यधिकंक्वचित् । इतिविज्ञाययत्नेनपूजनीयं सदाशिव ॥ तथा । दुर्गार्चनरतोनित्यंमहापातकसम्भवै । दोषैर्नलिप्यतेवीरपद्मपत्रमिवाम्भसि ॥ आचारादर्शेभविष्यपुराणम् ॥ साङ्ख्योक्तप्रकृतौ ॥ हेतौ ॥ धर्मे ॥ व्याप्ये । व्यापकस्यस्मारके ॥ व्यक्ते ॥ तस्यलिङ्गंप्रधानस्य । महदादिसूक्ष्मपर्य्यन्ते ॥ लिङ्गनाज्ज्ञापनादुच्यते ॥ लयंगच्छतीति० सूक्ष्मशरीरे । पञ्चज्ञानेन्द्रियाणि० पञ्चकर्मेन्द्रियाणि० पञ्चप्राणा मनोबुद्धिश्चेतिसप्तदशात्मके ॥ यथा । बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसाधिया । शरीरंसप्तदशभि: सूक्ष्मंतल्लिङ्गमुच्यते ॥ लिङ्ग्यतेगम्यतेऽनेनेति० व्युत्पत्तौ ॥ अनुमाने ॥ तत्त्रिविधम् । अन्वयव्यतिरेकिकेवलान्वयिकेवलव्यतिरेकिचेति ॥ उपक्रमादिषट्सु ॥ यथा । उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्तीचलिङ्गंतात्पर्यनिर्णये ॥ प्रमाणविशेषे ॥ शब्दसामर्थ्यंलिङ्गम् । यथाहु: । सामर्थ्यंसर्वभावानांलिङ्गमित्यभिधीयते० इति० । सामर्थ्यंरूढिरेव०समाख्यातोभेद: । तेनवर्हिर्देवसदनन्दा

मीतिमन्त्रस्य कुशलवनाङ्गत्वनतु॰ उलपादिलवनाङ्गत्वम् । तच्चबर्हि र्दामीतिलिङ्गात्तज्जन प्रकाशयि तु समर्थंस्यात् । एवमन्यत्रापि लिङ्गादिविनियोगोद्रष्टव्य । त दिद लिङ्गवाक्यादिभ्योबलवत् । अतएवस्योन तेसदन कृणोमीतिम न्त्रस्यपुरोडाशसदनकरणाङ्गत्व सदन कृणोमीतिलिङ्गात्॰नतु वाक्यात् ॥ मनसि ॥ अवगम्यतेत्रा यतोऽवगच्छतियेनतल्लिङ्गमितिपू ज्यपादा ॥ पुंस्त्वादौ ॥ शेफसि । मेहने ॥ अस्यशुभाशुभलक्षण यथा । दीर्घलिङ्गेनदारिद्रा स्थू ललिङ्गेननिर्धन । कृशलिङ्गे नसौभाग्य ह्रस्वलिङ्गेनभूपति ॥ कर्कशे कठिनेलिङ्गे . परदा ररत . सदा । रमतेचसदादासीम् निर्द्धनोभवतिध्रुवम् ॥ कृशलिङ् गेनसूक्ष्मेण रक्तलिङ्गेनभूपति । परस्त्रीरमतेनित्यनारीणाश्रुभेभवे त् ॥ कृशलिङ्गेनरक्तो नलभतेचो समाङ्गनाम । राजसुतसुखदि व्याङ्ग्या कन्यकाया पतिर्भवे त् ॥ इतिसामुद्रकम् ॥ अपिच । दक्षिणावर्त्तलिङ्गेय सभवेत् पुत्रवान्नर वामावर्त्ततथाकन्या सुवक्राखक्षयन्वित ॥ स्थूले सि राले . कठिनेनरादारिद्र्यभाजना । स्ऋजुभिर्वर्त्तुलैर्लिङ्गे पुरुषा सुखभागिन ॥ यस्यप शेफशिष्टस्य भूमि स्पृशतिमेहनम् । सोगवान् सतुविज्ञेयोनरोदारिद्र्यभाजन ॥ भूमौपादोपविष्टस्ययस्यस्पृशतिमेह नम् । सोगवान्सतुविज्ञेयस्तथातु रगमेहन ॥ स्थूलग्रन्थियुतेलिङ्गे नरोऽतिसुखभाग्भवेत् । लिङ्गे नम्रदुनामर्थोऽपि गनेकृच्छ्रपीडित इति ॥ लिङ्ग्यतेऽनेन । लिगिग तौ । हलश्चेतिघञ् । वेषे ॥

लिङ्गक । पुं॰ इन्कथते । कपित्थे ॥

लिङ्गधारिणी । स्त्री॰ देवीविशेषे । नैमिषेतुमहास्थानेदेवीसालिङ् गधारिणीतिदेवीगीता ॥

लिङ्गपुराणम । न॰ लैङ्गे महापु राणे । तत्संख्या यथा । एकादशसहस्राणिलिङ्गाख्य चा तिविस्तृतमिति ॥

लिङ्गवर्द्धन । पुं॰ कपित्थवृक्षे ।

लिङ्गवर्द्धिनी । स्त्री॰ अपामार्गे ॥

लिङ्गवृत्ति । पुं॰ धर्मध्वजिनि । जीविकार्थजटादिचिह्नधारिणि ॥ जीविकादिनिमित्तन्तुयोबिभर्त्तिज टादिकम् । धर्मध्वजीलिङ्गवृ त्तिर्दय तत्रनिगद्यते ॥ लिगमाश्र मादिचिह्नधारण हृतिर्जीविकाहेतु र्यस्यस ॥

लिङ्गशरीरम् । न॰ सप्तदशावयवे

सूक्ष्मशरीरे । सप्तदशावयवास्तु । ज्ञानेन्द्रियपञ्चकम् कर्मेन्द्रियपञ्चक प्राणादिवायुपञ्चक बुद्धिमनसी चेति ॥ लिङ्ग्यतेज्ञायतेप्रत्यगात्मसद्भावोयेन ॰ तल्लिङ्गम् । लिगि॰ हलश्चेतिघञ् । लिङ्गञ्च तत्शरीरञ्चेतिविग्रह ॥

लिङ्गस्थ । पुं॰ ब्रह्मचारिणि । वर्णिनि ॥

लिङ्गानुशासनम् । न॰ वररुच्यादिकृतेनाम्नालिङ्गबोधकेयन्थे ॥ तच्च शासनानर्हम् । लिङ्गमशिष्य लोकाश्रयत्वाल्लिङ्गस्येतिसमासान्ताद्वृतिसूत्रभाष्योक्तेर्लिङ्गानुवदन लोकादेवसिद्धमितिनिर्णयात् ॥

लिङ्गालिका । स्त्री॰ दीनायाम् । क्षुद्रमूषिके ॥

लिङ्गी । पुं॰ प्रव्रजितादिषु । ब्रह्मचार्यादिषु ॥ धर्मध्वजिनि ॥ वेशधरे ॥ गजे ॥ आत्मनि ॥ लिङ्गमस्यास्ति । इनि । ॥ न॰ व्यापके ॥

लिङ्गिनी । स्त्री॰ लताविशेषे । बहुपत्र्याम् । शिवमल्लिकायाम् । चित्रफलायाम् । चाण्डाल्याम् । आपस्तम्भिन्याम् । पचगुरिया॰ इ॰ भाषाप्रसिद्धे ॥

लिन्दु । त्रि॰ पिच्छिले मसृणे ॥ वैदिकोयम् ॥

लिपि । स्त्री॰ लिखिताक्षरे । लिवौ ॥ सापञ्चविधायथा । मुद्रालिपि शिल्पलिपिर्लिपिर्लेखनिसम्भवा । गुण्डिकाघुणसम्भूतालिपयपञ्चधास्मृता ॥ एताभिर्लिपिभिर्व्याप्ताधरि श्रीशुभङ्करेतिवाराहीतन्त्रोक्तेः ॥ लेखन्यालिखितविप्रेमुद्राभिरङ्कितञ्चयत् । शिल्पादिनिर्मितयच्चपाठ्यधार्यञ्चसर्वदेतिमुण्डमालातन्त्रोक्तेश्च ॥ लिप्यते । लिपउपलेपे । इगुपधात्किदितीन् ॥ लिपि . प्रमाणसर्वेषांसर्वैषप्रशस्यते । विशेषाद्व्यवहारेषुनविनश्येच्चिरयतइतिश्रीमहानिर्वाणतन्त्रम् ॥

लिपिकार । पुं॰ लेखके ॥ लिपिंकरोति । डुकृञ्॰ । दिवाविभेतिट ॥

लिपिका । स्त्री॰ लिपौ ॥

लिपिकार । पुं॰ लेखके ॥ लिपिंकरोति । कर्मण्यण् ॥

लिपी । स्त्री॰ लिपौ ॥ लिप्यतेलिपेरिन्नन्तात्कृदिकारा दितङीष् ॥

लिप्त । त्रि॰ कृतलेपने । विलिप्ते ॥ विषदिग्धे विषाक्ते ॥ भुक्ते । भक्षिते ॥ दिग्धे ॥ लिप्यतेस्म । लिप॰ । क्तः ॥ यद्वा । लिनाति । लीश्लेषणे । लीयतेवा । लङ्श्लेषणे । लीरीङोर्ह्रस्व . पुट् चतरौश्लेषणकुत्सनयोरितितप्र-

ष्ययोधातोङ्क्ष प्रत्ययस्यपुट् ॥ मिलिते ॥

लिप्तक । त्रि॰ विषाक्तबाणे । दिग्धे ॥ स्वार्थे कन् ॥

लिप्ता । स्त्री॰ घटिकायाम् । दण्डे ॥

लिप्तिका । स्त्री॰ दण्ड ॥ लिप्तैव । स्वार्थे कन् ॥

लिप्सा । स्त्री॰ इच्छायाम् । वाञ्छायाम् ॥ लभे सन्नन्तादप्रत्ययादिति॰अ ॥ लाभेच्छायाम् ॥ यथा । अर्थिनिखिलदातिलिप्सादात रिदित्सातुदूरतोपास्ता । आस्ताक्ष यशकथेयरमापतेनेोचिताभवतीति ॥

लिप्सु । त्रि॰ लब्धुमिच्छौ । गृध्नौ ॥ लुब्धे । अभिलाषुके ॥ लभे सन्नन्तादु ॥

लिवि । स्त्री॰ लिपौ । लिखितवर्णे ॥ लिप्यते । लिप॰ । इगुपधात्लिदितीन् । बाहुलकात्पस्यवत्वम् ॥ लिवि सौत्रोधातुर्वा ॥

लिविकर । पुं॰ लिपिकरे ॥ लिविं करोति । डुकृञ्॰ । दिवाविभेतिट ॥

लिम्प । पुं॰ लेपनकर्त्तरि ॥

लिम्पट । पुं॰ विङ्गे ॥ द्रुतिहारावली ।

लिम्पाक । पुं॰ जम्बीरे ॥ खरे ॥ न॰ निम्बूकि । पातनीवू॰ इ॰

भा॰ ॥

लिष्व । पुं॰ नर्त्तके ॥ लष्यते । लषकान्तो । सर्वनिघृष्वेतिसाधुउपधेत्वम् ॥

ली । पुं॰ श्लेषणे ॥ चपले ॥ लीङ् क्विप् ॥

लीक्षा । ) स्त्री॰ लिक्षायाम् । द्रुतिश
लीखा । )
व्दरत्नावली ॥

लीढ । त्रि॰ आस्वादिते । भक्षिते ॥ लिह्यतेस्म । लिहआस्वादने । क्त॰ ढत्वधत्वष्टुत्वलोपदीर्घा ॥

लीन । त्रि॰ प्राप्तलये । विलीने ॥ छन्ने ॥ लीयतेस्म । लीङ्श्लेषणे । क्त । स्वादयश्चदितद्रुतिनत्वम् ॥

लीला । स्त्री॰ केलौ ॥ विलासे ॥ शृङ्गारभावचेष्टायाम् । गतिहास्यवचनादिभि शृङ्गारभावतोजातक्रियानुकरणे ॥ प्रियस्यानुकृतिर्लीलाश्लिष्टाभिर्वचेष्टितै । अलब्धप्रियसमागमयास्वचित्तविनोदार्थंप्रियस्ययावेशगतिदृष्टिहसितभणितैरनुकृति क्रियतेसालीलेत्यर्थं तथाहि । अप्राप्तवल्लभसमागमनायिकाया . सख्या पुरोचनिजचित्तविनोदबुद्ध्या । आलापवेशगतिहास्यविलोकनाद्यै प्राणेश्वरानुकृतिमाकथयन्तिलीलामितिभरत ॥ शोभायाम् ॥ लयनली ।

लीड् । कण्ड्वादित्वात् क्विप् । नियलाति । ला० । आतोऽनुपेति क । यद्वा । लेलायनम् । लेला दीप्तौ० कण्ड्वादि । भिदाद्यङ् । अप्रत्ययादित्यिवा । पृषोदरादि ॥ यद्वा । लयनम् । लीङोवाहुल कान्नगुणाभावश्च ॥

लीलाखेल । पु० अतिशक्वरीछन्द १५ प्रभेदे ॥ तल्लक्षणोदाहरणे यथा एकन्यूनौविद्युन्मालापादौचेल्लीलाखेल । यथा । पायाद्गोविन्द कालिन्दीकूलचारीचक्रे० रासो ल्लास क्रीडद्गोपीभि सार्द्धंली लाखेल ०। मन्दाकिन्यास्तीरेपा न्ते खेचरक्रीडाभिर्लीला० यद्वद्देवा नभोग स्वर्गेश्वर्ग्भि खेलन्तोभि ॥ त्रि० विलाससुभगे ॥

लीलावती । स्त्री० केलियुक्तायाम् ॥ विलासवत्याम् ॥ शृङ्गारभावचेष्टाऽन्वितायाम् । खेलाविशिष्टायाम् ॥ भास्कराचार्य्यपत्न्याम् ॥ भास्कराचार्यकृतेपाटीगणितग्रन्थे ॥ न्यायग्रन्थविशेषे ॥ वेश्याविशेषे ॥ मात्रावृत्तविशेषे ॥ तल्लक्षणोदाहरणे यथा । लघुगुरुवर्णनियमविरहितमिहहिसुकलयचतुष्कलमष्टगणम् । द्वात्रिंशत्कलविरचितमिद मतिशयसहृदयहृदयदु . खहरणम् । लीलावतिकाभवतिचकारकर्णद्विजगणजगणभगणकलिता० फणिनायकपिङ्गलविरचितमङ्गलवृत्त ममलगुम्फनललिता ॥ यथा । गो कोटिप्रतिदिनमिहवितरन्द्विजवरनिवहेसुरमातनुषेरिपुतिमिरदलन खरकरसतकुशेशयमपिलक्ष्मीवसतितनुषे ।। दुरितविलयमिलितखल कोदयनृपराजवलयमवलयसिरणेत्वयिचलतिचलतिवसुधावसुधाधिपकीर्त्तिसिन्धुवरणीरमणे ॥ लीला शोभाऽस्त्यस्याम् । मतुप् । ङीप् ॥

लीलोद्यानम् । न० देववने ॥

लुक्कायित : । त्रि० अन्तर्हिते ॥

लुङ्ग । पुं० मातुलुङ्गे । बीजपूरे ॥ लुञ्ज्यते । लुजिभाषार्थे । घञ् । चजोरितिकुत्वम् । न्यङ्क्वादित्वाद्वा ॥

लुङ्गुष : । पुं० कोलङ्गे ॥

लुठनम् । न० वेल्लने । अश्वस्यभूमौ पुन : पुन : श्रमोपहनने । लोट न० द्रू० भा० प्र० ॥

लुठित . । त्रि० श्रमशान्त्यर्थमुहुर्मुहु : पराह्वर्त्ते अश्वे । उपावृत्ते ॥ वेल्लिते । अपावृत्ते । परावृत्ते ॥ लुठति स्म । लुठप्रतिघाते । अकर्मकात्वात् क्त . ॥

लुण्टक । पुं० शाकविशेषे । नष्ठा० द्रू० गौ० भा० प्रसिद्धे ॥

लुण्टाक । पु० चौरे ॥

लुण्टाकी । स्त्री॰ चौरायास्त्रिया म् ॥

लुण्ठक । त्रि॰ स्तेयकारके ॥

लुण्ठनम् । न॰ हयलुठिते ॥ लूटइति प्रसिद्धेसाहसे ॥ लुठिस्तेये । ल्युट् ॥

लुण्ठाक । पुं॰ परभृत्यो । हिके । काके ॥

लुण्डिका । स्त्री॰ ) न्यायसारिण्याम् ।
लुण्डी । स्त्री॰ )

लौंडी॰ इ॰ भा॰ प्र॰ ॥

लुप्तम् । न॰ चौर्यधने ॥ त्रि॰ विलुप्ते । लोपवति ॥

लुप्तवर्णपदम् । न॰ ग्रस्ते ॥ लुप्तोवर्ण पद यायत्रवाक्ये पदेवातत् ॥

लुप्तसंवत्सर । पुं॰ विलुप्ताब्दे ॥ यथा । अतिचारगतोजीवस्त राशिं नैतिचेत्पुन । लुप्तसंवत्सरोज्ञेयोगर्हित सर्वकर्मसु ॥ अस्यापवादश्च ज्ञषिमेषेभषेकुम्भे यद्यतीचारगोगुरु । नतत्रकाललोप स्यादित्याहभगवान्यम ॥ अन्यच्च । मासान्दशैकादशवाप्रभुञ्ज्यराशिंयदाराशिमुपैतिजीव . भुङ्क्तेनपूर्वंचपुनस्तथापिन लुप्तसंवत्सरमाहुरार्या ॥ लुप्ताब्ददोषोऽचिमतेनमध्येसोमोद्भवाया सुरनिम्नगाया ॥

लुप्ताब्द . । पु॰ लुप्तसम्वत्सरे ॥

लुब्ध । पुं॰ व्याधे ॥ लम्पटे ॥ त्रि॰ आकाङ्क्षिणि । गृध्नौ । परधनाभिलाषुके ॥ धर्मार्थंस्वद्रव्यत्यागासमर्थे ॥ मातरं पितरं भ्रातॄन्सर्वांश्चसुहृदस्तथा। घ्नन्तिह्यसुतृपोलुब्धाराजान प्रायशोभुवि ॥ लुभ्यतिस्म । लुभगाद्धर्ये । गत्यर्थेतिक्त ॥

लुब्धक । पु॰ व्याधे ॥ स्वार्थे॰ स च्छायाशाकन ॥ आर्द्रायाम् ॥

लुलाय ।पुं॰ महिषे॥ लुडति। लुडसंश्लेषणे । इगुपधेतिक । डलयोरेकत्वम् । च.प्रेति । आप्लु॰ । अच् । लुलश्चासावायश्च । यद्वा । लुडाते । लुडलोडने । भिदाद्यङ् । लुला विलोडिता आपोयेन । लुल विमर्दनेसौत्रोधातुर्वा ॥

लुलायकन्द । पुं॰ महिषकन्दे ॥

लुलायकान्ता । स्त्री॰ महिष्याम् ॥

लुलाय । पु॰ महिषे ॥ लुडति । लुड॰ । क । डलयोरभेद ॥ यद्वा । लुडाते । लुडविलोडने । भिदाद्यङ् । लुलविमर्दनेसौत्रोधातुर्वा । वाहुलकादायप्रत्यय ॥ यद्वा । अयते । अय॰ । अच् । लुलश्चासौअयश्च ॥

लुलित । त्रि॰ आन्दोलिते । तरलिते ॥ उत्सृष्टे ॥ लिप्ते । यथा । बाल्पेंदुस्वातिरेकोमललुलितवपुरिति ॥

लुभभ । पुं॰ मत्तमातङ्गे । मत्तग जे ॥ रोषति । रुषहिंसायाम् । रुषेर्निंल्लुष् चेत्यभच्॰ इतिरुषि रभच् नित्किद्वातोलुंषादेशश्च ॥

लू । स्त्री॰ लवने ॥ लवनम् । लूञ भावेक्विप् ॥ लुनातिवा । अत्रवा च्यलिङ्गः ॥

लूता । स्त्री॰ ऊर्णनाभे । मर्कटके ॥ पिपीलिकायाम् ॥ रोगविशेषे । म र्मव्रणे ॥ लुनाति । लूञ॰ । ह सिमृग्रिण्वामीतितन् । सञ्ज्ञापू र्वकत्वाद्गुणाभाव ॥

लूतातन्तु । पुं॰ मर्कटकजाले । मक डीकाजाला॰ इ॰ भा॰ लूतायास्तु ॥

लूतामर्कटक । पुं॰ लूतामर्कटक पुष्पी॰ नवमालिकयोः . कपाविति- हेमचन्द्र ॥

लूतारिः । पुं॰ दुग्धफेनीक्षुपे ॥

लूतिका । स्त्री॰ ऊर्णनाभी । मर्कट- की । मकडी॰ इ॰ भा॰ ॥ लूतैव । स्वार्थेकः ॥

लून । त्रि॰ छिन्ने ॥ लूयतेस्म । लूञ॰ । क्तः । ल्वादिभ्यश्चेतिनत्वम् ॥

लूनक । पुं॰ भिन्ने । भेदिते ॥ प- शौ ॥ यावादिषु॰ पशौलूनवियात- इतिस्वार्थेकन् ॥

लूनि । स्त्री॰ छेदे ॥

लूमम् । न॰ पुच्छे । लाङ्गूले ॥ लूय- ते । लूञ॰ । बाहुलकान्मक् ॥

लेख । पुं॰ अदितिनन्दने । देवे सुरे ॥ ध्यानार्थंचित्रादौलिख्यते । लिखअक्षरविन्यासे । अकर्त्तरिच कारकेसञ्ज्ञायामितिकर्म्मणिघञ् । ग्रीवाहस्तपादेषुतिस्रोलेखा सन्ति यस्येतिवा । अर्श्आद्यच् ॥ ले- ख्ये ॥

लेखक । पुं॰ लिपिकरे । अक्षरचु- ञ्चौ । लेखनकर्त्तरि । लिखारी॰ इ॰ भा॰ ॥ लिखति । लिख॰ । शि ल्पिनिष्वुन् । ण्वुल्वा ॥ अस्यल- क्षणानियथा । सर्वदेशाक्षराभिज्ञ सर्वशास्त्रविशारदः । लेखकः क थितोराज्ञ सर्वाधिकरणेषुवै ॥ शी र्षोपेतान्सुसम्पूर्णान्समश्रेणिग- तान्समान् । अक्षरान्वैलिखेद्यस्तुले खकः सवरः स्मृतः ॥ उपायवा क्यकुशलः सर्वशास्त्रविशारदः । बह्वर्थवक्ताचाल्पेनलेखकः स्यान्नृ गूत्तम ॥ वाक्याभिप्रायतत्त्वज्ञोदेश कालविभागवित् । अनाहार्योनृपे भक्तोलेखकः स्यान्नृगूत्तम ॥ इति मात्स्ये १८९ अध्याय ॥ अपि- च । सकृदुक्तगृहीतार्थोलघुहस्तो जिताक्षरः । सर्वशास्त्रसमालोको प्रकृष्टोनामलेखकः ॥ राजलेखक लक्षणंयथा । ब्राह्मणोमन्त्रणाभिज्ञो राजनीतिविशारदः । नानालिपि

न्त्रोमेधावीनानाभाषासमन्वित ॥ मन्त्रणाचतुरोधीमान्नीतिशास्त्रार्थकोविद. । सन्धिविग्रहभेदज्ञोराजकार्येविचक्षण ॥ सदाराजहिताम्वेषीराजसन्निधिसंस्थित । कार्याकार्यविचारज्ञ. सत्यवादीजितेन्द्रिय ॥ स्वरूपवादीशुद्धात्माधर्मज्ञोराजधर्मवित् । एवमादिगुणैर्युक्त सएवराजलेखक ॥ नृपानुवर्त्तीसततन्नृपविश्वासरक्षकः । नृपतेर्हितकान्वेषीसएवराजलेखकः ॥ इतिपत्रकौमुदी ॥

लेखन । पु० काशे । न० च्छर्दने ॥ भूर्जे । लिपिन्यासे ॥ लिख० । ल्युट् ॥

लेखनाञ्जन । न० अञ्जनविशेषे ॥ यथा । दन्ताण्डत्वक्शिलाकाचशङ्खचन्दनसैन्धवे । चूर्णितैरञ्जनप्रोक्तापुष्पामादिनिकृन्तनम् ॥ कुक्कुटाण्डस्यत्वक् । शिलामन. शिला ॥

लेखनिक । पु० लेखहारे ॥ लेखेषु परहस्तेनस्वहस्तस्यचलेखके । यस्वहस्त परहस्तेनलिखितेषुविलेखयेत्.तत्र ॥

लेखनी । स्त्री० कलमे । वर्णतूलिकायाम् ॥

लेखनीय । त्रि० लेख्ये

लेखर्षभ । पु० जिष्णौ । शक्रे । इन्द्रे ॥ लेखेषुऋषभ । सप्तमी तत्पुरुष ॥ लेखऋषभइवेतिवा । उपमितसमास ॥

लेखहार )
लेखहारक ) पु० पत्रवाहके । लेख हरति । हञ्० । कर्मण्यण् ॥

लेखा । स्त्री० लिपौ ॥ राजिकायाम् । रेखायाम्॥लिख्यते । लिख० । भिदादिपाठादङ् गुणो ॥ न्यायाम् ॥

लेखार्ह । पु० श्रीतालवृक्षे । मृदुच्छदे ॥

लेख्यम् । न० भागदानादिव्यवहारकरणे । पत्रे ॥ त्रि० लेखितव्य । लेखनीये ॥ व्यवहाराङ्कक्रियापादाङ्गे ॥ यथा । यन्मासिकेपि समयेभ्रान्ति सञ्जायतेयत । धात्राक्षराणिसृष्टानिपत्रारूढन्यत पुरा ॥ लेख्यन्तुविविधप्रोक्त स्वहस्तान्यकृततथाचसाक्षिकसाक्षिमच्चसिद्धिर्देशस्थितेस्तयो ॥ मृतास्तुसाक्षिणोयत्रधनिकर्णिकलेखका. तदप्यपार्थकारणमृतेत्वाधे स्थिराश्रयात् ॥ दर्शितप्रतिकालञ्चपठितश्रावितन्चयत् । लेख्यसिद्ध यतिसर्वं चमृतेष्वपिचसाक्षिषु ॥

लेख्यचूर्णिका । स्त्री० तूलिकायाम् ॥

लेख्यपत्र । पु० तालद्रुमे ॥ न० लेखनीयपत्रे ॥

लेख्यस्थानम् । न० ग्रन्थकुव्याम् ।

ट्फ्तरङ्गतीतरजनभा० प्र०

लेगडम् । न० गूथे । शकृति । लैगड इ० भा० प्र० ॥

लेगड्ज . । पु० इड्ग्जे ॥ इड्ये जानवषट्पश्चलेगड्जाश्चापिभावि नङ्क्ष्यागमात् ॥

लेप । पु० लेपने ॥ जग्धौ । अशने ॥ अनुशये । अनुबन्धे ॥ सच० इदमहमकार्षमेतत्फलभोक्ष्ये० इत्यनुसन्धानकर्तृत्ववासनानिमित्त । सचपुण्ये कर्मणिपुण्यरूप० पापेचपश्चात्तापरूपोभवति ॥ लेपनम् । लिप० घञ् ॥ सुधायाम् । चूना० इ० भा० प्र० ॥

लेपक । पुं० पलगराडे । राज इ० प्र० ज लो ॥ त्रि० लेपकर्त्तरि ॥ लिपति । लिप० ण्वुल् ॥

लेपनम् । न० लेपे । चन्दनागुर्वादिनाङ्गविलेपने ॥ देवगृहादिलेपने । लीपना० इ० भा० लिपेर्ल्युट ॥ पु० तुरुष्कनामगन्धद्रव्ये ॥

लेपभुक् । पुं० पितामहपित्रादिषु ॥

लेपी । पुं० लेपके । पलगराडे । ग्रेकर० इ० गौ० दे० भा० । राज० इ० दे० भा० ॥

लेप्य । त्रि० लेपनीये ॥

लेप्यकृत् । पुं० लेपके ॥

लेप्यमयी । स्त्री० काष्ठादिघटितपुत्तलिकायाम् । पञ्जलिकारिकायाम् ॥

लेभिरम् । न० उलूखले ॥

लेय । पु० सिंहराशौ ॥

लेलायनम् । न० चलने ॥

लेलायमान । त्रि० अतिशयचलनविशिष्टे ॥ यथाग्निर्हविर्ग्रहणायलेलायमानोभवति ॥

लेलिह । पु० सर्पे ॥

लेलिहा । स्त्री० जीवन्यासमुद्रायाम् ॥ यथा । तर्जनीमध्यमानामा समा कुर्यादधो मुखा । अनामायाश्चिपेद्वामजुर्वींकृत्वाकनिष्ठिकाम् । लेलिहानामसुद्रेयजीवन्यासेप्रकीर्त्तिता ॥

लेलिहान . । पु० शिवे ॥ सर्पे ॥ त्रि० ललज्जिह्वे ॥ लेहातिशयकारके । पुन . पुनर्लेहनकर्त्तरि ॥ लिहेर्यङ्लुगन्तात्ताच्छील्ये चानश्प्रत्यये० गुणोयङ्लुकोरिस्य भ्यासस्यगुण ॥

लेलिहाना । स्त्री० लेलिहायामुद्रायाम् ॥

लेश । पुं० अल्पे कणे ॥ लिशति । लिशगतौ । पचाद्यच् ॥ लिश्यतेवा । घञ् ॥

लेशेज . । त्रि० अतिकम्पने ॥ लेशेनाल्पेनापिएजति । एजृ० । पचाद्यच् ॥

लेष्टु . । पुं० इढमृत्पिण्डे । लोष्टे । ढीम०ढेला०डलाइ० भा०प्र० ॥

लिश्यते॰लिशतिवा। लिश॰। बाहुलकात्तुन् ॥

लोष्टघ्न । पुं॰ लोष्टभेदने ॥

लोष्टभेदन । पुं॰ कोटिशे। लोष्टभेदनमुद्गरे ॥

लेसिक । पुं॰ कटिरोहके। हस्त्यारोहके ॥

लेह । पुं॰ आहारे। भोजने। स्वादने ॥ लेहने ॥ लेहनम् लिहआस्वादने। घञ्॥ लेढि। शाद्याघेतिवा ॥

लेहनम । न॰ जिह्वास्वादे। जिह्वया रसग्रहणे। चाटना॰ इ॰भा॰ ॥ लिहल्युट् ॥

लेह्यम्। न॰ अमृते। सुधायाम् ॥ त्रि॰लेहयोग्ये। आस्वाद्ये। यज्जिह्वायानि क्षिप्यरसास्वादेननिगीर्यतेकिञ्चिद्द्रवीभूतगुडरसालादितच ॥

लैङ्ग । पुं॰ वैयाकरणे ॥ वैयाकरणाहिस्त्रीपुनपुंसकशब्दजाततत्त्वमितिवर्णयतितदयुक्तम्। स्त्र्यादेशब्दस्वभावत्वे सर्वादीनांत्रिलिङ्गत्वायोगादेकस्यानेकभावत्वायोगात्। औपाधिकधर्मत्वे चतस्यावस्तुत्वात् ॥ न॰लिङ्गपुराणे ॥ त्रि॰-लिङ्गसम्बन्धिनि ॥ लिङ्गस्येदम । तस्येदमित्यण् ॥

लैङ्गी। स्त्री॰ लिङ्गिन्यामोषधौ ॥

लोक । पुं॰ जने आत्मनि ॥ लोक्यतेअनुभूयतेशास्त्रोपदेशशीलित-बुद्ध्यायमितिव्युत्पादनात् ॥ दर्शने ॥ लोक्यमानेविषये ॥ प्राणिनिकाये। भुवने ॥ त्रयोलोका स्वर्गमर्त्त्यपातालानि ॥ अन्नसप्तलोकनामानियथा। भूर्भुव स्वर्महश्चैव जनस्तपएवच। सत्यलोकश्चसप्तैतेलोकास्तुपरिकीर्त्तिता ॥ इष्टप्रवर्गे ॥ ग्राह्यग्राहकविषयेस्मिन्शरीरे ॥ लोकोहिद्विविध प्रोक्तआत्मानात्मविभेदत । मनुष्यपितृदेवाख्योऽनात्मलोकस्त्रिधामत ॥ आत्मलोकस्यस्वरूपमित्याहु शास्त्रदर्शिन ॥ मनुष्यलोक पुत्त्रेणपितृलोकस्तुकर्मणा। विद्ययादेवलोकश्चेत्यब्रवीत्सकृदृश्रुति ॥ लोक्यतेऽनुभूयते॰दृश्यते॰भुज्यते-वा। लोकृदर्शने। घञ्॥ कर्मफले ॥ प्रसिद्धिमागम प्राप्तोलोकइ-त्यभिधीयते। चतुर्दशविद्यास्थानानिलोकाइतिव्याख्यातार । लोक्यतेत्यागतेधर्मब्रह्मादिरूपोऽर्थएभिरितिनिरुक्ते ॥ चिदानन्दस्वरूपब्रह्मातिरिक्तस्यसर्वस्य लोकपदार्थत्वाद्देहस्यापिलोकान्तर्गतत्वम् ॥

लोककान्ता। स्त्री॰ ऋद्धिनामौषधौ ॥

लोकचक्षु । पुं॰ सूर्ये। जनलोचने

लोकजित् । पुं॰ जिने ॥ लोकंजयति । जि॰ । सत्सूद्विषेत्यादिनाक्विप् । तुक् ॥ लोकान्जयत्युपरमयतीति वा ॥ त्रि॰लोकजेतरि ॥

लोकतुषार । पु॰ कर्पूरे ॥

लोकत्रयम् । न॰ सर्वस्मिन्जगति ॥ लोकानांत्रयम् ॥

लोकदम्भक । पुं॰ नि । क्षेपापहारादिनाजनवञ्चके ॥

लोकधातु : । जम्बुद्वीपे ॥

लोकनाथ । पुं॰ शिवे ॥ ब्रह्मणि ॥ विष्णौ ॥ बुद्धे ॥ लोकानांनाथ ॥ लोकैर्नाथ्यतेयाच्यतेवाकर्म्मणिघञ् ॥

लोकपाल : । इन्द्रादिषु ॥ तेयथा । इन्द्रोवह्निः पितृपतिर्निर्ऋतिर्वरुणोऽनिल । धनद . शङ्करश्चैव लोकपाला : पुरातना . ॥ राजनि ॥

लोकबान्धव : । पुं॰ रवौ । सूर्य्ये ॥

लोकभावन : । पुं॰ लोककर्त्तरि ॥

लोकमाता । स्त्री॰ लक्ष्म्याम् ॥ लोकानांमाता ॥

लोकयात्रा । स्त्री॰ लोकनिर्वाहे ॥ लोकाचारे ॥ येनोपायेनमर्त्यानालोकयात्राप्रसिद्ध्यति । तदेवकार्यंब्रह्मज्ञैरिदंधर्मंसनातनम् ॥ लोकानांयात्रा ॥

लोकलोचन : । पुं॰ सूर्ये ॥

लोकवाह्य । त्रि॰ सर्वाचारविवर्ज्जिते ॥ लोकाद्वाह्य ॥

लोकवित् । पुं॰ पौराणिके भूर्भुव: स्वरितित्रयोलोका वस्तुभूता . सन्तीतिसंकल्पयति ॥

लोकविनायक । पु॰ ग्रहविशेषे ॥

लोकविश्रुति । स्त्री॰ जनश्रुतौ ।

लोकवृत्तम् । न॰ विचित्रपरिहासकथादिके॰ असत्प्रियाख्याने ॥ न लोकवृत्तं वर्त्ते तवृत्तिहेतो : कथञ्चन । अजिह्मामशठांशुद्धांजीवेद्ब्राह्मणजीविकाम् ॥ लोकानामवृत्तम् ॥

लोकसङ्ग्रह : । पुं॰ लोकानांस्वेस्वे धर्म्मे प्रवर्त्तने ॥ उन्मार्गान्निवर्त्तनेच ॥ सङ्ग्रहणंसङ्ग्रह : । लोकानासङ्ग्रहोग्रहणम् ॥

लोकसार । पु॰ प्रणवे ॥

लोकाकाशास्तिकाय । पु॰ लोकानामन्तराकाशे ॥

लोकात्मा । पुं॰ परमेश्वरे ॥ यथा । यस्याग्निरास्यंद्यौर्मूर्द्धाखंनाभिश्चरणौक्षिति : । सूर्यश्चक्षुर्दिश : श्रोत्रंतस्मैलोकात्मनेनम : ॥

लोकादि । पु॰ अग्नौ ॥ लोकानामादि . प्रथमशरीरत्वात् ॥

लोकाध्यक्ष : । पुं॰ परमेश्वरे ॥ लोकंद्रष्टव्यवर्गं स्वाभाविकेनबोधेनसाक्षात्पश्यतीति॰लोकाध्यक्ष: ॥ लोका

नामध्यच . । लोकाअध्यचायस्य तिवा, लोकान् अध्यच्चयतीतिकर्म्म ण्यपिउपपदसमासोवा ॥
लोकापवाद । पु॰ लोककर्तृकायां निन्दायाम् ॥ लोकापवादाद्भयम् ॥
लोकायतम् । न॰ तर्कभेदे । चार्वाकदर्शने ॥ लोकेआयतम् ॥
लोकायतिक । पु॰ चार्वाके ॥
लोकालोक । पु॰ परमेश्वरे ॥ लोकआब्रह्मस्तम्बपर्यन्त . आलोकयति प्रकाशयतेयेनस ॥ चक्रवालेऽद्रिविशेषे ॥ लोकालोकोवहिस्तस्या लोकालोकनियामक . । योजनायुतविष्कम्भस्तुङ्गशृङ्गपरिच्छद . ॥ अन्त . स्थित लोक वहि ' स्थितस्त्वालोकनियमयतीति॰ लोकालोकनियामक । तद्वाच्येलोकाभावादित्यर्थ ' ॥ लोकदर्शने । भावेघञ् । नलोक ' अलोक । लोकश्चालोकश्च॰लोकालोकौ॰ प्रकाशान्धकारावयस्त अन्तर्वहि सूर्यकिरणानांस्पर्शास्पर्शाभ्याम् ॥
लोकालोकी । त्रि॰ त्रैलोक्यदर्शिनि ॥ लोकानालोकते॰तच्छील ' । णिनि ॥
लोकेश ' । पुं॰ हिरण्यगर्भे । ब्रह्मणि ॥ लोकानामीश ॥ बुद्धभेदे ॥ पारदे ॥
लोकेशाधिष्ठित । पुं॰ राजनि ॥
लोकेश्वर । पुं॰ शिवे ॥ लोकानाञ्च नानाञ्चईश्वर प्रभु ॥ बुद्धभेदे ॥
लोकेश्वरात्मजा । स्त्री॰ बुद्धशक्तिविशेषे । तारायाम । श्रियि । मनोरमायाम् ॥
लोकैषणा । स्त्री॰ देवलोकादिकामनायाम् ॥ लोकैषणेतिदेवादिलोकार्थोपासनार्थिता ॥
लोकोत्तर ' । त्रि॰ लोकातीते ॥
लोकोद्धार ' । पुं॰ तीर्थविशेषे ॥
लोक्य । त्रि॰ परलोकादिसाधने । लोकायहिते ॥
लोचनम । न॰ अश्रुणि । वास्पे ॥
लोचक । पुं॰ मांसपिण्डे ॥ अक्षितारकायाम् ॥ कज्जले ॥ स्त्रीभालभूषणे ॥ कदल्याम् ॥ नीलवस्त्रे ॥ कर्णपूरे । कर्णिकायाम् । कर्णाभरणे ॥ ज्यायाम् । मौर्व्याम् ॥ भ्रूश्लथचर्म्मणि ॥ निर्म्मोके ॥ त्रि॰ निर्बुद्धौ ॥
लोचनम् । न॰ चक्षुषिचक्षुषि ॥ अस्यशुभाशुभलक्षणं यथा । कर्णान्तैः पद्मपत्राभैर्लोचनैः सुखभागिन. । मार्जारलोचनैः . पापीमहात्मामधुपिङ्गलैः ॥ क्रूरा केकरनेत्राश्च हरिणाक्षा . सकल्मषा : । जिह्मैश्च लोचनैः क्रूरा सेनान्योगजलोचना ॥ गम्भीराक्षाईश्वरा ' सुम

न्निग्ध स्थूलचक्षुष । नीलोत्पला क्षाविद्वांस सौभाग्यश्यावचक्षुषा म् ॥ ह्यातृक्षणतारकाक्षाणाम- क्ष्णामुत्पाटनकिल्ल । मण्डलाक्षा श्चपापा स्युर्निःस्वा स्युर्दीर्घले।चना ॥ हक्स्निग्धाविपुलाभोगे अल्पायुर्यातिचोन्नता । विशालोन्नता सुखिनिर्दरिद्राविषमभ्रुव ॥ इ लिगारुडे ६६ ॥ लोच्यतेनेन । लोचृदर्शने । ल्युट ॥ आलोचने ।

लोचनहिता । स्त्री० तुत्याञ्जने ॥

लोचना । स्त्री० बुद्धशक्तिविशेषे ॥

लोचनामय । पुं० चक्षूरोगविशेषे । अभिमन्थे ॥

लोचनी । स्त्री० महाश्रावणिका- याम् ॥

लोचमर्कट । पुं० लोचमस्तके ॥

लोचमस्तक । पुं० खराश्नायाम् । कारग्राम् । दीप्ये । मयूरे । मयूरशिखौषधे । रुद्रजटाद० गौ० दे० प्र० ॥ लोच्यते । लोचृदर्शने घञ ॥ यद्वा । लोचयति । लोचृ भासार्थे । पचाद्यच् । लोचोदर्श नीयोभासमानोवा० मस्तकोस्य ॥

लोठनम् । न० इतस्ततश्चालने ॥

लोडनम् । न० प्रतिघाते ॥

लोट्टणम् । न० लवणाट्टणे ॥

लोणा । स्त्री० क्षुद्राम्लिकायाम् । चाङ्गेर्याम् ॥ लोणीशाके । लोनिका०

लोनी० इ० भा० स्मृते ॥ अस्यगु णा । लोणारूक्षागुरु कटूवात श्लेष्महरोपटु । अर्शोघ्नीदीपनीचा म्लामन्दाग्निविषनाशिनी ॥

लोणाम्ला । स्त्री० क्षुद्राम्लिकायाम् । चाङ्गेर्याम् ॥

लोणारम् । न० क्षारविशेषे । लवणो त्थे । लवणाकारजे । लवणक्षारे । लवणमदे ॥

लोणितम् । न० लोनियाख्यशाके ॥ शाकलोणितसञ्ज्ञकसुदलिततप्तैस्तैले तापितहिङ्गवार्द्रैणविमिश्रितंसलवण तक्रेणसपाचितम् । नोवास्विद्यमि दसुहिङ्गुसहित तैलेनवावामित खिन्नतण्डुलसयुतसलवण तक्रं विं- नापाचितम् ॥ लोणित शुभशोलो ण्णरूक्ष विष्टम्भकारकम । दोषघ्नन् मधुरणकोवातश्लेष्मामलपित्तकृत् ॥

लोणी । स्त्री० लोणायाम् ॥

लोत । पुं० न० चिह्ने । अश्रुणि । नेत्राम्बुनि ॥ न० लोप्त्रे ॥ लुना ति । लूञ् । हसिमृग्रिण्त्यादिना तन् । लोतोमिषइतिक्षत्वतूनि र्द्दिष्टतिसूत्रे कैयट ॥

लोत्रम् । न० लोप्त्रे ॥ नेत्रजले ॥ लूञ् । सर्वधातुभ्यष्ट्रन् ॥

लोध्र । पुं० गालवे । शाबरे । ति रीटे । तिल्वे । मार्जने । लोध० इ० भा० प्र० ॥ लोध्रोग्राहीलघु

शीतश्चक्षुष्य. कफपित्तनुत् । क षायोरक्तपित्तास्रग्ज्वरातीसारशो थहृत् ॥ रुणद्धि । रुधिर्० । वा हुलकात् ट्रन् । कपिलकादि ॥

लोध्रवृक्ष । पु० गालवे ॥

लोध्रपुष्पक । पुं० शालिप्रभेदे ॥

लोप । पु० अदर्शने ॥ गम्यमाना र्थस्याप्रयोगएवलोप । यथाविभक्त धनेषु० विभक्ताभ्रातर अत्रोत्तर पदस्थधनस्यलोप ॥ लुप्यते । लु प्लृच्छेदने । कर्म्मणिघञ् ॥ छेदे ॥

लोपा । स्त्री० लोपामुद्रायाम् ॥

लोपाक | लोपापक } पु० शृगाले । फेरौ ॥

लोपाश्चिका । स्त्री० शृगाल्याम् ॥

लोपामुद्रा । स्त्री० अगस्त्यमुने पत् न्याम् ॥ नमुदरातिचमुद्राख्याता नुपेतिच. । लोपेधर्मलोपायसुद्रा हर्षनलभतइत्यर्थ ॥

लोपामुद्रापति । पुं० अगस्त्यमुनौ॥

लोपाशक । पु० शृगाले ॥

लोपाशिका । स्त्री० शृगाल्याम् ॥

लोप्त्रम् । न० चोरिते । चोरधने ॥ लुप्त्० । ष्ट्रन् ॥

लोप्त्री । स्त्री० हस्तलालनयाकृते० वारिमिश्रितगोधूमादिचूर्णपिण्डे । लोयी० मेडी० इतिचलोकभाषा याप्रसिद्धे ॥ षित्त्वान्ङीष् ॥ लो प्त्रे ॥

लोभ । पु० धनतृष्णायाम् । सन्त तिधनागमेजायमाने पुनस्तथात्वई मानेतदभिलाषे । स्वविषयप्राप्त निवर्त्य० इच्छाविशेषे ॥ आत्मनो ऽनुकूलेषुसुखहेतुषुदृश्यमानेषुभूय माणेषुस्मर्यमाणेषुवातद्गुणानु सन्धानाभ्यासेनयोरस्यात्मकोगर्द्धो भिलाषस्तृष्णा० लोभ ॥ धर्म विरोधिनपरद्रव्येच्छायाम् ॥ यथा । परवित्तादिकदृष्ट्वानेतुयोऽभ्दि जायते । अभिलाषोद्विजश्रेष्ठसलो भ परिकीर्त्तितइति ॥ सतुनाश कारणम् । यथा । लोभप्रमादवि श्वासै पुरुषोनश्यतेत्रिभि । तस्माल्लोभोनकर्त्तव्य प्रमादोनन विश्वसेत् ॥ अपिच । त्रिविधंनर कस्येद द्वार नाशनमात्मन. । का म. क्रोधस्तथालोभस्तस्मादेतत्त्र य त्यजेदिति ॥ अस्यस्वरूप यथा । सन्त्येतेमददन्तिनोमदजलप्रम्लान गण्डस्थलावातव्यायतपातिनश्चतुर गाभूयोऽपिलप्स्येपराम् । एतल्लब्ध मिद लभेपुनरिदलब्ध्वाधिकध्या यताचिन्ताजर्ज्जरचेतसांबतनृणा कानामशान्त कथा ॥ अपिच । क्षेत्रग्रामवनाद्रिपत्तनपुरीद्वीपक्षमा मण्डलप्रत्याशावनसूत्रबद्धमनसां लब्ध्वाधिकध्यायताम् । तृष्णे दे वियद्विप्रसीदसितमोध्यङ्गानितुङ्गा

निचेत् तज्ञो प्राणभृताकृत शमकथाब्रह्माण्डलचरपीति ॥ लोभएवमनुष्याणादेहस्थोमहारिपु । सर्वदु खाकर प्रोक्तोदु खद प्राणनाशक ॥सर्वपापस्यमूल हि सर्वदातृष्णयान्वित । विरोधकृत्त्रिवर्णानासर्वार्त्ति कारण तथा ॥ लोभात्त्यजन्तिधर्मवैकुलधर्मतथैवहि । मातर भ्रातर हन्तिपितर बान्धव तथा ॥ गुरु मित्र तथाभाम पुत्रश्चभगिनीतथा । लोभाविष्टोनकिंकुर्यादकृत्य पापमोहित ॥ क्रोधात्कामादहङ्कारात्लोभएव महारिपु । प्राणास्त्यजतिलोभेनकिं पुन . स्याद्नाव्रतम् ॥ तस्माल्लोभाभिभूतस्तुकिंनकुर्यान्नरकिलेतिदेवीभागवतम् ॥

लोभनी । स्त्री॰ महाश्रावणिकायाम् ॥

लोभनीय । त्रि॰ तृष्णोत्पादके ॥

लोभी । त्रि॰ गृध्नौ । लुब्धे । लोभयुक्ते ॥ लोभोस्त्यस्य । इनि . ॥

लोभ्य : । पुं॰ मुद्गे ॥ त्रि॰ लोभनीये ॥

लोमम् । न॰ पुच्छे । लाङ्गूले ॥

लोमकरणी । स्त्री॰ मांसच्छदायाम् ॥

लोमकर्ण : । पुं॰ शशके ॥ त्रि॰ लोमयुक्तकर्णविशिष्टे ॥

लोमघ्न : । पुं॰ इन्द्रलुप्तकेरोगे ॥ त्रि॰ लोमघातके ॥ लोमानिहन्ति । हन॰ । अमनुष्यकर्तृकेचेतिटक ॥

लोम । न॰ तनूरुहे । रोमणि ॥ रौहति । रुह॰ नामन्सीमन्व्योमन् रोमन्लोमन्निति साधु ॥ यद्वा । लूयते । लूशब्दे॰ रुहन्तीभाषणे वा । मनिन् । कपिलकादित्वाल्लत्वम् लूयतेवा ॥

लोमपाद . । पुं॰ ऋष्यशृङ्गमुने पुत्रे । अङ्गदेशीयराजविशेषे ॥

लोमपादपू . । स्त्री॰ चम्पापुर्याम् । मालिन्याम् । कर्णपुरि ॥

लोमफलम् । न॰ भव्ये ॥

लोमवान् । त्रि॰ लोमशे ॥ लोमानि सन्त्यस्य । मतुप् ॥

लोमविष । पुं॰ व्याघ्रादौ ॥

लोमश । पुं॰ मुनिविशेषे ॥ मेषे ॥ त्रि॰ अतिशयलोमान्विते ॥ यथा । कदाचिद्दन्तुरोमूर्ख कदाचिल्लोमश सुखी । कदाचित्तुन्दिलोदु : खीकदाचिच्चञ्चलासती ॥ लोमानिसन्त्यस्य । लोमादिभ्य श : ॥

लोमशकान्ता । स्त्री॰ कर्कट्याम् ॥

लोमशपर्णिनी । स्त्री॰ माषपर्ण्याम् ॥

लोमशपुष्पक . । पुं॰ शिरीषवृक्षे ॥

लोमशमार्जार : । पुं॰ पूतिके । मार्जातके । सुगन्धिनि । मूत्रपतने । गन्धमार्जारकेगन्धगोकुला॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ गन्धमार्जार

वीर्यन्तुवीर्यङ्कृत्कफवातहृत् । क
गडूकोठहर नेत्र्य सुगन्धक्लेदगन्धनु
त् ॥

लोमशा । स्त्री० काकजङ्घायाम् ॥
मांस्याम् ॥ वचायाम् ॥ शूकशि
म्ब्याम् ॥ महामेदायाम् ॥ काशी
शे ॥ शाकिनीभेदे ॥ शृगाल्याम् ॥
अतिबलायाम् ॥ घण्टारवायाम्
। शणपुष्प्याम् ॥ पर्वारी ॥ गन्ध
मांस्याम् ॥ लोमानिसन्त्यस्या. ।
लोमादिष्वाच्छ । टाप् ॥

लोमशातनम् । न० लोमपातने ॥

लोमहर्ष । पुं० रोमहर्षे रोमाञ्चे ॥

लोमहर्षण । पुं० सूते । व्यासशि
ष्ये ॥ न० रोमाञ्चे ॥

लोमहृत् । पुं० हरिताले ॥

लोमालिका । स्त्री० शृगालिकायाम्
। दीर्घजिह्वायाम् । उल्कामुख्याम् ॥

लोमावली । स्त्री० रोमावल्याम् ॥

लोल । त्रि० सतृष्णे ॥ चञ्चले ॥
लोडति । लुडविलोडने । क्वचिद
पवादविषयेप्युत्सर्गप्रवृत्तेरच् । ड
लयोरेकत्वम् ॥ यद्वा । लोडति
। लोडृउन्मादे । पचाद्यच् ॥ देश
विशेषे ॥

लोलमान । त्रि० चलनशीले ॥ ता
च्छील्ये तिचानश् ॥ लुण्ठमाने ॥

लोला । स्त्री० जिह्वायाम् ॥ कमला
याम् । श्रियि ॥ चञ्चलायांनार्यां
म् ॥ कामलायाम् । शक्वरीछन्द
१४ प्रभेदे ॥ तल्लक्षणं यथा । द्वि
सप्तच्छिद्लोलाम सौभोगौचरगौ
चेत् ॥ यथा । मुग्धे यौवनलक्ष्मी
र्विद्युद्विभ्रमलोला०चैलोक्याद्भुत
रूपोगोविन्दोतिदुराप तद्वृन्दाव
नकुञ्जे गुञ्जद्भृङ्गसनाथेश्रीनाथेनसमे
ताखच्छन्दं कुरुकेलिम् । लोलाष्टा
प् ॥

लोलार्क्क । पुं० सूर्ये । काशिस्थे
रवौ । लोलार्ककेशवौकोटीगङ्गा
व्यानगरधनु । कलिलं च शरी
धर्म्म शिवोधन्वोपुनातुमाम् ॥

लोलिका । स्त्री० चाङ्गेर्य्याम् ॥

लोलित । त्रि० वर्त्तुलीकृते ॥ चा
लिते ॥ श्लथे ॥ लोल. सञ्जातोऽ
स्य । इतच् ॥

लोलुप । त्रि० अतिलुब्धे ॥ गर्हितं
लुम्पति । लुप्लृच्छेदने । लुपसदे
तियङन्तादच् ॥

लोलुभ । त्रि० लोलुपे ॥ भृशं लुभ्य
ति । लुभगार्द्ध्ये । धातोरेकाचह्र
तियङन्तादच् ॥

लोष्ट । पुं० न० मृत्खण्डे । पांशु
पिण्डे । लोष्टौ । ढीम० ढेला०
इ० भा० ॥ लोष्टति । लोष्टसङ्घा
ते । पचाद्यच् ॥ यद्वा । लुनाति ।
लूञ्० लोष्टपलितावितिक्तः : त
स्यसुट्० धातोर्गुणश्चनिपातनात्

॥ न० लोहमलो ॥

लो.ष्ठघ्न । पु० लोष्टुभेदने ॥

लोष्टभेदन । पु० कोटिशे । लोष्ट भङ्गसाधनकाष्ठे ॥

लोष्टमर्द्दी । चि० लोष्टुमर्द्दनशोले ॥

लोष्टु । पुं० लोष्टे । दृढमृत्पिण्डे ॥

लोह । पु० सर्वलोहितच्छागे ॥ पु० न० लौहे । लोहविकारे ॥ जोङ्गके । अगुरुणि ॥ सर्वतैजसे रुधिरे ॥ कृष्णायसे । दृषत्सारे । शस्त्रके । कालायसे । लोहा०द्र० भा० प्र० । अथलोहस्योत्पत्त्यादयो यथा । पुरालोमिनदैत्यानानिहतानामरैर्युधि । उत्पन्नानिशरीरेभ्योलो.ह..नविविधानिच ॥ लोहोऽस्त्रीशस्त्रकतीक्ष्णं पिण्डं कालायसायसो । गुरुतादृढतोत्क्लेदकश्मलदाहकारिता ॥ अश्मदोषः सुदुर्गन्धोदोषाः सप्तायसस्यतु । लोहं तिक्तं सरं शीतं मधुरं तुवरं गुरु ॥ रूक्षं वयस्यं चक्षुष्यं लेखनं चानिलं जयेत् । कफ पित्त गर शूल शोथार्शः प्लीहपाण्डुता ॥ मेदोमेहक्रमीन्कुष्ठं तत्किट्टं तद्वदेवहि । षण्ढत्वकुष्ठामयमृत्युदं भवेद्धृद्रोगशूलौकुरुतेश्मरीञ्च । नानारुजानाञ्चतथाप्रकोपं करोतिहृल्लासमशुद्धलोहम् ॥ जोचहारिमदकारिचायसर्वं दशुद्धिमदसत्त्वतं ध्रुवम् ॥ पाटवं नतनुतेशरीरकेदारुणाञ्चहदिरुजाञ्चयच्छति ॥ अथलोहदोषप्रशान्तयेशोधनमभिधीयते । पत्तलीकृतपत्राणिलोहस्याग्नौप्रतापयेत् । निषिञ्चेत्तप्ततप्तानि तैलतक्रे च काञ्जिके ॥ गोमूत्रे चकुलत्थानां कषायेचत्रिधात्रिधा । एवं लोहस्य पत्राणाविशुद्धिः सम्प्रजायते ॥ अथास्यमारणविधिः । शुद्धलोहभवं चूर्णं पातालगरुडीरसैः । मर्दयित्वापुटेद्वह्नौदद्यादेवं पुटत्रयम् ॥ पुटत्रयं कुमार्याश्चकुठारच्छिन्निकारसैः । पुटषट्कं ततोदद्यादेवं तीक्ष्णमृतिर्भवेत् ॥ अन्यच्च । त्रिपेद्द्वादशमाशेनदरदं तीक्ष्णचूर्णतः । मर्दयेत्कन्यकाद्रावैर्यामयुग्मं ततः पुटेत् ॥ एवं सप्तपुटैर्मृत्युलोहचूर्णमवाप्नुयात् । सत्यानुभूतोयोगीन्द्रैः क्रमोऽयंलोहमारणे ॥ कथ्यतेरामराजेनकौतूहलधियाधुना । सूतकाद्द्विगुणं गन्धं दत्त्वाकुर्याच्चकज्जलीम् । द्वयोः समं लोहचूर्णं मर्दयेत्कन्यकाद्रवैः ॥ यामयुग्मं ततः पिण्डं कृत्वाताम्रस्यपात्रके । घर्मेधृत्वारुबूकस्यपत्रैराच्छादयेद्बुधः ॥ यामद्वयाद्भवेदुष्णं धान्यराशौन्यसेत्ततः । दत्त्वोपरिशरावञ्चत्रिदिनान्तेसमुद्धरेत् ॥

पिष्ट्वाचगालयेद्वस्त्रा देव वारितरं
भवेत् । दाडिमस्य दल पिष्टातच्चतु
र्गुणवारिणा ॥ तद्रसेनायसञ्चूर्णं
सन्नीयात्प्लावयेदपि आतपेशोषयें
त्तत्सम्पुटे देव पुन पुन ॥ एवं
वि शतिराचैस्तन्मियतेनात्र सं श
य एव सर्वाणिलौहानिस्वर्णादीन्य
पिमारयेत् । एवंमारितलौहस्य
मात्रा । गुञ्जामेकांसमारभ्ययावत्
स्युर्नवरक्तिका । तावल्लौह सम
श्नीयाद्यथादोषानल नर . ॥ कूष्मा
ण्ड तिलतैलञ्चमाषान्न राजिकात
था । मद्यमम्लरसञ्चैवत्यजेल्लोहसेव
कः ॥ लुह्यते । लुहगार्ध्ये । घञ्
॥ लोहतिवा । अच् ॥ यद्वा । रोह
ति । रुह॰ । अच् । रलयोरैक्यम् ॥
रुह्यतेरा । घञ् । कपिलकादि
॥ लूयतेऽनेनवा । लूञ्॰ । बाहु
लकात्॰ हः वा ॥ यद्यातुषाष्टसे
पार्श्वे पक्कमश्नातिवै द्विज । सपा
पिष्ठोपिभुङ्क्तोऽन्नं रौरवेपरिपच्य
ते इतिमत्स्यसूक्तस्ये लोहपात्रे
भच्चणनिषेध ॥ ब्रह्मवैवर्तेपि ।
यथा । अय . पात्रेपय : पान
गव्य सिद्धान्नमेवच । भृष्टादिका
मधु गुड नारिकेलोदकं तथा । फ
लं मूल यत्किञ्चिदभच्य मुनिरब्र
वीदिति ॥

लोहकण्टक . । पुं॰ मदनद्रुमे ॥
लोहमयकण्टके ॥

लोहकान्त । पुं॰ अयस्कान्ते ॥ लो
ह कान्तोऽस्य ॥

लोहकार । पुं॰ लोहकारके ।
व्योकारे ॥ लोह करोति । डुकृञ्
॰ । कर्मण्यण् ॥

लोहकारक . । पुं॰ लोहकृति । व्यो
कारे । लोहार॰ इ॰ भा॰ । कर्म
कारे ॥ सङ्करजातिरयं यथा । गो
पालात्तन्तुवाय्यान्वै कर्मकारोऽय
भूत्सुत । इ॰ प॰ पु॰ ॥

लोहकिट्टम् । न॰ लोहमले । किट्टे
॥ यल्लोह यद्गुण प्रोक्त तत्किट्टमपि
तद्गुणम् ॥ लोहस्यकिट्टम् ॥

लोहचूर्णम् । न॰ लोहकिट्टे ॥

लोहजम् । न॰ कांस्ये ॥ लोहकि
ट्टे ॥

लोहद्रावी । पुं॰ टङ्कणे ॥

लोहधमनी । स्त्री॰ भस्त्रायाम् ॥

लोहनाल । पुं॰ नाराचे ॥

लोहपृष्ठ । पुं॰ कङ्कपक्षिणि ॥ लो
हमिवपृष्ठमस्य ॥

लोहप्रतिमा । स्त्री॰ लोहमय्याप्रति
मायाम् । सूर्म्याम् ॥

लोहमय । त्रि॰ लोहात्मके ॥

लोहमारक । पुं॰ शालिञ्चशाके ॥

लोहराजकम् । न॰ कलधौते ।
रूप्ये ॥

लोहल . । पुं॰ शृङ्खलाधार्ये ॥ त्रि॰

अन्यत्ताशचिनि ॥ लोहम लोह
लुहकल्पनादाविति स्वामी । लुह
श्लोगार्थे इतिवोपदेव । भावेघञ्
। लोहं लाति । आतोनुपेतिकः ॥
यद्वा । रोहयतेर्वाहुलकादलच् ।
कपिलकादित्वाल्लत्व ॥

लोहवरम् । न० स्वर्णे ॥

लोहशिङ्घाणिका । स्त्री० लोहमले ।
मण्डूरे ॥

लोहश्लेषण: । पुं० टङ्कणे ॥

लोहसङ्करम् । न० वर्त्तलोहे ॥

लोहसार: । पुं० साराख्यलोहे ॥ यथा
भञ्जिखराकारान्यङ्गान्यग्निनलेपि
ते । लोहस्यु र्यचसूक्ष्माणितत्सारम
भिधीयते ॥ लोहसाराद्भयहन्यात्
ग्रहणीमतिसारकम् । अर्शसर्वाङ्ग
जवातशूलक्षपरिणामजम् । छर्दि
क्षपीनसपित्तश्वासमाशुव्यपोहति॥

लोहाख्यम् । न० अगुरुणि ॥

लोहाभिसार: । पुं० भूपानानीराज
नाविधौ । महानवम्याप्राक्प्रस्था
नाच्छस्त्रवाहनादिपूजनविधौ । लो
हाभिहारे । लोहस्यशस्त्रस्यअभित:
सरणम् । सृगतौ । भावेघञ् ॥
लोहाभिसारोऽस्त्रभृतांराज्ञानीरा-
जनाविधि: ॥

लोहाभिहार: । पुं० लोहाभिसारे ।
लोहस्यशस्त्रस्यअभितोहरणम् । हृ
ञोभावेघञ् । लोहाभिहारहस्यु
स्त्रोविधिर्नीराजनोत्तर ॥

लोहार्गल । पुं० तीर्थविशेषे ॥ न०
स्त्री० लोहकीलके ॥

लोहि । न० श्वेतटङ्कणे ॥

लोहिका । स्त्री० खरसीन्दे । खर
पार्श्वे । लौहपार्श्वे ॥

लोहित: । पुं० नदविशेषे ॥ भौमे
। मङ्गले ॥ रक्तवर्णे ॥ रोहित म
त्स्ये ॥ मृगविशेषे ॥ सर्पे ॥ सुरा
सारे ॥ मसूरे ॥ रक्तालौ ॥ रक्त-
शालौ ॥ बलभेदे ॥ न० रक्तगोशीर्षे
कुङ्कुमे॥ रक्तचन्दने ॥ पद्मरागेपतगे
॥ हरिचन्दने ॥ रूपकुङ्कुमे ॥ रु
धिरे ॥ युद्धे ॥ त्रि० रक्तवर्णान्वि
ते ॥ रोहति० रुह्यतेवा । रुह० ।
रुहेरश्चलोवेतीतन ॥

लोहितक: । पुं० पद्मरागमणौ ॥
भौमग्रहे ॥ लोहितएवमणि ' लो
हितान्मणाविति कन ॥ न० रीतौ॥

लोहितचन्दनम् । न० कुङ्कुमे ॥ लो
हितञ्चतच्चन्दनंच ॥ रक्तचन्दने ॥

लोहितपुष्प )
लोहितपुष्पक: ) पुं० दाडिमवृक्षे ॥

लोहितमृत्तिका । स्त्री० गैरिके रक्तवर्ण
मृत्तिकायाम् ॥ लोहिताचासौ
मृत्तिकाच ॥

लोहिता । स्त्री० रागादिरक्तायाम् ॥
वराहक्रान्तायाम् ॥ रक्तपुनर्नव
याम् ॥ वर्णादनुदात्तादितिपाक्षि

कौ।ङीबभावस्तकारस्यनकारादेश स्वन ।

लोहिताक्ष । पुं॰ विष्णौ ॥ प्रतिष्टायामग्निशेषे ॥ कोकिले ॥ त्रि॰ रक्तवर्णचक्षुर्युक्ते ॥ लोहितेअक्षिणीयस्य । बहुव्रीहौसक्थ्यक्ष्णोः स्वाङ्गात्षच् ॥

लोहिताङ्ग । पु॰ कुजे ॥ कम्पिल्लके ॥ लोहितान्यङ्गान्यस्य ॥

लोहितानन । पु॰ नकुले ॥ त्रि॰ रक्तवर्णमुखे ॥

लोहिताय । न॰ ताम्रे ॥

लोहितायसम् । न॰ रक्तवर्णलोहजातौ ॥

लोहितिका । स्त्री॰ लोहितायाम् ॥ लोहितेव । लोहिताम्मणाविल्यच ॰लोहिताखिङ्गबाधनंवेतिकन ॥

लोहित्य । पु॰ अब्धौ ॥ नदे ॥ व्रीहौ ।

लोहिनिका । स्त्री॰ लोहिन्याम् ॥ लोहिन्येव । लोहितालिङ्गबाधनंवेतिकन् ॥

लोहिनी । स्त्री॰ लोहितायाम् ॥ वर्णादनुदात्तादितिङीप्॰ तकारस्यच नकारादेश ॥ गुञ्जायाम् ॥

लोहोत्तमम् । न॰ स्वर्णे काञ्चने ॥ लोहेषुसर्वतैजसेषुउत्तमम् ॥

लौकायतिक । पुं॰ चार्वाकदर्शनाभिज्ञे ॥ लोकायतमधीतेवेदवा । उक्थादित्वात्॰ क्रतूक्थादिसूत्रान्ताट्ठक् ॥ तार्किकभेदे ॥

लौकिक । त्रि॰ अप्राप्तशास्त्रपरिशीलनजन्यबुद्धिप्रकर्षे । प्रतिपाद्ये ॥ लोकप्रसिद्धे ॥ लोकव्यवहारमात्रपरे ॥ लोकानुरञ्जनमेवतत्त्वमिति लौकिकानाभ्रान्तिमात्रमेव । लोकस्यभिन्नरुचित्वात्॰ तदनुरञ्जनस्येश्वरेणापिकर्तुमशक्यत्वात् ॥ यथाहु । विद्यतेनखलुकश्चिदुपाय सर्वलोकपरितोषकरोय । सर्वथास्वहितमाचरणीय किं करिष्यति जनोबहुजल्पइति ॥ लोकेविदित । अर्थशास्त्रादिज्ञाने ॥ लोकसर्वलोकाट्ठञ् ॥ भवार्थेत्वध्यात्मादित्वाट्ठञ् ॥ स्मृत्युपनिबद्धे धर्मादौ । न॰ जागरिते ॥

लौकिकाग्नि । पु॰ असंस्कृताग्नौ ॥

लौल्यम् । न॰ चापल्ये । लोलस्यभाव ष्यञ् ॥

लौह । पुं॰ न॰ लोहे ॥ लोहएव । प्रज्ञाद्यण् ॥ लोहस्यविकार । रजतादित्वादञ् ॥

लौहद्वारक । पु॰ नरकभेदे ॥

लौहजम् । न॰ मण्डूरे ॥

लौहभाण्ड । पुं॰ अश्मभाले । हिमामुजिस्ता॰ इतिसाधारणभाषाप्रसिद्धे ॥ न॰ लोहनिर्मितभाण्डे ॥

लौहभू । स्त्री० कठिन्याम् ॥

लौहशङ्कु । पु० नरकविशेषे ॥ लौहनिर्मितकीलके ॥

लौहा । ) स्त्री०
लौहात्मा । ) स्त्री० कठिन्याम् ॥

लौहित । पु० लोहिते ॥ त्रि० लोहितसम्बन्धिनि ॥

लौहितीक । पु० स्फटिके ॥ त्रि० लोहितवर्णतुल्ये ॥ लोहितद्रव । कार्कलोहितादीकक् ॥

लौहित्य । पु० नदविशेषे । ब्रह्मपुत्र इतिप्रसिद्धे ॥ अब्धौ । सागरे ॥ व्रीहौ ॥ न० लोहितत्वे । रक्तिमनि ॥ तीर्थविशेषे ॥ ✝ ✻ ✝

लकारस्समाप्त

•|—|•

---

वकारस्य प्रारभ

व० । अ० इवार्थे । औपम्ये ॥ पादपूरणे ॥

व । पुं० वकारे ॥ सान्त्वने ॥ वाते ॥ वरुणे ॥ वातिवानवा ॥ वागतिगन्धनयोः । ड ॥ बाहौ ॥ मन्त्रणे ॥ कल्याणे ॥ बलवति ॥ शार्दूले ॥ वस्त्रे ॥ आलुकी ॥ वन्दने ॥ न० प्रचेतसि ॥ वरुणबीजे ॥

वंश । पुं० पितृपितामहाद्युत्पादकप्रबन्धे । सन्ततौ । गोत्रे । जनने । कुले । जन्मनैकलक्षणे । सन्ताने ॥ शिष्याचार्यसन्तानाविच्छेदे ॥ त्वक्सारे । कर्मारे । त्वचिसारे । तृणध्वजे । वास० इ० भा० प्र० ॥ अस्य गुणा यथा । वंश सरो हिम स्वादु कषायो बस्तिशोधन । छेदन कफपित्तघ्न कुष्ठास्रव्रणशोथजित् ॥ तत्करीर कटु पाकेर सेरूक्षो गुरु सर । कषाय कफकृत्स्वादुर्विदाही वातपित्तल ॥ तद्यवास्तु सरा रूक्षा कषाया कटुपाकिन. । वातपित्तकरा उष्णा बद्धमूत्रा कफापहा : ॥ पृष्ठावयवे ॥ वर्गे । सङ्घे ॥ वाद्यविशेषे । वसी० वासी० इ० भा० ॥ इक्षुविशेषे । वंशके ॥ सालवृक्षे ॥ वमति० वम्यतेवा । टू वम उद्गिरणे । मृष्ट्रभिम्य शक् ० इतितुन । उक्तसूत्रस्योज्वलदत्तादिसूत्रवृत्तिष्वदर्शनात् ० अनुनासिकस्य क्वि झलोः क्ङिति पधा दीर्घ प्रसङ्गाच्च ॥ वनति० वन्यतेवा । वनशब्दे ० वनसम्भक्तौवा । बाहुलकात् ० श ॥ उश्यते ० वष्टिवा । वशकान्तौ । घञ् ० अज् वा । सङ्ख्याव शेनेतिनिर्देशान्नुम् । आ च्छ्रीत्यनुमितियोगविभागाद्वा ॥

वंशक पु० इक्षुविशेषे । वङ्गोखा० इ० देशभा० प्र० । वांशा० सोमसाडा० इ० व० गौ० दे० भा० प्र० । दीर्घ

घोर सुकठिन सच्चारोवंशक स्मृत ॥ वंशकस्तूनभिष्यन्दीलघु दोषत्रयापह ॥ वंशद्रुव । द्रुवेप्र तिक्ततावितिकन ॥ वाशपातामा- च०द्रु०गो०दे०भा०प्र०मल्ले ॥ न० अगुरुणि ॥
वंशकठिन । पु० देशविशेषे ॥ व शा वेणवः कठिनायस्मिन स ॥
वंशकफम् । न० द्रुन्द्रतूले । वृद्धसूच के । ग्रीष्मह्रासे । बुढियाकासूत० द्रु०भा०प्र० ॥
वंशकर्पूररोचना । स्त्री० वंशरोचना याम् ॥
वंशक्षीरी । स्त्री० वंशरोचनायाम् ॥ वंशात्क्षीरमस्या । गौरादि ॥
वंशगुल्म । पु० तीर्थविशेषे ॥
वंशज । पुं० वेणुयवे । वंशबीजे ॥ त्रि० वंश्ये । सद्वंशजाते ॥ वीज्ये ॥ वंशेजात । जनी० । ड ॥
वंशजा । स्त्री० वंशरोचनायाम् ॥ वं- शात्०जायते । जनी० । पञ्चम्या मितिड ॥
वंशतण्डुल । ) पु० वेणुयवे । वं
वंशधान्यम् । ) न० शयवे ॥
वंशनालिका । स्त्री० वंशीवाद्ये ॥
वंशनेत्रम् । न० इक्षुमूले ॥
वंशपत्रः । पु० नले ॥ न० वंशपत्रदले ॥

वंशपत्रक । पु० श्वेतेक्षौ ॥ वाश पातामाच०द्रु०गो०टे०भा०प्र०इ द्रुमल्ले ॥ नले ॥ न० हरिताले ॥
वंशपत्रपतितम् । न० अत्यष्टिच्छन्द १७ प्रभेदे ॥ यथा । दिङ्मुनिव शपत्रपतितभरनभनलगै ॥ य- था । नूतनवंशपत्रपतितरजनिजल लव० पश्यमुकुन्दमौक्तिकमिवोत्त- ममरकतगम् । एषचतचकोरनिक र प्रपिवतिमुदितो०वान्तमवेक्ष्य- चन्द्रकिरणैरमृतकणमिव ॥
वंशपत्री । स्त्री० वेणुपत्र्याम् । हिङ्गु- पर्य्याम ॥ हिङ्गुपत्रीगुणाविज्ञैर्वं शपत्रीचकीर्त्तिता ॥ नाडीहिङ्गु- नि ॥ तृणविशेषे । वंशदलाया- म ॥ अस्यागुणा । सुमधुरत्त्वशि शिरत्वपित्तरक्तदोषनाशित्त्वरुच्यत्त्वा नि०पशूनादुग्धदायित्त्वञ्चेतिराज निर्घण्ट ॥
वंशपीत । पुं० कणगुग्गुलौ ॥
वंशपुष्पा । स्त्री० सहदेवीलतायाम् ॥
वंशपूरकम् । न० इक्षुमूले ॥
वंशमूलकम् । न० तीर्थविशेषे ॥
वंशयव । पु० वंशधान्ये ॥ यवाव- शभवारूक्षा कषाया कटुपा- किन । बद्धमूत्रा . कफघ्नाश्चवा- तपित्तकरा . सरा ॥
वंशरोचना । स्त्री० त्वक्क्षीर्याम् वे

गव्याम् । श्वेतायाम् ॥ गुणाय-
था । वंशजाभ्रू र्णाहृष्यावल्याम्ला
हीचशीतला । तृष्णाकासज्वरघ्ना
सक्षयपित्तास्त्रकामला । हरेत्कु
ष्ठव्रण पाण्डुकषायावातकृच्छ्रजि-
त् ॥ रोचते । रुच० । नन्द्यादि ।
वंशरोचना ॥

वंशरोचनिका । स्त्री० वंशरोचनाया
म् ॥

वंशलोचना । स्त्री० ) वंशरोचना
वंशशर्करा । स्त्री० ) याम् ॥

वंशशलाका । स्त्री० वीणामूले ॥

वंशस्तनितम् । न० वंशस्थविले ॥

वंशस्थम् । न० जगती १२ प्रभेदे ॥
यथा । पुरोजकार . परतस्तसञ्ज-
कौगणोजकारोरगणस्तत . परम् ।
निवेशितश्चेद्यशवन्तभूपतेब्रवीतिव
शस्थमदस्तदाफणी ॥ जतौतुवंश-
स्थमुदीरितंजराविति चास्यलक्षणा-
म् ॥ त्रि० वंशस्थिते ॥

वंशस्थविलम् । न० जगति १२ प्रभे
दे । वंशस्थेवृत्ते ॥ यथा । वदन्ति
वंशस्थविलजतौजरौ । यथा । वि
लासवंशस्थविलमुखानिलै प्रपू-
र्यय : पञ्चमरागमुद्गिरम् । व्रजाङ्ग
नानामपिगानशालिनाजहारमान
सहरि : पुनातुन : ॥

वंशाग्रम् । न० वंशाङ्कुरे ॥

वंशाङ्कुर । पुं० करीरे । वंशाग्रे ।
यवफलाङ्कुरे ॥

वंशानुचरितम् । न० वंशचरित्रव-
र्णने ॥

वंशिकम् । न० अगुरुणि ॥ वंशोस्त्य-
स्य । अतइनिठनाविति ठन् ॥

वंशिका । स्त्री० वंशाम वेणौ ॥ अ
गुरुणि ॥

वंशी । स्त्री० मुरलीवाद्ये । वंसरी०
इ० भा० ॥ कर्षचतुष्टये ॥

वंशीधर । पु० श्रीकृष्णे ॥ धरतीति
धर । वंशाधर ॥ त्रि०वंशाधा-
रके ॥

वंश्य । त्रि० सद्वंशजाते । कुल्ये ।
बीज्ये ॥ वंशेभव . ॥ दिगादित्वा
द्यत् ॥

वंहिष्ठ : । त्रि० अत्यन्तबहुले ॥ अय-
मेषामतिशयेनबहुल । अतिशाय
नेतमबिष्ठनाविति इष्ठन् ॥ प्रियस्थि-
रस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृ-
न्दारकाणाप्रस्थस्फवर्बंहिगर्वर्षि त्र
पद्राघिवृन्दाइतिवंह्यादेशेनसाधु ॥

वंहीयान् । त्रि० बहुलतरे ॥ अयमन
योरतिशयेनबहुल . । द्विवचन व
भज्योपपदेतरबीयसुनाविति ईयसुनि
प्रियस्थिरेत्यादिनावंह्यादेश . ॥

वक । पु० बकार्थेषु ॥ यमूल्यविशेषे ॥
यथा । जलकच्छ्रापाताळदोलाभूध
रवालुक : । बकाद्यायन्त्रभेदास्युर्वे
ज्ञात्वाद्यायमूषिका ' ॥ दीर्घका-

शठका चक्षुष्पा गिलयेत्स्वल्पभाण्डकम् । तिर्यक्कृत्वा पचेच्च त्यांवकायन्त्रमिदस्मृतम् ॥ असुरविशेषे ॥

वक्रवृत्ति । पुं० वक्रवृत्तौ ॥ तल्लक्षणं यथा । अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च बकव्रतिरुदाहृतः ॥

वकुल । पु० वकुले ॥ न० अस्य फले ॥ अस्य गुणाः । वकुलं मधुरग्राहि दन्तस्थैर्यकरं परम् ॥ पुष्पगुणास्तु । पक्वकषायं मधुरं शीतं पित्तकफास्रनुत् । तद्वकुलपुन्नागकह्लारोत्पलपाटलम् ॥

वक्तव्य । त्रि० कुत्सिते । विहितकर्मत्यागाल्लोकविगर्हिते ॥ हीने वचनार्हे । अधीने ॥ वचनार्थे : । वच परिभाषणे० ब्रूञ् आदेशाभावे तव्य ॥ न० वचने ॥

वक्ता । त्रि० पण्डिते ॥ वदे । वदावदे । यो हि वक्तुं जानाति तस्मिन् औचित्यात् बहुविशिष्टं यो वदति तत्रैव त्यर्थे ॥ सुष्ठुवक्तरि ॥ बहुभाषिणि । वाचोयुक्तिपटौ । वाग्मिनि । वावदूके ॥ वक्ति । वच परिभाषणे । तृन् ॥

वक्त्रम् । न० आस्ये । मुखे ॥ यथा । सौम्यं च सततं वक्त्रं मम तं यश्च देहिन । महाराजा भवेन्नित्यं विपरीते तु निर्धनं दृति ॥ उच्यतेऽनेन । वच ० । ब्रूञो वचिर्वा । गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्र ॥ वस्त्रभेदे तगरमूले । विषमवृत्तान्तरे ॥ तस्य लक्षणादि यथा । भवत्यर्द्धसमं वक्त्रं विषमं स्वकदाचन । तयोर्द्वयोरूपान्ते च छन्दस्तद्बुधैरुच्यते ॥ वक्त्रयुग्म्या मगौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ॥ अच्छिरावल्यास्रोक्तं पूरयितव्यं ॥ वक्त्रम्भोजं सदास्मेरं चक्षुर्नीलोत्पलं फुल्लम् । जलवीनां सुरारातेर्भेतीभृङ्ग जहारोच्चैः ॥

वक्त्रखुर । पु० दन्ते ॥

वक्त्रज । पु० ब्राह्मणे ॥ त्रि० मुखजाते ॥

वक्त्रतालम् । न० मुखवाद्ये ॥

वक्त्रपट्ट । पु० अश्वान्नभोजनपात्रे । तोवडा० इ० भा० प्र० ॥

वक्त्रभेदी । पु० तिक्तरसे ॥ त्रि० मुखभेदके ॥

वक्त्रवास । पु० नागरङ्गे ॥ मुखगन्धे ॥

वक्त्रशोधनम् । न० भव्ये ॥ मुखशुद्धिकरणे ॥

वक्त्रशोधी । पुं० जम्बीरे ॥ त्रि० आस्यशोधके ॥

वक्त्रासव । पुं० अधरमधुनि ॥

वक्र । पुं० शनैश्चरे ॥ मङ्गलग्रहे ॥ रुद्रे ॥ त्रिपुरासुरे ॥ पर्पटे ॥ वक्र

गतिविशिष्टग्रहे ॥ न० सरिद्वङ्के पुट भेदे ॥ त्रि० अनृजौ । अराले । कुटिले । क्रूरे ॥ वक्रतिस्म । वक्रगतौ । स्फायितञ्चीतिरक् । न्यङ्क्वादित्वात्कुत्वम् ।
वक्रकाण्ट । पु० बदरवृक्षे ॥
वक्रकण्टक । पु० खदिरवृक्षे ॥
वक्रखड्ग । पुं० करवाले ।
वक्रग्रीव । पु० उष्ट्रे ॥
वक्रचञ्चु । पु० शुके । कीरे ॥
वक्रतालम् । न० ) मुखवाद्ये ॥
वक्रताली । स्त्री० )
वक्रतुण्ड । पुं० गणेशे ॥ शुकखगे ॥
वक्रदंष्ट्र । पु० शूकरे ॥
वक्रनक्र । त्रि० खले । पिशुने ॥ पु० शुकखगे ।
वक्रनालम् । न० मुखवाद्ये ॥
वक्रनासिक । पु० पेचके । त्रि० कुटिलनासायुक्ते ॥
वक्रपट्ट । पुं० तलसारके । तङ्क० क्र० भा० प्र० ॥
वक्रपुच्छ । पुं० कुक्कुरे ॥
वक्रपुष्प । पु० पलाशद्रुमे ॥ वकवृक्षे ॥
वक्रवालधि । पु० शुनि ॥
वक्रभणितम् । न० वक्रोक्तौ । कुटिलवाक्ये ॥
वक्रम । पु० पलायने
वक्रलाङ्गूल । पुं० कुक्कुरे ॥
वक्रवक्त्र । पु० शूकरे ॥
वक्रशल्या । स्त्री० कुटुम्बिनीक्षुपे ।
वक्रशृङ्गी । स्त्री० गोविशेषे ॥
वक्रा । स्त्री० शृङ्गाम् । अजशृङ्ग्याम् ॥
वक्राग्रम् । न० कपाटवक्रवृक्षे ॥
वक्राङ्ग । पुं० हंसे । न० कुटिलावयवे ॥
वक्री । पुं० बुधे ॥ त्रि० वक्रगतिविशिष्टे ॥
वक्रोक्ति । स्त्री० काकूक्तौ ॥ शब्दालङ्कारप्रभेदे । यथा । यदुक्तमन्यथावाक्यमन्यथान्येन योज्यते । श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ॥ तत्रैतिश्लेषवक्रोक्तिः काकुवक्रोक्तिश्च ॥ पदभङ्गश्लेषे यथा । नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो वामानां प्रियमादधासि हितकृन्नैवाबलानां भवान् । युक्ताक्रित्यहितकर्त्तनं ननु बलाभावप्रसिद्धात्मनः सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः ॥ अभङ्गश्लेषे यथा । वहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता । त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित् ॥ काक्वा यथा । गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतो गन्तुम् । अलिकुलकोकिलललिते नैष्यति सखि सुरभि

समयेसौ ॥ कुटिलोक्तौ ॥ यथा । वाद्रीव्याकरण विनैव विदुषाधृष्ट प्रविष्ट सभाजल्पन्नल्पमति स्म यात्पटु वटु भ्रूभङ्गवक्रोक्तिभि । द्दीत सन् प्रहासमेतिगणकोगोला नभिज्ञस्तथाज्योतिर्वित्सदसिप्रग ल्भगणकप्रश्नप्रपञ्चोक्तिभि ॥

वक्रोष्टिका । स्त्री० स्मिते । यदृच्छिर दृहासे । ईषद्धासे ॥

वक्षणम् । पुं० वक्षसि ॥

वक्षा । पु० अनडुहि ॥ वहति । वह० । वहिहाधाञ्भ्यश्छन्दसीत्य सुन्०प्रत्ययस्यचसुट् इतिवृत्तिकृ त् ॥

वक्ष । न० अवयवविशेषे । हृदयादु परिकण्ठादधोभागे । क्रोडे । भु जान्तरे । उरसि । वत्से ॥ अथशु भाशुभलक्षणं यथा । अन्नवान्सम वक्षा स्यात्पीनैर्वक्षोभिरूर्जित । वक्षोभिर्विषमैर्निस्व शस्त्रेण निधनस्तथेतिगारुडे ६६ ॥ अथ वान्समवक्षा स्यात्पीनै शूरा धनान्विता । अल्पैस्त्वविकलाद्री नाविषमै शस्त्रमृत्यवइतिसमुद्र ॥ वक्षति । वक्षसङ्घाते । असुन् ॥ उच्यतेऽनेनवा । वच० । पचिवचि भ्यासुट्चेत्यसुन् ॥

वक्षोज । पु० ) कुचे । स्तने ॥
वक्षोरुहम् । न० )

वगला । स्त्री० देवीविशेषे ॥ यथा । वैद्यनाथेतुवगलास्थान सर्वोत्तम म तमिति ॥

वगलामुखी । स्त्री० महाविद्याविशे षे । पीताम्बरायाम् । वगलायाम् ॥

वगाह । पु० अवगाहे ॥ भागुरीच्छ याल्लोप ॥

वग्नु । पु० वक्तरि ॥ वक्ति । वच० । वचिगंगेतिनु ॥

वङ्क । पुं० पर्याणभागे । पर्याणको टौ ॥ नदीपार्श्वे ॥ भङ्गुरे । व क्रे । इतिमेदिनिकर ॥

वङ्कसेन । पुं० अगस्तिद्रुमे ॥

वङ्का । स्त्री० वल्गाग्रभागे ॥

वङ्किल । पुं० कण्टके । द्रुमनखे० इ० त्रि० शेष ॥

वङ्क्य । त्रि० वक्रे ॥

वङ्क्रि । पु० न० वाद्यप्रभेदे ॥ वङ्कते । वकिकौटिल्ये । वङ्क्यादय श्चेतिक्रिन्नन्ता साधु ॥ गृहदा रुणि ॥ पार्श्वाऽस्थनि । पशुके ॥

वङ्क्रिम । त्रि० कुटिले ॥

वङ्क्षण । पुं० अस्थ्यधऊरुमेढ्रयो मन्तरालसन्धौ ॥ वाङ्क्षति० वाङ् क्षत्येवा । वाक्षिकाङ्क्षायाम् । ल्युट् बाहुलकान्नातोह्रस्व ॥ वङ्क्षतेवङ्क्षणइतिस्वामी ॥ यद्वा । वक्षति । वक्षरोषसङ्घाते । ल्युट् । आक्षीनदीनुर्मित्यच०

नुमितियोगविभागान्नुम् ॥
वङ्क्षु । स्त्री० गङ्गास्रोतोविशेषे । यथा । तस्या स्रोतसि सीता च वङ्क्षुर्भद्रा च कीर्त्तितेति शब्दमाला ॥ सा तत्र पर्वतादिक्षु चतुर्द्धा प्रतिपद्यते । सीता चालकनन्दा च वङ्क्षुर्भद्रा च वै क्रमात् ॥ सा गङ्गा ॥ वङ्क्षुश्च पश्चिमगिरीनतीत्य सकलं ततः । पश्चिमं केतुमालाख्यं वर्षमन्वेति सागरम् ॥
वङ्ग । पु० कार्पासे । वृन्ताके ॥ चन्द्रवंशीयबलिराजपुत्रे ॥ वङ्गाः पु० भूम्नि० । जनपदविशेषे ॥ रत्नाकरं समारभ्य ब्रह्मपुत्रान्तगः शिवे । वङ्गदेशो मया प्रोक्तः सर्वसिद्धिप्रदर्शकः ॥ वङ्गानां निवासो जनपदः वङ्गाः । निवासीणो जनपदे लुप् । लुपि युक्तवद्भाव ॥ न० रङ्गे । त्रपुणि । सीसे । नागजीवने । मृद्वङ्गे । रङ्गे । सिहणे । रागकृ० भा० प्र० धातुविशेषे ॥ खुरकमिश्रकश्चापि द्विविधवङ्गमुच्यते । उत्तमः खुरकस्तत्र मिश्रकस्त्वहितमतः ॥ पद्म्यां चरकम् ॥ सीसके ॥ वङ्गति । वगिगतौ । पचाद्यच् ॥
वङ्गजम् । न० सिन्दूरे ॥ त्रि० वङ्गदेशजाते ॥
वङ्गन । पु० वार्त्ताकौ ॥
वङ्गशुल्वजम् । न० कांस्ये ॥

वङ्गसेन ।
वङ्गसेनक ।) पु० वकद्रुमे । अगस्तिवृक्षे । मुनिद्रुमे ॥ अस्य पुष्पगुणाः । वासकस्य च पुष्पाणि वङ्गसेनस्य चैव हि । कटुपाकानि तिक्तानि कासक्षयकराणि च ॥
वङ्गला । स्त्री० रागिणीविशेषे ॥
वङ्गारि । पुं० हरिताले ॥
वङ्गाल । पु० भैरवरागपुत्रे ॥
वङ्गाली । स्त्री० भैरवरागस्य रागिण्याम् ॥
वच । पु० कीरे । शुकपक्षिणि ॥ वक्ति । वच परिभाषणे । पचाद्यच् ॥
वचक्नु । पुं० विप्रे । ब्राह्मणे ॥ ऋषिविशेषे ॥ त्रि० वावदूके ॥ वक्ति । वच० । स्युवचिभ्योन्युजागूजक्नुचः इत्यक्नुच् ॥
वचण्डा । स्त्री० वरिण्डायाम् ॥
वचण्डी । स्त्री० शारिकायाम् ॥ वर्त्तौ ॥ शस्त्रप्रभेदे । क्षुरिकायाम् ॥
वचनम् । न० शुण्ठ्याम् । उक्तौ । वाचि । भाषणे ॥ श्रुतिमाचात्सुधातुल्यं सर्वकालसुखावहम् । सत्यसारहितकरवचनं श्रेष्ठमीप्सितम् ॥ वचेर्भावे ल्युट् उच्यते ऽनेन वा ॥ शुण्ठ्याम् ॥ वाचोयुक्ती ॥
वचनग्राही । त्रि० वचनेस्थिते ॥
वचनीय । त्रि० वक्तव्ये ॥ वचेरनीयर् ॥

वचनीयता । स्त्री० निन्दायाम् । लोकापवादे ॥ भावेतल् ॥

वचनेस्थित । त्रि० विधेये । विनयग्राहिणि । आश्रवे । प्रवृत्तिनिवृत्त्योर्विधातुशक्ये ॥ वचनेतिष्ठति स्म । ष्ठा० । गत्यर्थेतिक्तः । तत्पुरुषेकृतोत्यलुक् ॥

वचनोपक्रम । पु० वाक्यारम्भे । उपन्यासे ॥

वचर. । पु० कुक्कटे ॥ शठे ॥

वचलुः । पु० वैरिणि ॥ शत्रौ ॥

वचः । न० वाक्ये । वाचि । वचने ॥ वच० । सर्वधातुभ्योऽसुन्नित्यसुन् ॥

वचसाम्पति । पुं० सुरगुरौ । बृहस्पतौ ॥

वचा । स्त्री० शारिकायाम् ॥ उग्रगन्धौषधौ । षड्ग्रन्थायाम् । गोलोम्याम् । शतपर्विकायाम् अस्या गुणायथा । वचोग्रगन्धाकटुकातिक्तोष्णावान्तिवह्निकृत् । विबन्धाध्मानशूलघ्नीशकृन्मूत्रविशोधनी ॥ अपस्मारकफोन्मादभूतजन्त्वनिलान्हरेत् ॥ अपिच । अग्निवीपयसाऽन्येनमासमेकंतुसेविता । वचाकुर्यान्नरप्राज्ञश्रुतिधारणसयुतम् ॥ चन्द्रसूर्यग्रहेपीतपलमेकपयोन्वितम् । वचायास्तत्क्षणंकुर्यान्महाप्रज्ञान्वितनरम् ॥ अथवचाभेदाः । पारसीकवचाशुक्लाप्रोक्ताहैमवतीतिसाहैमवत्युदितातद्वत्कूलघ्नीविशेषतः ॥ अथमहाभरीवचा० यस्याकुलञ्जन० इतिभाषायानामान्तरम् । सुगन्धाप्युग्रगन्धाचविशेषात्कफकासनुत् । सुस्वरत्वकरीरुच्याहृत्कण्ठमुखशोधनी ॥ अपरासुगन्धास्थूलग्रन्थिर्यस्यालोकेमहाभरा इतिनाम । स्थूलग्रन्थि. सुगन्धान्याततोहीनगुणास्मृता ॥ द्वीपान्तरवचा ० याचोपचीनीतिनाम्नालोकेविख्याता । द्वीपान्तरवचाकट्वीतिक्तोष्णावह्निदीप्तिकृत् । विबन्धाध्मानशूलघ्नीशकृन्मूत्रविशोधनी ॥ वातव्याधिमपस्मारमुन्मादतनुवेदनाम्व्यपोहतिविशेषणफिरङ्गामयमुद्धतम् ॥ वक्ति । वचेरन्तर्भावितण्यर्थात्पचाद्यच् । टाप् ।

वचोग्रहः । पु० कर्णे ॥

वचोहर. । त्रि० दूते ॥ वचोहरति । हरतेरनुद्यमनेऽच् ॥

वज्र । पुं० श्रीकृष्णस्यप्रपौत्रे ॥ अनिरुद्धात्सुभद्रायावज्रोनामन्टपोभवत् इतिगारुडे १४४ ऽध्याय ॥ विष्कम्भादिषुपञ्चदशेयोगे ॥ अत्रजातस्यफलं यथा । गुणीगुणज्ञोबलवान्महौजा. सद्रत्नवस्त्रादिपरीक्षक. स्यात् । वज्राभिधानेयदि

चेत्प्रसूतोवज्रोपम स्याद्रिपुका
मिनीनाम् ॥ कोकिलाक्षवृक्षे ॥
श्वेतकुशे ॥ सेहुण्डवृक्षे ॥ न०
बालके ॥ धात्याम् ॥ काञ्जिके
॥ वज्रपुष्पे ॥ लोहविशेषे ॥ सच
बहुविधोयथा । नीलपिण्डम्०
अरुणाभम्० मोरकम्० नागकेश
रम्० तित्तिराङ्गम्० स्वर्णवज्रम्
०शैवालवज्रम्०शोणवज्रम्० रोहि
णीकाङ्कोलम्०ग्रन्थिवज्रकम्० मद
नाख्यमित्यादि । एतेषानामानुरूप
चिह्नमितिपुराणम् ॥ अभ्रविशेषे॥
अस्योत्पत्त्यादिर्यथा । पुरावधाय वृ
त्रस्य वज्रिणा वज्रमुद्धृतम् । विस्फु
लिङ्गास्ततस्तस्य गगने परिसर्पिताः
॥ ते निपेतुर्घनध्वाना शिखरेषु म
हीभृताम् । तेभ्यएव समुत्पन्नं तत्
तद्गिरिषु चाभ्रकम् । तद्वज्रं वज्रजा
तत्वादभ्रमभ्ररवोद्भवात् । गगना
त्स्खलितं यस्मा द्गगनञ्चततो मत
म ॥ पिनाकं दर्दुरं नाग वज्रञ्चेति
चतुर्विधम् । वज्रन्तु वज्रवत्तिष्ठेत्
तन्नाग्नौ विकृतिं व्रजेत् ॥ सर्वाभ्रे
षु वरं वज्रं व्याधिवार्द्धक्यमृत्युहृत् ।
पु० न० इन्द्रास्त्रविशेषे । ह्रादि
न्याम् । कुलिशे । भिदुरे । पवौ
। शतकोटौ । स्वरौ । शम्बे । दम्भो
लौ । अशनौ । दधीचेरस्थिसम्भवे
ऽस्त्रे । आयुधानांमध्ये भगवतोवि



भूतौ ॥ वज्रवारकविधिर्यथा मुने
कण्वाणमिञ्चऽयजे मिनेश्चापिकोर्त्तं
नात् ॥ विद्युदग्निभयंनास्तिपठि
तेचगृहोदरे ॥ लिखितेचगृहोदरे०
इतिवापाठः ॥ जैमिनिश्चसुमन्तु
श्चवैशम्पायनएवच । पुलस्त्य पु
लहश्चैवपञ्चैतेवज्रवारका ॥ रत्न
विशेषे । अभेद्ये । हीरके । हीरा०
इ० भा० प्र० अस्यविशेषोयथा ।
स्वच्छं विद्युत्प्रभं स्निग्धं सौन्दर्यं ल
घु लेखनम् । षडारं तीक्ष्णधारञ्च
सुशाम्पारं श्रियं दिशेत् ॥ भस्मा
भं काकपादञ्च रेखाक्रान्तं सवर्त्तुल
म् । आधारमलिनं बिन्दुसन्त्रासे
स्फुटितं तथा ॥ नीलाभं चिपिटं
रूक्षं तद्वज्रं दोषलं त्यजेत् ॥ वज्रस्य
चतुर्वर्णलक्षणं यथा । श्वेतं तत्त्वोहि
तपीतमेचकमयाद्यायातरां क्रमा
द्विप्रादित्वमिहाश्रयत्सुमनसः श
संतिसत्यंततः । स्फीतांकीर्त्तिम
नुत्तमां श्रियमिदं दत्ते यथासन्धृत
मर्त्यानामयथायथं तु कुलिशं पथ्यं
हितं जायते ॥ तस्यपरीक्षायथा
। यत्पाषाणतलेनिकाषनिकरैर्नोद्
घृष्यतेनिष्ठुरैर्यच्चान्योपलखोहमुद्गर
मुखैर्लेखां नयात्याहनम् । यच्चा
न्यन्निजलीलयैवदलयेद्वज्रं गणा
भिद्यतेतज्जात्यंकुलिशं वदन्तिकुश
लाः श्लाघ्यं महार्घ्यञ्चतत् ॥ तस्य

वर्णगुणोयथा। विप्र सोपिरसाय नेषुवलवानष्टाङ्गसिद्धिप्रदोराजन्य स्तुनृणांवलीपलितजिन्मृत्यु जयेद्द्रुसा। द्रव्याकर्षणसिद्धिदस्तुसुत रावैश्योऽथशूद्रोभवेत्सर्वव्याधिहर स्तदेषकथितोवज्रस्यवर्णोगुण॥ अपिच। वज्रस्यनामलक्षणगुणायथा। हीरक पुंसिवज्रोस्त्रीचन्द्रोम णिवरश्चस। सतुश्वेत स्मृतो विप्रोलोहित क्षत्रियोमत॥ पीतोवैश्योऽसित' शूद्रश्चतुर्वर्णा त्मकश्चस'। रसायनेमतोविप्र सर्वसिद्धिप्रदायक॥ क्षत्रियोव्या धिविध्वसीजरामृत्युहर पर। वैश्योधनप्रद प्रोक्तस्तथादेहस्यदा र्ढ्यकृत्॥ शूद्रोनाशयतिव्याधीन् वयस्तम्भ करोतिच। पुंस्त्रीनपुंस काश्चैतेलक्षणीयास्वलक्षणै॥ सुहत्ता फलसम्पूर्णास्तेजोयुक्ताबृह त्तरा। पुरुषास्तेसमाख्यातारेखा बिन्दुविवर्जिता॥ रेखाबिन्दु समायुक्ता षडस्रास्तेस्त्रिय स्मृता। षडस्रा' षट्कोणा॥ चिकोणाश्चसुदीर्घाश्चतेविज्ञेयान पुंसका'॥ तेषिस्यु पुरुषा' श्रेष्ठारसबन्धनकारिण.। स्त्रिय कुर्वन्तिकायस्यकान्तिंस्त्रीणासुख प्रदा:॥ नपुंसकास्त्ववीर्या. स्यु रकामा: सत्त्ववर्जिता। स्त्रिय:



स्त्रीभ्य प्रदातव्या' क्लीवा क्लीवे प्रयोजयेत्॥ सर्वेभ्य सर्वदादेया पुरुषावीर्यवर्द्धना॥ अशुद्धकुरु तेवज्रं कुष्ठ पार्श्वव्यथातथा। पा ण्डुताप गुरुत्वञ्चतस्मात्स शोध्य मारयेत्॥ शोधनविधिस्तु। कुलत्थ कोद्रवक्काथेदोलायन्त्रे विपाचयेत्। व्याघ्रीकन्दगत वज्रं त्रिदिन तद्वि शुध्यति॥ व्याघ्रीकण्टकारिका। अन्य शोधनविधिर्यथा। गृहीत्वा क्षिशुभं वज्रं व्याघ्रीकन्दोदरेक्षिपे त्। महिषीविष्ठयालिप्त्वाकरी षाग्नौविपाचयेत्॥ त्रियामायाचतु र्याम यामिन्यन्तेश्वमूत्रके। सेचये त्पाचयेदेव सप्तरात्रे णशुद्ध्यति॥ अथास्यमारणविधि॥ हिङ्गुसैन्ध वस युक्तं क्षिपेत् क्वाथेकुलत्थजे। तप्त तप्त पुनर्वज्रंभवेत्भस्मत्रिसप्त धा॥ अन्योमारणप्रकारोयथा। मेषशृङ्ग भुजङ्गास्थिकूर्मपृष्ठाम्लवेत सम्। शशदन्तसम पिष्ट्वावज्रीक्षीरे णगोलकम्॥ क्कत्वातन्मध्यग वज्रं म्रियतेधमातमेवहि॥ मारितस्य वज्रस्यगुणायथा। आयु पुष्टि ब ल वीर्यं वर्णं सौख्य करोतिच। से वित सर्वरोगघ्न मृत वज्र नसशय'॥ शेषरत्नानाशोधनमारणविधि॥ वज्रवत्सर्वरत्नानिशोधयेन्मारये त्तथा। शुद्धानांमारितानाञ्च

तैर्वांस्तृण गुणानपि ॥ मणयोवीर्यत शीतामधुरास्तुवरारसात् । चक्षु व्यालेखनाश्चापि सारकाविषहार का. ॥ धारणात्तेतुमङ्गल्याग्रह दुष्टिहराश्चपि ॥ वज्रगणनातम्यो त्पत्तिपरीक्षामूल्यानिचपश्चान्यच युक्तिकल्पतरुप्रभृतिषु ॥ मणिवेध कीरत्नविशेषे । मणिवेधकसूच्याम् ॥ वजतिगच्छतिपर्वतादौ । वजग तौ । ऋज्रेन्द्रेतिरन् ॥ सगणे ०॥८०॥

वज्रकम् । न० वज्रक्षारे ॥ दुग्धपाच के ॥ वज्रकदुग्धपाचनमिति हारा वली ॥

वज्रकङ्कट । पुं० हनुमति ॥

वज्रकण्टक । पुं० कोकिलाक्षवृक्षे ॥ स्नुहीवृक्षे ॥

वज्रकण्टकशाल्मली । स्त्री० नरकविशे षे ॥

वज्रकन्द । पुं० वज्रकर्ण । सकारक न्द द्र० भा० प्र० ॥

वज्रकन्दा । स्त्री० स्नुह्यां ॥

वज्रकपाली । पुं० बुद्धविशेषे । हेरवे ॥

वज्रकालिका । स्त्री० मायादेव्याम् ॥

वज्रकूट । पुं० क्षचदीपस्थाद्रिप्रभेदे ॥

वज्रकेतु । पुं० नरकराजे ॥

वज्रक्षारम् । न० क्षारभेदे । वज्रके धूमोत्थे । क्षारश्रेष्ठे ॥

वज्रचर्म्मा । पुं० खड्गिनि । गण्डके

वज्रजित् । पुं० गरुडे ॥

वज्रज्वाला । स्त्री० वज्राग्नौ ॥

वज्रटीक । पुं० बुद्धविशेषे । चक्रस वरे । वज्रकपालिनि ॥

वज्रतुण्ड पुं० गणेशे ॥ गरुडे गृध्रे । मशके ॥

वज्रदन्त । पुं० शूकरे ॥ मूषिके ॥

वज्रदशन । पुं० मूषिके ॥

वज्रद्रु । पुं० स्नुहीवृक्षे ॥ वज्रना माद्रु ॥

वज्रद्रुम । पुं० स्नुहीवृक्षे ॥

वज्रधर । पुं० इन्द्रे ॥ जिनविशे षे ॥

वज्रध्वनि । पुं० वज्रनिर्घोषे ॥

वज्रनिर्घोष । पुं० अशनिशब्दे ॥ वज्रस्यनिर्घोष ॥

वज्रनिष्पेष । पुं० स्फूर्जथौ । व ज्रनिर्घोषे ॥ निष्पेषणम् । पिषॢ सञ्चूर्णने । घञ् । इदुदुपधस्येति ष ॥ निष्पेषशब्दस्तदुल्यशब्दपर: । सङ्घट्टमाचपरइत्यन्ये । वज्रस्य निष्पेष ॥

वज्रपञ्जर । पुं० याचायोगान्तरे ॥ यथा । उच्चमूलत्रिकोणे शुभवर्गेषु शनैश्चर । वज्रपञ्जरयोगोऽय हन्ति क्रूरानरीन्प्रति ॥

वज्रपाणि । पुं० पुरन्दरे । इन्द्रे ॥ वज्रपाणौयस्यस ॥

वज्रपुष्पम । न० तिलपुष्पे । वज्र

मिवपुष्प ॥
वज्रपुष्पा । स्त्री॰ शतपुष्पायाम् ॥
वज्रबाहु । पु॰ इन्द्रे ॥
वज्रमूली । स्त्री॰ माषपर्ण्याम् ॥
वज्ररथ । पु॰ क्षत्रिये ॥
वज्ररद । पु॰ शूकरे ॥
वज्रलेप । पुं॰ कल्कविशेषे ॥ स चोक्तोवाराह्याथथा । आमांतिन्दुकमाम कपित्थकं पुष्पमपिचशाल्मल्या । बीजानिमल्लकीनांधन्वन कल्कास्त्वचाचेति ॥ एतं. सलिलद्रोण क्वाथयितव्योऽष्टभागशेषश्च । अवतार्योऽस्यचकल्कोद्रव्यैरेतैः समनुयोज्य : ॥ श्रीवासकरसगुग्गुलुभल्लातककुमं दूकसर्जरसैः । अतसीविल्वैःस्युत कल्कोऽयं वज्रलेपाख्य ॥ ३ ॥ अयगुणानाह । प्रासादहर्म्यवलभीलिङ्गप्रतिमासुकुड्यकूपेषु । सन्तप्तोदात व्योवर्षसहस्रायुतस्थायी ॥ ४ ॥ अन्यमप्याह । लाक्षाकुन्दरुगुग्गुलुगृहधूमकपित्थविल्वमध्यानि । नागफलनिम्बतिन्दुकमदनफलमधुकमञ्जिष्ठा. ॥ सर्जरससालकानिचेति कल्क कृतोद्वितीयोयम् । वज्राख्य प्रथमगुणैरयमपितेष्वेवकार्येषु ॥६ अपिच । गोमहिषाजविषाणैः खररोम्णामहिषचर्मगव्यैश्च । निम्बकपित्थरसैः सहवज्रतलोनामकल्को

न्य ॥ ७ ॥ अपिच अष्टौसीसकभागा कांसस्यद्वौतुरीतिकाभागः । मयकथितोयोगोऽयंविज्ञेयो वज्रसङ्घातः ॥ ८ ॥ इति ॥
वज्रवल्ली । स्त्री॰ अस्थिसंहारलतायाम् ॥
वज्रवारक । पु॰ जैमिन्यादौ ॥ यथा । जैमिनिश्चसुमन्तुश्चवैशम्पायनएवच । पुलस्त्य पुलहश्चैवपञ्चैतेवज्रवारका ॥
वज्रवाराही । स्त्री॰ मायादेव्याम् । मारीच्याम् । त्रिमुखायाम् ॥
वज्रबीजक । पु॰ लताकरञ्जे ॥
वज्रवृक्ष । पु॰ सेहुण्डवृक्षे ॥
वज्रव्यूह । पु॰ वज्राकाररचनयाविधाव्यवस्थितबले ॥
वज्रशल्य. । पुं॰ शल्यकनामजन्तौ ॥
वज्रशृङ्खला । स्त्री॰ विद्यादेव्याम् ॥
वज्रसार । त्रि॰ वज्रवत्कठिने ॥
वज्रसूर्य । पुं॰ बुद्धविशेषे ॥
वज्रा । स्त्री॰ स्नुह्याम् । गुडूच्याम् । दुर्गायाम् ॥ वज्राङ्कुशकरीदेवीवज्रातेनोपगीयतेइतिदेवीपुराणम्
वज्राङ्ग । पुं॰ भुजङ्गमे ॥ त्रि॰ वज्रतुल्याङ्गयुक्ते ॥
वज्राङ्गी । स्त्री॰ अस्थिसंहारिणि । हाडजोडा इ॰ भा॰ प्र॰ ॥ गवेधुकायाम् ॥
वज्राभ । पुं॰ दुग्धपाषाणे ॥ त्रि॰

वज्रसमानदीप्तिमिति ॥

वज्रायुध । पु॰ इन्द्रे ॥

वज्राशनि । पु॰ स्त्री॰ वज्रे ॥

वज्रासनम् । न॰ अष्टाङ्गयोगस्थतृतीयाङ्गविशेषे ॥ यथा । ऊर्वोः पादौ क्रमाद्न्यस्य कृत्वाप्रत्यङ्मुखाङ्गुली । करौनिदध्यादाख्यातंवज्रासनमनुत्तममिति ॥

वज्रास्थिशृङ्खला । स्त्री॰ कोकिलाक्षवृक्षे ॥

वज्री । पुं॰ देवाधिपे । शक्रे ॥ वज्रोऽस्यास्ति अतइनिठनावितीनि ॥ बुद्धे ॥

वज्री । स्त्री॰ स्नुहीप्रभेदे ॥

वञ्चक । पु॰ जम्बुके । शृगाले ॥ गृहबभ्रौ ॥ त्रि॰ खले । धूर्त्ते । परप्रतारणस्वभावे । सुवर्णादिद्रव्यगृहीत्वाऽपदव्यप्रर्पणवञ्चनशीले ॥ वञ्चयति । वञ्चुगतौ । ण्यन्तः । ण्वुल ॥ वञ्चयतेवा । वञ्चुप्रलम्भने । चाकुस्मीय । ण्वुल् ॥

वञ्चथ । पुं॰ धूर्त्ते ॥ वञ्चति । वञ्चु॰ । शीङ्शपीत्यादिनाऽथप्रत्यय ॥ कोकिले ॥ वञ्चनायाम् ॥

वञ्चनम् । न॰ प्रतारणे ॥ शाठ्ये ॥ वञ्चुप्रलम्भने । ल्युट् ॥

वञ्चना । स्त्री॰ प्रतारणायाम् ॥ प्रमादे ॥ यथा । मन्यतेस्मपिबताविलोचने पक्षपातमपिवञ्चनांमनइ॰ ११ सर्गेरघु ॥ ३६ ॥

वञ्चनीय । त्रि॰ प्रतारणीये ॥ वञ्चितुमर्हं । अर्हेकृत्यतृचश्चेतिवञ्चेरनीयर् ॥

वञ्चित । त्रि॰ प्रतारिते । विप्रलब्धे । वञ्चनाविशिष्टे ॥ वञ्च्यतेस्म । वञ्च॰ । ण्यन्त॰ । क्त ॥

वञ्जुल । पु॰ तिनिशे ॥ अशोकवृक्षे ॥ वानीरे । वेतसे ॥ वञ्च्यते । बाहुलकादुलोजत्त्वञ्च ॥ वञ्जतिवा । वजगतौ । बाहुलकादुलच् नुम्च ॥ दीर्घपत्रेवेतसे ॥ स्थलपद्मे ॥ पक्षिविशेषे ॥

वञ्जुलक । पुं॰ कर्णशालखगे ॥

वञ्जुलद्रुम । पु॰ अशोकवृक्षे ॥

वञ्जुलप्रिय । पुं॰ वानीरे । वेतसे ॥

वञ्जुला स्त्री॰ बहुक्षीरायांगवि ॥

वट । पु॰ वृक्षविशेषे । न्यग्रोधे । बहुपादि । पादरोहणे । यक्षावासे । अस्यगुणा॰ । वट॰ शीतोगुरुर्ग्राहीकफपित्तव्रणापहः । वर्ण्योविसर्पदाहघ्नः कषायोयोनिदोषहृदिति ॥ कपर्दे । वराटके ॥ गोले ॥ गुणे । रज्जौ ॥ भक्ष्ये । बडा॰ इ॰ भा॰ प्र॰ ॥ साम्ये ॥ पिशाचविशेषे ॥ पश्यवरकम् ॥ वटति । वटवेष्टने । अच् ॥

बटक । पुं० तोलके ॥ पिष्टकप्रभेदे । बडा० भल्ला० इ० भा० प्र० भक्ष्ये ॥ तस्यनिर्म्माणादिर्यथा । माषाणांपिष्टिकायुक्तालवणार्द्रकहिङ्गुभिः । कृत्वाविदध्याद्वटकांस्तांस्तैलेषुपचेत्ततः ॥ विशुष्कावटकावल्या बृंहणावीर्य्यवर्द्धनाः । वातामयहरारुच्याविशेषाद्र्दितापहाः ॥ विबन्धभेदिन स्निग्धकारिणोत्यग्निपूजिताः । सम्पूर्णान्निष्पचेत्तैले भृष्टजीरकहिङ्गु च ॥ लवणं तत्र वटकान्सकलानपिमज्जयेत् । शुक्लास्तुवटकोबलकृद्रोचनोगुरुः ॥ विबन्धहृद्विदाहीचश्लेष्मल पवनापहः । राज्यक्तयातिरोचन्यापाचन्यातांस्तुभक्षयेत् ॥ वटति । वट० । क्वुन् ॥

बटपत्र । पुं० बर्व्वराप्रभेदे । सितार्ज्जके । न० न्यग्रोधपर्णे ॥

बटपत्रा । स्त्री० त्रिपुरमालीपुष्पवृक्षे ।

बटपत्री । स्त्री० मोहिन्याख्यलतायाम् । ऐरावत्याम् ॥ बटपत्रीकषायोष्णायोनिमूत्रगदापहा ॥

बटवासी । पुं० यक्षे ॥ त्रि० वटवृक्षवासकर्त्तरि ॥

बटाकार । पुं० शुल्वे । रज्जौ ॥ आकरोति । पचाद्यच् ॥ बटस्याकारः ॥

बटारका । स्त्री० रज्जौ ॥

बटारीक । पुं० नामचौरे ।

बटि । स्त्री० उपजिह्विकायाम् ॥ वर्त्तिकायाम् ॥ वर्त्तति । वट० । सर्व्वधातुभ्यइन् ॥

बटिका । स्त्री० वट्याम् । मोदके गुटिकायाम् । पिण्ड्याम् ॥ व्यञ्जनोपयोगिमाषादिद्रव्ये । बडी० इत्युभयोर्भाषायांप्रसिद्धिः । अस्या निर्म्माणविधिर्य्यथा । माषाणांपिष्टिकाहिङ्गुलवणार्द्रकसंयुता । तथा विरचितावस्त्रे वटिका साधुशोषिता ॥ तलितास्तप्ततैलेताअथवासुप्रलेहिताः । वटकस्यगुणैर्युक्ताज्ञातव्यारुचिदाभृशम् ॥ कुष्माण्डकवटीज्ञेया पूर्व्वोक्तवटिकागुणा । विशेषात्पित्तरक्तघ्नीलघ्वीच कथिताबुधैः ॥ मुद्गनावटिकातद्वद्विरचितासाधितातथा । पथ्यारुच्या ततोलघ्वीमुद्गसूपगुणास्मृतेति ॥

बटितम् । न० शिलापिष्टमांसे ॥ त्रि० शिलापिष्टद्रव्ये ॥

बटी । स्त्री० वटिकायाम् ॥ वृक्षविशेषे । नदीवटे । यज्ञवृक्षे ॥ त्रि० रज्जौ । गुणे ॥ वटति । वट० । अच् ॥ वक्ष्यतेवा ॥ खनोघचेतिघ. । गौरादि. । यथा । सिताचतुर्गुणादेयावटीष्वत्रिगुणोगुडइति ॥

बटु । पुं० ब्रह्मचारिणि ॥ ब्राह्मणमाणवके ॥ बालके ॥ कुटन्नटवृक्षे ।

श्वेनाके ॥ वटति । वट० । यथा
र्थे तिसूत्रेण्वादु ॥
वटुक । पु० बालके । माणवके ।
भैरवविशेषे ॥
वटुकरणम् । न० उपनयने ॥
वटेश्वरपुरम् । न० तीर्थविशेषे ॥
वठर । पु० मूर्खे ॥ अम्बष्टे ॥ शब्द
कारे ॥ वक्रे ॥ त्रि० शठे ॥ मन्दे
वक्ति । वच० । वचिमचिभ्याकिर्म्म
त्यरष्टोन्मादेशश्च ॥
वडभी । स्त्री० मुदनो० गृहचूडा०
हू० गौ० दे० भा० प्र० । कुड्य
षुच्छादनार्थं दत्ते वक्रकाष्ठे । गोपा
नस्याम् ॥ वलति । वलसंवरणे ।
बाहुलकादभच् । गौरादित्वात्
ङीष् । चन्द्रशालायाम् ॥ चन्द्र
शालाचवडभीशालाप्रासादमूर्द्धनी
तिश्रीधर ॥
वडवा । स्त्री० द्विजयोषिति । ब्राह्म
ण्याम् ॥ अश्वायाम् । घोटक्याम् ।
कुम्भदास्याम् ॥ नारीजात्यन्तरे ॥
बलंसामर्थ्यमतिशयितमस्याः । अ
न्येभ्योपीतिवः । डलयोरेकता ॥
वलवातिवा । आतोनुपेतिकः ॥ व
लिनवलतिवा । अन्येभ्योपीतिडः ॥
वडवाकृत । पु० पञ्चदशदासान्तर्ग-
तदासविशेषे ॥ यथा । भक्तदासश्च
विज्ञेयस्तथैववडवाकृतः ॥ वडवा
दासीतल्लोभादङ्गीकृतदासइत्य
र्थः ॥
वाडवाग्नि । पु० समुद्राग्नौ । सलि
लेन्धने । वडवाग्नौ ॥
वडवादुग्धम् । न० अश्वाक्षीरे ॥ अस्य
गुणाः ॥ रूक्षोष्णा वडवाक्षीरबल्य
शाखानिलापहम् । अम्ल पटु लघु
स्वादुसर्वंमेकाशफंतथा ॥
वडवानल । पु० और्वे । वाडवे ।
वडवाग्नौ ॥ वडवायाअनलः ।
आराधाधेयभावएवसम्बन्धस्त्वेनष
ष्ठ्यर्थः । पुराकिलऔर्वेणमुनिना०
ऊर्वोनिज पुत्रमिच्छतावह्नोमथित
तत्रज्वालामय पुरुषोजात ०सचस
मुद्रे वडवामुखेऽवस्थापितइतिपौरा
णिका ॥
वडवामुख । पु० और्वे । अश्व्यग्नौ
वडवानले ॥ न० पाताले ॥
वडवासुतौ । पु० २ अश्विनीकुमार
योः स्वर्वैद्ययोः ॥
वडवाहृत । पु० वडवाकृते । दा
सविशेषे ॥ वडवायाग्रहदासीतयाहृ
तस्तल्लोभेनतामुद्वाह्यदासत्त्वंनप्र-
विष्टः ॥
वडा । स्त्री० वटके ॥
वडिशम् । न० मत्स्यधरणार्थंवक्रलौ
हकण्टकविशेषे । मत्स्यवेधने ॥
वलिनोमत्स्यानृश्यति । शोतनू
करणे । आतोनुपेतिकः । डल
योरेकता ॥

वडिशी । स्त्री॰ वडिशे ॥

वड्ड । त्रि॰ बृहति । वडा॰ वडी॰ हु॰ भा॰ ॥ वलते । वलसंवरणे सञ्चरणे च । बहुलमन्यत्रापीतिरक् । डलयोरेकत्वस्मरणाल्लस्यड ॥

वण । पुं॰ शब्दे ॥

वणिक्पथ । पुं॰ हट्टे । आपणे ॥ स्थलवणिज्यायाम् ॥ स्थलजलादि नाशाणिज्यमितिकुल्लूकभट्ट ॥

वणिक् । पु॰ क्रयविक्रयकर्त्तरि । वाणिज्यकारके । वैदेहके । सार्थवाहे । नैगमे । पण्याजीवे । क्रयविक्रयिके ॥ करणान्तरे ॥ स्त्री॰ वणिज्यायाम् ॥ पणते । पण॰ । पणे विज्यादेशश्च ॥

वणिज्या । स्त्री॰ विपणे ॥ न॰ वणिज कर्मभावयो ॥ दूतवणिग्भ्यास्वेतिय । माधवस्तु॰ वणिज्याशब्द स्वभावात्स्त्रीलिङ्गोभावएवाचप्रत्ययोनतुकर्मणीत्याह ॥ भाष्ये तु॰ वार्त्तिकमेवनास्ति ॥

वण्ट । पुं॰ अंशे । भागे । वाण्टा॰ हु॰ भा॰ ॥ दात्रमुष्टौ । वेण्टा॰ हु॰ भा॰ ॥ अनूढपुरुषे ॥

वण्टक : । पु॰ अंशे । भागे ॥ वण्टते । वटिविभाजने । कर्मणिघञ् । स्वार्थेक :

वण्टाल । पुं॰ युद्धभेदे । शूरयुद्धे ॥ नौकायाम् ॥ खनित्रे ॥

वण्ठ । पु॰ अकृतोद्वाहे ॥ खर्वे ॥ कुन्तायुधे ॥ ऋच्छे । वाठ॰ हु॰ प॰ भा॰ प्र॰ वण्ठते । वठिएकचर्य्यायाम् । अच् ।

वण्टर । पुं॰ स्थगिकायाम् ॥ रज्जौ कुक्कुरस्यलाङ्गूले ॥ करीरकोषे । ताल्लस्यपल्लवे ॥ पयोधरे ॥ वण्ठर रच् ॥

वण्ड । पु॰ अनावृतमेढ्रे । दुश्चर्मणि ॥ त्रि॰ हस्तादिवर्ज्जिते ॥ छिन्नलाङ्गूले । वाडा॰ हु॰ भा॰ प्र॰ ॥ छिन्नहस्ते ॥ वनुते । वनुयाचने । वनतिवा । वनसम्भक्तौ । अमन्ताड्ड ॥

वण्डा । स्त्री॰ पांशुलायाम् ॥ अजादित्वाट्टाप् ॥

वत् । अ॰ सादृश्य॥ तेनतुल्यमित्यादिभिर्विहितोवतिप्रत्यय । यस्तु पसर्गाद्वात्वर्थइतिविहित , सनगृह्यते ॥

वत । अ॰ आमन्त्रणे । सन्तोषे ॥ खेदे । अनुक्रोशे ॥ विस्मये ॥ वयतेस्त । वयगतौ । गत्यर्थेतिक्त । नेटयलोप ॥ वन्यतेस्मवा । वनुयाचने । क्त अनुदात्तोपदेशेतिनलोप . ॥

वतंस । पु॰ कर्णपूरे । कर्णाभरणे ॥ शिरोभूषणे । शेखरे ॥ अवतंस पति॰ अवतंसतेऽनेनवा । तसि ॰

गोभिप्रार्थे । पचादच्० ह्ग श्चेतिच्छन्दा । भागुरिमतेनाका रलोपः ॥

वतगड । पु० मुनिविशेषे ॥

वतोका । स्त्री० अवतोकायाम । स्खलितगर्भायाम् ॥

वत्स । पु० पुत्रादौ । मध्या० ज्ञ० भा० ॥ तर्णके । शकृत्करौ ॥ वदत्यभीष्टा मातरम । वदव्यक्तायांवाचि० वदस्थैर्यबा । वृतृवदीतिस ॥ वर्षविशेषे ॥ वर्षे ॥ न० । उरसि । वक्षसि ॥

वत्सक । पु० कुटजवृक्षे ॥ न०पुष्पकासीसे ॥ सञ्ज्ञायाकन ॥ अनुकम्पितेऽल्पे अनुकम्पितोवत्स । अनुकम्पायामितिक ॥

वत्सकबीजम् । न० इन्द्रयवे ।

वत्सकामा । स्त्री० वत्साभिलाषिण्यां गवि । वत्सलायाम् ॥ पुत्रादिकामनाविशिष्टायांनार्यांम ॥

वत्सतर । पु० दम्ये । वत्सभावमतीत्यद्वितीयवय प्राप्ते ॥ तनुर्वत्स' वत्सोक्षाश्वर्षभेभ्यश्चतनुत्व इतिष्टरच् ॥

वत्सतरी । स्त्री० वत्सायाभावमतीत्यद्वितीयंवय प्राप्तायाम् । त्रिवर्षायां गवि ॥ तन्वीवत्सा । ष्टरच् । ङीष् ॥

वत्सनाभः । पुं० विषवृक्षविशेषे । स्थूते । उग्रे । महौषधे । मारणे । मा हुरादि० भा०प्र० ॥ अस्यस्वरूप निरूपणयथा । सिन्धुवारसदृक्पत्रोवत्सनाभ्याकृतिस्तथा । यत्पार्श्वे नतरोर्वृद्धिर्वत्सनाभ सभाषित इति ॥ अस्यगुणा' । अतिमधुरत्वम०वातकफकण्ठरुक्सन्निपातनाशित्वम्०पित्तसन्तापकारकत्व-श्चेतिराजनिर्घण्ट ॥ वत्सानन भातिच्छिनत्ति । आभच्छिदायाम् । कर्मण्यण् ॥ वत्सस्तनाभिरिवनाभिरस्येतिवा ॥

वत्सप । पु० वत्सचारकबालके ॥

वत्सपत्तनम् । न० भारतवर्षकौत्तरे देशविशेषे । कौशाम्ब्याम् ॥

वत्सपाल । पु० बलदेवे ॥ श्रीकृष्णे ॥ वत्सपे ॥

वत्सर' । पुं० द्वादशमासात्मकेकाले । संवत्सरे । अब्दे । हायने । शरदि । समायाम् । वर्षे । सचसंवत्सरादिभेदेनपञ्चधाभवति । तथाहि । शकाब्दात्पञ्चभिःशेषात्समाद्यादिषुवत्सरा' । सम्परीदानुपूर्वाश्चतथेदापूर्वकामता: ॥ अथषष्टिसंवत्सराणांगणना । माने गुरोरगभिद . पञ्चवत्सराणांषष्टि. स्मृतामुनिवरै' प्रभवादिकानाम् । स्यादेकवत्सरमितिगुरुमध्यमेनराशिसुभोगमितिरेवसदातथाहि॥

प्रभवो विभव शुक्ल प्रमोदो
य प्रजापति । अङ्गिरा श्रीमु
खो भावो युवा धातीश्वराभिधौ॥
बहुधान्य प्रमाथीच विक्रमो ऽ
षसञ्ज्ञक । चित्रभानु सुभानुश्च-
तारण पार्थिवो व्यय सर्वजि
त् सर्वधारीच विरोधी विकृतस्त
त । खर नन्दनसञ्ज्ञौच विज
यो जय मन्मथौ ॥ दुर्मुखस्तदनु
प्रोक्तो हेमलम्बकसञ्ज्ञक । विल
म्बाख्यो विकारी च शर्वरी
प्लवसञ्ज्ञकौ ॥ उक्त शुभकृतस्मात्
व्द शोभनकृतस्मृत । क्रोधी-
विश्वावसुर्ज्ञेयो वत्सरोऽपिपराभ
व । प्लवङ्ग कीलकाख्यो ऽथसौ
म्य साधारणाह्वय । ततो विरो
धकृन्नामा परिधावि प्रमाथिनी ॥
आनन्दो राक्षस प्रोक्तो ऽनल
पिङ्गलसञ्ज्ञक । कालयुक्ताख्यसि
द्धार्थौ रौद्रो दुर्मतिदुन्दुभी । रु
धिरोद्गारिरक्ताक्षौ क्रोधन क्षयक
म्मत । वत्सराणागुरोर्मानैर्षष्टि
रियमुदाहृता ॥ वत्सरानयनय
था । नगेनैख सन्निहतीद्विधाश
क सखविश्वक्रोचयमाङ्गभाजि-
त । गता . सतत्वव्यम्यकोऽभपद्ध
तोऽशेषकैश्च : प्रभवादिवत्स-
रा: । अत्र आद्यातुविंशतिर्ब्राह्मी
द्वितीयावैष्णवीस्मृता तृतीयारुद्रदै

वत्याश्चैतामध्याधमाभवेत् ॥ वसन्त्य
स्मिन्नयनर्त्तुमासपक्षादय । वस
निवासे । वसेश्चेतिसरप्रत्यय : ।
सत्वार्द्धधातुकइतिसस्यत ॥

वत्सरान्तक । पु फाल्गुनेमासि ॥

वत्सल । पु शृङ्गारादिरसान्तर्गत-
रसविशेषे । वात्सल्ये । तद्वा-
न्नौ । त्रि स्नेहयुक्ते । स्निग्धे ॥ व
त्सेपुत्रादिस्नेहपात्रे ऽभिलाषोऽस्या-
स्ति वत्सांसाभ्यांकामबले इति
लच् ॥

वत्सला । स्त्री वत्सकामायाधेनौ ॥

वत्सशालम् । न )
वत्सशाला । स्त्री ) वत्सानागृहे ॥

वत्सानाश.ला पु । विभाषासेनेति प
क्षेक्लीबता ॥ त्रि वत्सशालोत्प-
न्ने ॥ वत्सशालेजात । जातार्थे
ऽणालुक् ॥ पक्षेत्रि वात्सशा-
लोपि ।

वत्सा । स्त्री पुत्र्याम ॥ वयसिप्रथ-
मइतिङीपबाधित्वा अजादित्वा
ट्टप् ।

वत्साक्षी । स्त्री गोडुम्बायाम् । चि
चायाम् ॥

वत्सादन । पुं वृके ॥

वत्सादनी । स्त्री छिन्नरुहायाम् ।
गुडुच्याम् । वत्सैरद्यते । अद ।
ल्युट् ॥

वद । त्रि वक्तरि ॥ वदति । वद-

व्यक्तायाञ्चि । पचाद्यच् ॥
वदनम् । न० आनने । मुखे । वद
त्यनेन । वद० । करणेल्युट् ॥
वदनासव । पु० अधरमधुनि । वक्त्रा
सवे ॥ वदनस्यआसवः ॥
वदन्ति ।
वदन्ती । स्त्री० कथायाम् ॥
वदन्य । त्रि० वदान्ये ॥
वदान्य । त्रि० अत्युदारे । दानशी
लुे । वक्तुप्रदे । मायाचस्वे तिवद
ति । वद० । वदेरान्य ॥ चारुवा
दिनि । प्रियवादिनि ॥
वदामम् । न० फलविशेषे । सुफले ।
वातवैरिणि । वातादे ॥
वदाल पुं० पाठीनमत्स्ये वोआ-
लि०हु०गौ०दे०भा०प्रा० ॥
वदावद । त्रि० वक्तरि ॥ वदति ।
वद० । पचाद्यचि०चरिचलीतिद्वि
त्वादि ॥
वद्रि । अ० कृष्णपक्षे ॥
वध । पुं० हिंसने ॥ हिंसायाम् ॥
वधुका । स्त्री० वध्वाम् ॥
वधू । स्त्री० स्नुषायाम् । वहु०हु०
भा०प्रसिद्धे ॥ वहति०उह्यतेवा । व
हप्रापणे । वहेर्धश्चेत्यू ॥ शारि
वौषधौ ॥ भव्याम् ॥ नवोढायाम ॥
भार्यायाम् ॥ पृक्कायाम् ॥ अङ्ग
नायाम ॥
वधूजन । पुं० योषिति ॥

वधूट । पुं० यौवने ॥
वधूटशयनम् । न० गवाक्षे ॥
वधूटी । स्त्री० स्वल्पवध्वाम् ॥ स्नुषा
याम् ॥ सुवासिन्याम् ॥ युवती ॥
वयस्यचरमइतिङीप् ॥
वधूत्सवप्रसव । पु० रक्ताम्लाने ॥
वध्रम् । न० इयरज्जौ ॥ वध्यतेऽनेन ।
वधेरौणादिकः ष्ट्रन् ॥
वध्रि । स्त्री० वध्रे ॥
वध्री । स्त्री० वध्रे ॥ षित्त्वान्ङीष ।
वध्रा । पश्यवध्रिका पश्येतिभा-
ष्यम् ॥
वनम् । न० नीरे । जले ॥ निवासे ॥
आलये ॥ प्रस्रवणे ॥ कानने । स्व-
त सिद्धेवृक्षसमूहे । गहने । ब
ना०हु०भा० ॥ प्रवासे । वन्यते०
सम्भज्यते०सेव्यते०याच्यतेवा व-
नसम्भक्तौ०वनुयाचनेवा हलश्चेति
कर्मणिघञ् । उत्तापूर्वकत्वाद्वृ-
द्ध्यभावः ॥ कर्त्तरिपचाद्यज्वा ॥
त्रि०वननीये ॥ सम्भजनीये ॥
वनकदली । स्त्री० काष्ठकदल्याम् ॥
वनकन्द । पुं० सितशूरणे ॥ धरणी
कन्दे ॥
वनकार्पासी । स्त्री० त्रिपर्ण्याम् ।
भारद्वाज्याम् । वनकपास० हु०
भा० ॥
वनकुलत्थ । पुं० कुलत्थायाम् ॥
वनकोद्रव । पुं० उद्दाले ॥

वनकोलि । पुं॰ वनजबदर्याम् । कर्कन्धिकायाम् ॥

वनगो । पुं॰ स्त्री॰ गवये ॥

वनगोचर । पुं॰ नारायणे ॥ वनं जलं गोचरो निवासस्थानं यस्य सः ॥ व्याधे ॥

वनचन्दनम् । न॰ अगुरुणि ॥ देवदारुणि ॥

वनचन्द्रिका । स्त्री॰ मल्लिकायाम् ॥

वनचम्पक । पुं॰ वनदीपे । हेमाह्वे ॥

वनचर । पुं॰ किराते ॥ वनमृगे ॥ वने चरति । चर॰ । चरेष्ट ॥

वनच्छाग । पुं॰ वनच्छगले । एडके । शिशुशाखके ॥ शूकरे ॥

वनज । पुं॰ मुस्तके ॥ स्तम्बेरमे । वनशूरणे अम्बुजे ॥ त्रि॰ वनोत्पन्ने ॥ वने जायते । जनी॰ । ड ॥

वनजा । स्त्री॰ मुद्गपर्ण्याम् ॥ वनकार्पास्याम् ॥ वन्योपोदक्याम् ॥ अश्वगन्धायाम् ॥ गन्धपत्रायाम् ॥ मिश्रेयायाम् ॥ ऐन्द्र्ये । वनार्द्रकायाम् ॥

वनजायतेक्षण : त्रि॰ पद्मलोचने ॥

वनजीर । पुं॰ सूक्ष्मपत्रे । अरण्यजीरे ॥

वनतिक्त : । पुं॰ रोहितकद्रुमे ॥

वनतिक्ता । स्त्री॰ वनतिक्तिकायाम् ॥

वनतिक्तिका । स्त्री॰ पाठायाम् ॥ हरीतक्यां ॥

वनद । पुं॰ घने । मेघे ॥ वनं जलं ददाति । डुदाञ्॰ । क ॥ त्रि॰ वनदातरि ॥

वनदमन । पुं॰ अरण्यदमने ॥

वनदीप । पुं॰ वनचम्पके ॥

वनधेनु । स्त्री॰ गवय्या ॥

वननीय । त्रि॰ सम्भजनीये ॥

वनपल्लव । पुं॰ शोभाञ्जनवृक्षे ॥ अरण्यजपत्रे ॥

वनपांशुल । पुं॰ व्याधे ॥

वनपिप्पली । स्त्री॰ क्षुद्रपिप्पल्याम् ॥

वनपुष्पा । स्त्री॰ शतपुष्पायाम् ॥

वनपूरक । पुं॰ वनबीजपूरे ॥

वनप्रिय । पुं॰ परभृते । कोकिले ॥ न॰ त्वचे । गुडत्वचि ॥ त्रि॰ अरण्यप्रियमात्रे ॥

वनभुक् । पुं॰ ऋषभौषधे ॥

वनमक्षिका । स्त्री॰ दंशे ॥ वनस्य मक्षिका ॥

वनमल्लिका । ) स्त्री॰ वनोद्भवमल्लिकायाम् ॥
वनमल्ली । )

वनमाला । स्त्री॰ श्रीकृष्णस्रजि सपल्लवपुष्पग्रथितायामाजानुलम्बिन्यां स्रजि ॥ तस्या : स्वरूपं यथा । आजानुलम्बिनी माला सर्वर्तुकुसुमोज्ज्वला । मध्ये स्थूलकदम्बाढ्या वन

मालेतिकीर्त्तिता ॥ वनपुष्पस्र जि ॥

वनमाली । पु॰ हरौ । श्रीकृष्णे ॥ वन वनपुष्प तन्मालाऽस्येति॰वन माली । व्रीह्यादित्वादिनि । सप ल्लवपुष्पग्रथितास्रक्वनमालेत्यन्ये ॥ आपादपद्म यामालावनमालेति साभवतीतितुकालिङ्ग । सास्य स्ती ति ॥ वन मपितु भीलमस्येति वा । सनधारकं । सुपीतिमिनि '। [illegible] तन्मावरूपावेजयन्त्या [illegible] वनमालाअस्ति वनमाली । व नमालापरि [illegible] पश्यन्तिते सुखमिति हरिव शो [illegible] ॥

वन[illegible]नी । स्त्री॰ आर[illegible]याम् ॥ दा रु[illegible]पुष्प्याम् ॥

वनमुक । पु॰ जलदे । मेघे ॥ वननी रमुञ्चति मुच्लृ॰ । क्विप् ॥

वनमुद्ग । पु॰ मकुष्ठके ॥

वनमुद्गा । स्त्री॰ मुद्गपर्ण्याम् ॥

वनमूर्द्धजा । स्त्री॰ कर्कटशृङ्ग्याम् ॥

वनमेथिका । स्त्री॰ मेथिकाप्रभेदे ॥

वनमोचा । स्त्री॰ काष्ठकदल्याम् ॥

वनर । पु॰ वानरे ॥

वनराज । पुं॰ मृगेन्द्रे ॥ वनस्यरा जनि ॥

वनराजक । पुं॰ सिंहे ॥

वनराजि : । स्त्री॰ वनच्छायापङ् क्तौ ॥

वनरुहम् । न॰ पद्मे ॥ वनेरोहति । रुह॰ । इगुपधेतिकः ॥

वनलक्ष्मी । स्त्री॰ कदल्याम् ॥

वनवर्व्वर । पु॰ कृष्णार्जके ॥

वनवर्व्वरिका । स्त्री॰ अरण्यजवर्वर्या म् । सुप्रसन्नके । विषघ्ने । सूक्ष्मप त्रके । निद्राले ॥

वनवल्लरी । स्त्री॰ नि श्रेणिकातृणे ॥

वनवह्नि । पुं॰ दवानले ॥

वनवासन । पुं॰ गन्धौतौ । खट्टा शे ॥

वनवासी । पुं॰ कीलमर्हिषकन्दे । शाल्मलिकन्दे । पाटल्याम् । मु ष्ककवृक्षे । शृङ्ग्याम् । ऋषभौ षधे ॥ शूकरकन्दे । वाराहीकन्दे ॥ त्रि॰ वनवासकर्त्तरि ॥

वनबीज । वनबीजक । वनबीजपूरक । } पु॰ याम् ॥ अर मातुलुङ्गिका ण्यजातबीजपू रे । अम्लजायाम् ॥

वनहन्ताकी । स्त्री॰ वृहत्याम् ॥

वनव्रीहि । पुं॰ नीवारे ॥

वनशूकरी । स्त्री॰ शूकशिम्ब्याम् ॥ अरण्यवाराह्याम ॥

वनशूरण । पुं॰ वनोद्भवोले । सित शूरणे । वनकन्दे ॥

वनशृङ्गाट । पुं॰ गोक्षुरके ॥ वनस्य शृङ्गाटइव ॥

वनशृङ्गाटक । पुं॰ गोक्षुरके ॥

वनशोभनम्। न॰ पद्मे ॥ त्रि॰ वनस्यशोभाकर्त्तरि ॥
वनश्वा। पु॰ गन्धमार्ज्जारे ॥ वभ्रुके। गोमायौ ॥ व्याघ्रे ॥
वनसङ्कट.। पु॰ मसूरे ॥
वनसद्। त्रि॰ वनेचरे ॥
वनसमूह'। पु॰ वन्यायाम् ॥ वनानांसमूह ॥
वनसरोजिनी। स्त्री॰ वनकार्पास्याम् ॥
वनस्थ'। पुं॰ मृगे ॥ त्रि॰ वनवासिनि ॥
वनस्था। स्त्री॰ अश्वत्थीवृक्षे ॥
वनस्पति.। पुं॰ द्रुममात्रे ॥ विनापुष्पफलशालिनिवृक्षे ॥ अपुष्पाफलवन्तोये तेवनस्पतय: स्मृताइति मनु: ॥ श्यालीवृक्षे। नन्दीवृक्षे ॥ वनस्यपति। पारस्करादित्त्वात् सुट् ॥ वटे ॥
वनहरिद्रा। स्त्री॰ काननोत्पन्नहरिद्रायाम्। शोलिकायाम् ॥
वनहास'। पु॰ अश्ववाले। काशतृणे ॥ कुन्दवृक्षे ॥
वनहासक। पुं॰ काशतृणे ॥
वनाखु:। पुं॰ शशके ॥
वनाखुक'। पुं॰ मुद्गे ॥
वनाज.। पु॰ वनच्छागे। दुष्टिके ॥
वनाट्। पु॰ स्त्री॰ वर्वणायाम्। नीलमक्षिकायाम् ॥

वनाधिवासी। त्रि॰ वनस्थे ॥ वनमधिवसतितच्छील.। णिनि: ॥
वनामल। पुं॰ करमर्दे। कृष्णापाकफले ॥
वनाम्र:। पुं॰ कोषाम्रे ॥
वनायु:। पु॰ हरिणे ॥ देशविशेषे ॥
वनायव.। पुं॰ बहुवचनान्तोयम्। देशविशेषे ॥
वनायुज। पुं॰ हयविशेषे। वनायुजे ॥ वनायुषुदेशेजात'। सप्तम्याम्जनेर्ड'॥
वनारिष्टा। स्त्री॰ वनहरिद्रायाम् ॥
वनार्चक। पुं॰ पुष्पजीविनि। मालाकारे ॥
वनार्द्रका। स्त्री॰ ऐन्द्रे। वनभवार्द्रके ॥
वनालिका। स्त्री॰ वज्रवल्ल्याम्। हस्तिशुण्डाम् ॥
वनाश्रय। पु॰ द्रोणकाके ॥
वनाह्विर:। पुं॰ दन्तायुधे। शूकरे॥
वनि.। पुं॰ अग्नौ ॥ वन्यतेयाचते। वनुयाचने। खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिवलिचरिभ्यश्चेति॰इप्रत्यय: ॥
वनित.। त्रि॰ याचिते ॥ सेविते ॥
वनिता। स्त्री॰ उत्पादितात्यर्थानुरागनार्याम् ॥ योषिन्मात्रे ॥ वन्यतेस्म। वनुयाचने॰ वनसम्भक्तौवा। क्त'। शस्त्रविभाषेतस्यानित्यत्वा

दिट् ॥ यद्वा । वनतेर्बाहुलकादि तन् ॥

वनी । पुं॰ कन्दमूलफलाद्याहारैर्यसा ग्निहोत्रे॰निरग्निहोत्रे ॰ वाणप्र स्थे । तृतीयाश्रमे ॥ वन निवासस्था नमस्यास्ति । अतइनिठनावितीनि ॰ ॥

वनी । स्त्री॰ विपिने । गहने ॥ वनति । वन॰ । पचाद्यच् । गौरादि ॥

वनीपक । त्रि॰ याचके ॥ वनीपाति । आतइतिक । तत . स ञ्ज्ञायाकन् ।

वनीयक : । त्रि॰ याचके ॥ वननम् । वनु॰ । सर्वधातुभ्यइन् । वनि र्याञ्चा॰तामिच्छति । सुपआत्मन क्यच् । ण्वुल् ॥

वनेचुद्रा । स्त्री॰ करञ्जे ॥

वनेचर ॰ । पुं॰ किराते ॥ त्रि॰ अर ण्यचारिणि ॥ वनेचरति । चरेष्ट इतिट : ॥ तत्पुरुषेकृतीत्यलुक् ॥

वनेज्य . । पुं॰ वनरसाले ॥

वनेसद् । पुं॰ वनेचरे ॥ वनेसीदति । षद्लृ॰ । क्विप् । तत्पुरुषइला दिनाऽलुक् ॥

वनेसर्ज ॰ । पुं॰ असनवृत्ते ॥

वनोद्भवा । स्त्री॰ वनकार्पास्याम् ॥ त्रि॰ वनजे ॥

वनोपल : । पुं॰ आरण्यगोमये ॥

वनौका : । पुं॰ वानरे ॥ वनस्थिते ।

पुलिन्दे ॥ वनमोकोस्य ॥

वनौषधी । स्त्री॰ वनोद्भवौषधिमात्रे ॥ प्रायोजना सन्निवनेचराद्यागो पाद्य प्राकृतनामतज्ज्ञा । प्र योजनार्थविचन प्रवृत्तिर्यतस्तत प्राकृतइत्यदोष ॥ किञ्च । रसवी र्यविपाकेभ्योमूलात्पुष्पात्फलाद्द लात् । आकाराद्देशकालादेर्बनौ षध्यर्थमुन्नयेत् ॥

वन्दक । पुं॰ नीलवल्ल्याम् । व- न्दायाम् ॥ त्रि॰ वन्दनकृति ॥

वन्दका । स्त्री॰ वृचादन्याम् । वन्दा याम् ॥

वन्दथ ॰ । त्रि॰ स्तोतरि ॥ स्तुत्ये ॥ वन्दते॰ वन्द्यतेवा । वदि अभिवादनस्तुत्यो शीङ्शपिरु गमिवञ्चिजीविप्राणिभ्योऽथइत्यच वश्चीत्यस्यस्थानेवन्दोतिपाठोपिवहु श्रुतेर्निर्द्देशादिति इतिवन्दथ ॰ ॥

वन्दनम् । न॰ नतौ । प्रणामे ॥ वन्दे ल्युट ॥ मुखे ॥

वन्दनमाला । स्त्री॰ तोरणे । रम्भा स्तम्भचतुष्टयवेष्टितामपत्ररचितमा लायाम् ॥ यथा । कुर्याद्वन्दनमा लायोरम्भास्तम्भे सुशोभने । चूत वृक्षोद्भवे ॰ पत्रैजगिरेचक्रपाणिन . ॥ युगानिपत्रसङ्ख्यानांस्वर्गेतस्मो क्षवोभवेत् । पूज्यतेवासवाद्यैश्च क्रीडतेचाप्सरोगत . ॥

वन्दनमालिका । स्त्री॰ बहिर्द्वारोपरि शुभदायांमालायाम् ॥ यथा । तोरणोर्ध्वेतुमङ्गल्य दामवन्दनमालिका ॥

वन्दना । स्त्री॰ समोच्याम् । स्तुतौ ॥ हेमभस्मनातिलके ॥ यथा । ऐशान्यामाहरेद्भस्मशुचावायस्रुवेण वा । वन्दनाकारयेत्तेनशिर क ण्ठांसकेषुच ॥ कश्यपस्येतिमन्त्रेण यथानुक्रमयोगतस्तुतिबशिष्ठ ॥

वन्दनी । स्त्री॰ नतौ ॥ जीवातौ ॥ बस्याम् ॥ पाचनकर्म्मणि ॥

वन्दनीय । पु॰ पीतभृङ्गराजे ॥ त्रि॰ नमस्ये । वन्द्ये । स्तवनीये ॥ वन्दितुमर्हे । वदि॰ । अनीयर् ॥

वन्दनीया । स्त्री॰ गोरोचनायाम् ॥ अजादित्वाट्टाप् ॥

वन्दा । स्त्री॰ वृक्षोपरिजातेवृक्षे । वृक्षादन्याम् । वृक्षरुहायाम् । जीवन्तिकायाम् । वन्दाके ॥ वृक्षे विजातीयप्ररोहोवन्दा । वन्द्यते । वदि॰ । गुरोश्च हलः ॥ भिक्षुक्याम । बन्द्यां ॥

वन्दाकः । पुं॰ द्रुमरुहायाम् । वन्दायाम् ॥ यथा । वन्दाकःस्याद्धिमस्तिक्तः कषायोमधुरोरसे । मङ्गल्य . कफवातास्ररक्षोव्रणविषापहः ॥ ✝ ॥ ✝

वन्दाका । ) स्त्री॰ वन्दायाम् ।
वन्दाकी । ) वृक्षादन्याम् ॥

वन्दारु . । त्रि॰ वन्दनशीले । अभिवादके ॥ वन्दते । वदि॰ । शृवन्द्योरारुः ॥

वन्दिः । स्त्री॰ निबद्धमनुजादौ । प्रग्रहे । उपग्रहे । वन्दी॰ इ॰ लोक॰ प्र॰ ॥ सोपानके ॥

वन्दिग्राह । पु॰ अग्न्यायुधदेवतागारभेदके ॥

वन्दिचौर . । पुं॰ माचले । सन्धिचौरे ॥

वन्दित । त्रि॰ पूजिते ॥

वन्दी । पुं॰ राजादे' स्तुतिपाठिनि । स्तुतिपाठके । भाट॰ इ॰ प्र॰ ॥ प्रस्तावानुवक्तरि ॥ वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तय ॥ वन्दते । वदि॰ । ग्रह्यादित्वादावश्यके णिनि ॥ पथमध्यस्थे ॥

वन्दिपाठ । पु॰ भोगावल्याम् । स्तुतिग्रन्थे ॥

वन्दी । स्त्री॰ आहृतस्त्रियाम् ॥ पथमध्यस्थायाम् ॥ वन्द्यते॰ वन्दते वा । वदि॰ इन् । ङीष् ॥ शुद्धायांचन्द्रियैर्णात्पादितायाम् ॥

वन्दीकार . । पु॰ वन्दिग्राहे । प्रसह्यचौरे । माचले ॥

वन्द्य । त्रि॰ स्तव्ये । वन्दनीये ॥

वन्द्या । स्त्री॰ स्तव्यायाम् । वन्दनीयाया

म ॥ गोरोचनायाम् ॥ वन्दायाम् ॥
वन्द्र : । त्रि० पूजके ॥ पु० गुरौ ॥ वन्दते० वन्द्यतेवा । वदि० । स्फायितञ्चीत्यादिनारक् ॥ न० नत्यार्थे ॥
वन्य . । पुं वनौकसि । वनशूकरे ॥ वाराहीकन्दे ॥ देवनले ॥ न० कैवर्त्तीमुस्तके ॥ त्वचे ॥ त्रि० वनो द्भूते । वनेभव । यत् ॥
वन्या । स्त्री० वनसमूहे ॥ अम्बुसमूहे ॥ वनानांसमूह : । पाशादिभ्याय : ॥ गोपालकर्क्कट्याम् ॥ मुद्गपर्ण्याम् ॥ गुञ्जायाम् ॥ भद्र मुस्तायाम् ॥ गन्धपत्रायाम् ॥ मिश्रेयायाम् ॥
वन्योपोदकी । स्त्री० लताप्रभेदे वन आयाम् । वनसाङ्क्ययायाम् ॥ इ तिराजनिर्घण्ट : ॥
वन्न । त्रि० भजिनि । भागिनि ॥ वनति । वनसम्भक्तौ । ऋज्रेन्द्राग्र त्यादिनारन् ॥
वप : । पु० मेदसि ॥ केशमुण्डने ॥ बीजवपने ॥ वपति । टुवप्० । पचाद्यच् ॥ वपतियद्विक्षपात्र . चेत्रमासाद्यबीजम् ॥
वपनम् । न० बीजाधाने ॥ मुण्डने ॥ यथा । गङ्गायाभास्करक्षेत्रे मातापित्रोर्गुरोर्मृतौ । आधानेसाेमपानेच वपनंसप्तसुस्मृतम् ॥
टुवप० । ल्युट् ॥ अन्यत्रनिध नात्पत्यु पत्नीकेशान्नवापयेत् ॥ शौर्ये ॥
वपनी । स्त्री० नापितशालायाम् ॥
वपा । स्त्री० विवरे । छिद्रे ॥ मेदसि ॥ उप्यतेऽत्र । टुवप्० । भिदाद्य ङ ॥ यद्वा । वपति । पचाद्यच् । टाप् ॥
वपिल । पुं० पितरि ॥
वपुसव . । पुं० शरीरस्थरसधातौ ।
वपुन . । पु० देवे । सुरे ॥
वपुषा । स्त्री० हवुषायाम् । हौहवेर० इ० भा ॥
वपुष्टमा । स्त्री० पद्मचारिण्याम् ॥
वपु । न० तनौ । शरीरे ॥ प्रशस्ता कृतौ ॥ वपति० उप्यतेवा । टुव प्बीजसन्ताने । अर्त्तिपृवपीत्यु सि . ॥
वप्तव्य : । त्रि० अर्पणीये ॥ भूमौवी जंछेवप्तव्य० मुर्वरायानचोषरे ॥
वप्ता । पुं० जनके ॥ त्रि० वापके । वपति । टुवप्० । खल्लृच्चावि तिलृच् । कवौ ॥
वप्र . । पुं० ताते ॥ प्रकारे ॥ न० सीसके ॥ पुं० न० प्राकाराधारवे दिकायाम् । चये ॥ तथाचार्थशा स्त्रम् । खातादुद्धृतमृदावप्र कारये त् ॰ तस्योपरिप्राकारमिति ॥ यद्वा वप्रोयथा । नदीद्यानामभ्रवप्रो

तडागशतशोभिताम् । प्राकारश्च
सम्बाधामिन्द्रस्येवामरावतीम् ॥
महान्वप्रोयस्या । प्राकाराधार
भूताकृत्रिमोच्छ्रिताभूमिर्वप्रसज्ञ
तिवि॰ पु॰ ॥ रोधसि । तटे ॥
रेणौ ॥ क्षेत्रे । केदारे ॥ सानुनि ॥
उप्यतेऽत्र । टुवप॰ । हृषिवपिभ्यां
रन् ॥
वप्रक्रीडा । स्त्री॰ वृषभादीनावप्रक्रि-
यायाम् ॥ यथा । उत्खातकेलि शृ
ङ्गाद्यैर्वप्रक्रीडानिगद्यतेइतिशब्दा-
र्णव . ॥
वप्रा । स्त्री॰ मञ्जिष्ठायाम् ॥
वप्रि : । स्त्री॰ क्षेत्रे ॥ वपति । टुव
प॰ । वङ्क्र्यादित्वात्साधु : ॥
वप्री । स्त्री॰ वल्मीके ॥
वम । पु॰ स्त्री॰ वमने ॥
वमथु : । पु॰ वमने ॥ गजस्यकरशी
करे ॥ वमन॰ वम्यतेवा टुवमउ
द्गिरणे ॥ ट्वितोथुच् ॥
वमन । पु॰ शणे ॥ न॰ छर्द्दने ॥
अर्द्दने ॥ आहुती । आहरणे ॥
वमनी । स्त्री॰ जलौकायाम् ॥
वमनीया । स्त्री॰ मक्षिकायाम् ॥
त्रि॰ वमनयोग्ये ॥
वमि । पुं॰ हुताशने । अग्नौ ॥
धूर्त्ते ॥ स्त्री॰ वान्तौ । छर्द्दने ॥
वमनम् । टुवम॰ । वृकृक्ष्या
दिभ्य . ॥
वमित । त्रि॰ कृतवमने ॥ यथा ।
वमितलङ्घयेत्प्राज्ञोलङ्घितन
तुवामयेत् । वमनेक्लेशवाहुल्याद्व
न्यालङ्घनकर्षितम् ॥
वमी । स्त्री॰ वमने ॥ कृदिकारादिति
ङीष ॥
वभ्र : । पुं॰ वश्री ॥
वम्री । स्त्री॰ उपजिह्वायाम् । सोम
क॰ इ॰ दे॰ भा॰ । वालवी॰ इ॰
महाराष्ट्रभाषा ॥ इ॰ हि॰ न्द्र . ॥
वम्रीकूट । पु॰ वल्मीके ॥
वय : । पुं॰ पक्षिणि । खगे ॥ तारु
ण्ये ॥ यौवने ॥ कालकृतायायौव
नादिरूपायाशरीरावस्थायाम् । बा
ल्यादौ ॥ अवहिवय . पक्षा : ।
यथा । कौमारयौवनमध्यत्त्वस्थवि-
रत्त्वानिचत्त्वारिवयांसीत्येक ' प
क्ष . । तथाचाहु . । आद्येवयसि
नाधीतद्वितीयेनार्जितधनम् । तृती
येनतपस्तप्तं चतुर्थेकिंकरिष्यतीति ॥
त्रीणिवयांसीत्यन्ये । यदाहु ।
पितारक्षतिकौमारेभर्त्तारक्षतियौ
वने ॥ पुत्रास्तुस्थाविरेभावेनस्त्रीस्वा
तन्त्र्यमर्हतीति ॥ अन्ये तु॰कौमार
यौवनस्थविरत्त्वानि॰त्रीणीच्छन्ति ।
आहुश्चते । आषोडशाद्भवेद्बालोयावत्
क्षीरनिवर्त्तक : । मध्यम . सप्तति
र्यावत्परतोवृद्धउच्यतइति ॥ के-
चित्तुउपचयापचयलक्षणोद्वेवयसी

दृश्यन्ते यस्मिन् पक्षे यौवनस्य प्रथम वयोवाचित्वाद्वायसि प्रथमइतिवधूटीचिरण्टीव्यवडीपिसिद्धं० वयस्य चरमइतिनवक्तव्यमितिस्थितम्॥ यस्त्वर्थप्रकरणादिकमनपेक्ष्यश्रवणमात्रेणवय प्रतिपादयति० सवयोवाचीत्युच्यते० अन्तरङ्गत्वात्० तेनेहन। उत्तानशया० लोहितपादा। इहप्रकरणादिनावयस' प्रतीतावपि० शब्दादप्रतीते.। अवस्थापिहिव्याध्यादिवशादुत्तानाशेते० अलक्तकेनचरक्तचरणाभवति॥ वयते० वेति० अजतिवा। वय गतौ० वीगत्यादौ० अजगतौवा असुन्॥ वयस्त्रिविधवाल्य मध्यमवार्द्धकतथेतिसुश्रुत॥

वयस्थ । त्रि० मध्यमवयसि। तरुणे॥ वयसितिष्ठति। सुपीतियोगविभागात्क.॥

वयस्था।) वयस्था।) स्त्री० ब्राह्म्याम्॥ गुडूच्याम्॥ आमलक्याम्॥ सूक्ष्मैलायाम्॥ काकोल्याम्। पथ्यायाम्। पूतनायाम्। हरीतक्याम्॥ सोमलतायाम्॥ शाल्मलौ॥ क्षीरकाकोल्याम्॥ अध्यण्डपर्ण्याम्॥ मत्स्याच्याम्॥ वयोयौवनतिष्ठत्यनया। स्था०। घञर्थेक। युवती। तरुण्याम्। सख्याम्। आल्या

म्॥ खर्परेशरिवाविसर्गलोप॥

वयस्य । पु० समानवयस्के। स्निग्धे। सवयसि॥ वयसातुल्य। नौवयोधर्मेत्यादिनायत्॥ सख्यौ॥

वयस्या। स्त्री० सख्याम्॥ टाप्॥

वयस्वी। पु० तरुणे॥

वयुन'। पु० देवतालये॥ न० प्रज्ञाने॥ कर्मणि॥ अजति। अज०। अजियमिशीङ्भ्यश्चेत्युनन्चित्। अजेर्वी गुणायादेशौ॥

वयोधा। पुं० यूनि। तरुणे॥ वयोदधाति। डुधाञ०। वयसिधाञइत्यसिङित्॥

वयोवङ्गम्। न० सीसके॥

वयोबाची। पुं० अर्थप्रकरणादिकमनपेक्ष्यश्रवणमात्रेणवयस प्रतिपादके कुमारादिशब्दे॥

वर'। पु० देवाहृते। देवतादेरभीप्सिते॥ तपोभिरिष्यतेयस्तुदेवेभ्य. सवरोमतइतिभरत.॥ भर्त्तरि॥ जामातरि॥ वृत्तौ। वरणे॥ विटे। षिङ्गे॥ गुग्गुलौ॥ कन्यार्थिनि॥ वरपरीक्ष्यकन्यादेया। तथाहिविद्याप्रभावज्ञानस्वपरीक्ष्यवणुयाद्वरम्। अत्रोक्तं देवीभागवते। वरायगुणहीनायवृद्धायाज्ञानिने तथा। दरिद्रायचमूर्खायरोगिणे कुत्सितायच॥ अत्यन्तकोपयुक्ताय

वाऽत्यन्तदुर्मुखायच । पङ्क्तिपङ्क्ति हीनायचान्धायबधिरायच ॥ जडायचैवमूकायक्लीबतुल्यायपापिने । ब्रह्महत्यालभेत्सोपिय स्वकन्यां प्रयच्छति ॥ शान्तायगुणिनेचैवयूनेचविदुषेपिच । साधकायसुतादत्त्वा दशयज्ञफलं लभेदितिनवम स्कन्ध ॥ न॰ कुङ्कुमे॥ किञ्चिदिष्टे । मनाक्प्रिये ।। तथाहि । वर प्राणास्त्याज्यानचशिशुर्विनाशिष्वभिरतिर्वरं मौन कार्यं नचवचनमुक्तं यदनृतम् । वर क्लीवभाव्य नचपरकलत्राभिगमनं वर भिक्षाशित्व नच परधनानाहिहरणम् ॥ त्रि॰ श्रेष्ठे ॥ साधुनि ॥ व्रियते॰वरणं वा । वृञ् वरणे । ग्रहवृद्रित्यप् ॥ यद्वा । वृणोति॰ वरतिवा । पचाद्यच्॥

वरक । पु॰ वनमुद्गे ॥ पर्पटे ॥ तृणधान्यप्रभेदे । स्थूलकङ्गौ । चीणा॰ इ॰ भा॰ प्र॰ ॥ मधुरोवरकोरूक्ष कषायोवातपित्तकृत् ॥ न॰ पत्रोर्णे । धौताधौतसाधारणवस्त्रे ॥ पोताच्छादने ॥

वरक्रतु । पुं॰ इन्द्रे । मरुत्वति ॥

वरचन्दनम् । न॰ कालीये ॥ देवदारुणि ॥ वरश्चतच्चन्दनञ्च ॥

वरट । पुं॰ हंसे ॥ गन्धोल्याम् । वरडे॰ इ॰ प्र॰ कीटे ॥ म्लेच्छजातिविभेदे ॥ न॰ कुन्दपुष्पे ॥ वृणोतिसेवतेसर । वृङ्सम्भक्तौ । वृणोतिवा । वृञ् आवरणे । शकादिभ्योटन् ॥

वरटा । स्त्री॰ हंसस्यस्त्रियाम् ॥ गन्धोल्याम । वरडे॰ इ॰ भा॰ प्र॰ कीटे ॥ कुसुम्भबीजे । वरट्टिकायाम ॥ यथा । वरटामधुराक्स्निग्धारक्तपित्तकफापहा । कषायाशीतलागुर्वी स्यादवृष्यानिलापहा ॥ + +

वरटी । स्त्री॰ हंस्याम् । वरडे॰इ॰-प्र॰सपक्षकीटे । गन्धोल्याम ॥ गौरादि ।

वरट्टिका । स्त्री॰ वरटायाम् । कुसुम्भबीजे ॥

वरण । पु॰ तिक्तशाके । वरुणद्रुमे॥ प्राकारे । सालि॥ उष्ट्रे ॥ सङ्क्रमे॥ न॰कन्यादिवरणे ॥ वेष्टने । वृत्याम् ॥ व्रियते॰वृणोतिवा । वृञ्॰ । युच् ॥ कर्तृकरणयोर्वाल्युट् ॥ वरणे । यथा वरवृणवन्तिदेवावरदश्चवरार्थिनाम् । धातुर्वैवरणेप्रोक्तस्तस्मात्सवरण स्मृत ॥ इति साम्बपुराणम् ॥ पूजनादौ ॥

वरणसी । स्त्री॰ वाराणस्याम् ॥

वरणा । स्त्री॰ काश्या उत्तरसीम्निस्थितायानद्याम् ॥

वरणीय । त्रि॰ उपासनीये । वरेण्ये ॥

वरण्ड । पु॰ अन्तरावेद्याम् । वर ण्डकी ॥ समूहे । सङ्घे ॥ वदजा मये । वयस्फोडा॰द्व॰भा॰प्र॰ ॥ वृणोति । वृञ् । अण्डन्नृक्षत्भ्र-वृञद्वस्यण्डन् ॥

वरण्डक । पु॰ अन्तर्वेदौ । वरण्डे । मातङ्गवेद्याम् ॥ अभ्यासक्तालिका सनवेदिमन्तर्दाधदन्तिनौयोधयेतेद्व तिप्रसिद्धिः ॥ यौवनकण्टके ॥ स र्ब्बुले । गोलद्भतिख्याते ॥ भि-त्तौ ॥ त्रि॰विशाले ॥ भयसम्प-न्ने ॥ कृपणे ॥

वरण्डा । स्त्री॰ शरिकायाम् ॥ व र्त्याम् । शस्त्रविशेषे । क्षुरिका याम् ॥

वरण्डालु । पु॰ फलपुच्छे ॥

वरतिक्त । पु॰ कुटजवृक्षे ॥

वरतिक्तिका । स्त्री॰ पाठायाम् ॥

वरत्करी । स्त्री॰ रेणुकानामनिगन्ध द्रव्ये ॥

वरत्रा । स्त्री॰ नद्ध्याम् । चर्ममयर ज्जौ॰ । वरत॰द्व॰भा॰प्र॰ ॥ दू ष्यायाम । कक्षायाम् । गजमध्य बन्धनरज्जौ ॥ व्रियतेऽनया । वृ ञ॰ । बाहुलकादत्र । वृञश्चिदि त्यपन्वा ॥ यद्वा । वरत्रायते । वेड्पालने ॥ आतोनुपेतिक ॥

वरत्वच । पुं॰ निम्बवृक्षे ॥ न॰श्रेष्ठ वल्कले ॥

वरद । त्रि॰ प्रसन्ने ॥ अभीष्टदात रि । समर्द्धके ॥ शान्तचित्ते ॥ व रददाति । डुदाञ्॰ । आतोनुप सर्गेद्धतिक ॥ पुं॰ अग्नौ ॥ शा न्तिकर्मणिपुष्टौचवरदोहव्यवाहन इत्यागमात् ॥

वरदा । स्त्री॰ कन्यायाम् । कुमारि कायाम ॥ वरदाख्याम् ॥ अश्वग न्धायाम् ॥ आदित्यभक्तायाम ॥ टाप ॥ तिथिविशेषे । माघशुक्लच तुर्थ्याम् ॥

वरदाचतुर्थी । स्त्री॰ माघशुक्लचतु र्थ्याम् ॥ तस्यांगौरीपूज्या । यथा । भविष्योत्तरेमाघशुक्लामधिकृत्य । चतुर्थीवरदानामतस्यांगौरीसुपूजि ता । सौभाग्यमतुलंकुर्यात्पञ्चम्यां श्रीरपिश्रियम् ॥

वरदातु : । पुं॰ भूमिसहवृक्षे ॥

वरदाची । स्त्री॰ दुर्गायाम् ॥

वरदानम् । न॰ भीमेतीर्थभेदे ॥ यत्र विष्णवेदुर्वाससावरोदत्त ॥

वरदारु । पु॰ शाकवृक्षे ॥

वरदासङ्गम । पुं॰ तीर्थविशेषे ॥

वरपर्णाख्य : । पु॰ क्षीरकञ्चुकी-वृक्षे ॥

वरप्रद : । त्रि॰ वरदे ॥

वरप्रदा । स्त्री॰ अगस्त्यमुने : पत्न्या म । लोपामुद्रायाम् ॥ वरप्रददा ति । डुदाञ॰क : । टाप ॥

वरफ । पु० पिशाचविशेषे ॥ यथो-
क्तं शूलिनीमन्त्रविधाने । सहस्र प्र
जपेन्मन्त्रशूलिन्यायस्य शङ्कर । ब-
टाश्ववरफाश्चैवनस्य शन्तिकदाच-
नेति ॥

वरफल । पु० नारिकेलवृक्षे ॥ वराणि
फलानियस्य ॥ न० श्रेष्ठफले ॥

वरम् । अ० ईषदुत्कर्षे ॥ मनागिष्टे ॥

वरमुखी । स्त्री० रेणुकाभिधगन्धद्र-
व्ये ॥

वरम्वरा । स्त्री० पृश्निपर्ण्याम् ॥

वरयिता । पुं० भर्त्तरि ॥ वरयकार
यितरि ॥

वरर । त्रि० वरप्रदे ॥ वरान्राति ।
रादाने । आतङ्कतिक ॥

वररुचि । पु० पुनर्वसौ ॥ कात्या
यनमुनौ ॥ विक्रमादित्यराजसभा
स्थे कविविशेषे ॥ वरेषुरुचिर्यस्य ॥

वरल । पुं० वरटे । गन्धोल्याम् ॥

वरलब्ध । पुं० चम्पकवृक्षे ॥ त्रि०
वरप्राप्ते ॥

वरला । स्त्री० गन्धोल्याम् ॥ हंस्याम् ॥

वरली । स्त्री० वरटायाम ॥

वरवत्सला । स्त्री० श्वश्र्वाम् ॥

वरवर्णिनी । स्त्री० वरारोहायाम् ।
मस्तकाभिन्याम् । उत्तमायानार्य्या
म् ॥ यथा . लक्षणयथा । शीतेसु
खोष्णासर्वाङ्गीग्रीष्मे यासुखशीत -
ला । भर्तृभक्ताचयानारीसाभवेद्वर
वर्णिनी ॥ द्युतिस्यद्र ॥ वरोवर्णो
स्यस्या । इनि । ङीप् ॥ लाक्षा
याम् ॥ हरिद्रायाम् ॥ रोचनाया
म् ॥ फलिन्याम् ॥ साधीयस्याम्
वरस्यासौवर्णश्चसोस्त्यस्या । इ-
नि । ङीप् ॥ श्रियि ॥ गौर्याम् ॥
सरस्वत्याम् ॥

वरबाह्लीकम् । न० कुङ्कुमे ॥

वरवृड । पु० सुप्रसादे । शिवे ॥
वरेषुवृड ॥

वरा । स्त्री० फलत्रिके । त्रिफलाया-
म् ॥ पाठायाम् ॥ रेणुकाख्यगन्ध
द्रव्ये ॥ गुडूच्याम् ॥ मेदायाम् ॥
ब्राह्म्याम् ॥ हरिद्रायाम् ॥ विड
ङ्ग । श्रेष्ठायाम् ॥ ग्रहवृद्धिस्त्यवन्ता
हृत्अष्टाप् ॥

वराक । पु० सङ्करे । रणे । युद्धे ॥
त्रि० शोचनीये । शोच्ये ॥ अव-
रे ॥ वृणीतीतच्छील । वृङ्सम्भ
क्तौ । जल्पभिक्षकुट्टलुण्टवृङ . षा
कन् ॥

वराकी । स्त्री० अवरायाम् ॥ ङीष् ॥

वराङ्गः । पुं० पुष्करिणि । गजे ।
मातङ्गे ॥ न० योनौ ॥ मस्तके ॥
गुडत्वचि ॥ शोभनावयवे ॥ त्रि०
शोभनावयवविशिष्टे ॥ वरञ्चतद-
ङ्गञ्च । वराण्यङ्गान्यस्य ॥

वराङ्गकम् । न० गुडत्वचि । त्वक्प
त्रे । त्वचे ॥ वरमङ्गमस्य । शेषा

द्विभाषितिकप् ॥

वराङ्गना । स्त्री० अतिप्रशस्ताङ्गयुक्तायांस्त्रियाम् ॥ यथा । शिर सपुष्पचरणौसुपूजितौवराङ्गनासेवनमल्पभोजनम् । अनग्नशायित्वमपर्वमैथुनम्चिरप्रनष्टांश्रियमानयन्तिषट् ॥

वराङ्गरूपोपेत : । त्रि० श्रेष्ठरूपयुक्ते । सिंहसहनने ॥ अङ्गानिचरूपञ्चअङ्गरूपाणि । वराणिचतानिअङ्गरूपाणिच० तैरुपेत ॥

वराङ्गी । पुं० अम्लवेतसे ॥

वराङ्गी । स्त्री० हरिद्रायां ।

वराट . । पुं० कपर्दके ॥ तस्यभेदा: पञ्चयथा । सिंही० व्याघ्री० मृगी० हंसी० विद्ल्लेतिराजनिर्घण्ट . ॥ रज्जौ ॥ वरमटति । अटगतौ । कर्मण्यण ॥

वराटक: । पुं० पद्मबीजकोषे ॥ रज्जौ ॥ कपर्दके कौडी० इ० भा० प्र० ॥ तस्यसङ्ख्याभेदेनसञ्ज्ञाभेदा यथा । वराटकानांदशकद्वयंयत् साकाकिणीताश्चपणस्तस्त . तेषोडशद्रम्मइहावगम्योद्रम्मैस्तथाषोडशभिश्चनिष्क ' ॥ इतिलीलावती ॥ अपिच । तान्त्रिक . कार्षिक . पणइतियाज्ञवल्क्यवचनेन० गुञ्जापञ्चाद्यमाषकस्तेषोडशाक्ष ' कर्षोऽस्त्रीत्यमरसिंहोक्तिनचअशीतिरक्तिकापरिमितताम्रेपणशब्द : सङ्केतित सचतावत्सङ्ख्यकवराटकैर्लभ्यतेइतिवराटकेष्वपितथाव्यवहार । एतन्मूलकभविष्यमत्स्यसूक्तयोर्वचन यथा । अशीतिभिर्वराटकै पणइत्यभिधीयते । तैषोडशै : पुराण स्याद्रजत सप्तभिस्तु तैरितिप्रायश्चित्ततत्त्वम् ॥ तेचदक्षिणार्थंविधीयन्ते । यथा । कृतमशोचिर्यंदान कृतोयज्ञस्त्वदक्षिण: । तस्मात्पणंकाकिणींवाफलपुष्पमथापिवा ॥ प्रदद्याद्दक्षिणायज्ञेतयाससफलोभवेत् । इतिशुद्धितत्त्वम ॥ त्रियतेद्लै ' । वृञ्आवरणे । अन्येभ्योपीत्याटच् ॥ ततस्वार्थेक : ॥ यद्वा । वर इलवर्णमटति । अट० । कर्मण्यण् । तत : स्वार्थेकन् ॥ वराटकारजा : । पुं० नागकेशरवृक्षे ॥

वराटिका । स्त्री० कपर्दके ॥

वराण . । पुं० इन्द्रे ॥ वरुणवृक्षे ॥

वराणसी । स्त्री० काश्याम् ॥

वरादनम् । न० राजादनी ॥

वराभिध : । पुं० अम्लवेतसे ॥ श्रेष्ठनामनि ॥

वरारकम् । न० हीरके ॥

वरारोह . । पुं० परमेश्वरे ॥ वरश्चारोहोस्य । पुनरावृत्त्यसम्भवात्० वरमारोहणंयस्मिन्वा ॥ गजारो

ह्ने ॥ अवरोहे ॥

वरारोहा । स्त्री॰ मत्तकाशिन्याम् । वरवर्णिन्याम् । वरआरोहोनित म्बोऽस्याः ॥ कटौ ॥

वरालिका । स्त्री॰ आर्यायाम् । पार्वत्याम् ॥ दू॰ चि॰ ॥

वराशि । पुं॰ स्थूलवस्त्रे । स्थूल शाटके ॥ वर श्रेष्ठवरण वाश्नुते । अशुव्याप्तौ । इन् ॥

वरासन । पुं॰ षिड्गे ॥ द्वारपा ले ॥ न॰ ओड्रपुष्पे ॥ श्रेष्ठास ने ॥

वरासि । पुं॰ स्थूलशाटके ॥ खड् गधरे ॥

वरासी । स्त्री॰ स्नानवस्त्रे ॥

वराह । पुं॰ विष्णौ ॥ मानप्रभेदे ॥ तीर्थप्रभेदे ॥ अद्रिविशेषे ॥ मुस्ता याम् ॥ शिशुमारे ॥ वाराहीकन्दे ॥ अष्टादशद्वीपान्तर्गतस्त्रुद्रद्वीपवि शेषे ॥ यथा । गन्धर्वौ॰ वरुण सौ म्यौवराहः काङ्गएवच । कुमुदश्च कशेरुश्चनागोभद्रारकस्तथा॥ चन्द्रे न्द्रमलया शङ्खयवाङ्गकगभस्ति मान् । ताम्राङ्गश्चकुमारीचतच द्वीपादशाष्टभिरिति ॥ सूकरे । कोले । भूदारे॥ अस्यमांससाधना दियथा । वराहस्यतनुतोये स- म्यक्प्रक्षालितासुहुः । दृष्टाग्निनाथ वादग्धाकिञ्चित्तैयेनसेकिताम् ॥

शस्त्रेणदशयेत्तान्तुयावन्निर्लोमता भवेत् । ततोतितीक्ष्णशस्त्रेणकट्ट यित्त्वायथोचितम् ॥ गृह्णीयाच्चा मिष तत्तुपृथगङ्गविभागशः । र न्धयेद्बहुधाव्यप्रलेहतलनादिकम्॥ खेदनश्चश्रमंश्चश्च शीतलतर्पणंगु रु । श्रमानिलहरस्निग्धं वाराहबल वर्द्धनम् ॥ वरश्रेष्ठमाहन्ति । हृ न॰ । अन्येष्वोपीतिड ॥ तन्मां सविष्णवेनदेयम् ॥ तदुक्तं विष्णु सूत्रे । नाभक्ष्य नैवेद्यार्थे॰भक्ष्ये ष्व जामहिषौचौरेवर्जयेत् । पश्चनख मत्स्यवराहमांसानिचेति ॥ आर ण्यवराहमासश्राद्धादौविहितम् । अस्नन्तोप्यनुवृत्तौ॰ महारण्यवासिन श्चवराहास्तथैतिहारीतोक्तं ॥

वराहकन्द । पुं॰ वाराह्याम् ॥

वराहकर्णी । स्त्री॰ अश्वगन्धायाम् ॥

वराहकान्ता । स्त्री॰ वाराह्याम् । व दराद्रुमे ॥

वराहकाली । स्त्री॰ सूर्यमणिपुष्पवृ क्षे ॥ सूर्यावर्त्ते ॥

वराहक्रान्ता । स्त्री॰ लज्जालौ । ति लागन्धिकायाम् । नमस्कार्याम् ॥

वराहनामा । पुं॰ वाराहीकन्दे॥

वराहपुराणम् । न॰ वाराहे ॥

वराहव्यूह । पुं॰ वराहाकृतिवत्तत्त तरचनेव्यूहे ॥ सूक्ष्मसुखपश्चाद्भा ग पृथुमध्योवराहव्यूहोभवति ।

अनेनपार्श्वयोर्भग्नेमतिर्यातव्य मा र्गंव्रजेत् ॥

वराङ्गी । स्त्री॰ दन्त्याम् ॥

वराहिका । स्त्री॰ कपिकच्छौ ॥

वराही । स्त्री॰ भद्रमुस्तायाम ॥ ग्र कारकन्दे ॥

वरिमा । पु॰ उरुत्वे । विशालता याम् ॥ उरोर्भाव । पृथ्वादित्वा दिमनिच् । प्रियस्थिरेति॰ उरो र्वभाव ॥

वरिव । न॰ परिचर्यायाम्॥ धने ॥

वरिउसित । त्रि॰ उपासिते ॥ वरि व कृतम् नमो।वरिवइतिक्यच। त क्यस्यविभाषेतिपक्षे यलोप ॥

वरिदसिता । त्रि॰ नमस्कर्त्तरि ॥

वरिवस्या । स्त्री॰ शुश्रूषायाम् । से वायाम् ॥ वरिवस करणम् । व रिवश्शब्द पूजार्थे । नमोव रिवश्चिचङ क्यच् । अप्रत्ययादि त्य । टाप् ॥

वरिवस्थित . । त्रि॰ उपासिते । वरि वसिते ॥ वरिवस क्यच् । क्तः । क्यस्यविभाषेतिपक्षे यलोपाभाव ॥

वरिशी । स्त्री॰ मत्स्यवेधने ॥

वरिषम् । न॰ बत्सरे ॥

वरिषा . । स्त्री॰ भूम्नि॰ वर्षासु । प्रावृषि ॥ #

वरिषाप्रिय । पुं॰ चातकेखगे ॥

वरिष्ठ । पु॰ तित्तिरी ॥ नारङ्गत्वे ॥ न॰ मरिचे ॥ ताम्रे ॥ त्रि॰ वरतमे ॥ उरुतमे ॥ अयमेषामतिशयेनवर ॰उरुर्वा । अतिशायने॰ इष्ठन् । प्रियस्थिरेति॰उरोर्वभाव ॥ वस्मे ॥

वरी । स्त्री॰ शतावर्याम् ॥ नीलोत्प लाकारपुष्पत्वात् । वृणोति । वृ ञ् । पचाद्यच् । गौरादि ॥ सू र्य्यभार्य्यायाम् । इति शब्दरत्नावली ॥

वरीयान् । पुं॰ विष्कम्भादिष्वष्टादशे योगे । तत्रजातस्यफलयथा । दा तादयालु . सुतरासुवेश सत्कर्म कर्त्तामधुर स्वभाव : नरोबलीया न्धनवान्जनाढ्योयोगोवरीयान् यदिजन्मकाले ॥ त्रि॰ अतियूनि ॥ श्रेष्ठे ।, अतिविस्तारे ॥ अयमन योरतिशयितउरुर्वरोवा । द्विवचने तीयसुनिप्रियस्थिरेति॰ उरोर्वरा देश . ॥

वरीवर्द्द । पुं॰ वलीवर्द्दे ॥

वरुट . । पुं॰ म्लेच्छजातिविशेषे ॥ यथा । पुलिन्दानाहलानिष्ट्या : शवरावरुटाभटा : । मालाभिल्ला किराताश्चसर्वेपिम्लेच्छजातय . ॥ इतिहेमचन्द्र ॥

वरुड . । पु॰ अन्त्यजजातिविशेषे ॥ यथा । रजकश्चर्मकारश्चनटोवरु डएवच । कैवर्त्तमेदभिल्लाश्चसप्तैते चान्त्यजा : स्मृता ॥ एतेषांचस्त्रियो गत्वाभुक्त्वाचप्रतिगृह्यच । प्रतत्य

स्थानतोऽपिप्रोद्धानात् साध्यन्तुगच्छ ति ॥ इतिश्रम ॥ अस्योत्पत्तिर्य था । कौवर्त्तस्यवकन्यायांगोपिड का देवमोचिका । सौचिक्यांगो पिडकाज्जातोनटोवरुडएवच ॥ इ० प० प० ॥

वरुण । पु० पश्चिमाशापतौ । प्रचे तसि । पाशिनि । यादसांपतौ । अप्पतौ ॥ यादसामस्मि तेषाराजा वरुणोनामभगवतोविभूति ॥ व्रिय ते०हणोतिवा । वञ्० । कृवृदा रिभ्यउनन् ॥ अप्सु । जले ॥ खर श्मिस वरणात्सायङ्गनेसूर्ये ॥ तरु विशेषे । वरणे । सेतौ । तिक्तशा के । कुमारके । अश्मरीघ्ने । श्वेत पुष्पे । तमाले । वरुणा० इ० भा० प्र० ॥ अस्यगुणा । वरुण पित्त लोभेदीश्लेश्मकृच्छ्राश्ममारुतान् । निहन्तिगुल्मवातास्त्रकृमींश्चोष्णो ग्निदीपन ॥ कषायोमधुरस्तिक्त कटुकोरूक्षकोलघु ॥ अपिच । वरुणोनिलशूलघ्नोभेदीचोष्णोऽश्मरी हर । पुष्पवरुणजग्राहीपित्तघ्न मामवातजित् ॥ *

वरुणजा । स्त्री० मदिरायाम् ॥

वरुणात्मजा । स्त्री० मदिरायाम् ॥ व रुणालयेऽपिवरुणः । तस्यात्मजा।

वरुणानी । स्त्री० वरुणस्यपत्न्याम् ॥ वरुणस्यस्त्री० । इन्द्रवरुणेतिङी षानुकौ ॥

वरुणालय । पु० समुद्रे ॥ वरुणस्य आलय ॥

वरुत्रम् । न० प्रावरणे । उत्तरीयव स्त्रे ॥ वृणोति । वृञ्० । अशित्रा दिभ्यइत्रोत्राविति त्रप्रत्यय ॥

वरुल । पु० सम्भक्ते ॥

वरूथ । पु० रथगुप्तौ । परप्रहरणा भिघातरक्षार्थं रथस्यसन्नाहवद्दाव रणकाद्रव्ये ॥ वरूथोरथगुप्तिर्यातिरोधत्ते रथस्थितमितिमध्यान्ह ॥ पिके ॥ काले ॥ रासभे ॥ त्रि० वरणीये ॥ न० चर्मणि ॥ वर्मणि ॥ वेश्मनि ॥ व्रियतेरथोऽनेन । वृञ् वरणे । जृवृञ्भ्यामूथन् ॥

वरूथाधिपति । पु० सेनान्याम् ॥

वरूथी । त्रि० गुप्तिमति ॥ रथिनि ॥

वरूथिनी । स्त्री० सेनायाम् ॥ वरू था सन्त्यस्याम् । इनि ङीप् ।

वरेण्य । पु० वह्नौ ॥ प्रजापतौ ॥ ध्यातेनसूर्यमण्डलेद्रष्टव्ये पुरुषे ॥ तथाचयोगियाज्ञवल्क्य । वरेण्य वरणीयञ्चजन्मसंसारभीरुभि ॥ आदित्यान्तर्गत यच्चभर्गाख्य वामु मुक्षुभि । जन्ममृत्युविनाशाय दु खस्यत्रिविधस्यच । ध्यानेनपु रुषोयस्तुद्रष्टव्य सूर्यमण्डलेइति ॥ न० कुङ्कुमे ॥ त्रि० प्रधाने ॥ वरणीये ॥ व्रियते । वृञ० ।

बृ॰ अरण्य ॥
वरेन्द्री । स्त्री॰ गौडदेशे ॥
वरेश्वर । पु॰ सदाशिवे । वराणा मीश्वर ॥
वरोटम् । न॰ मरुवकपुष्पे ॥
वरोल । ) पु॰
वरोली । ) स्त्री॰ बरटे ॥
वर्क्कर पुं॰ नर्म्मणि । परिहासे ॥ युवपशौ ॥ छागे । बकरा॰इ॰भा॰ प्र॰अस्यमांसगुणा । यथा सद्भिङ्गु नाढ्ये नयुतसुपक्कमजासुतस्यामिष मल्पकस्य । एलालवङ्गोषणयोगयो गात्करोतिपुष्टिं जठरानलस्य ॥ अ जासुतस्यबालस्यमासं गुरुतरस्मृ त म् । हृद्य मृदुतरश्चैव सुस्वादुवलद स्मृतम् ॥ वर्क्कास्तु । सिद्धार्थसम्भवैते सिद्धतैर्वोपस्कारान्विते । साधितस्या प्रसूताया पलमाज गुणोत्तमम् । अजाऽप्रसूतासम्भूत मांस पीनस- नाशनम् । शुक्रकासारुचेश्लेष्महित मग्नेश्चदीपनम ॥ अजासुतस्यपीन- स्यशीश्नस्यस्यसाधितम् । घृतराम ठस युक्तोपस्करैरसवत्पलम् ॥ वा तपित्तहरवल्यं सुस्वादुरुचिकारक- म् । हृद्य पीनसकासाश्च शोथ- घ्न पुष्टिकृत्परम ॥ इतिपिठीरा ॥ अथक्लिलोधिया । स्थूलनिष्कासि- तान्त्रस्यमांसकृतमजस्य च । रचित बहुधासूदैराखुरादिकमस्तकम् ॥ त न्मांसमासदवल्य रुच्यं पित्तानिला पहम् । सुस्वादुमधुरपाकेकिञ्चित्क्क फकरस्मृतम् ॥ वर्क्कते । हकाथादा ने । बाहुलकाद्‌रन् ॥
वर्क्कराट । पु॰ कटाक्षे ॥ तरुणादि त्यरोचिषि ॥ नारीपयोधरोत्स- ङ्गकान्तदन्तनखक्षते ॥ इतिमेदि निकर ॥
वर्ग । पु॰ स्वजातीयसमूहे । समा नधर्म्मिभि . प्राणिभिरप्राणिभिर्वो पलक्षितेद्वन्द्वे ॥ यथा । कवर्ग पशुवर्ग . । इति ॥ ग्रन्थपरिच्छे दे ॥ यथा । सर्गोवर्गपरिच्छेदोद्- घाताध्यायाङ्कसङ्ग्रहा : । उच्छ्वा स : परिवर्त्तस्पटल : काण्डम- स्त्रियाम् ॥ स्थानप्रकरणपर्वाह्निक ाश्चग्रन्थसन्धय . ॥ समानाङ्कद्वय स्यपूरणे । कृतौ ॥ वृज्यते । वृजीव र्जने । घञ् । कुत्वम् ॥
वर्गोत्तम । पुं॰ नवांशानामध्येस्वां शे ॥ यथाचराणामेषकर्कटतुलाम कराणांनाप्रथमोंश . । स्थिराणा वृषसिंहवृश्चिककुम्भानापञ्चमोंश: । द्व्यात्मकानांमिथुनकन्याधनुर्मीना नानवमोंश । चराणाप्रथमेचांशे स्थिराणांपञ्चमेतथा । नवमेद्व्यात्म कानाञ्चवर्गोत्तमइतिस्मृत . ॥ अपिच । मेषाद्यामकराद्याश्चतुला द्या कर्कटादय : । क्रमान्नवांशा

राशीनांखाशावर्गोत्तमा स्मृता ॥ इति ॥

वर्चा । पुं॰ चन्द्रात्मजे ॥ यथा । रोहिण्यामभवद्वर्चावर्च्चस्वीयेनचन्द्रमाः। त्रि॰ ॥ न॰ रूपे ॥ विष्ठायाम् ॥ तेजसि ॥ वर्चते । वर्चदीप्तौ । सर्वधातुभ्योऽसुन् ॥

वर्चस्क । पुं॰ न॰ गूथे । पुरीषे । विष्ठायाम् ॥ वर्चते॰वर्च्यतेवा । वर्च॰ । असुन् । कुत्सायांकन् ॥

वर्चस्वी । पुं॰ चन्द्रमसि ॥ त्रि॰ वर्चोविशिष्टे ॥ अस्मायामेधेतिमत्वर्थीयोविनि ॥

वर्जनम् । न॰ हिंसायाम ॥ त्यागे ॥

वर्जनीय । त्रि॰ त्यागार्हे । वर्ज्ये ॥

वर्जित । त्रि॰ परित्यक्ते ॥ वृजेः ॥ क्तः ॥

वर्ज्य । त्रि॰ त्याज्ये । वर्जनीये ॥

वर्ण । पुं॰ द्विजादौ । ब्राह्मणादौ । ब्राह्मणे । क्षत्रिये । वैश्ये । शूद्रे ॥ देवेषुवर्णायथा । आदित्या . क्षत्रियास्तेषाविशश्चमरुतस्तथा । अश्विनौचस्मृतौशूद्रौतपस्युग्रेसमास्थितौ । स्मृतास्त्वाङ्गिरसादेवाब्राह्मणाइतिनिश्चय । अपिच । चत्वार कथितावर्णाश्रमोऽपिसुव्रते । आचारास्तापिवर्णानामाश्रमाणांपृथक्पृथक् ॥ कृतादौकलिकालेतुवर्णा पञ्चप्रकीर्तिता । ब्राह्मण क्षत्रियोवैश्यशूद्र. सामान्यएवच ॥ सामान्योवर्णसङ्कर ॥ शुक्लादौ ॥ सचबहुविधोयथा । श्वेत १ । पाण्डु २ धूसर ३ । कृष्ण ४ । पीत ५ । हरित ६ । रक्त ७ । शोण . ८ । अरुण ९ । पाटल १० । श्याव ११ । धूम्र १२ । पिङ्गल १३ । कर्बुर १४ । यथाह्यमर । शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डरा । अवदात सितोगौरोऽवलक्षोधवलोऽर्जुन . ॥ १ ॥ हरिणपाण्डुर पाण्डु २ । ईषत्पाण्डुस्तुधूसर ३ । कृष्णेनीलासितश्यामकालश्यामलमेचका ४ ॥ पीतोगौरोहरिद्राभ ५ पालाशोहरितोहरित् ६ लोहितोरोहितोरक्त ७। शोण कोकनदच्छवि ८ ॥ अव्यक्तरागस्त्वरुण ९ । श्वेतरक्तस्तुपाटल १० । श्याव स्यात्कपिश ११ धूम्रधूमलौकृष्णलोहिते १२ ॥ कडार कपिल : पिङ्गपिशङ्गौकद्रुपिङ्गलौ १३ । चित्र किर्मीरकल्माषशबलैताश्चकर्बुरे १४ ॥ गुणे शुक्लादय पुंसिगुणिलिङ्गास्तुतद्वति । इति । यशसि ॥ गुणे । गजच्छिन्नकम्बले । प्रवेण्याम् । आस्तरणे । ह्रायीकोभूल॰ इ॰ भा॰ ॥ स्तुतौ ॥ काञ्चने ॥

व्रते ॥ गीतक्रमे ॥ न० कुङ्कुमे ॥ पु० न० भेदे ॥ रूपे ॥ विलेपने ॥ अक्षरे । अकारादिवर्णे सर्वहि वि ध. । ध्वन्यात्मको ऽक्षरात्मकश्च ॥ अक्षरात्मकस्योच्चारणमुक्तं नरदात्तले । यथा । श्रीशिवउवाच । विशेषक्रथयाम्यद्यप्रोच्चार्यो कण्ठतः स्वराः । कद्वयजिह्वयामूर्द्धद्वयजिह्वदन्तजम् ॥ मुखस्थानादशोवाच्या चकारः कण्ठघातजइति ॥ चित्रे ॥ शब्दे ॥ तालविशेषे ॥ ष ड्जादिगतौ ॥ षड्गरागे ॥ व्रियतेऽनेन । वृञ् । कृवृजृसिद्रुपन्य निस्वपिभ्योनिदिति न ॥ यद्वा । वहतीतिवर्णः सन्त्यस्य । अर्शआ द्यच् ॥ वर्ण्यतेऽर्थोऽनेनवा । व र्णवर्णने० वर्णप्रेरणेवा । घञ् ॥ वर्णयतिवा । अच् ॥

वर्णकः । पु० चारणे ॥ मण्डले ॥ न० हरिताले ॥ घृष्टचन्दनादिलेपमात्रे ॥ गात्रानुलेपनयोग्ये पिष्टे घृष्टेवासुगन्धिद्रव्ये ॥ चन्दने ॥ पु० स्त्री० हिङ्गुलहरितालका चनौलीकादौ ॥ पु० न० चन्दने ॥ विलेपने ॥ त्रि० वक्तरि ॥ वर्णं करोति० वर्णयति० वक्तीतिवा । वर्ण० ॥ ण्वुल् ॥

वर्णखण्डः । पु० चामरणे ॥

वर्णकविः । पु० कुबेरात्मजे ॥

मायुराजे ॥

वर्णका । स्त्री० प्रावर्णभेदे ॥ व र्णवर्णक्रियाविस्तारगुणवचनेष्विति चौरादिक० । ततोण्वुल् । वर्णकातान्तवदतोत्वं न ॥

वर्णकूट । पु० योटकविशेषे ॥ यथा । चोत्रविटशूद्रविप्रा स्युः क्रमान्मेषादिराशय० । तत्रवर्णाधिकाकन्यांवोढाश्लाकट्यावन ॥ दोषस्तु । वर्णश्रेष्ठातुयानारीवर्णहीनस्तुय. पुमान् ॥ विवाहयदि कुर्वीततस्याभर्तावियस्यतीति ॥

वर्णकूपिका । स्त्री० मसीधान्याम् ॥

वर्णक्रिशा । स्त्री० वर्णकारणे ॥ यथा । वर्णस्यकारणेदेयकुङ्कुमरक्तचन्दनम । ताम्बूल यत्रयद्युक्तं तत्तत्र प्रयोजयेत् ॥ पाक्षिषुगुरुणादेयागौल्यशैत्त्रीरजेषु च ॥ शेषेषु पाश्चयोगेषु धूपर्यैविङ्गुसपिंषा ॥

वर्णचारकः । पु० चित्रकारे ॥

वर्णज्येष्ठ० । पु० ब्राह्मणे ॥ वर्णानां० वर्णेषुवाज्येष्ठ. ॥ त्रि० स्ववर्णापेक्षयोत्तमवर्णे ॥

वर्णतूलि ।)
वर्णतूलिका ।) स्त्री० लेखन्याम् ॥
वर्णतूली ।)

वर्णदम् । न० कालीयके ॥ त्रि० वर्णदातरि ॥

वर्णदात्री । स्त्री० हरिद्रायाम ॥

त्रि॰ वर्णदातरि ॥

वर्णदूत । पु॰ लेखे । शाब्दिकहार
वी ॥

वर्णधर्म्म । पुं॰ न॰ वर्णाधिकृत
धर्म्मे ॥ वर्णत्वमेकमाश्रित्ययोधर्म
सम्प्रवर्त्तते । वर्णधर्म्मः सउक्तस्तु
यथोपनयन नृपेतिभविष्यपुराणम्
॥ अपिच । यजन याजन दान ब्रा
ह्मणस्यप्रतिग्रह । अध्यापनंचाध्य
यन षट्कर्माणिद्विजोत्तमा ॥
दानमध्ययन यज्ञोधर्म क्षत्रियवैश्य
यो । दण्डोयुद्धक्षत्रियस्यकृषिर्वै
श्यस्यशस्यते ॥ शुश्रूषैवद्विजाती
नाशूद्राणांवर्णसाधनम् । कारुक
र्मतथाजीव. पाकयज्ञोपिधर्म्मत
॥ क्षमादमोदयादानमलोभस्त्याग
एवच । आर्जवं चानसूयाचतीर्था
नुसरण तथा ॥ सत्यसन्तोषआस्ति
क्य श्रद्धाचन्द्रियनिग्रह । देवता
भ्यर्चन पूजाब्राह्मणानांविशेषत
॥ अहिंसाप्रियवादित्वमपैशुन्यम
कल्कता । सामासिकमिम धर्म
चातुर्वर्ण्येऽब्रवीन मुनि ॥ प्राजा
पत्य ब्राह्मणानास्मृत स्थान क्रिया
वताम् । स्थानमैन्द्र क्षत्रियाणा
सङ्ग्रामेष्वपलायिनाम् ॥ वैश्यानां
मारुत स्थान स्वधर्ममनुवर्त्तताम्
। गान्धर्वं शूद्रजातीनांपरिचारेतुव
र्त्तताम् । इतिकौर्म्मे २ अध्या

य ॥

वर्णनम् । न॰ उपवर्णने ॥ स्तवने
॥ शुक्लपीतादिवर्णयोजने ॥

वर्णना । स्त्री॰ प्रशसायाम् । गुण
कथने । स्तवे ॥

वर्णनीय । त्रि॰ वर्ण्ये । वर्णित
व्ये ॥

वर्णपात्रम् । न॰ चित्रकारस्यनील्या
दिवर्णाधारे ॥

वर्णपुष्प: । ) पुं॰ महासहायाम्
वर्णपुष्पक: । )

। राजतरुणीपुष्पवृक्षे । अम्लाने ॥

वर्णपुष्पी । स्त्री॰ उष्ट्रकाण्डीपुष्पवृ
क्षे ॥

वर्णप्रसादनम् । न॰ अगुरुणि ॥

वर्णमाता । स्त्री॰ भारत्याम् ॥ लेख
न्याम् ॥

वर्णमातृका । स्त्री॰ सरस्वत्याम् ॥

वर्णमाला । स्त्री॰ क्रमागताकाराद्य
क्षरसमूहे । मातृकायाम् ॥ वर्णा
नामालेव ॥ तत्रस स्कृतवर्णा ५०।
जपमालायाम् ५१ । इङ्ग्रेजीयव
र्णा. २६। फरासीया २३ । हि
ब्रू॰ अर्थात्इहूदीया २२ । आ
रबीया २८। पारसीया : ३१ ।
तुरस्कीया. ३३। रूसीया ४१ ।
ग्रिक॰अर्थात्इयुनानीया २४ ।
लाटिन्देशीया २२ । डच्॰
अर्थात्ओलन्दाजीया. २६। स्पान्

देशीया . २७ । इटलीदेशीया ' २० । तातारीया ' २०२ । बर्म देशीया ' १६ । चीनदेशीयवर्णा शब्दात्मका : तच्छब्दसङ्ख्या : ८०००० ॥ इतिशब्दकल्पद्रुमेरा धाकान्तदेव . ॥

वर्णरेखा । )
वर्णलेखा । ) स्त्री० कठिन्याम् ॥
वर्णलेखिका । )

वर्णवती । स्त्री० हरिद्रायाम् ॥ त्रि० वर्णविशिष्टे ॥ वर्णोस्त्यस्याम् । रसादिभ्यश्चेतिमतुप । उगित्वान् ङीप् ॥

वर्णविक्रिया । स्त्री० वर्णापचारे ॥ ✝

वर्णविलोडक . । पु० श्लोकस्तेने । काव्यच्छायाहृति ॥ सन्धिचौरे ॥

वर्णसङ्कर । पु० सङ्कीर्णाचारे ॥ मिश्रितजातौ । मूर्द्धाभिषिक्तमाहिष्यकरणाद्यनुलोमप्रतिलोमजातेऽन्तरालजातौ ॥ वर्णयोर्वर्णानांवास ङ्करोयस्मिन्जनयितव्येसवर्णः सङ्कर ॥ व्यभिचारेणवर्णानामवेद्यावेदनेनच । स्वकर्मणांत्यागेनजायन्तेवर्णसङ्करा ॥

वर्णसङ्घात . । पु० अक्षरसमाम्नाये ॥

वर्णसमाम्नाय : । पु० वर्णमालायाम् ॥

वर्णसि . । पुं० जले । वृणोति । वृ अ० । सानसिवर्णसीत्यादिना०

असिप्रत्ययेधातोर्नुक्च ॥

वर्णा । स्त्री० आढक्याम् ॥

वर्णाङ्का । स्त्री० लेखन्याम् ॥

वर्णाट : । पुं० गायने ॥ चित्रकरे ॥ स्त्रीकृतजीवने ॥

वर्णात्मा । पु० शब्दे ॥

वर्णाश्रमधर्म्म । पु० वर्णाश्रमोभयाऽधिकृतधर्मे ॥ यथा । वर्णत्वमाश्रमत्वञ्चयोधिकृत्यप्रवर्त्तते । सवर्णाश्रमधर्मस्तुमौञ्जीयामेखलायथा ॥ वर्णाश्रमयोर्धर्म्मे ॥ सचोक्त ' श्रीमहानिर्वाणतन्त्रे । यथा । श्रुत्वा धर्मान्बहुविधान्भवानीभवमोचिनी । हितायजगतामाताभूय श ङ्करमब्रवीत् ॥ श्रीदेव्युवाच । श्रुत बहुविध धर्मंमिहामुत्रसुखप्रदम । धर्मार्थकामद । श्चन्कर निर्वाणकार णम् ॥ साम्प्रत श्रोतुमिच्छामित्र्हिवर्णाश्रमान्विभो । यत्रयेविहिताचारा कृपयावदतानपि ॥ श्री सदाशिवउवाच ॥ चत्वार कथितावर्णाश्चाश्रमाश्चमिसुव्रते । आचाराश्चापिवर्णानामाश्रमाणापृथक्पृथक् ॥ कृतादौ० कलिकालेतुवर्णा पञ्चप्रकीर्त्तिता ' । ब्राह्मण क्षत्रियौवैश्य ' शूद्र सामान्यएवच ॥ एतेषासर्ववर्णानामाश्रमौद्वौमहेश्वरि । तेषामाचारधर्मांश्चस्मृणुष्वाद्येवदामिते ॥ पुरैवकथित तावत्

कलिसम्भवचेष्टितम् । तप स्वाध्यायहीनानान्नृणामल्पायुषामपि । क्लेशप्रयासाशक्तानाकुतोदेहपरिश्रम ॥ ब्रह्मचर्याश्रमोनास्तिवानप्रस्थोपिनप्रिये । गार्हस्थोभैक्षुकश्चैवश्रामौद्वौकलौयुगे ॥ गृहस्थस्य क्रिया सर्वाआगमोक्ता कलौयुगे । नान्यमार्गै क्रियासिद्धि कदापिगृहमेधिनाम् ॥ भैक्षुकेप्याश्रमेदेविवेदोक्त दण्डधारणम् । कलौनास्त्येवतत्त्वज्ञे यतस्तच्छ्रौत संस्कृति ॥ शैवसंस्कारविधिनाऽवधूताश्रमधारणम् । तदेवकथित भद्रे संन्यासग्रहण कलौ ॥ विप्राणामितरेषाञ्चवर्णानाप्रबलेकलौ । उभयत्राश्रमेदेविसर्वेषामधिकारिता ॥ सर्वेषामेवसंस्कारा कर्माणिशैववर्त्मना । विप्राणामितरेषाञ्चकर्म्मलिङ्ग पृथक पृथक् ॥ जातमात्रोगृहस्थ स्यात्संस्काराद्वाश्रमीभवेत् । गार्हस्थ्यप्रथम कुर्याद्यथाविधिमहेश्वरि ॥ तत्त्वज्ञानेसमुत्पन्ने वैराग्य जायतेयदा । तदासर्वं परित्यज्यसन्यासाश्रममाश्रयेत् ॥ विद्यामुपार्ज्ज्येद्बाल्ये धन दाराँश्चयौवने । प्रौढे धर्म्याणिकर्माणिचतुर्थे प्रव्रजेत्सुधी ॥ मातर पितर वृद्धभार्याञ्चैवपतिव्रताम् । शिशुञ्चतनयहित्वानावधूताश्रम व्रजेत् ॥ मातृ:

पितॄन् शिशून् दारान् स्वजनान्बान्धवानपि । य प्रव्रजतिहित्वैतान्स महापातकीभवेत् ॥ मातृहा पितृहासस्यात्स्त्रीवधीब्रह्मघातक । असन्तर्प्य स्वपित्रादीन्योगच्छेत् भिक्षुकाश्रमे ॥ ब्राह्मणोविप्रभिन्नश्चस्वस्ववर्णोक्तसत्क्रिया । शैवेन वर्त्मनाकुर्यादेशधर्म कलौयुगे ॥ श्रीदेव्युवाच । कोवाधर्मोगृहस्थस्य भिक्षुकस्यचकि विभो । विप्रस्यविप्रभिन्नानास्संस्कारादीनिमेवद ॥ श्रीसदाशिवउवाच ॥ गार्हस्थ्यप्रथम धर्म्म सर्वेषामनुअन्तराम् । तदेवकथयाम्यादौशृणु कौलिनितत्त्वत ॥ ब्रह्मनिष्ठोगृहस्थ स्याद्ब्रह्मज्ञानपरायण । यद्यत्कर्म प्रकुर्वीततद्ब्रह्मणिसमर्पयेत् ॥ नमिथ्याभाषण कुर्यात्नचशाठ्य समाचरेत् ॥ देवतातिथिपूजासुगृहस्थोनिरतोभवेत् ॥ मातर पितरञ्चैव साक्षात्प्रत्यक्षदेवताम् । मत्वा गृहीनिषेवेतसदासर्वप्रयत्नत ॥ तुष्टायामातरिशिवेतुष्टे पितरिपार्वति । तवप्रीतिर्भवेद्देवि परब्रह्मप्रसीदति ॥ त्वमाद्ये जगतामातापिताब्रह्मपरात्परम् युवयो प्रीणन यस्मात्तस्मात्किं गृहिणातप ॥ आसन शयन वस्त्र पान भोजनमेवच । तत्तत्समयमाज्ञायमातृ

पित्रे नियोजयेत् ॥ श्रावयेन्मृदुला वाणीं सर्वदाप्रियमाचरेत्। पित्रोरा ज्ञानुसारीस्यात्सत्पुत्र कुलपावन : ॥ औद्धत्य परिहासश्चतर्ज्जन परिभाषणम् । पित्रोरग्रे नकुर्वीत यदीच्छेदात्मनोहितम् ॥ मातरं पितरं वीक्ष्यनत्वोत्तिष्ठेत्ससम्भ्रम ' । विनाज्ञयानोपविशेत्संस्थित . पितृशासने ॥ विद्याधनमदोन्मत्ता य कुर्यात्पितृहेलनम् । सयाति नरकं घोरं सर्वधर्मवहिष्कृत ' ॥ मातरं पितरं पुत्र दारानतिथिसोदरान् । हित्वागृहीनभुञ्जीयात्प्राणै ' कण्ठगतैरपि ॥ वञ्चयित्वागुरूनवन्धून् योभुङ्क्ते स्वोदरम्भर ' । इहैवसोकिगर्ह्यो सौपरत्रनारकी भवेत् ॥ गृहस्थोगोपयेद्दारान्विद्या मभ्यासयेत्सुतान् । पोषयेत्स्वजनान्वन्धूनेषधर्म्म ' सनातन ॥ जनन्यावर्जितोदेहोजनकेनप्रपोषित । स्वजनै शिक्षित प्रीत्या सोधमस्तान्परित्यजेत् ' एषामर्थे महेशानिकृत्वाकष्टशतान्यपि । प्रीणयेत्सततं शक्त्याधर्मोंह्येषसनातन . ॥ सधन्य : पुरुषोलोकेसकृतीपरमार्थवित् । ब्रह्मनिष्ठ सत्यसन्धोयोभवेन्नृविमानव ॥ नभार्यां ताडयेत्क्वापिमातृवत्पालयेत्सदा । नत्यजेद्घोरकष्टेऽपियदिसाध्वी



पतिव्रता ॥ स्थितेषुस्वीयदारेषुस्त्रियमन्यानसंस्पृशेत्। दुष्टेनचेतसा विद्वानन्यथानारकीभवेत् ॥ विरले शयनं वासं त्यजेत्प्राज्ञ परस्त्रिया । अयुक्तभाषणञ्चैवस्त्रियं शौर्य्यंनदर्शयेत् ॥ धनेनवाससाप्रेम्णाश्रद्धयामृतभाषणै : । सततं तोषयेद्दारान्नाप्रियं क्वचिदाचरेत् ॥ उत्सवेलोकयात्रायांतीर्थेष्वन्यनिकेतने । नपत्नीं प्रेषयेत्प्राज्ञ . पुत्रामात्यविवर्ज्जिताम् ॥ यस्मिन्नरेमहेशानि तुष्टाभार्यापतिव्रता । सर्वधर्म्मकृतं तेनभवतीप्रियएवस . ॥ चतुर्वर्षावधिसुतान्लालयेत् पालयेत्पिता । तत षोडशपर्य्यन्त गुणान्विद्याश्चशिक्षयेत् ॥ विंशत्यव्दाधिकान् पुत्रान्प्रेरयेद्गृहकर्मसु । ततस्तांस्तुल्यभावेनमत्वास्नेहं प्रदर्शयेत् ॥ कन्याप्येवं पालनीयाशिक्षणीयातियत्नत ' । देयावरायविदुषेधनरत्नसमन्विता एवंक्रमेणभ्रातॄंश्चस्वसृभ्रातृसुतानपि । ज्ञातीन्मित्राणिभृत्यांश्चपालयेत्तोषयेद्गृही ॥ तत स्वधर्म्मनिरतानेकग्रामनिवासिन . । अभ्यागतानुदासीनान गृहस्थ परिपालयेत् ॥ यद्येवं नाचरेद्देवि गृहस्थोविभवेसति । पशुरेवसविज्ञेय ' सपापीलोकगर्हित : ॥ निद्रालस्यदेहयत्नकेशवि

न्यासमेव च । आसक्तिमयमेवमें-
नातिरिक्तं समाचरेत् ॥ ५१ । यु
क्ताहारोयुक्तनिद्रोमितवाङ् मितमै
थुन । स्वर्च्छानम्रं शुचिर्दक्षोयु-
क्तः स्यात्सर्वकर्मसु ॥ शूर श-
चौविनीत ' स्याद्वाम्यवेगुरुसन्नि
धौ । जुगुप्सितान्नमन्येतनावम-
न्येतमानिन ॥ सौहार्द्दं व्यवहारा
द्यप्रवृत्ति प्रकृतिन्नृणाम् । सहवासे
नतर्कैश्चविदित्वाविश्वसेत्तत ॥
वसेद्दृष्टरपिच्छद्रात सम यवोच्च
बुद्धिमान् । प्रदर्शयेत स्वप्रभावा-
न्नैवधर्मं विलङ्घयेत् ॥ स्वीय य
श पौरुषञ्चगुप्तयेक्थितञ्चयत् ।
क्षत यदुपकारायधर्मज्ञोनप्रकाशये
त् ॥ जुगुप्सितप्रवृत्तौचनिश्चितेपि
पराजये । गुरुणालघुनाचापियश
स्वीनविवादयेत् ॥ विद्याधनयशो-
धर्मान्यतमानउपार्जयेत् । व्यस
नञ्चासतासङ्ग मिथ्याद्रोहपरित्यजे
त् ॥ अवस्थानुगताश्चेष्टा समया
नुगता क्रिया । तस्मादवस्थास
मय बोच्च्यकर्मसमाचरेत् ॥ योगक्षे
मरतोदक्षोधार्मिक प्रियबान्धव
। मितवाङ्मितहास स्यान्मा-
न्यार्थे तुविशेषत ॥ जितेन्द्रिय
प्रसन्नात्माशुचिन्त्य स्याद्दृढव्र-
त । अप्रमत्तादीर्घदर्शी मावास्य
र्थान्विचारयेत् ॥ सत्य मृदुप्रिय

धीरोवाद्यहितकर वदेत् । आत्मो
त्कर्षं तथानिन्दापरेषापरिवर्ज्जये-
त् । जलाशयाश्चवृक्षाश्चविश्रामगृ
हमध्वनि । सेतु प्रतिष्ठितोयेनतै
नलोकत्रयजितम ॥ सन्तुष्टौपितरौ
यस्मिन्ननुरक्ता सुहृज्जना । गाय
न्तियद्यशोलोकास्तेनलोकत्रयजित
म् ॥ सत्यमेवव्रतयस्यदयादीनेषु-
सर्वथा । कामक्रोधौवशेयस्यतेनलो
कत्रय जितम् ॥ विरक्त परदारे
षु निस्पृह परवस्तुषु । दम्भमात्स
र्यहीनोयस्तेनलोकत्रयजितम् ॥ न
बिभेतिरणाद्योवैसङ्ग्रामेप्यपराङ्
मुख । धर्मयुद्धेमृतोवापितेनलो
कत्रय जितम् ॥ अस ग्रयात्मासुश्र
ह्र शास्त्रवाचारतत्पर । मच्छास
नेस्थितोयस्तेनलोकत्रयजितम् ॥
ज्ञानिनालोकयात्रायैसर्वं च समदृष्टि
ना । क्रियन्ते येनकर्माणितेनलोक
त्रयजितम् ॥ शौचन्तुद्विविधप्रोक्तं-
बाह्याभ्यन्तरभेदत ब्रह्मण्यात्मा
र्पणंयत्तच्छौचमान्तरिकस्मृतम् ॥
अद्भिर्वाभस्मभावापिमलानामपक-
र्षणम् । देहशुद्धिभर्वेद्येनबाह्य
शौचतदुच्यते ॥ गङ्गानद्योह्रदावा
प्यस्तथाकूपाश्चनुत्तका । सर्वंपवित्र
जननसूर्यादौक्रमत प्रिये ॥ भस्माच
याज्ञिकश्रेष्ठ मृत्तुलातुमलवर्जिता ।
वासोऽजिनतृणादीनिमृहज्जानी-

द्विसुव्रते ॥ किमचवहुनोक्तेनशौ-
चाशौचविधौशिवे । मन . पूतभवे
द्यैनगृहस्थस्ततदाचरेत् ॥ निद्रा
न्तेमैथुनस्यान्तेत्यागान्तेमलमूत्रयो:।
भोजनान्तेमलिस्पृष्टेवह्नि शौचवि-
धीयते । सन्ध्याचकालिकोकार्यो
वैदिकीतान्त्रिकीक्रमात् । उपास-
नायाभेदेनपूजांकुर्य्याद्यथाविधि ॥
ब्रह्ममन्त्रोपासकानांगायत्रीजपना-
त्प्रिये । स्नानाद्ब्रह्मेतितद्वाच्यस
न्ध्याभवतिवैदिकी ॥ अन्येषां
वैदिकीसन्ध्यानसूर्य्योपस्थानपूर्वक
म् । अर्घ्यदानदिनेशायगाय
त्रीजपनतथा । अष्टोत्तरसहस्रवा
शतवादशधाथवा । जपानांनिय-
मोभद्रेसर्वंचाह्निककर्म्मच ॥ शू-
द्रसामान्यजातीनामधिकारोस्तिके
वलम् । आगमोक्तविधौदेविसर्व-
सिद्धिस्ततोभवेत् ॥ प्रात सूर्योद
य : कालोमध्याह्न स्तदनन्तरम् ।
सायंसूर्यास्तसमयस्त्रिकालानामय-
क्रम : ॥ श्रोदेव्युवाच । विप्रादि
सर्ववर्णानाविहितातान्त्रिकीक्रिया।
त्वयैवकथितानाथसम्प्राप्ते प्रबलेक
लौ ॥ तदिदानींकथ देवविप्रानुवै
दिककर्मणि । नियोजयसितत्स
र्वंविशेषाद्वक्तुमर्हसि । श्रीसदाशि
वउवाच ॥ सत्यं ब्रवीषितत्त्वज्ञे स
र्वेषातान्त्रिकीक्रिया। लोकानांभो



गमोक्षायसर्वकर्मसुसिद्धिदा ॥ ब्र
ह्मसूत्रस्य सार्विनीयथाभवतिवैदि
की । तथैवतान्त्रिकीचेयाप्रशस्ता
भयकर्मणि ॥ अतोमयाकथित देवि
द्विजानांप्रबलेकलौ । गायत्र्यामधि
कारोस्तिनान्यमन्त्रेषुकर्हिचित् ॥
तारोद्याक्रमलायाश्चवाग्भवाद्याय
याक्रमात । ब्राह्मणाश्चत्रियविशासा
वित्रीकथिताकलौ ॥ द्विजातीना
प्रभेदार्थशूद्रेभ्य . परमेश्वरि ।
सन्ध्येयंवैदिकीप्रोक्ताप्राणेनाह्नि
काकर्म्मयाम् ॥ अन्यथाशांभवेमार्
गे . केवलं सिद्धिभागभवेत् ।
सत्य सत्यपुन सत्य सत्यमेतन्नसं
शय ॥ कालाख्ययेपिसन्ध्येयक
र्त्तव्यादेववन्दिते । ओंतत्सब्रह्म
चोच्चार्य्यमीचेप्सुभिरनातुरै : ।
आसन वसन पात्र शय्यांयान नि
केतनम् । गृहाक वस्तुजातञ्चस
ञ्चातसञ्च प्रशस्यते ॥ समाप्याह्नि
ककर्म्माणिस्वाध्याय गृहकर्म्मवा ।
गृहस्थोनियत कुर्य्यान्नैवतिष्ठेन्निक
र्मम . ॥ पुण्यतीर्थेपुण्यतिथौग्रह
णे चन्द्रसूर्ययो : । जप दानंप्रकु
र्वीत : श्रेयसांनिलयोभवेत् ॥ क
लावन्नगता प्राणानोपवास:प्रशस्य
ते । उपवासप्रतिनिधौनैकदान
विधीयते ॥ कलौदान महेशानिस
र्वसिद्धिकरभवेत् । तत्पात्र

केवलं द्वयोर्दरिद्र सत् क्रियान्वित ॥ मासवत् सरपक्षाणामारम्भ दिनमष्टिके । चतुर्दश्यष्टमीशुक्ला तथैवैकादशीकृष्ण ॥ निजजन्म दिन चैव पित्रोर्मरणवासर । वैधोत् सर्वदिनञ्चैव पुण्यकाल प्रकीर्त्तित ॥ गङ्गानद्यामहानद्यो गुरो सदनमेवच । प्रसिद्धदेवता चैव पुण्यतीर्थं प्रकीर्त्तितम ॥ त्यक्त्वासुध्ययन पित्रो: शुश्रूषा दारस्यणम् । नरकायभवेत्तीर्थं तीर्थयत्रततान्त्रणाम् ॥ नतीर्थसेवा नारीणांनोपवासादिका क्रिया । नैवव्रतानांनियमोभर्त्तु शुश्रूषा विना भर्त्तवयोषितातीर्थं त पोदान व्रत गुरु । तस्मात् सर्वा त्मनानारोपतिसेवासमाचरेत् ॥ १०१ ॥ पत्यु प्रिय सदाकुर्याद्वच सापरिचर्यया तदाज्ञानुचरीभूत्वातोषयेत् पतिबान्धवान् ॥ नेक्षे त्पति क्रूरदृष्ट्या श्रावयेन्नैवदुर्व च: । नाप्रिय मनसावापिचरेन्नर्त्तु पतिव्रता ॥ कायेनमनसावाचासर्वदाप्रियकर्म्मभि । याप्रीणयतिभर्त्तारं सैवब्रह्मपद लभेत् ॥ नान्य वक्त्रनिरीक्षेतनान्ये सम्भाषमाचरेत् । नचाङ्ग दर्शयेदन्यानाभर्त्तुराज्ञानुसारिणी ॥ तिष्ठेत् पित्रो र्वशेबाल्येभर्त्तु सम प्राप्तयौवने



। वार्द्धक्ये पितृजन्यूनानस्वतन्त्राभवेत् क्वचित् ॥ अज्ञातरतिमर्यादा मज्ञातपतिसेवनाम् । नोद्वाहयेत् पिताबालामज्ञातधर्मशासनाम ॥ नरमासनभुञ्जीयान्नराकृतिपशूंस्तथा । बहुप्रकारकान्गाव्यमासाद्यान् रसवर्ज्जितान् फलोनियाश्च वन्यानिमूलानिविविधानिच । भूमिजातोनिसर्वाणिभोज्यानिखेच्छयाशिवे ॥ १०६ ॥ अध्यापनयाजनञ्चविप्राणाव्रत्तमुत्तमम् । अशक्तौ क्षत्रियविशांव्रत्तैर्निर्वाहमाचरेत् ॥ राजन्यानाञ्चसद्वृत्त सङ्ग्रामोभूमिशासनम् । अत्राशक्तौवणिग व्रत्त शूद्रव्रत्तमथाश्रयेत् ॥ वाणिज्या शक्तवैश्यानांशूद्रव्रत्तमदूषणम् । शूद्राणांपरमेशानिसेवा व्रत्त विधीयते ॥ सामान्यानान्तुवर्णानांविप्रव्रत्त्यन्यव्रत्तिषु । अधिकारोस्तिदेवेशिदेहयात्राप्रसिद्धये ॥ अद्वेष्टानिर्ममशान्त सत्यवादीजितेन्द्रिय । निर्मत्सरोनिष्कपट स्वहस्तोद्वोज्ज्ञणो भवेत् ॥ अध्यापयेत् पुत्रवृत्याशिष्यान्सन्मार्गवर्त्तिन । सर्वलोकहितैषीस्यात पक्षपातविनिर्मुख ॥ मिथ्यालापमसूयाञ्चव्यसनाप्रियभाषणम् । नीचे प्रसक्ति दम्भञ्च सर्वथाब्राह्मणस्त्यजेत ॥ युयुत्सा गर्हितासम्मोसम्माने सम्भिरुत्त

वर्णाश्रमधर्म .

मा । भृत्यु जयेवायुद्धे पुराजन्या
जावरानके ॥ बलीभीस्यात् प्रजा
वित्ते गृह्णीयात् सम्मित करम ।
रक्षन्नङ्गीकृतधर्म पुत्रवत् पालयेत्
प्रजा ॥ न्याययुद्ध तथासन्धि कर्मा
ण्यन्यानियानिच । मन्त्रिभिः सह
कुर्वीतविचार्यसर्वथानृप ॥ धर्म
युद्धे नयोदव्य न्यायदण्डपुरस्कृथा :
। करणीयायथाशास्त्रं सन्धिकुर्याद्य
थाबलम् ॥ उपायै . साधयेत्कार्य
युद्धसन्धिञ्चचतुर्भिः । उपाया-
नुगता . सर्वाजयन्ते मविभूतय ॥
स्त्राक्षीचसङ्गाद्विरत ' सदाविद्वज्ज
नप्रिय . । धीरोविपत्तौदक्षश्च
लवान् सम्मितव्ययी । निपुणोदु
र्गसंस्कारेशस्त्रशिक्षाविचक्षण ।
स्वसैन्यभावान्वेषीस्यात् शिक्षयेद्र-
णकौशलम् ॥ नहन्यान्मूर्छिता
न् युद्धेत्यक्तशस्त्रान्पराङ मुखान्
। बलानीतान् रिपून् देशिरिपुदा
रशिशूनपि ॥ जयलब्धानिवस्तूनिस
न्धिप्राप्तानियानिच । वितरेत ता
निसैन्येभ्योयथायोग्यविभागत ॥
शौर्यवृत्त वयोर्हणाक्षे यरात्नापृथ
क पृथक् । बहुसैन्याधिप नैक
कुर्यादात्महितेरत । नैकस्मिन्-
विश्वसेद्राजानैकान्यायेनियोजयेत्
। साम्यं क्रोडोपपत्तासत्रनीचै सह
विवर्जयेत ॥ बहुश्रुत स्वल्पभा

षीजितात्मासुज्ञानिवानपि । बहुमा
नोपिनिर्दम्भोधीरोदण्डप्रसादयो
स्वय वाचारदक्ष्याश्वाप्रजाभावान्वि
लोकयेत । एवं स्वजनभृत्यानांभावा
न् पश्येन् नराधिप ॥ क्रोधाद्द-
म्भात् प्रमादाद्वासम्मानशासनतथा
। सहसानैवकर्त्तव्यस्वामिनातत्त्वद
र्शिना । सैन्यसेनाधिपामात्यव-
नितापथ्यसेवका . । पालनीया '
सदोषाश्च दण्डाराज्ञायथाविधि
॥ उन्मत्तानसमर्थांश्चबालांश्चमृत-
बान्धवान् । ज्वराभिभूतान्वृद्धा
स्वरक्षयेत् पितृवन्नृप ' ॥ वैश्याना
कृषिवाणिज्यवृत्तिर्विधिसनातन-
म । येनोपायेनलोकानादेश्या
चाप्रसिध्यति ॥ अत. सर्वात्मनादे
विवाणिज्यकृषिकर्मसु । प्रमादव्य
सनालस्य मिथ्याशाठ्य विवर्जयेत्
निश्चित्यवस्तुतन्मूल्यमुभयो. सम्म
तौशिवे । परस्पराज्ञाकरणक्रय
सिद्धिस्ततोभवेत् ॥ मत्तशिशु
प्रवालानामरिपस्तनुणांप्रिये । रो
गविभ्रान्तबुद्धीनामसिद्धौदान
विक्रयौ ॥ क्रयसिद्धिरदृष्टानांगुण
श्रवणतोभवेत् । विपर्ययं तद्गुणा
नामन्यथाभवतिक्रय ' ॥ कुम्भरोष्ट्र
तुरङ्गाणांगुणदोषप्रकाशनात् ।
वर्षातीतेपितत्क्रयमन्यथाकर्तु स
हति ॥ धर्मार्थकाममोक्षाणांभाज

न मानव वपु । अत कुलेशित तृक्तयोनसिद्धान्ममशासनात् ॥ यवगोधूमधान्यानालाभोवर्षगते प्रिये । युक्तश्चतुर्थोधातूनामष्टम: परिकीर्त्तित ॥ चरणं क्षणौचवाणिज्ये तथासर्वेषुकर्मसु । यद्यदङ्गीकृतं मर्त्यैस्तत्कार्यं शास्त्रसम्मतम् ॥ दक्ष: शुचि सत्यभाषीजितनिद्रो जितेन्द्रिय । अप्रमत्तोनिरालस्य सेवाहत्तौभवेन्नर प्रभुर्विष्णुसमो मान्यस्तज्जायाजननीसमा। मान्यास्तद्बान्धवाभृत्यैरिहामुत्रसुखेप्सुभि. ॥ भर्त्तुर्मित्राणिमित्राणिजानीयात् तद्रौनरीन् । सभीति . सर्वदा तिष्ठेत्प्रभोराज्ञाप्रतीक्षयन्। अपमान गृहच्छिद्र गुप्त्यर्थं कथितञ्चयत् । भर्त्तुर्ग्लानिकर यत्नगोपयेदिति यत्नत ॥ अलोभ स्यात्स्वामिधनेसदास्वामिहितेरत तत्सन्निधावसत्नाप क्रीडाहास्य परित्यजेत् ॥ नपापमनसापश्येदपितदगृहकिङ्करी । विविक्तशय्यांहास्यञ्चताभिसहविवर्ज्जयेत् ॥ प्रभो . शय्यासन यान वसन भाजनानिच । उपानद्भूषण शस्त्र नात्मार्थं विनियोजयेत् ॥ क्षमाकृतापराधस्तेनप्रार्थयेद् यत्नत प्रभो : । प्रागलभ्य प्रौढवादस्वसाम्याचार विवर्ज्जयेत् ॥ सर्वे वर्णा स्वस्ववर्णैर्म्रांत्रोद्वाह तथाश्रम । कुर्य्युरजभैरवीचक्रात्तत्त्वचक्रादृतेशिवे ॥ उभयधर्मेश्राणि श्रेयोऽत्र प्रकीर्त्तित । तथाद्यैचपात्रेचवर्णभेदोनविद्यते ॥ श्रीदेव्युवाच ॥ गृहस्थानामशेषेणधर्मानकथय प्रभो । सन्यासविहितान्धर्म्मान्कृपयावक्तुमर्हसि ॥ श्रीसदाशिवउवाच ॥ अवधूताश्रमोदेविकलौसंन्यासउच्यते। विधिनायेनकर्त्तव्यस्तत्सर्वं शृणुसाम्प्रतम् ॥ ब्रह्मज्ञानेसमुत्पन्नविरतेसर्वकर्म्मणि । अध्यात्मविद्यानिपुणसन्यासाश्रममाश्रयेत् ॥ विहायवृद्धौपितरौशिशुभार्यांपतिव्रताम् । त्यक्त्वाऽसमर्थान्बन्धून्प्रव्रजन्नारकीभवेत् ॥ ब्राह्मण क्षत्रियोवैश्य शूद्र सामान्यएवच । कुलावधूतसंस्कारे पञ्चानामधिकारिता ॥ सम्पाद्यगृहकर्माणिपरितोष्यपरानपि । निर्ममोनिलय ह्यस्मान्निष्कामोविजितेन्द्रिय ॥ आहूयस्वजनान्बन्धून्ग्रामस्थान्प्रतिवासिन । प्रीत्यानुमतिमन्विच्छेद् गृहाद्विगमिषुर्जन: ॥ तेषाम-नुज्ञामादायप्रणम्यपरदेवताम् । ग्राम प्रदक्षिणीकृत्यनिरपेक्षोगृहाद्वियात् ॥ मुक्त ' ससारपाशेभ्य परमानन्दनिर्वृत । कुलावधूत ब्रह्मज्ञ गत्वासम्प्रार्थयेदिदम् ॥ गृ

हाश्रमेपरब्रह्मन्ममैतद्विगतंवय। प्रसादकुरुमेनाथसन्यासग्रहणंप्रति॥ निवृत्तगृहकर्माणविचार्यविधिवद्गुरु। शान्तविवेकिनवीक्ष्यद्वितीयाश्रममादिशेत्। ततशिष्य कृतस्नानोयतात्माविहिताह्निक। ऋणत्रयविमुक्त्यर्थंदेवर्षीन्चर्चयेतपितृन्नित्यादिविधानेन द्वितीयाश्रम स्वीकृत्य यथातिष्ठेत्तदाह। ततोनिर्द्वन्द्वरूपोऽसौनिष्कामःस्थिरमानसः। विहरेत्स्वेच्छयाशिष्यःसाक्षाद्ब्रह्ममयोभुवि॥ आब्रह्मस्तम्बपर्यन्तसद्रूपेणविभावयन्। विस्मरन्नामरूपाणिध्यायन्नात्मानमात्मनि॥ अनिकेत क्षमावृत्तोनि शङ्क सङ्गवर्जित। निर्ममोनिरहङ्कार सन्यासीविहरेत्क्षितौ॥ मुक्तोविधिनिषेधेभ्यो निर्योगक्षेमआत्मवित्॥ सुखदुःखसमोधीरोजितात्माविगतस्पृहः। स्थिरात्माप्राप्तदुःखोपिसुखेप्राप्तेपिनिस्पृहः। सदानन्दः शुचिःशान्तोनिरपेक्षोनिराकुल॥ नेष्टिजनकःस्याज्जीवानांसदाप्राणिहितेरत। विगतामर्षभीदम्भोनिस्सङ्कल्पोनिरुद्यमः॥ शोकद्वेषविमुक्तःस्याच्छत्रौमित्रेसमोभवेत्। शीततापातपसहःसमोमानापमानयोः। समःशुभाशुभेतुष्टोयदृच्छाप्राप्तवस्तुना। निस्त्रैगुण्योनिर्विकल्पोनिर्लोभः स्यादसञ्चयी। यथासल्यमुपाश्रित्यमृषाविश्वप्रतिष्ठते। आत्माश्रितस्तथादेहोजानन्नेवंसुखीभवेत्॥ इन्द्रियाण्येवकुर्वन्तिस्वस्वकर्मपृथक्पृथक्। आत्मासाक्षीविनिर्लिप्तोज्ञात्वैवमोक्षभाग्भवेत्॥ धातुप्रतिग्रहनिन्दामनृतक्रीडनस्त्रिया। रेतस्त्यागमसूयाञ्चसन्यासीपरिवर्जयेत्॥ सर्वत्रसमदृष्टिः स्यात्कीटेदेवेतथानरे। सर्वंब्रह्मेतिजानीयात्परिव्राट्सर्वकर्मसु॥ विप्रान्नं श्वपचान्नं वायस्मात्तस्मात्समागतम्। देशकालतथापात्रमश्नीयादविचारयन्॥ अध्यात्मशास्त्राध्ययनैःसदातत्त्वविचारणै। अवधूतोनयेत्कालंस्वेच्छाचारपरायणः॥ सन्यासिनामृतंकायंदाहयेन्नकदाचन। सम्पूज्यगन्धपुष्पाद्यैर्निखनेद्वाप्सुमज्जयेत्॥ अप्राप्तयोगमर्त्यानांसदाकामाभिलाषिणाम्। स्वभावाज्जायतेदेविप्रवृत्तिःकर्मसङ्कुले॥ तत्रापितेसानुरक्ताध्यानार्चाजपसाधने। श्रेयस्तदेवजानन्तस्तत्रैवदृढनिश्चया॥ अतःकर्मविधानानिप्रोक्तानिचित्तशुद्धये। नामरूपबहुविधंतदर्थेकल्पितमया ब्रह्मज्ञानादृतेदेविकर्मसन्यसनविना। कुर्वन्कल्पशत

कर्मनभवेन्मुक्तिभाग्जान ' ॥ कुलावधूतस्सस्वच्छोजीवन्मुक्तोनराकृति । साक्षान्नारायणमत्वागृहस्थस्तप्रपूजयेत् ॥ यतिदर्शनमात्रेणविमुक्त सर्वपातकात् । तीर्थव्रततपोदानसर्वयज्ञफललभेत् ॥ इतिश्रीमहानिर्वाणतन्त्रेऽष्टमोल्लासेवर्णाश्रमधर्मनिरूपणम ॥

वर्णार्ह ' । पु० मुद्गे ॥

वर्णि ' । न० सुवर्णे ॥ वर्णेवर्णिस्यादिरण्यइत्युक्ते । वर्णिरण्येतु०वलि ॥

वर्णिक ' । पुं० लेखके ॥

वर्णिका । स्त्री० कथनस्योत्कर्षे ॥ काठिन्याम् ॥ मसौ ॥ नील्यादिरागे ॥ व्याख्यायिकायाम् । ग्रन्थविशेषस्यव्याख्यायाम् । स्तोत्रकल्याम् ॥ वर्ण० । चौरादिक । नतीखुल् । प्रत्ययस्यादितीत्व ॥

वर्णित . । त्रि० स्तुतियुक्ते । अभिष्टुते । इंडिते । वर्ण्यतेस्म । वर्णवर्णक्रियाविस्तारगुणवचनेषु । क्त ॥

वर्णी । पुं० लेखके ॥ चित्रकरे ॥ ब्रह्मचारिणि ॥ वर्णी . अष्टविधमैथुनाऽभावरूपास्तुति सास्यास्ति । वर्णी ब्रह्मचारिणीति०इनि . । त्रि० वर्णवति ॥

वर्णिनी । स्त्री० वनितायाम् ॥ हरिद्रायाम् ॥

वर्णिलिङ्गी । पु० ब्रह्मचारिविशेषवति ॥ वर्णीब्रह्मचारी० तस्यलिङ्ग चिह्नमस्यास्ति । इनि ॥

वर्णु ' । पुं० सूर्ये ॥ नदविशेषे ॥ वृणोति । वृञ् ० । अजिवृरीभ्योनिच्चेतिणु ॥ देशविशेषे ॥ वर्णु नदसमीपदेशोवर्णु । अदूरभवश्चस्यर्थे० सुवास्त्वादयोजनपदेलुविति लुप ॥

वर्ण्य . । त्रि० वर्णनीये । श्लाघ्ये ॥ व्याख्यातव्ये ॥

वर्त्तक । पु० अश्वस्यखुरे ॥ व्याघ्राटपक्षिणि । भारद्व० गौ० दे० भा० प्र० ॥ अस्यमांसगुणाय था । वर्त्तकोग्निकर शीतोज्वरदोषत्रयापह । सुरुच्य शुक्रदोबल्योवर्त्तकाल्पगुणाततः ॥ वर्त्तते इतुवर्त्तने । खुल् न० वर्त्तलोहे । नीललोहे । विद्र० इ० भा० इ० वेचित् ॥

वर्त्तका । स्त्री० वर्त्तिकायाम् । व्याघ्राटशकुनौ । वटेर० इ० भा० प्र० खगे ॥ वर्त्तकाशकुनौप्राचामितीत्व न ॥

वर्त्तकी । स्त्री० अश्वस्यखुरे । व्याघ्राटे ॥

वर्त्तजन्मा । पुं० अम्बुदे । मेघे ॥

वर्त्तन . । पु० वामने ॥ न० वृत्तौ । जीविकायाम् ॥ षड्वैवर्त्तनोपायाःऋषिभि ' परिकीर्त्तिता ।

सर्वेषामपिचैवैषांकुसीदमविकवि
टु । विशेष कुसीटेद्रष्टव्य. ॥
वर्ततेऽनेन, वृतु-वर्त्तने । ल्युट् ॥
साधारणवर्त्तुलि ॥ न॰ स्त्री॰ तूल
नालायाम् । तर्कुपीठे ॥ जीवने
॥ त्रि॰ वर्त्तिष्णौ ॥ वर्त्तनशील ।
वृतु॰ । अनुदात्तेतश्चेतियुच् ॥
वर्त्तनि । पु॰ पूर्वदेशे ॥ स्त्री॰ प
थि ॥ वर्त्ततेऽनया । वृतु॰ । वृतेश्च
न्दसि ॥
वर्त्तनी । स्त्री॰ पथि । वर्त्तने ॥ त
र्कुपीठे । प्रेषणायाम् ॥ कृदिका
रादितिङीष् ॥
वर्त्तमान । पु॰ अतीतानागतभि
न्नकाले ॥ आरब्धापरिसमाप्तिर्व
र्त्तमान. काल. । यथा । महा
भारतपठति । सचतुर्विध ' यथा
। प्रवृत्तोपरतश्चैव॰ वृत्ताविरत
एवच ॥ नित्यप्रवृत्त. सामीप्यो
वर्त्तमानश्चतुर्विध ॥ क्रमेणोदा
हरणानि । मासनखादति । मा
दौप्रवृत्त मांसभोजन निवर्त्तय-
ति॰ इत्यर्थ । इहकुमारा ' क्री
डन्ति॰ तदानीन्तनक्रीडनाभावेपि
पूर्वक्रीडानांवृत्थोवर्त्तमानत्वा
त् । पर्वतास्तिष्ठन्ति॰ नित्यप्रवृत्
तत्त्वात् । किन्तुपर्वतानास्थितत्वे
वर्त्तमानत्वपिभूतभविष्यत्काला
भ्यासम्बन्धविवक्षयापर्वतास्तस्थु॰
स्थास्यन्तीत्यपिस्यात् । सामीप्यो
द्विविध । भूतसामीप्ये यथा ।
कदाआगतोसि॰ इतिप्रश्ने॰ अ
ध्यवदादेर्वर्त्तमानत्वात्॰ एषो
हमागच्छामि॰इत्यागतोपिवदति
भविष्यत्सामीप्ये यथा । कदा॰
गमिष्यसीतिप्रश्ने॰ एषोहगच्छा-
मीतिगमनक्रियमाणोद्यमोपिवद
ति॰ इतिमुग्धबोधटीकायांदुर्गा॰
दास ॥ प्रयोगाधिकरणीभूतका
लोवर्त्तमान ' कालइतिनैयायि
का ॥ अद्यतने । अधुनातने ॥
त्रि॰ तत्कालवृत्ती । विद्यमाने
। स्थिते ॥ वर्त्तते । वृतु॰ ।
शानच् । । मुक् ॥
वर्त्तरुक । पु॰ द्वौ : साधिके ।
द्वारपाले ॥ नदीभेदे ॥ काकनीडे
जलावटे ॥
वर्त्तलोहम । न॰ लोहविशेषे । लो
हसकारे । नीललोहे । विदर॰
इ॰ भा॰ प्र॰ इतिकेचित् ॥
वर्त्ति । स्त्री॰ वटिकायाम् । भेष
जनिर्माणे ॥ नयनाञ्जने । लेखे ॥
गात्रानुलेपन्याम् ॥ दीपकदशा
याम् ॥ दीपे ॥ वर्त्तते । वृतु॰
। स्थान्त : अचइ : वर्ततेऽनया
वा वृतु॰ । इ'पिमिकस्येत्यादि
नेनृवा ॥ वृतेश्छन्दसीति॰ इर्वा
। सुरभेद । वाङुलकाजोकेपि ॥

वर्त्तिविशेषे ॥ यथा । कतकस्यफल शङ्ख सैन्धव त्र्यूषण वचा । फेनो रसाञ्जन क्षौद्र विडङ्गानि मन शिला ॥ एषावर्त्तिर्हन्तिकास ति मिर पटल तथेति ॥

वर्त्तिक । पु॰ पक्षिविशेषे । वर्त्तके । वटेर॰ इ॰ भा॰ प्र॰ ॥

वर्त्तिका । स्त्री॰ वर्त्तकायाम् । व्या घ्राटे । वटेर । इ॰ भा॰ प्र॰ खगे ॥ अस्यामासगुणायथा वर्त्ति कामधुराहृद्याकफमारुतनाशिनी ॥ अजशृङ्ग्याम् ॥ वर्त्तौ । वर्त्तौ॰ इ॰ भा॰ ॥ सापञ्चविधायथा । पद्मसूत्रभवाद्दर्भगर्भसूत्रभवाथवा । शणजाबादरीवापिफलकोषोद्भवा यथा । वर्त्तिकादीपकृत्येषुसदापञ्च विधास्मृता ॥ वर्त्तते॰ वर्त्ततेवा । वृतु॰ ण्वुल् । उदीचामते॰ प्रत्य यस्थादितीत्वम् ॥ वस्तुतस्तुवर्त्तेस्ति कन्नितिकन्बोध्य ॥

वर्त्तित । त्रि॰ नीते ॥ निष्पादिते ॥ ग्रथिते ॥

वर्त्तितव्य । त्रि॰ वर्त्तितुमर्हे ॥

वर्त्ती । त्रि॰ वर्त्तिष्णौ ॥

वर्त्तिष्णु । त्रि॰ वर्त्तने ॥ वर्त्तनशी ल । अलङ्कृञितीष्णुच् ॥ वर्त्ति नि ॥

वर्त्तिष्यमाण । त्रि॰ भविष्यत्काला दौ ॥ वर्त्तनप्रागभावाश्रये ।

वर्त्ती । स्त्री॰ वर्त्तौ ॥

वर्त्तुल । पुं॰ कलायविशेषे । बाटु ला॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ यथा । कलायस्यत्रयोभेदास्त्रिपु टोवर्त्तुलोढ्टी । इतिशब्दमाला ॥ न॰ गञ्जने ॥ त्रि॰ गोलवस्तु नि । निस्तले । वृते ॥ वर्त्तते । वृतु॰ । बाहुलकादुलच् ॥

वर्त्तुला । स्त्री॰ तर्कुपीठ्याम् । टेको रवाटुल इ॰ गौ॰ भा॰ ॥ इति हारावली ॥

वर्त्तुली । स्त्री॰ गजपिप्पल्याम् ॥

वर्त्म । न॰ नेत्रच्छदे ॥ मार्गे । अध्वनि ॥ वर्त्ततेऽनेनास्मिन्वा । वृतु॰ । मनिन् ।

वर्त्मनि । स्त्री॰ पथि ॥ वर्त्तन्तेऽ नया । वृतु॰ । वृतेश्छन्दसि । चान्यत्रापीतिगोवर्द्धन ॥

वर्त्मनी । स्त्री॰ पथि ॥ कृदिकारादि तिङीष् ॥

वर्त्स्यन् । त्रि॰ वर्त्तिष्यमाणे ॥ लृट सद्वेतिसदादेशे॰ वृद्भ्य स्यसनो रितिविभाषयापरस्मैपदम् ॥

वर्द्ध । पु॰ ब्राह्मणयष्टिकायाम् । पूर्त्तौ ॥ छेदे ॥ न॰ सीसके ॥

वर्द्धक । पु॰ ब्राह्मणयष्टिकायाम् । भार्ग्याम् ॥ वर्द्धते । वृधु च्छेदने । ण्वुल ॥ त्रि॰ पूरके । छेद के ॥

वर्द्धकि । पुं॰ त्वष्टरि । रथकारे तक्षणि । बढई॰ इ॰ तखाण॰ इ॰ भा॰ प्र॰ । वर्द्धते । वर्द्धच्छेदने । अच् । वर्द्ध क्षपति । क्षप हिंसायाम् । बाहुलकाद्धि ॥

वर्द्धकी । पुं॰ बढई॰ इ॰ भा॰ प्र॰ वर्णसङ्करजातौ । त्वष्टरि । सूत्रधारे । रथकारे । काष्ठतक्षके ॥

वर्धनम् । न॰ वृद्धौ ॥ छेदने ॥ वर्ध च्छेदनपूरणयो ल्युट ॥ त्रि॰ वर्धिष्णौ ॥ वर्धतेत च्छील । वृधु वृद्धौ । अनुदात्तेतश्चेतियुच् ॥ वर्धयति । नन्द्यादित्वाल्ल्युर्वा ॥

वर्धनी । स्त्री॰ गलन्तिकायाम् । सनालजलपात्रे । बधना॰ बधनी॰ इ॰ भा॰ सम्मार्जन्याम् । बढनी॰ इ॰ भा॰ ॥

वर्धमान । पुं॰ प्रश्नभेदे ॥ शरावे ॥ एरण्डे ॥ वीरजिने । चरमतीर्थकृति । महावीरे ॥ विष्णौ । नारायणे ॥ स्वस्तिके ॥ राजगृहविशेषे । दक्षिणद्वाररहितोवर्द्धमानोधनप्रदः ॥ वर्धते । वर्धच्छेदनपूरणयोः । शानच् ॥ स्वनामप्रसिद्धे देशविशेषे । त्रि॰ वृद्धिमति ॥

वर्धमानक । पुं॰ शरावे ॥ वर्धते । वृधु॰ । शानच् । स्वार्थे कन् । संज्ञायांकन् ॥ त्रि॰ वृद्धिविशिष्टे ॥

वर्ध्रापनम् । न॰ नाडीच्छेदने ॥ *

वर्द्धित । त्रि॰ प्रवृद्धे ॥ छिन्ने ॥ पूरिते ॥

वर्द्धिष्णु । त्रि॰ वर्द्धने । वृद्धिशीले ॥ वर्द्धिते॰ तच्छील॰ वृधु॰ । अलङ्कृञितीष्णुच् ॥

वर्ध्र । पुं॰ न॰ चर्मणि । सीसे ॥ वरत्रायाम् ॥ वर्द्धते॰ दृढबन्धनेन दीर्घीभवति । वृधु॰ । वृधिवपिभ्यां रन् । लघूपधगुणोरपरः ॥

वर्ध्री । स्त्री॰ नध्र्याम् । वरत्रायाम् । चर्मरज्जौ । बद्धी॰ इ॰ भा॰ ॥ वर्द्धते । वृधु॰ । रन् । गौरादित्वान्ङीष् ॥ यद्वा । औणादिकः ष्ट्रन् । गुणोरपरः । प्रत्ययतकारस्य॰ भषस्तथोर्धोधः इतिधत्वे॰ षित्वान्ङीष् ॥

वर्म । न॰ रूपे ॥ वृणोति । वृञ् संभक्तौ । वृञ्शीङ्भ्यांरूपस्वाङ्गयोः पुट्चेत्यसुन्॰ प्रत्ययस्यपुट् ॥

वर्म्मकण्टक । पुं॰ पर्पटे ॥

वर्म्मकषा । स्त्री॰ चर्मकषायाम् । सप्तलायाम् ॥

वर्म्मा । पुं॰ क्षत्रियस्योपपदे ॥ यथा । शर्म्मान्तं ब्राह्मणस्यस्याद्वर्मान्तं क्षत्रियस्य च । गुप्तदासात्मकंनाम प्रशस्तं वैश्यशूद्रयोः ॥ न॰ कवचे

। तनुत्रे ॥ वृणोतिदेहम् । वृ.ञ.व रणे । मनिन् ॥

वर्म्मि । पुं॰ मत्स्यविशेषे । बाँवो॰ वामो॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

वर्म्मिक । त्रि॰ वर्म्मिणि । वर्म्मास्यास्तिव्रीह्यादित्वात्॰ ठक् ॥

वर्म्मित । त्रि॰ धृतसन्नाहे । सन्नद्धे । सज्जे । वर्म्मसञ्जातमस्य । तारकादित्वादितच् ॥

वर्म्मी । त्रि॰ वर्म्मवति । वर्म्मिके ॥ वर्म्मास्यास्ति व्रीह्यादित्वादिनि ॥

वर्म्मिमत्स्य । पुं॰ वामीतिख्याते मत्स्ये । वर्म्मिमत्स्योऽरुरेवातपि तृतंरुचिकरोलघुः ॥

वर्म्मुष । पुं॰ वामिरूष॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ मत्स्ये ॥

वर्य्य । पुं॰ कन्दर्पे । स्मरे ॥ त्रि॰ वरेण्ये ॥ वर्य्यते । वरईप्सायां चुरादावदन्त । अचोयत ॥

वर्य्या । स्त्री॰ पतिवरायाम् ॥ अवद्यपण्यवर्य्यागर्ह्यपणितव्यानिरोधे-ष्विति॰ अप्रतिबन्धविषये॰ वृङ सम्भक्ताविव्यस्मात्॰ यत् ॥

वर्व्वणा । स्त्री॰ वृहन्मक्षिकायाम् । नीलमक्षिकायाम् ॥ वरिति । वणति । वणशब्दे । अच् ॥ यद्वा । वर्वति । वर्वगतौ । युच् ॥

वर्व्वर । पुं॰ पामरे । नीचे ॥ केशे । वक्रकेशे । वावरी॰ इ॰ भा॰ ॥ चक्रले ॥

देशविशेषे ॥ यथा । मायापुरंसमारभ्यसप्तशृङ्गात तथोत्तरे । वर्व्वराख्योमहादेश प्रोक्तः . शौशक्तिसङ्गमे ॥ पारसिकीजने ॥ तृणविशेषे । सुमुखे । गन्धे । गन्धपत्रे । कासवावुइ॰ गौ॰ दे॰ भा॰ प्र॰ ॥

वर्व्वर्त्ति । वृञ । यङ्लुगन्त । पचाद्यच् ॥ यद्वा । वृणोति । वृञ॰ । कृगृशृवृञ्चतिभ्य ष्वरच् ॥ न॰ हिङ्गुले ॥ पीतचन्दने वोले ॥ हिमवत्प्रान्तवस॰ वइ॰ प्र॰ शूपविशेषे ॥ यथा । जलेनालोडित शालिपिष्टगुडमिश्रितम् । धाराय पक्वत प्राज्य तद्भवेद्वर्व्वराख्यकम ॥ वर्व्वरवलकृत मधुशिष्टपित्तानिलापहम् । रोचनकफकृच्छीत हृद्य ह्लासनाशन ।

वर्व्वरकम । न॰ चन्दनभेदे । श्वेतवर्व्वरके ॥

वर्व्वरा । स्त्री॰ शाकविशेषे । तुङ्ग्याम् । खरपुष्पायाम् । अजगन्धिकायाम् । वावुइ॰ इ॰ भा॰ प्र॰ ॥ कृष्णार्ज्जकस्तथाशुक्लोवटपत्रस्तोपर । वर्व्वराचितयरूक्ष शीत कटु विदाहिच ॥ तीक्ष्णारुचिकर हृद्य दीपन लघुपाकिच । पित्तत सकफवातासदद्रुकृमिविषापहम् ॥ पुष्पप्रभेदे ॥ वृणोति । वृञ॰ कृगृशृवृञ्चतिभ्य . ष्वरच् । अनि

ष्य षित्वान्ङीष् ॥

बर्बरी । स्त्री० बर्बरार्थे ॥ षित्वात् ङीष् ॥

बर्ब्बरीक । पुं० भार्ग्याम् । ब्राह्मणयष्टिकायाम् ॥ कुटिलकुन्तले । बाबरी०इ०भा० ॥ अजगन्धिकायाम । बाबुइ०इ०भा० ॥ यूनि ॥ वृणुते । वृञ्० । शृपॄवृञ्भ्यः आदेरुक् चाभ्यासस्येति० ईकन् ॥

बर्ब्बी । स्त्री० बर्बर्य्याम् ॥

बर्ब्बि । पु० घस्मरे ॥ वृणुते । वृञ्० । वृहृभ्यां किन् ॥

बर्ब्बुर । पु० युगलाख्ये । तीक्ष्णकण्टके । गोशृङ्गे । कफान्तके । बबूर० बबूल०इ०प्र०वृक्षे ॥ बर्बुर कफकुष्ठाशीकुष्ठक्रिमिविषापह ॥

बर्ब्बूर । पुं० बर्बुरे ॥ इतिराजनिर्घण्ट ।

वर्ष । पु० न० भारतादौ ॥ जम्बुद्वीपे ॥ अब्दे । समायाम् । वत्सरे । वृष्टौ ॥ वर्षधरे । मेघे ॥ वर्षणम्० वृष्यतेवा । वृषुसेचने । अज्विधौ भयादीनामुपसङ्ख्यानमित्यच् ॥ वर्षयति०वर्षतिवा । पचाद्यच् ॥ यद्वा ॥ वृणाति । वृञ्वरणे । वृतॄवदीतिस ॥ वर्षशब्दोदिवसपर्य्यायोऽपिदृश्यतेच० दीर्घसत्राणिवार्षशतिकानि० वार्षसहस्रिकाणिचेति ॥

वर्षकरी । स्त्री० झिल्लिकायाम् ॥

वर्षकेतु । पुं० रक्तपुनर्नवायाम् ॥

वर्षकोष । पुं० दैवज्ञे ॥ मासे ॥ वर्ष . कोषोऽस्य

वर्षज । त्रि० वृष्टिजाते ॥

वर्षणम् । न० वृष्टौ ॥ वृषुसेचने । ल्युट् ॥ नचाऽचाल्युटोबाध . वृषभोवर्षणादितिभाष्यप्रयोगात्० ल्युडपिभवतीतिकैयटादय ॥

वर्षणि । स्त्री० वर्तने ॥

वर्षपर्वत । पुं० वर्षविकृतौ । भाजकगिरौ ॥ यथा । हिमवान्हेमकूटश्चनिषधोमेरुरेवच । चैत्र : कर्णीचशृङ्गीचसप्तैतेवर्षपर्वता ॥ इतिहारावली ॥

वर्षपाकी । पु० आम्रातके ॥

वर्षपुष्पा । स्त्री० सहदेवीलतायाम् ॥

वर्षप्रिय । पु० चातकपक्षिणि ॥

वर्षवर । पु० शण्ढे । अत्यन्तान्तःपुरचरे । खोजा०इ०भा०प्र० ॥ वृणोति० वरतिवा । वृञ्वरणे०- सरणावरणे वा । अच् । वर्षस्यवर । येत्वल्पसत्त्वा प्रथमक्लीबास्त्रीस्वभाविन । जात्यानदुष्टा . कार्य्येषुतेवैवर्षवरा स्मृता ।

वर्षवृद्धि । स्त्री० जन्मतिथौ ॥

वर्षा । स्त्री० भूम्नि० प्रावृट्काले । नभोनभस्ययो । श्रावणभाद्रयो . ॥ आषाढादिचतुर्मासेषु । यथा । वर्षासुसविष तोयदिव्यमप्याश्विनविनेति ॥ वर्षंवर्षमस्ति ।

वर्ष आद्यच् । टाप् ॥
वर्षांश . । पु० मासि ॥
वर्षाघोष । पुं० महामेके ॥
वर्षाङ्ग : । पुं० मासि ॥
वर्षाभव : । पु० रक्तपुनर्नवायाम् ॥ त्रि०वर्षासुजाते ॥
वर्षाभू : । पु० भेके । मण्डूके ॥ भूलतायाम् । गण्डूपदे । किच्चुलुके ॥ इन्द्रगोपे । वर्षासुभवति । भू० । भुव ' संज्ञान्तरयोरितिक्विप् ॥
वर्षाभू । स्त्री० शोथघ्न्याम् । पुनर्नवायाम् ॥ भेक्याम् ॥
वर्षाभ्वी । स्त्री० भेक्याम् । वर्षासुभवति । भू० । क्विप् । वर्षाभ्वीत्यसाधु : । ङीष् विधायकाभावात् ॥ गौरादित्वाद्वाङीष् ॥ पुनर्नवायाम् ॥
वर्षार्चि . । पुं० कुजे । भौमे ॥
वर्षावसान . । पुं० शरत्काले ॥
वर्षिष्ठ ' । त्रि० अतिवृद्धे ॥ अयमेषामतिशयेनवृद्ध : । इष्ठनि०प्रियस्थिरेति०वृद्धस्यवर्षि०आदेश : ॥
वर्षीयान् । त्रि० वृद्धतरे । ज्यायसि ॥ अयमनयोरतिशयेनवृद्ध : । द्विवचनेतीयसुनि० प्रियस्थिरेतिवर्षि आदेश : ॥
वर्षुक : । त्रि० वृष्टिकारिणि ॥ वर्षतितच्छील : । वृषुसेचने । लषपतपदेत्यादिनोकञ् ॥

वर्षुकाब्द : । पुं० वर्षणशीलमेघे ॥
वर्षेज : । त्रि० वर्षाकालजाते । वर्षजे ॥ विभाषावर्षक्षरशरवरादित्यलुक् ॥
वर्षोपल : । पुं० करकायाम् ॥ वर्षायाउपल ॥
वर्ष्म् । न० देहे ॥ दृतिक्षिकृषश्च्योम : ॥
वर्ष्म । न० देहे । तनौ ॥ प्रमाणे ॥ प्रमाणमाचोन्नतिरितिस्वामी । इत्यन्ते तिभरत : ॥ अतिसुन्दराकृतौ ॥ वर्षति० वृष्यतेवा । वृषु० । मनिन् ॥
वर्हम् । न० पुं० कलापे । मयूरपिच्छे ॥ दले ॥ न० ग्रन्थिपर्णे । स्थौणेये ॥ परीवारे ॥ वर्हति । वर्हवृद्धौ । पचाद्यच् ॥ वर्ह्यतेवा । वर्हहिंसायां । घञ् ॥
वर्हणम् । न० पर्णे ॥
वर्हि . । पुं० पावके ॥
वर्हि : पुष्पम् । न० ग्रन्थिपर्णे ॥
वर्हि शुष्मा । पुं० अग्नौ ॥ वर्हि : कुश . शुष्मबलमस्येतिविग्रह : ॥
वर्हि । न० स्थौणेये । कुकुरौधा० । इ० भा० ॥ वर्हपत्रंप्रशस्तमस्य । अतइनि . ॥
वर्हिकुसुमम् । न० ग्रन्थिपर्णे ॥
वर्हिचूडा । स्त्री० खराश्वायाम् । मयूरशिखेतिप्रसिद्धायामोषधौ ॥

बर्हिण: । पुं० मयूरे ॥ बर्हमस्त्यस्य । फलबर्हाभ्यामिनच् ॥

बर्हिणवाहन: । पुं० षडानने ॥

बर्हिध्वजा । स्त्री० पार्वत्याम् ॥

बर्ही । पुं० मयूरे ॥ बर्होस्त्यस्य । इनि: ॥

बर्हिपुष्पम् । न० ग्रन्थिपर्णे ॥

बर्हिर्ज्योति: । पुं० अग्नौ ॥

बर्हिर्मुख: । पुं० गीर्वाणे । देवे ॥ बर्हिरग्निर्मुखं यस्य स: ॥

बर्हिषद् । पुं० दैत्यदानवादीनांपितृषु ॥ यथा । दैत्यदानवयक्षाणां गन्धर्वोरगरक्षसाम् । सुपर्णकिन्नराणाञ्च स्मृताबर्हिषदोत्रिजा: ॥

बर्हिष्ठम् । न० वाले । ह्रीवेरे । बा-ला० । इ० भा० प्र० ओषधौ । बर्हिषिकुशेतिष्ठति । सुपिस्थइतिक: । अम्बाम्बेतिषत्वम् ॥

बर्हि: । पुं० हुताशने ॥ चित्रके ॥ यज्ञे ॥ दीप्तौ ॥ न० ग्रन्थिपर्णे ॥ पुं० न० कुशे । दर्भे ॥ बर्हिर्द्विविधम् । मुख्य गौणञ्च । तत्र मुख्यकुशकाशादिदर्भमयम् । गौणन्तु० तत्सदृश तृणान्तरम् । बृंहति इहिवृद्धौ । ओण्यादि । बृहेर्नलोपश्चेति० इसि: । बर्हि: सान्त: ॥

बलम् । न० सैन्ये ॥

बलक्ष: । पुं शुक्लवर्णे । धवले ॥ त्रि० तद्वति ॥ बलते । बलसंवरणे सञ्चरणे च । क्विप् । बलमक्षत्यस्मिन् । अक्षू० । घञ् ॥ अवलक्षतेवा । अकारलोप: ॥

बलक्षगु: । पुं० चन्द्रे ॥ बलक्षा: गावोयस्य स . । गोस्त्रियोरितिह्रस्व: ॥

बलभी । स्त्री० गोपानस्याम् । कुड्येषुच्छादनार्थं दत्तवक्रकाष्ठे । वडभ्याम् ॥ पटलाधारवंशपञ्जरे ॥ बलति । बल० । बाहुलकादभच् । गौरादि: ॥

बलय: । पुं० कण्ठरोगे ॥ वेलायाम् ॥ पुं० न० कङ्कणे । कटके । प्रकोष्ठाभरणे ॥ बल्यते । बल० । बलिमलितनिभ्य: कयन् ॥ अस्थिविशेषे ॥ यथा । पार्श्वो: पार्श्वयुगेपृष्ठे वक्षोजठरपायुषु । पादयोरपिचास्थीनिवलयानिवभाषिरे ॥ लघ्वादित्रिकलै० । ऽऽ ० ॥ गुर्वरैपुं० ॥

बलयित . । त्रि० वेष्टिते । नद्यादिनारुद्धे ॥ बलय जातमस्य । तारकादित्वादितच् ॥ यद्वा । बलयवत्कृतम् । तत्करोतीतिणिच् ॥ क्त . ॥

बला । स्त्री० बलायाम् । वाट्यालके ॥ विद्याविशेषे ॥

बलाक: । पुं० क्षुद्रबके । बलायाम् ॥

वलाहक : । पुं॰ वलाहके ॥

वलिकर : । त्रि॰ वलिकर्त्तरि ॥ वलिं
करोति । डुकृञ्॰ । दिवाविभे
तिट : ॥

वलित । त्रि॰ वेष्टिते ॥

वलिर । त्रि॰ केकरे । निम्नोन्नता
त्वि ॥ वलते । वल॰ । बाहुलका
त्किरच् ॥

वलिशम् । ) न॰
वलिशि । ) स्त्री॰ वलिशे । वडिशे ॥
वलिशी । )

वली । स्त्री॰ मध्यमरेखायाम् ॥ जर्या
म् ॥ जीर्णत्वचि ॥ गृहदारुणि ॥

वल्क : । पुं॰ न॰ त्वचि । वल्कले ॥
शल्के । खण्डे । पुं॰ पट्टिकालो
ध्रे ॥ वलते । वल॰ । शुल्कवल्को
ल्काद्धृतिकक् ॥ यद्वा । वल्कयति
। वल्कपरिभाषणे । पचाद्यच् ॥

वल्कतरु : । पु॰ पूगवृक्षे ॥

वल्कद्रुम । पुं॰ भूर्जवृक्षे ॥

वल्कल । पुं॰ न॰ द्रुमत्वचि । वल्के
वक्कल॰ हू॰ भा॰ प्र॰ ॥ त्वचे ।
दालचीनीतिभा॰ प्र॰ ॥ वलति ।
वल॰ । बाहुलकात्कल : ॥ वल्क
लातीतितुस्वामी ॥

वल्कला । स्त्री॰ शिलावल्कायाम् ॥

वल्कलोध्र : । पुं॰ पट्टिकालोध्रे ॥

वल्कवान् । पुं॰ मत्स्ये ॥ त्रि॰ वल्क
युक्ते ॥

वल्किल : । पुं॰ कण्टके ॥

वल्ग । पुं॰ न॰ अभ्यवहारे । जेम
ने ॥ वल्गभोजने । अच् ॥

वल्गन् । त्रि॰ धावति ॥

वल्गनम् । न॰ बहुभाषणे ॥ प्लुतगमने ॥

वल्गा । स्त्री॰ दन्तालिकायाम् । अव
क्षेपण्याम् । अश्वमुखरज्जौ ॥
साचोत्क्षिप्तादिभेदेनचतुर्दशविधा
ज्ञाहयलीलावत्याम् । उत्क्षिप्ता
शिथिलातथोत्तरवतीमन्दाचवैहा
यसीक्षिप्तैककराद्वैकान्तरसमोत्
कीर्णाविभक्तातथा । अत्युत्क्षिप्तत
लोद्धृतेखलुतथा व्यागूढगोकर्णिके
वाहानाङ्कथितास्तुर्द्दशविधावल्गा
प्रभेदाश्वमीति ॥ तल्लक्षणानितुतत्रै
वद्रष्टव्यानि ॥ अश्वप्रेरणविशेषे ॥

वल्गाविभागकुशल । त्रि॰ वाहानां
षड्विधप्रेरणाभिज्ञे ॥ यथाहभो
ज । वाहन प्रतिवाहानांषड्वि
धंप्रेरणविदु । रागावल्गाकशा
पार्ष्णिप्रतोदरवभेदत ॥ वल्गा
याविभागोविविच्यप्रयोग . तत्रकु
शल : ॥

वल्गितम् । न॰ घोटकस्यविशेषगम
ने । वेगेनविक्षिप्तोपरिचरणे ॥
गमने ॥ बहुभाषणे ॥ वल्गनम् ।
वल्गगतौ । भावेक्त ॥

वल्गु : । पुं॰ छागे ॥ त्रि॰ मनोज्ञे ।
सुन्दरे ॥ यथाक्रमम् । छागमांस

मतिवल्गु जगदेतदतिफल्गु। भव तीभमपहायनमपह्लनयनाथ॥ वलते । वल ०। वलिगुर्वृत्तेल्गु ॥ वाचा ले॥

वल्गुकम् । न० चन्दने ॥ विपिने ॥ पणे ॥ त्रि० रुचिरे ॥

वल्गुपद् । पुं० वनमुद्गे ॥

वल्गुला । स्त्री० वाकुच्याम् ॥ पक्षिविशेषे । वल्गुविहायाम् । वादुड० इतिभाषा ॥

वल्गुलिका । स्त्री० तैलपायिकायाम् ॥

वल्गुली । स्त्री० खविहादिपक्षिविशेषे ॥

वल्भनम् । न० भक्षणे ॥

वल्मीक । पुं० न० वामलूरे। वल्मीके ॥ तस्य सिकतार्थोपनिषेधोयथा । वल्मीकस्त्तिकोत्खातामृदमन्तर्जलांतथा। शौचावशिष्टांगेहाच्च नाद्याल्लेपसम्भवाम् । अन्त: प्राण्यवपन्नाद्य हलोत्खातानकर्दमाम्॥

वल्लरि : । स्त्री० मञ्जर्याम् ॥ वल्लते । वल्ल० । क्लिप् । वल्लति । वलगतौ अचइ : । वल्ल चासावरिश्च ॥ मेथिकायाम् ॥ चिपमूले ॥

वल्लव : । पुं० गोदोग्धरि । गोपे ॥ भीमसेने ॥ त्रि० सूपकारे ॥ वल्लनम् । वल्लसंवरणे सञ्चरणे च । वल्लि : सौत्रोवाप्रीतौ । भावघञ् । वल्लोस्यास्ति । अन्येभ्योपीतिव : ॥ वल्ल वाति० वायतिवा । वागतिगन्धनयो : ओवैशोषणे वा । आतोनुपेतिक ॥

वल्लवी । स्त्री० आभीर्याम् । गोपिकायाम् । महाशूद्राम् ॥

वल्लि: । स्त्री० वल्ल्याम् । लतायाम् ॥ पृथिव्याम् ॥ वल्लते । वल्ल० । सर्वधातुभ्यइन् ॥

वल्लिकण्टकारिका । स्त्री० अग्निदमनीक्षुपे ॥

वल्लिदूर्वा । स्त्री० मालादूर्वायाम् ॥

वल्लिशाकटपेरितिका । स्त्री० मूलपोत्याम् ॥

वल्लिशूरण : । पुं० अल्पकन्दपर्ण्याम् ॥

वल्ली । स्त्री० व्रतत्याम् । गुडूच्यादिलतायाम् ॥ याभूमेरुपसमारोहन्तिताबल्ल्य : ॥ अजमोदायाम् ॥ कुसुमाम्बरे । वेलाह० भा० प्र० ॥ कृदिकारादितिङीष् ॥

वल्लीगड : । पुं० मत्स्यविशेषे ॥ भोला० वालिवाडा० इ० च० गौ० दे० भाषाप्रसिद्धे ॥

वल्लीजम् । न० मरिचे । वेल्लजे ॥

वल्लीबदरी । स्त्री० भूबदर्याम् ॥

वल्लीमुद्ग : । पुं० मकुष्ठके ॥

वल्लीवृक्ष : । पुं० सालवृक्षे ॥

वल्लुरम् । न० शाढले ॥ क्षेत्रे ॥ गहने ॥ औषधे । कुञ्जे ॥ मञ्ज

र्थाम् । औषधे । निर्जलस्थाने ॥ विश्वधरिणिशब्दरत्नावलिषु॰वखुर-मितिपाठ . ॥

वखुरम् । त्रि॰ आतपादिनाशुष्कमांसे ॥ वनक्षेत्रे ॥ वाहनी ॥ ऊषरभूमौ ॥ शैलमांसे ॥ वखते॰वलुल्यतेवा । वख॰ । खर्जादित्वादूर. ॥

वलुल्या । स्त्री॰ धात्रीवृक्षे ॥

वल्वजा . । पु॰ भूमि॰उलपे । वध-श्री॰तृ॰प्र॰तृणा ॥ वलते । वल॰ । क्विप् । वजति । वजगतौ । अच् । वल्चासौवजश्च । एकोवल्वजइतिभाष्यादेकत्वेपि ॥ यद्वा । वलतेभुवंवेष्टयतिविशादित्वात्प्रत्यये॰ वल्व . पर्वत तत्रजाताः वल्वजा । इत्यन्ये । स्वभावाद्बहुत्वेवल्वजाः ॥ अतएव॰सुमनोऽपरोवल्वजादेर्वेतिपाणिनिवदन्त्वाऽर्थंक्रमदीश्वरसूत्रम् ॥

वल्वजा । स्त्री॰ तृणविशेषे । दृढपत्र्याम् । तृणोर्ध्वी । मौञ्जीपत्रायाम् । सावैवागे॰तृ॰भा॰ ॥

वश । पुं॰ एकादशवर्णान्तर्गतप्रथमकारणे ॥ तत्रजातस्यफलयथा । ववाभिधानेजननंह्रियस्यशूरोतिधीरोमनुजः क्षतीस्यात् । पद्मालयातन्निलयेनिवासंकरोतिनित्यंसुविचक्षणः स्यात् ॥

वशवद । त्रि॰ आयत्तकरवाक्यस्यकारि । इष्टवादिनि ॥ वशवश्कारमधुरवदति । प्रियवशेवद खच । मुम् ॥

वश । पुं॰ कान्तौ । स्पृहायाम् । इच्छायाम् ॥ वेश्यागृहे ॥ आयत्ततायाम् ॥ येयस्यवशमापन्न सतस्यकिङ्करः किल ॥ प्रभुत्वे ॥ जन्मनि ॥ न॰ आयत्तत्वे ॥ इच्छायाम् ॥ प्रभुत्वे ॥ त्रि॰आयत्ते ॥ वशनम । वशकान्तौ । वशिरण्योरुपसङ्ख्यानमित्यप् ॥ वष्टि । अज्वा ॥

वशका । स्त्री॰ वश्यायांनार्याम् ॥

वशक्रिया । स्त्री॰ वशीकरणे । सवदने ॥ मणिमन्त्रौषधैरायतीकरणे ॥ वशस्यकरणम । कृञ शच ॥

वशगः । त्रि॰ वशीभूते ॥

वशा । स्त्री॰ वन्ध्यायाम् ॥ सुतायाम । दुहितरि ॥ योषायाम् । नार्याम् ॥ वन्ध्यगव्याम् ॥ करिण्याम् । हस्तिन्याम् ॥ वष्टि । वश॰ । पचाद्यच । उश्यतेवा । वशिरण्योरुपसङ्ख्यानमित्यप् ॥

वशाल्वक । पुं॰ शिशुमारे ॥

वशापायी । पुं॰ कुक्कुरे ॥

वशि । न॰ वशित्वे ॥

वशिक । त्रि॰ रिक्ते । शून्ये ॥ उश्यते । वश॰ । सर्वधातुभ्यइन् । सञ्ज्ञायाम्कन् ॥

वशिका । स्त्री॰ अगुरौ ॥

वशिता । स्त्री० वशित्वे ॥ वशीभ्या स्ति । इति । ॥ वशिनोभाव . तल् ॥

वशित्वम् । न० शिवैश्वर्यविशेषे । अ ष्टभूतिष्वेकस्याम् ॥ येनभूतभौति काश्चावश्यमेववशीभवति ॥

वशी । पु० जितेन्द्रिये ॥ अव्ययसनिनि ॥ स्ववशीकृतकार्यकरणसङ्घाते ॥ स्वतन्त्रे । परमेश्वरे ॥ यतः सर्वमस्य जगद्वशेवर्त्तते०इतिवशी ॥

वशिनी । स्त्री० शमीवृक्षे ॥वन्दा- याम् ॥

वशिरः । पु० किणिह्याम् । अपामा- र्गे ॥ हस्तिपिप्पल्याम् ॥ चव्ये ॥ वचायाम् ॥ न०अक्षीबे । सामुद्रलवणे ॥ वष्टि । वश० । बाहुलका त्किरच । सम्प्रसारणम ॥ यद्वा । वशनम् । व- श० । क्वन । वशिराति । रा० । आतोनुपेतिकः ॥

वशिष्ठ । पु० स्वनामप्रसिद्धेमुनौ । अथर्वनिधौ । अरुन्धतीपतौ ॥ त्रि० वशकर्त्तरि ॥ श्रेष्ठतमे ॥

वशीकरणम् । न० मणिमन्त्रौषधैराय त्तीकरणे । वशक्रियायाम् ॥

वशीकारसञ्ज्ञा । स्त्री० ज्ञानप्रसाद रूपायाश्चित्तावृत्तिनिरोधिन्याम् चित्तवृ त्तौ । दृष्टानुश्रविकविषयवितृष्णा स्यवैराग्ये ॥ औत्सुक्यमात्रस्यापि निवृत्तिरूपस्थितिव्यपिदृष्टानुश्रवि- कविषयेषुयासञ्ज्ञात्रयात्पराधीना सावशीकारसंज्ञावैराग्यम । उक्त ञ्चपतञ्जलिना । दृष्टानुश्रविकवि षयवितृष्णस्यवशीकारसंज्ञावैरा- ग्यमिति ॥

वशीकृतः । त्रि० जिते ॥

वशीभूत । त्रि० वश्यताम्प्राप्ते ॥ अवशीवशीभवति । च्वि . । अस्य च्व ॥

वशीर । पुं० गजपिप्पल्याम ॥

वश्यम् । नलवङ्गे ॥ आयत्तीकरणे ॥ वश्य जनानांसर्वेषांविधेयत्वमुदाहृ तम् ॥ त्रि० प्रणये । प्रवर्त्तयितुं निवर्त्तयितु वाशक्ये ॥ वशमधीन त्व गतः । वश गतइतियत् ॥

वश्यका । स्त्री० वशगायाम ॥

वश्यकूट । पुं० वैवाहिकविचारवि शेषे ॥ यथा । सिंहस्यसर्वेवशगा विनालिंविहायसिंहंवशिनोनरा णाम् । भक्ष्याश्चसर्वेषाजलराशयस्ते वश्याश्चलोकव्यवहारतोन्ये ॥ एव वश्यसमायोगेदम्पत्योः प्रीतिरुत्त मा । वश्याभावपिदम्पत्योर्विवाह. कलहप्रद ॥

वश्या । स्त्री० वशगायाम् ॥ टाप् ॥

वश्यात्मा । पु० स्वाधीनात्म करणे ॥ वैराग्यपरिपाकेण० वासनाच येसति०वश्य स्वाधीनोविषयपा

रतन्त्राशून्य आत्मावन्त कार या यस्य स: ॥
वषट् । अ० देवहविर्दानमन्त्रे ॥ उह्यतेऽनेन । वह० बाहुलकात्० डषट् ॥
वषट्कार । पु० देवयज्ञे । आहुतौ । होमे ॥ वषट्क्रियाक्रियतेयस्मिन्नधिकरणे घञ् ॥ विष्णौ ॥
वषट्कृतम् । त्रि० हुते । अग्नौप्रक्षिप्ते ॥ अग्नौहुतन्तुयवश्यं तत्स्यात्त्रिषुवषट्कृतम् ॥ वषडितिमन्त्रोपलक्षणम् । वषट्मन्त्रेणकृतम् ०अग्नौप्रक्षिप्तम् ॥
वष्कय । पुं० तरुणवत्से ॥ एकहायनेवत्से । वष्कति । वष्कगतौ । बाहुलकादयन् ॥
वष्कयणी । स्त्री० वष्कयिण्याम् । चिरप्रसूतायांगवि ॥ वष्कयस्त्वेकहायनोवत्स इतिशाकटायन । तेननीयते । णीञ् ० । क्विप् । सर्वतोक्तिन्नर्थादितिङीष् । गौरादित्वाद्वा । पूर्वपदादितिणत्वम् ॥
वष्कयिणी । स्त्री० वष्कयण्याम् ॥ वष्कयस्तरुणोवत्स । सोऽस्त्यस्या । अतइनि । अट्कुप्वाङितिणत्वम् ॥
वसति । स्त्री० वासे । अवस्थाने ॥ यामिन्याम् । निशायाम् ॥ निकेतने । सदने ॥ वसन्त्यस्याम् ०वसन वा । वसनिवासे । वहिवस्यर्त्तिभ्यश्चिदित्यति ॥
वसती । स्त्री० वसतौ ॥ कृदिकारादितिङीष् ॥
वसनम् । न० छादने । वस्त्रे ॥ अस्वधारणेनवस्त्रादयोयथा । धातानुराधवसुपुष्पविशाखहस्ताश्विचोत्तराश्विपवनादितिरेवतीषु । जन्मर्क्षजीवबुधशुक्रदिनोत्सवाद्यौधार्यं-नववसनमीश्वरविप्रतुष्टावितिसमयप्रदीप ॥ वस्यतेऽनेनवा । वस आच्छादने ॥ ल्युट् ॥ निवासे ॥ स्त्रीकटीभूषणे ॥
वसना । स्त्री० स्त्रीकटीभूषणे । सारसने ॥
वसन्त । पुं० ऋतुराजे । पुष्पसमये । कुसुमाकरे । सुरभौ । पिकानन्दे । कामसखे । मधुमाधवयो: । चैत्रवैशाखयो. ॥ वसन्त्यत्रपठनीत्र्या वा । वस० । तृभूवहिवसिभासीतिझच् ॥ अतिसारे ॥ रागविशेषे ॥ तालविशेषे ॥ वसन्ततालेकर्त्तव्योनगणोमगणस्तथा ॥ श्योनाकविशेषे ॥ क्रतुविशेषे ॥
वसन्तक । पुं० श्योनाकप्रभेदे ॥ वसन्ते ॥
वसन्तकुसुम । पुं० शेलुवृक्षे ॥
वसन्तकुसुमोकर । पुं० औषधवि

शेषे ॥ यथा । प्रवालरसमौक्तिका म्बरमिदंचतुर्भागभाक्पृथक्पृथग थस्मृतैरजतहेमतीक्ष्णकै । ययो भुजगरङ्कचित्रवङ्कविमर्द्याखिल- शुभेहनिविभावयेद्भिषगिद्धिया सप्तधः ॥ द्रवैर्वृषनिशेजुजे . क मलमालतीपुष्पजै . पय ' कद्लि कन्दजैर्मलयजैर्घनाम्बुद्भवै '। व सन्तकुसुमाकरोरसपतिर्हिवर्ज्ञाभि त समस्तगदहृन्नवैत्खिलनिजानु पानैरयमितिह्वयोगतरङ्गिणी ॥

वसन्तजा । स्त्री० वासन्तीलतायाम् ॥

वसन्ततिलकम् । न० शर्करीछन्द. १४ प्रभेदे । सिंहोन्नतावृत्ते ॥ यथा । र्ज्ञे यवसन्ततिलकंतभजाजगौग :। यथा फुल्लवसन्ततिलकतिलकश्ना ल्यालीलापरपिककुलंकलमत्र्चरौति। वात्य्वपुष्पसुरभिर्मलयाद्रिवातो- यातोहरि ' समधुरांविधिनाहता स्म . ॥ पुष्पविशेषे ॥ औषधविशे षे ॥ यथा । अश्वारलदहनसैन्धववि ष्वयत्रिक्चूर्णकरज्ञसहितमथितैनपी तम । नैवप्ररोहतिपुनर्गुदज ' स्व हैतोस्तस्मैवसन्ततिलकैरपिकल्पक ल्पम् ॥

वसन्ततिलका । स्त्री० वसन्ततिलके ॥ यथा । उक्तावसन्ततिलकातभजा जगौग : ॥

वसन्तदूत ' । पुं० पञ्चमे ॥ पिके पञ्च मरागे ॥ आम्रे ॥

वसन्तदूती । स्त्री० पाटलीवृक्षे ॥ अ तिमुक्ता । माधवीलतायाम् ॥ ग णिकार्याम् । कोकिलायाम् । पिक्याम ॥

वसन्तद्रु : ।
वसन्तद्रुम । पुं० आम्रवृक्षे ॥

वसन्तमालिका । स्त्री० विषमवृत्तप्र भेदे ॥ यथा । विषमेससजागुरूस मेचेत्सभरायवसन्तमालिकासा॥

वसन्तसख : । पुं० कामदेवे ॥

वसन्तोत्सव : । पुं० होलाकायास् ॥

वसा । स्त्री० मांसप्रभवधातुविशेषे कायस्नेहे । मेदसि । वपायाम् ॥ वसति० वस्ते वा । वसनिवासे० वसआच्छादनेवा । पचाद्यच्० भि दाद्यङ्वा ॥ मांसरोहिण्याम् ॥

वसाढ्य : । पुं० शिशुमारे ॥

वसादनी । स्त्री० सिंहमुख्याम् ॥ वा सके ॥

वसान ' । त्रि० आच्छादयति ॥ वस० । शानच् ॥

वसापायी । पुं० कुक्कुरे ॥

वसि । ' पुं० वसने ॥ वस्ते ० वस्तेवा वसआच्छादने । खनिकष्यज्यसी त्यादिनाइ : ॥

वस्त्रिरम । न० पचीवे । सामुद्रलव णे । वस्त्रिरे वस्ते वस० । बा हुलकात्किरच् ॥ यद्वा । वसनम् ।

। वसुस्तम्भो । इन् । वसिंराति । राट्ाने । आतोनुपेतिक । करि पिप्पल्याम् ॥
वसिष्ठः । पुं॰ वसिष्ठमुनौ । अरुन्धती जानौ । अरुन्धतीनाथे ॥
वसु । पुं॰ देवभेदे । गणदेवता विशेषे ॥ यथा । धरोध्रुवश्चसोमश्च विष्णुश्चैवानिलोऽनल । प्रत्यूष श्चप्रभासश्चवसवोष्टौक्रमात्स्मृता: ॥ धनाधिपे ॥ आयाम् । दीप्तौ ॥ अग्नौ ॥ ये.क्त्रे ॥ वकवृक्षे । शिवमल्ल्याम् । पाशुपते ॥ राजनि ॥ साधौ ॥ पीतमुद्गे ॥ शिवे ॥ सूर्ये ॥ अष्टसङ्ख्यायाम् ॥ धनिष्ठानक्षत्रे ॥ पुष्करिण्याम् ॥ क्लीवे ॥ हृद्यौषधे ॥ अर्के ॥ विष्णौ ॥ वसन्तिसर्वभूतान्यत्र॰ तेष्वयमपिवसतीतिवावसु ॥ न॰ रत्ने ॥ धने । राथि ॥ श्याटकेजले ॥ स्त्री॰ दीप्तौ । हृद्यौषधे ॥ त्रि॰ मधुरे ॥ शुष्के ॥ वसतिसर्व-त्र॰ उष्यतेवागुणै सर्वत्रोष्यतेऽनेनवा॰ वस्ते॰ वक्ष्यतेवा । वसनिवासे॰ वसआच्छादनेवा । शृस्तृस्निहि त्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्चेत्यु ॥
वसुक : । पु॰ शिववल्ल्याम् । वकपुष्पे । सुरेष्टे ॥ अर्कपर्णे । रक्तार्के । मन्दारे ॥ न॰ रौमके । साम्भरिलवणे ॥ पांशवे ॥ वासूके ॥ स्वार्थेकन् ॥ वसुकायतिवा । कै॰ । आतोनुपेतिक । वस्तेव । यावादित्वात्कन्वा ॥ वसत्यस्मिन् । श्रीह्यादित्वाट्टक् । इसुस्थिति कोवा ॥
वसुकीट : । पुं॰ याचके ॥
वसुचरणम् । न॰ भगणे॰ऽ ॥ ॰ ॥
वसुच्छिद्रा । स्त्री॰ महामेदावृक्षे ॥
वसुद । पुं॰ धनाधिपे । कुबेरे ॥ हरौ ॥ त्रि॰ धनदातरि ॥ वसुदयते । देङ्पालने । वसुददातिवा । डुदाञ्॰ । आतद्रूतिक : ॥
वसुदान । त्रि॰ सर्वफलदे ।
वसुदेव । पुं॰ श्रीकृष्णजनके । आनकदुन्दुभौ । शूरे । वसुषुधनेषुदीव्यतिमोदते । दिवु॰ । पचाद्यच् ॥
वसुदेवता । स्त्री॰ धनिष्ठानक्षत्रे ॥
वसुदेवभू । पु॰ श्रीकृष्णे ॥
वसुधा । स्त्री॰ क्षितौ ॥ वसुदधाति । डुधाञ्॰ । आतद्रूतिक ॥
वसुधाखर्ज्जूरिका । स्त्री॰ भूखर्ज्जूरिकायां ॥
वसुधाधिप : । पुं॰ भूपतौ ॥ जगणे॰ ।ऽ।॰ ॥
वसुधान : । पुं॰ कोशे ॥ वसुधीयतेस्मिन ॥
वसुधारा । स्त्री॰ वृद्धिश्राद्धपूर्वकर्त्तव्ये दिराजवसूद्दे श्यककुड्यलग्नघृत

धारायाम् ॥ यथा । कुड्यलग्नाव सोर्धारांसप्तवारान्घृतेनतु । कारयेत्पञ्चवारान्वानातिनीचांनचोच्छ्रिताम् ॥ आयुष्मानितिशान्त्यर्थंजप्त्वातत्रसमाहितः । षड्भ्यः पितृभ्यस्तदनुश्राद्धदानमुपक्रमेत् ॥ इतिकात्यायनः । अपिच । देहस्थानाभिमाचार्याप्रादेशपरिमाणतः । सप्तवापञ्चवाबिन्दून्दद्यात् सिन्दूरचन्दनैः । प्रत्येकंबिन्दुमतिमान्काममायारमांस्मरन् । घृतधारामविच्छिन्नादद्यातच्चवसुयजेत् ॥ कुबेरपुर्याम् ॥ धनसन्ततौ ॥ जिनशक्तिविशेषे । तारायाम् ॥ वसोर्द्देराजस्यधारा ॥ भौमेतीर्थविशेषे ॥

वसुनन्दक । पुं॰ खेटके । धनवृद्धिजीवके ॥

वसुन्धरा । स्त्री॰ गोचायाम् । उर्व्याम् ॥ वसूनिधारयति । सञ्ज्ञायांभृतृवृजिधारीतिखच् । खचिह्रस्व.। अरुर्द्विषदितिमुम् ॥

वसुप्राण : । पुं॰ वह्नौ ॥

वसुमती । स्त्री॰ भुवि ॥ यथासप्तद्वीपावसुमतीति । वसुधनमस्त्यस्याम् ॥ मतुप् । ङीप् ॥

वसुमना : । पुं॰ विष्णौ ॥ वसुशब्देनप्रशस्तस्य लक्ष्यते । वसुप्रशस्तमनोयस्य । रागद्वेषादिभि.क्लेशैर्मदादिभिरुपक्लेशैश्चयतोनकलुषितचित्त ततस्तन्मनःप्रशस्तम् ॥

वसुरोचि । न॰ यज्ञे ॥ वसवरोचन्तेऽस्मिन् । रुचदीप्तौ । वसौरुचे : सञ्ज्ञायामिति॰ इसिन् ॥

वसुल : । पुं॰ देवतायाम् ॥

वसुश्रेष्ठम् । न॰ रूप्ये ॥

वसुसेन . । पुं॰ कर्णे । अङ्गाधिपे ॥

वसुस्थली । स्त्री॰ कुबेरपुर्य्याम् ॥

वसुहट्ट : । पुं॰ वकद्रुमे ॥

वसूक '। पुं॰ वकवृक्षे ॥ न॰ साम्भरिलवणे ॥

वसूत्तम . । पुं॰ भीष्मपितामहे ॥

वस्कय : । पुं॰ वत्सकर्ये ॥

वस्कयनी । ) स्त्री॰ वत्सविशिष्टाम् ।
वस्कयिनी । )

चिरप्रसूतायांधेनौ ॥ वस्कयिन्यास्त्रिदोषघ्नतर्पणबलकृत्पयः ॥

वस्कराटिका । स्त्री॰ वृश्चिकायाम् । कालिकारूपे ॥

वस्त . । पुं॰ छागे ॥ वस्तयते । वस्तअर्दनेचुरादि . । पचाद्यच् ॥

वस्तकम् । न॰ कृत्रिमलवणे ॥ वस्तइव । अजगन्धित्वात् । इवेप्रतिकृताविति कन् ॥

वस्तकर्ण : । पुं॰ शालवृक्षे ॥

वस्तगन्धा । स्त्री॰ अजगन्धायाम् ॥ वस्तस्यैवास्यागन्धोऽस्या : । वस्तशब्द '

स्वगन्धेलाचणिक ॥
वस्तमोदा । स्त्री॰ अजमोदायाम् ॥
वस्त मोदयति । मुद॰ । ण्यन्त : । कर्मण्यण् ॥
वस्तान्त्री । स्त्री॰ छगलान्त्रीक्षुपे । वृषगन्धायाम् । मेषान्त्र्याम् ॥ वस्तस्येवान्त्रमस्या । गौरादि ॥
वस्ति । पुं॰ स्त्री॰ नाभेरधोभागे । नाभिलिङ्गयोरन्तरे ॥ मूत्राशये धनुर्वक्राव स्तिरित्यभिधीयते ॥ नाभेरधस्तादलाबूसदृशमवीनालमनेकच्छिद्र मूत्रभाजन वस्तिरुच्यते ॥ अस्यालक्षणं यथा । विस्तीर्णामांसलास्निग्धावस्ति : पुंसाप्रशस्यते । निर्मांसाकृशगाहूवाद् खदारिद्र्यदास्मृता ॥ गोमायुसदृशायस्यखरोष्ट्रमहिषस्यच । सभवेद्दु : खितो नित्यं धनहीनश्चमानव : ॥ वसति मूत्रमत्र । यद्वा । वस्तेः वस्ते वा । वस॰ निवासे॰ आच्छादने वा । वसतिवा । वसुस्तम्भे । वसेस्ति : ॥ चिकित्साविशेषे ॥ यथा । वस्तिर्द्विधानुवासाख्योनिरूह स्ततःपर । य स्नेहैर्दीयतेस स्यादनुवासननामक ॥ कषायक्षीरतैलैर्योनिरूह . सनिगद्यते । वस्तिभिर्दीयतेयस्मात्तस्माद्वस्तिरितिस्मृत ॥ वस्तिभि मृगादीना मूत्राशयै : ॥ भूम्नि॰ वस्तय : --

वस्त्रान्तावयवेषु ॥ दशासु ॥
वस्तिकर्माढ्य । पुं॰ अरिष्टवृक्षे । फेनिले ॥
वस्तिमलम् । न॰ मूत्रे ॥
वस्तु । न॰ द्रव्ये ॥ पदार्थे ॥ जगतिवस्तुद्वय भावोऽभावश्चेतिन्यायशास्त्रम् ॥ वस्तु॰ सच्चिदानन्दाद्वय ब्रह्मेतिवेदान्तशास्त्रम् ॥ वसति । वस॰ । वसेस्तुन् ॥ लक्षणप्रमाणाभ्यांहिवस्तुसिद्धिर्भवतीतिव्याख्यातार . ॥
वस्तुकम् । न॰ वास्तूके ॥
वस्तुकी । स्त्री॰ श्वतचिल्लीशाके ॥
वस्तुपरिच्छेद । पुं॰ सजातीयभेदो विजातीयभेद स्वगतभेदश्चेतित्रिविधभेदे ॥ जीवेश्वरभेद • जीवजगद्भेद • जीवपरस्परभेद • ईश्वरजगद्भेद • जगत्परस्परभेदइतिपञ्चविधभेदे ॥ वस्तुन . परिच्छेद : परिच्छिन्नत्वम् ॥
वस्तुविवेक . । पुं॰ अनित्यान्नित्यस्य पृथक्करणे ॥ नित्यमात्मस्वरूपं हि दृश्य तद्विपरीतगम् । एवंयोनिश्चय सम्यक्विवेकोवस्तुन : सवै ॥ वस्तुनोविवेक . ॥
वस्ता । पुं॰ वास्तव्ये ॥ वसति । वस॰ । तृच् ॥
वस्थम् । न॰ निशान्ते । गृहे ॥ वसनम् । वस॰ वसेस्थि . ॥ तवसा

धुरितियत् । यद्वा । अवस्यायति । ध्यैस्य शब्दसङ्घातयोः । आतश्चोपसर्ग इति कः । वष्टोस्य लोपः ॥

वस्त्रम् । न॰ आच्छादने । वाससि । चेले । वसने । अंशुके । कपडा॰ इ॰ भा॰ प्र॰ ॥ वस्यतेऽनेन । वस आच्छादने । सर्वधातुभ्यः ष्ट्रन् ॥

वस्त्रकुट्टिमम् । न॰ वस्त्रालये । तंबूटी॰ इ॰ भा॰ प्र॰ ॥ वस्त्रस्य कुट्टिममल्पगृहम् ॥ छत्रे ॥

वस्त्रगृहम् । न॰ पटवेश्मनि । पटवापे । पटमये । दूष्ये । स्थूले । तम्बू॰ इ॰ भा॰ प्र॰ ॥ वस्त्रस्य गृहम् ॥

वस्त्रग्रन्थि । पुं॰ उत्सये । नीव्याम् । परिधान वस्त्रस्यग्रन्थने ॥

वस्त्रपञ्जल । पुं॰ कोलकन्दे ॥

वस्त्रपुत्रिका । स्त्री॰ वस्त्रनिर्मितपुत्तलिकायाम् । गुडिया॰ इ॰ भा॰ ॥

वस्त्रभूषण: । पुं॰ शाकशाखवृक्षे ॥

वस्त्रभूषणा । स्त्री॰ मञ्जिष्ठायाम् ॥

वस्त्रयोनि । पुं॰ स्त्री॰ वसनोत्पत्तिकारणे त्वगादौ । त्वक् फलकृमिरोमम् ॥ वस्त्रस्ययोनिः कारणम् ॥

वस्त्ररञ्जकम् । न॰ कुसुम्भे । वह्निशिखे ॥ वस्त्राणांरञ्जकम् ॥ त्रि॰ वस्त्राणांकुसुम्भादिनारञ्जनकर्त्तरि ॥

वस्त्ररञ्जन: । पुं॰ कुसुम्भे ॥

वस्त्ररञ्जनी । स्त्री॰ मञ्जिष्ठायाम् ॥

वस्त्वाभास । पुं॰ मायामयेरज्जुसर्पादौ॰ कृष्णोगौरोदीर्घोह्रस्वइतिव्यवहारे ॥ वस्तुधर्मि द्रव्यम्॰ तद्वदवभासते॰ इतितथा ॥

वस्न: । पुं॰ मूल्ये । अवक्रये ॥ न॰ वेतने ॥ वस्त्रे ॥ धने ॥ मूल्ये ॥ मृतौ ॥ द्रव्ये ॥ त्वचि ॥ वसत्यनवा । वस॰ । धापॄवस्यज्यतिभ्योनः ॥

वस्ननम् । न॰ कटिभूषणे ॥

वस्नसा । स्त्री॰ वायुवाहिन्यांनाड्याम् । स्नायौ ॥ वस्तेशरीरम् । वस आच्छादने । धापॄवस्यज्यतिभ्योनः । वस्नचर्म॰ स्यति । षोऽन्तकर्मणि । आतोनुपसर्ग इति कः । टाप् ॥

वस्निक । त्रि॰ वस्नजीवातौ ॥ वस्नेनमूल्येनजीवति । वस्नक्रयविक्रयाट्ठन् । यद्वा । वस्नंमूल्यं हरति॰ वहति॰ आवहतिवा । वस्नद्रव्याभ्यांठन्कनाविति आर्हीयष्ठन् ॥

वस्वौकसारा । स्त्री॰ अलकायाम् । कुबेरपुर्याम् ॥ कुबेरनलिन्याम् । मानसोत्तरशिखरवर्त्तिन्यामिन्द्रस्य नगर्याम् । इन्द्रपुर्याम् ॥ इन्द्रनलिन्याम् ॥

वस्त्रोकसारिका । स्त्री० वस्त्रोकसारायाम् ॥

वहलिह्र । पु० गवि ॥ वह स्कन्ध स्त लेढि । लिह० । वहाभ्रे लिहह्र तिखश् । मुम् । खशोडित्त्वान्नगुण ॥

वह । पु० वृषभस्कन्धे ॥ वाहे । हये ॥ गन्धवहे । वायौ ॥ पथि ॥ नदे ॥ वहतियुगमनेन । वहप्रापणे । गोचरसञ्चरेतिसाधु : ॥

वहत । पुं० वृषे ॥ पान्थे ।

वहति । पु० गवि ॥ सचिवे ॥ वायौ ॥ वहति । वह० । वहिवस्यर्त्तिभ्यश्चिदित्यति ॥

वहतु । पु० पथिके ॥ वृषभे । वहति । वह० । एधिवह्योश्चतु : ॥

वहनम् । न० प्रापणे ॥ कोले । तरान्धौ । हुडि०डु०गो०भा०प्र०नौकाविशेषे ॥ वह० । ल्युट ॥

वहन्त । पुं० वायौ ॥ त्रि० बालके । वहति । वह० । तृभूवहिवसोत्यादिनाझच्षित् ॥

वहलम् । न० वार्वटे पोते ॥ त्रि०दृढे ॥ दृढे ॥

वहलगन्धम् । न० शम्वरचन्दने ॥

वहलचक्षु : । पुं० मेषशृङ्गाम ॥

वहलत्वच : । पुं० श्वेतलोध्रे ॥

वहला । स्त्री० शतपुष्पायाम् ॥ स्थूलैलायाम् ॥

वहा । स्त्री० नद्याम् ॥ वहति । वह० । अच् ॥

वहि कुटीचर । पुं० तिर्यग्याने । कुलीरे ॥

वहि प्रज्ञ । पु० विश्वस्मिन् । व्यष्ट्युपहितचैतन्य ॥ वहि स्वात्मव्यतिरिक्ते विषयेप्रज्ञायस्यस : ॥

वहित । त्रि० अवहिते ॥ अवधीयतेस्म । डुधाञ् । क्त । दधातेर्हि । भागुरिमतेऽल्लोप ॥

वहित्रम् । न० पोते । वार्वटे ॥ वहति । वह० । अग्निचादिभ्यइत्रोत्रावितित्रप्रत्यय ॥

वहित्रकम् । न० जलयाने । यानपात्रे ॥

वहिर्द्वारम् । न० द्वारवाह्यभागे । तोरणे ॥ वहिर्द्वारात् । वहिर्गतद्वारस्येतिवा ॥

वहिर्द्वारप्रकोष्ठकम् । न० प्रघाणे ॥

वहिर्भूत : । त्रि० वहिर्गते ॥

वहिर्मुख । त्रि० विमुखे ॥ यथा । शैवोवावैष्णवोवापियोवास्यादन्यपूजक । सर्वंपूजाफलहन्तिशिवरात्रिवहिर्मुख ॥

वहिश्चर : । पु० कर्कटे ॥

वहिष्ठ : । त्रि० वहिर्भवे । वहि : स्थिते ॥

वहिष्यवमान : । पुं० याज्ञिकस्तोत्रे । सामगानासूक्तत्रयगानसाध्ये

स्तोर्च ॥

वहि । अ० वाह्ये ॥ वहति । वह० । दूस् ॥

वहुल । पुं० अग्नौ ॥ कृष्णपक्षे ॥ न० आकाशे ॥ सितमरिचे ॥ त्रि० प्राज्ये । प्रचुरे ॥ कृष्णवर्णे ॥ वहून् अर्थान् लाति । ला० । आतदूति-क ॥ वहति । वह० । वाहुलका दुलच् ॥ वहुलायां जातो ॥ सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् । तस्य श्रविष्ठा षाढे लुक् ॥

वहुला । स्त्री० नीलिकायाम् ॥ एलायाम् ॥ गवि ॥ मानसाचलस्थदेवी-विशेषे ॥

वहुलाः । स्त्री० भूम्नि० कृत्तिकासु ॥

वहेडुकः । पुं० विभीतकवृक्षे । वहेडा० हू० भा० प्र० ॥

वह्नि । पुं० वैश्वानरे । चीतिवृक्षे । धनञ्जये । अग्नौ ॥ स्वाहादेवीवह्निपत्नी ॥ चित्रकाख्यौषधौ ॥ भल्लातकौ ॥ निम्बूके ॥ वहति हव्यम् । देवेभ्यो हविः प्रापयति वा । वह प्रापणे । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् । इति० नि. ॥

वह्निकरी । स्त्री० धातकीपुष्प्याम् । धातक्याम् ॥

वह्निकाष्ठम् । न० दाहागुरुणि । दाहकाष्ठे ॥

वह्निगन्धः । पुं० यक्षधूपे ॥

वह्निगर्भः । पुं० वंशे ॥

वह्निगर्भा । स्त्री० शमीद्रुमे ॥

वह्निचक्रा । स्त्री० कलिकारीवृक्षे ॥

वह्निज्वाला । स्त्री० धातकीवृक्षे ॥ वह्नेरिवज्वालाऽस्याः । वह्निज्वालेव वा । रक्तपुष्पत्वात् ॥

वह्निदमनी । स्त्री० अग्निदमनीक्षुपे

वह्निदीपकः । पुं० कुसुम्भे ॥

वह्निदीपिका । स्त्री० यवानीकायाम् ॥

वह्निनामा । पुं० चित्रके ॥ भल्लातकौ ॥

वह्निनी । स्त्री० जटामांस्याम् ॥

वह्निपुष्पी । स्त्री० धातक्यां ॥

वह्निभोग्यम् । न० घृते ॥

वह्निमन्थः । पुं० गणिकारिकावृक्षे ॥

वह्निमन्थकः । पुं० अग्निमन्थे ॥

वह्निमारकम् । न० जले ॥

वह्निमित्रः । पुं० वायौ ॥

वह्निरेताः । पुं० शिवे । कृशानुरेतसि ॥ वह्नौ रेतोऽस्य ॥

वह्निलोहकम् । न० कांस्ये ॥

वह्निवल्ला । स्त्री० कलिहार्याम् । लाङ्गल्याम् ॥

वह्निवधूः । स्त्री० अग्नाय्याम् । स्वाहायाम् ॥

वह्निवर्णम् । न० रक्तोत्पले ॥

वह्निवल्लभः । पुं० सर्जरसे । धूनके ॥ घृते ॥ वह्नेर्वल्लभः ॥

वह्निबीजम् । न० निम्बूके ॥ स्व र्णे ॥
वह्निशिखम् । न० कुसुम्भे ॥ वह्नि वत्० शिखाऽस्य ॥
वह्निशिखर । पुं० लोचमस्तके ॥
वह्निशिखा । स्त्री० अनन्तायाम् ॥ फलिन्याम् ॥ कलिकायाम् ॥ धातक्याम् ॥
वह्निसञ्ज्ञः । ) वह्निसञ्ज्ञक । ) पुं० चित्रकाख्यौ षधौ ॥ वह्नि सञ्ज्ञायस्य सः ॥
वह्निसखः । पुं० वायौ ॥ जीरके ॥
वह्यम् । न० वाहने ॥ शकटे ॥ वहन्त्यनेन ॥ वह० । वह्यकरण मितियत् ॥
वह्या । स्त्री० मुनिपत्न्याम् ॥
वह्लीकः । देशविशेषे ॥ वह्लते । व ह्लप्राधान्ये । बाहुलकादीकन् ॥
वा । विकल्पे ॥ उपमायाम् । उप माने । वितर्के ॥ पादपूरणे ॥ समुच्चये ॥ विस्मये ॥ नानार्थे ॥ अतीते ॥ एवार्थे ॥ अवधारणे वाति । वागतिगन्धनयोः । क्वि प् ॥
वाश । त्रि० वशसम्बन्धिनि ॥
वाशिकः । पुं० वंशीवादके । वैण विके ॥ वंशीवादनं शिल्पमस्य । ठक् ॥ भारभूतान्वंशान्हरति । वहति । आवहतिवा । तद्धरति

वहतीत्यादिनाठञ् ॥
वांशी । स्त्री० वंशरोचनायां ॥
वाःकिटि । पुं० शिशुमारे ॥ कु म्भीरे ॥ वारीजलस्थकिटिःशूकरः ॥
वाःसदनम् । न० जलाधारे ॥ ज लान्तस्थगृहे । जलमन्दिर० इ० भा० प्र० ॥
वाक । पु० वाचि ॥ उच्यतेऽनये ति । वचपरिभाषणे । करणेघञ् ॥ न० बकसमूहे ॥ बकानासमू हः । तस्यसमूहइत्यण् ॥ त्रि० ब कसम्बन्धिनि ॥ बकस्यावयवोवि कारोवा । प्राणित्वादञ् ॥
वाकी । त्रि० वाग्विशिष्टे ॥ वाकोवि द्यतेऽस्य । अतइनि ॥
वाकुची । स्त्री० ओषधिविशेषे । सो मराज्याम् ॥ सुप्रभायाम् । काम्बो ज्याम् । पूतिगन्धायाम् ॥ वाकु चीमधुरातिक्ताकटुपाकारसायनी । विष्टम्भहृद्धिमारुच्यासरास्रप्रश्ले पित्तनुत् ॥ रुक्षाहृद्याश्वासकुष्ठमे हज्वरक्रमिप्रणुत् । तत्फलं पित्त लकुष्ठकफानिलहरं कटु ॥ केश्यं त्वच्यं क्रमीश्वासकासशोथामपाण्डु हृत् ॥ वातंसङ्कोचयति । कुचश ब्दतारे । मूलविभुजादित्वात्क पृषोदरादिः ॥
वाकुलम् । न० वकुलफले ॥ वाकु लंमधुरग्राहिदन्तस्थैर्यकरंपरम् ॥

वाकोवाक्यम् । न॰ तर्कशास्त्रे ॥ उक्तिप्रत्युक्तिरूपेवैदिकग्रन्थे ॥ यथा किंस्विदावपनमहत्॰ भूमिरावपनमहदिति ॥

वाक्कीर.। पुं॰ श्यालकी ॥

वाक्छलम्। न॰ छलविभेदे । वाक्यव्याजे ॥ यथा। अविशेषाभिहितेर्थेवक्तुरभिप्रायादर्थान्तरकल्पना-वाक्छलम ॥ यत्रशक्यार्थद्वयेसम्भवति॰ एकार्थनिर्णयेकविशेषाभावादनभिप्रेतशक्यार्थकल्पनेनदूषणाभिधानतद्वाक्छलम्। लक्षणन्तु॰ शक्यैकार्थशाब्दबोधतात्पर्यकशब्दस्यशक्यार्थान्तरतात्पर्यकत्वकल्पनयादूषणाभिधानम् । यथा। नेपालादागतोयनवकम्बलवत्त्वादित्युक्ते॰ कुतोस्यनवसङ्ख्याकाः कम्बलाइति ॥ एवगौर्विषाणीत्युक्ते॰ कुतोगजस्यशृङ्गम श्वेतोधावतीतिश्वेतरूपवदभिप्रायेणोक्ते॰ श्वेतोनधावतीत्यभिधानमित्यादिकमूह्यम् ॥

वाक्पतिः। पुं॰ वृहस्पती ॥ वाचापतिः ॥ चि॰ वागीशे । पटुवचने ॥

वाक्पारुष्यम् । न॰ अप्रियवाक्योच्चारणे । तत्तु सप्तधाव्यसनान्तर्गतव्यसनविशेषः। यथा। मृगयाक्षास्त्रियः पानंवाक्पारुष्यार्थदूषणे। दण्डपारुष्यमित्येतज्ज्ञेयव्यसनसप्तकम् ॥ तल्लक्षणमाहनारद । देशजातिकुलादीनामाक्रोशन्यङ्गसयुतम्। यद्वच प्रतिकूलार्थवाक्पारुष्यतदुच्यतइति ॥ देशादीनामाक्रोशन्यङ्गसयुतम्। उच्चैर्भाषणमाक्रोश॰ न्यङ्गमवद्यम्॰ तदुभययुक्त यत्प्रतिकूलार्थमुद्वेगजननार्थवाक्यतद्वाक्पारुष्य कथ्यते ॥

वाक्यम् । न॰ परस्पराकाङ्क्षोपितपदचये॰ तिङ्सुबन्तचये। तिङन्तानाचयेयथा। पचतिपश्येत्यादिवाक्यम्। सुबन्तानाञ्चयेयथा। प्रकृतिसिद्धमिदहिमहात्मनामित्यादि ॥ कारकान्वितक्रियायाम् ॥ धात्वर्थक्रिया॰ कारकै कर्त्रादिभिरन्विताम्स्वकार्याकारकान्विता॰ अन्वितत्वञ्चक्रियाकारकाणामाकाङ्क्षायोग्यतासन्निधिवशाज्ज्ञेयम्॰तिङ्सुबन्तचयात्मकेपिसम्बन्धार्थता बोध्या॰ असम्बद्धार्थस्याप्रयोगात्॰ अतएवपरस्पराभिसम्बन्ध॰ पदसमूहोवाक्यमितिवृद्धाः । कारकान्वितोक्रियायथा॰घटमानयेत्यादि॥ वाक्यस्वरूपमाह । वाक्य स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः। वाक्योच्चयोमहावाक्यमित्थ वाक्य द्विधामतम् ॥ उक्तञ्च । स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया ।

वाक्यानामेकवाक्यत्वपुनः सम्भूय जायतइति ॥ अववाक्य यथा । शून्यवासगृहमित्यादि । महावाक्ययथा । रामायणमहाभारतरघुवंशादि । इति ॥ पुनश्चतद्द्विविधम् । लौकिक वैदिकञ्चेति । वैदिकमीश्वरोक्तत्वात्सर्वमेवप्रमाणम् लौकिकन्त्वाप्तोक्त प्रमाणम् । अन्यदप्रमाणम् ॥ समभिहारोवाक्यम् । समभिहारश्चसाध्यत्वादिवाचकद्वितीयाद्यभावेपिवस्तुत. शेषशेषिवाचकपदयो : सहोच्चारणम् । यथा । यस्यपर्णमयीजुहूर्भवतिनसपापश्लोकंशृणोतीत्यत्र० पर्णताजुह्वो . समभिहारादेवपर्णतायाः जुह्वङ्गत्वम् । नचानर्थक्यजुह्वा · सिद्धत्वादितिवाच्यम् । जुहूशब्देनतत्साध्यापूर्वलक्षणात् तयाचवाक्यार्थ • पर्णतयाऽवद्यहविर्धारणद्वाराजुहूपूर्वंभावयेदिति । एवञ्चपर्णतयायदिजुह्व . क्रियतेतदैवतत्साध्यमपूर्वंभवतिनान्यथेतिगम्यते•इतिनपर्णतायावैयर्थ्यम् । अवद्यहविर्धारणद्वारेतिचावश्य वक्तव्यम्•अन्यथास्रुवादिष्वपिपर्णतापत्ते · ।सेयपर्णता०अनारभ्याधीतापिसर्वप्रकृतिष्वेवान्वेतिनविकृतिषु •तत्रचोदकेनापितत्प्राप्तिसम्भवात् पौनरुक्त्यापत्ते . । तदिदंवाक्य प्र

करणादिभ्योबलवत् । अतएवैन्द्राग्नीइदंहविरित्यादेरैकवाक्यत्वाद्दर्शाङ्गत्वम् । नतुप्रकरणाद्दर्शपूर्णमासाङ्गत्वम् ॥ उच्यतेइतिवाक्यम् । वचेर्ण्यत् । चजोरितिकुत्वम् । शब्दसञ्ज्ञात्वात्०वचोऽशब्दसञ्ज्ञायामितिनिषेधोन ॥ शुभाशुभवाक्यानितु । नैवराज्येनमहतानचैवार्थस्राशिभि : । प्राप्यतेज्ञानकथनपरलोकसुभाषितम् ॥ स्वर्गापवर्गसिद्धार्थं भाषितयत्सुशोभनम् । वाक्यमुनिवरै शान्तैस्तद्विज्ञेयसुभाषितम् ॥ रागद्वेषान्ततक्रोधकामतृष्णानुसारियत् वाक्यनिरयहेतुत्वात्तदभाषितमुच्यते ॥ संस्कृतेनापिकिन्तेनमृदुनाललितेनवा । अविद्यारागवाक्येनससारक्लेशहेतुना ॥ यच्छ्रुत्वाजायतेपुण्यंरागादीनाञ्चसङ्क्षय । विरूपमपितद्वाक्य विज्ञेयमतिशोभनम् ॥ इतिवह्निपुराणम् ॥

वाक्यलक्षणवित् । पुं० मीमांसाशास्त्रज्ञे ॥

वाक्याध्याहार : । पुं० आकाङ्क्षितैकदेशपूरणे ॥वाक्यस्यअध्याहार:॥

वाक्याभिधायी । त्रि० पृष्ठमांसादे ॥ वाक्यभिधायीपुरुष पृष्ठमांसादउच्यतइतिविकाण्डशेष : ॥

वागधिप : । पुं० बृहस्पतौ ॥ वाचा

अधिप : ॥

वागर : । पुं॰ गतातङ्के । परित्यक्तभये । मुमुक्षौ ॥ वातवेष्टके ॥ विशारदे । पण्डिते ॥ विषाणे ॥ निर्णये । वारके ॥ शाणे ॥ वाडवे ॥ वृके ॥

वागारु । त्रि॰ आशाहन्तरि ॥ यथा । आशांबलवतीदत्त्वायोहन्तिपिशुनोजन. । सजीवासोपिवागारुद्दृष्टो॰दानुसुदातरि ॥ इतिशब्दमाला

वागाशनि : । पुं॰ बुद्धे ॥

वागाशी : । पुं॰ शुभवाचि ॥ वाचिआशीर्यस्य स : ॥

वागीश : । पुं॰ जीवे । बृहस्पतौ ॥ त्रि॰ वाक्पतौ ॥

वागीशा । स्त्री॰ सरस्वत्याम् ॥ वाचामीशा ॥

वागीश्वर : । पुं॰ ब्रह्मणि ॥ बृहस्पतौ ॥ ऋग्वेदादिरूपाणांवाचामीश्वर : । मञ्जुघोषे ॥ त्रि॰वाचामीश्वरे ॥

वागीश्वरी । स्त्री॰ सरस्वत्याम् ॥

वागुजी । स्त्री॰ सोमराज्याम् ॥ वाचंगुञ्जति । गुजिअव्यक्तशब्दे । मूलविभुजादित्वात्क । पृषोदरादि: ॥

वागुण : । पुं॰ कर्मरङ्गे ॥

वागुरा । स्त्री॰ मृगबन्धनार्थजाले । मृगबन्धन्याम् ॥ खावल॰खावली॰ द्र॰जाल॰द्र॰च॰भथा ॥ अवागुरते । गुरीङ्उद्यमे । इगुपधेतिक : । वष्टिभागुरीरल्लोपमवाप्योरुपसर्गयो:रित्यकारलोप ॥

वागुरिक : । पुं॰ व्याधविशेषे । जालिके ॥ वागुरयाचरति । चरतीतिठक् ॥

वाग्गुद । पुं॰ पक्षिविशेषे । वागुड॰ वाड॰द्र॰भा॰प्र॰ ॥

वाग्गुलि । पुं॰ ताम्बूलिनि । राज्ञाताम्बूलदातरि ॥ जातिविशेषे ॥

वाग्गुलिक : । पुं॰ ताम्बूलदे ॥

वाग्जालम् । न॰ शास्त्रमात्रे ॥ यथा । परिनिर्मथ्यवाग्जालंनिर्णीतमिदमेवहि । नोपकारात्परोधर्मोनापकाराद्घपरम् ॥

वाग्दरिद्र । त्रि॰ वाग्मे । मितभाषिणि ॥ वाचादरिद्र : ॥

वाग्दलम् । न॰ दन्तवाससि । ओष्ठाधरयो: ॥

वाग्दुष्ट । पुं॰ व्रात्ये ॥ त्रि॰ वाचादूषिते । परुषभाषिणि ॥ वाचादुष्ट : ॥

वाग्देवता । ) स्त्री॰ सरस्वत्याम् ॥
वाग्देवी । )

वाग्वन्ध : । पुं॰ प्रश्ने । समये ॥ *

वाग्मी । पुं॰ सुराचार्ये ॥ त्रि॰ पटौ ॥ वक्तरि । विविधशास्त्राभ्यासाधिवासितप्रशस्तवाग्युक्ते ॥ वाग्मीसत्य

वाग्भवतीतिनिश्चितोर्थः ॥ प्रश
स्तावागस्य । वाचोग्मिनि । गका
रोच्चारण प्रत्ययेभाषायामित्यनुना
सिकाभावाय । उत्तरसूत्रस्यबहुभा
षिणीत्यस्यापिसम्बन्धात् । सम्यग्बहु
भाषिणि॰वाग्मीतिदीध्यम् ॥

वाग्य । त्रि॰ निर्वेदे ॥ कल्पे ॥ वा
ग्दरिद्रे ॥

वाग्यत । त्रि॰ यतवाचि । मौनिनि
॥ वाचियत . ॥

वाग्याम । त्रि॰ योच्चशत्त्यादिनावा
चयच्छतितस्मिन ॥

वाग्वज्र . । पु॰ शापे ॥ वागेववज्रोहिं
सकत्वात् ॥

वाग्वित् । त्रि॰ वैयाकरणे । वाक्यको
विदे ॥ वाच विन्दति॰वक्तुं॰वि
वेकश्चजानातिवा । सत्सूद्विषेत्या
दिनाक्विप् ॥

वाग्विसर्गः । पुं॰ वाचः प्रयोगे ॥

वाङ्क । पुं॰ काचङ्गले । समुद्रे ॥

वाङ्मती । स्त्री॰ नदीविशेषे ॥ यथा ।
हिमाद्रेस्तुङ्गशिखरात्प्रोद्भूतावाङ्
मतीनदी । भागीरथ्याः शतगुण
पवित्रतज्जलस्मृतम् ॥

वाङ्मयः । त्रि॰ वाक्यात्मके । यथा
। व्यस्तजभूगैर्लान्तैरैभिर्दशभिरच्य
रैः । समस्तवाङ्मयव्याप्तंत्रैलो
क्यमिवविष्णुना ॥

वाङ्मयी । स्त्री॰ परापश्यन्तीमध्यमा
वैखरीरूपायांवाण्याम् । सरस्वत्या
म ॥

वाङ्मात्रा । स्त्री॰ वाचोमात्रायाम्
॥ यथा । निमेषोन्मेषणापुंसामङ्
गुल्याश्छोटिकाथवा । गुर्वक्षरोच्चार
णावावाङ्मात्रेयस्मृताबुधैः ॥

वाङ्मुखम् । न॰ वचनोपक्रमे । उप
न्यासे ॥ वाचोमुखमिवमुखम्॰उप
क्रम ॥

वाक् । स्त्री॰ वाण्याम् । भारत्याम् ।
अर्थपरिज्ञानफलायाम् । सर्वस्यार्थ
स्यप्रकाशिकायासस्कारवाण्याम् ॥
योनार्थ सम्यगवबुध्यतेतेनेवसास्य
व्यस्रुताभवति । प्रत्यचे णशब्दस्वरू
पमुपलभमानोऽपिअर्थापरिज्ञानान्न
पश्यतिनशृणोतीत्यनुभवात् ॥ शब्द
सामान्ये ॥ वचने । वाक्ये ॥ तोच्चा
नाहन्तुदाबुद्धि . कर्मशान्तप्रतापव
त् । नोपतापिमन . सोष्मवागिका
वाग्मिन सत ॥ कण्ठताल्वादि
स्थाने॰इन्द्रिये ॥ जिह्वामूलादिष्वष्ट
सुस्थानेषुविषत्तेवान्येयेवर्णानामभि
व्यञ्जकेकरणे ॥ अकारादिवर्णेषु ॥
वर्णाश्चार्थसङ्केतपरिच्छिन्नाएतावन्तए
वक्रमप्रयुक्तार्थबोधतदभिव्यङ्ग्य
शब्द . पदवागित्युच्यते ॥ इतिभा
ष्यम् ॥ वक्तीति॰उच्यते॰ऽनयावा ।
वचपरिभाषणे । क्विब वचोत्यादि
नाक्विप्॰दीर्घोऽसम्प्रसारणञ्च ॥

वाच । पुं॰ मत्स्यविशेषे । वाचा॰ इ॰गौ॰दे॰भा॰ ॥

वाचयम । पुं॰ मुनौ । मौनव्रतिनि ॥ वाचयच्छति।यमउपरमे । वाचि यमोव्रतइतिखच् । वाचयमपुरन्दरौचेत्यमन्तत्वम् ॥

वाचक । पुं॰ शब्दे ॥ यथा । शास्त्रे शब्दस्तुवाचकः। शास्त्रेव्याकरणादौयोवाचकः साधुशब्दः सएवनिरूपपदेनशब्दशब्देनव्यवह्रियते ॥ वर्णव्यतिरिक्तस्यपदस्यवाक्यस्यवावाचकत्वमिच्छन्तिवैयाकरणाः । वर्णानांप्रत्येकवाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गादितिकैयट ॥ कथके। पुराणादिपाठके॥ सचब्राह्मणएवभवति । यथा । ब्राह्मणंवाचकंविद्यान्नान्यवर्णजमादरात् । श्रुत्वान्यवर्णजाद्राजन्वाचकान्नरकंव्रजेदिति ॥ त्रि॰वक्तरि ॥ वक्ति ॥

वाचक्नवी । स्त्री॰ वचक्नोर्दुहितरि । गार्ग्याम् ॥

वाचनम् । न॰ कथने ॥ पठने ॥ यथा । शुद्धेनानन्यचित्तेनपठितव्यंप्रयत्नतः। नकार्यासत्तमनसाकार्थस्तोत्रस्यवाचनमितिवाराहीतन्त्रम् ॥

वाचनकम् । न॰ प्रहेलिकायाम् ॥ वायने ।व्रतोपायने । यूपविशेषे ॥

वाचनिकः । त्रि॰ वचनप्राप्ते ॥ वचनादागतः । ठक् ॥

वाचनीय । त्रि॰ वाचयितुमर्हे ॥

वाचस्पति । पुं॰ जीवे । बृहस्पतौ ॥ वाचः, समस्तविद्यारूपस्यवचसः पतिः । षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेष्विति सत्त्वविधानात् षष्ठ्या अलुक् ॥

वाचस्पतिवल्लभः । पुं॰ पुष्परागमणौ । पो॰खराज॰इतिभाषाप्र॰ ॥

वाचस्पत्यम् । न॰ वाग्मित्वे ॥ ब्राह्मणादित्वाद्भावेष्यञ् ॥

वाचा । स्त्री॰ वाचि । वाण्याम् ॥ क्विबन्ताद्वाचो॰भागुरिमतेटाप् ॥

वाचाट । त्रि॰ जल्पाके । वाचाले । बहुगर्ह्यवाचि ॥ कुत्सितं बहुभाषते । आलजाटचौबहुभाषिणि । कुत्सितइतिवक्तव्यमितिवाक्शब्दाद्‌टच् ॥ सुबहुभाषिण्यपिजल्पाकवाचाटवाचालावसन्ति । वाचाटोवाचालोजल्पाकः सुबहुभाषीत्यादितिश्रीकाशीपर्यायैवोपालितः । नित्यप्रगल्भवाचालामुपतिष्ठे सरस्वतीमितिमुरारिश्च ॥

वाचारम्भणम् । न॰ अनृतजडानात्मरूपे ॥ निरूप्यमाणेखल सत्ताहीनमपियदपरोक्षव्यवहारगोचरतया गम्यतेतदित्यर्थः ॥

वाचाल । त्रि॰ वाचाटे ॥ कुत्सितं बहुभाषते । वाचोवक्तव्योस्यसन्तिवा। आलजाटचौबहुभाषिणि । कुत्सित

इतिवक्तव्य मितिवाचयालच् ॥

वाचिकम् । न० सन्देशवाचि ॥ वाचोव्याहृतार्थाया मितिठक् ॥ वाचिकतत्त्वेद्यत्दूतत्वे नाभिश सन मितिशब्दरत्नावली ॥ पुं० वाक्यार्थे ॥ यथा । आलापश्चविलापश्च स लापश्चविलापक : । अनुलापो पलापश्चसन्देशश्चातिदेशिक ' ॥ अपदेशोपदेशौचनिर्देशोव्यपदेशक । कीर्त्तितावचनारम्भा द्वादशा मीमनीषिभिरित्युज्ज्वलनीलमणि : ॥ त्रि०वाचा०वचसाकृते ॥ यथा । कायिकवाचिकवापिमानसवायथा मति । आराधनेपरेशस्यभावशुद्धि र्विधीयते ॥

वाचिकहारक । पुं० लेखे । वर्णदूते ॥

वाचोयुक्ति :। त्रि० वाग्मिनि ॥ वाचोवचस युक्ति ' सयुक्तिकत्वम् । वाक्दिक्पश्यद्भ्योयुक्तिदण्डहरे ष्वितिषष्ठ्याअलुक् ॥

वाचोयुक्तिपटु . । त्रि० सुवक्तरि । वाग्मिनि । वाचोयुक्तिषुसौपटुश्च ॥

वाच्यम् । न० प्रतिपादने । दूषणे ॥ त्रि०कुत्सिते । हीने ॥ वचनार्हे ॥ अभिधेये ॥ यद्यस्माच्छब्दान्नियमत : प्रतीयते०तत्तस्यवाच्यम् । यथा । गामानयेत्यस्मिन्वाक्ये०गोशब्दस्यगोत्वम् ॥ उच्यते । वचपरिभाषणे । ण्यत् । वचोऽशब्दसंज्ञायामिति नकुत्वम् ॥ अर्थोवाच्यश्चलक्ष्यश्च व्यङ्ग्यश्चेतित्रिधामत । वाच्योर्थोऽभिधयाबोध्योलक्ष्योलक्षणयामत . । व्यङ्ग्योव्यञ्जनयाता स्युस्तिस्र शब्दस्यशक्तय ' ॥

वाच्यमान . । त्रि० प्रस्तूयमाने ॥ वचेर्ण्यन्ताच्चौरादिकात्कर्मणिलट . शानच् ॥

वाज ' । पुं० निस्वने । शब्दे ॥ पक्षे ॥ शरपक्षे ॥ वेगे ॥ मुनौ ॥ न० घृते । यज्ञे ॥ अन्ने ॥ वारिणि ॥ वजत्यनेन । वजगतौ । हलश्चेतिघञ् । निष्ठायांसेटत्वान्नकुत्वम् ॥ वाजयतिवा । ण्यन्त । पचाद्यच ॥

वाजपेय ' । पुं० न० अन्नसुराप्रधाने यागविशेषे ॥ वाजपेयप्रतिपादके ग्रन्थे ॥

वाजपेयिक . । पुं० वाजपेययागविदितरि ॥ वाजपेयप्रतिपादकग्रन्थाध्येतरि ॥ वाजपेयमधीते० वेदवा । क्रतूक्थादिसूत्रान्ताट्ठक् ॥

वाजभोजी । पुं० वाजपेययज्ञे ॥

वाजश्रवा ' । पुं० अन्नदानादिनिमित्तयशोविशिष्टे । वाजमन्नंतद्दानादिनिमित्तश्रवोयशोयस्यस . ॥

वाजश्रवस . । पुं० वाजश्रवसोपत्ये ॥

वाजसनेय : । पुं० जनमेजययज्ञतवद्

र्थग्रन्थे ॥ सतुवैशम्पायनशापाद्दु
ष्छिन्न : ॥
वाजसनेयी । पुं॰ यजुर्वेदिनि ॥
वाजिगन्धा । स्त्री॰ अश्वगन्धायाम् ॥
वाजिता । स्त्री॰ अश्वत्वे ॥ पक्षे ॥
वाजिदन्त । पुं॰ वासके ॥ वाजी
दन्तोऽस्य॰ वाजिदन्ताभकेशरत्वा
त् ॥
वाजिदन्तक : । पुं॰ वेदमातरि ।
अटरूषे ॥ स्वार्थेक ।
वाजी । पु॰ अश्वे ॥ पक्षिणि । खगे
॥ वाणे ॥ वाजा पक्षा ' सन्त्य
स्य । अतङ्गनि : । पूर्वंह्यश्वा स
पक्षाआसन् । तथाचशालिहोत्र
म् । सपक्षावाजिन . पूर्वंसञ्ज्ञा
ताव्योमचारिण : गन्धर्वैश्चैययथा
कामगच्छन्तिचसमन्ततइति ॥
अवश्यंव्रजति । व्रजगतौ । आव
श्यकेणिनिर्वा ॥
वाजिनम् । न॰ आमिक्षाजले ॥ घ
नीभूत. पिण्डआमिक्षा॰ जलवा
जिनमितिव्यवहारात् ॥
वाजिनी । स्त्री॰ अश्वगन्धायाम् ॥
अश्वायाम् । वडवायाम् ॥
वाजिपृष्ठ । पुं॰ अम्लानवृक्षे ॥
वाजिभक्ष ।)
वाजिभक्ष्य ।) पुं॰ चणके ॥ वाजि
नोभक्ष्य . ॥
वाजिभोजन । पुं॰ मुद्गे ॥

वाजिमान । पुं॰ पटोले ॥
वाजिवाहन । पु॰ गन्धर्वे ॥
वाजिशाला । स्त्री॰ मन्दुरायाम् । घ
डशाल॰ इ॰ भा॰ ॥ वाजिना
शाला ॥
वाजीकर । त्रि॰ वाजीकरणे ॥
वाजीकरणम् । न॰ वीर्यवर्धकद्र
व्ये ॥ येनस्त्रीषुविषयेवाजीवनर '
सामर्थ्यंप्राप्नोति । अस्यलक्षणन्तु ।
यद्द्रव्यंपुरुषकुर्यात्वाजिवत्सुरत
क्षमम् । तद्वाजीकरमाख्यातमुनि
भिर्भिषजांवरैरिति॥ वाजीकरणत
न्त्रंनाम॰ अदुष्टविशुष्कक्षीणरेत
साम्प्यायनप्रसादोपचयजननिनि-
मित्तंप्रहर्षजननार्थंचेतिसुश्रुत: ॥
विधिमाह । नरोवाजीकरान यो
गान्सम्यक्शुद्धोनिरामय ' । स
मन्नक्तंप्रकुर्वीतवर्षादूर्द्ध्वन्तुषोडशा
त् ॥ नचवैषोडशादर्वाक्सप्तत्या
परतोनच । आयुष्कामोनर : स्त्री
भि ' संयोगकर्त्तुमर्हति ॥
वाञ्छनम् । न॰ वाञ्छायाम् ॥
वाञ्छा । स्त्री॰ इच्छायाम् । काङ्
क्षायाम् । स्पृहायाम् । वाञ्छ
नम् । वाञ्छिइच्छायाम् । गुरोश्च
हल ' । टाप ॥ आत्मवृत्तिगुणवि
शेषइतिनैयायिका । साद्विविधा
॥ यथा । उपायविषयिणी॰ फल
विषयिणीवा । फलंसुखंदु ' खा

भावच । तच॰ फलेच्छाप्रतिफल ज्ञानं कारणम् । उपायेच्छाप्रति॰ इष्टसाधनताज्ञानं कारणमितिसि- द्धान्तमुक्तावली । ननाकपृष्ठनच सार्वभौमनपारमेष्ठ्य नरसाधिपत्य म । नयोगसिद्धीरपुनर्भववावा ञ्छन्तितत्पादरज प्रपन्ना ॥

वाञ्छितम । त्रि॰ अभिलषिते ॥

वाञ्छिनी । स्त्री॰ वाञ्छनीयायाना र्याम् । लञ्जिकायाम् । कलतू लिकायाम ॥

वाट । पुं॰ पथि । मार्गे ॥ वृत्ति स्थाने । वृत्तौ । वाड॰ द्रू॰ भा॰ ॥ न॰ वरण्डे ॥ अङ्गे ॥ अन्नप्रभे दे ॥ पुष्पादिवाटिकायाम् ॥

वाटधन । पु॰ भूर्जकण्टकोद्भस ङ्कीर्णजातौ ॥

वाटरम् । न॰ मधुविशेषे ॥ वटरे . क्षतम् । क्षुद्राभ्रमरवटरेत्यञ् ॥

वाटशृङ्खला । स्त्री॰ पथरोधकशृङ्ख लायाम्, लभायाम् ॥

वाटिका । स्त्री॰ हिङ्गुपत्र्याम् ॥ कु ट्याम् ॥ वास्तुनि ॥ वाट्यालके ॥ गृहोद्याने ॥ वञ्चते । वटवेष्टने । सञ्ज्ञायामितिण्वुल् । टाप् । प्र त्ययस्थादितीत्वम् ॥

वाटी । पु॰ वाट्याले ॥ त्रि॰वेष्टित- स्थले ॥

वाटी । स्त्री॰ कुट्याम् ॥ वास्तौ ॥ गृ- होद्याने । पूगपुष्पादिलतोपवने ॥ वाट्यालके ॥

वाटीदीर्घ । पुं॰ इत्कटवृक्षे ।

वाट्टकम् । न॰ भृष्टयवे ॥

वाट्यपुष्पी । स्त्री॰ वाट्यालके ॥

वाट्या । स्त्री॰ बलायाम् । वरिष्या- रा॰द्रू॰भा॰ ॥

वाट्याल । पु॰ वाट्यायाम् ॥

वाट्यालक । पुं॰ क्षुपविशेषे । वा ट्यायाम् ॥ वाटीमलति । अलभू षणादौ । कर्मण्यण् । स्वार्थेकन् । वालुवा ॥ वाट्यावालकोवा ॥

वाट्याली । स्त्री॰ वाट्यालके ॥

वाड । पु॰ वेष्टने ॥

वाडव । पु॰ ब्राह्मणे ॥ वडवानले ॥ न॰ स्त्रीणांकरणे ॥ घोटकौघे ॥ पुं॰ न॰ पाताले ॥ वडवायां भव । तत्रभवइत्यण् ॥ वडवा यांजात । तत्रजातइत्यण्वा ॥ वडवानांसमूह । खण्डिकादि भ्यश्चेत्यञ् ॥

वाडवाग्नि । पुं॰ वाडवाग्नौ ॥ वा डवश्चासावग्निश्च ॥

वाडवाग्र्य । पुं॰ ब्राह्मणश्रेष्ठे ॥

वाडवेय । पु॰ अश्विनीसुते ॥ बीजा श्वे ॥ वडवायाअपत्य । वडवा याअपत्ये॰इतिढक् ॥

वाडवेयौ । पु॰ द्विवचनान्त : नासत्य यो : ॥

वाडव्यम् । न० विप्रवृन्दे ॥ वाडवानांसमूहः । ब्राह्मणमाणववाडवाद्यन् ॥ वाडवतायाम् ॥ वाडवस्यकर्मभावो वा । ब्राह्मणादित्वात्ष्यञ् ॥

वाड्वलि । पु० बाभ्रवादस्यापत्ये ॥ अपत्ये० अतइञ् । वाचो वादेङ्च बल्भावश्चोत्तरपदस्येञि ॥

वाढम् न० दृढे । भृशे । अतिशये ॥ प्रतिज्ञायाम् ॥ त्रि० अतिशयिनि ॥ आविष्टके ॥ वाहते । वाहृप्रयत्ने० ओष्ठ्यादि । गत्यर्थेतिक्त प्रत्यये० क्षुब्धस्वान्तेतिनिपातितम् ॥ उह्यतेस्म वा । वहप्रापणे । क्त । क्षुब्धस्वान्तेतिसाधुः ॥

वाढम् । अ० स्वीकारे । अङ्गीकृतौ ॥

वाण । पु० काण्डे । शरे । पृषत्के । विशिखे । अजिह्मगे । खगे । कलम्बे । मार्गणे ॥ गोस्तने ॥ केवले ॥ अग्नौ ॥ शरस्यावयवे ॥ वृक्षविशेषे ॥ भद्रमुञ्जे ॥ दैत्यविशेषे । बलेर्ज्येष्ठपुत्रे ॥ कविवरे ॥ मुञ्जे ॥ नीलझिण्ट्याम् ॥ ध्वनौ ॥ त्रि० ध्वनियुक्ते ॥ वाणयति० रोषमुत्पादयतिशत्रुम् । वणशब्दे । स्वार्थेणन्त । पचाद्यच् ॥ वण्यते । कर्मणिघञ्वा ॥ वाणनम् । भावेघञ्वा ॥ वाणः शब्दोऽस्त्यस्य । अर्शआद्यज्वा ॥

वाणगङ्गा । स्त्री० रावणवाणनिर्भिन्नसोमेश्वरगिरिप्रभवनदीविशेषे ॥ यथा । सोमेशाद्दक्षिणेभागेवाणेनाद्रिं विभिद्यवै । रावणेनप्रकटिताजलधारातिपुण्यदा ॥ वाणगङ्गेतिविख्यातायास्नानादघहारिणी ॥ स्नात्वातुवाणगङ्गायां दृष्ट्वावाणे-श्वरंविभुम् । गङ्गास्नानफलंप्राप्य मोदतेदेववद्दिवि ॥

वाणदण्ड । पुं० वापदण्डे । वेमनि ॥

वाणपुङ्खा । स्त्री० शरपुङ्खायाम् ॥

वाणपुरम् । न० देवीकोटे । शोणितपुरे ॥ वाणस्यअसुरविशेषस्य पुरम् ॥

वाणभट्ट । पु० ग्रन्थकारविशेषे ॥

वाणयुद्धम् । न० वाणासुरेणसहश्रीकृष्णस्ययुद्धे ॥ शरैर्युद्धे ॥

वाणलिङ्गम् । न० नर्मदानद्युद्भवशिवलिङ्गे ॥ यथा । नर्मदाजलमध्यस्थं वाणलिङ्गमितिस्मृतम् । वाणलिङ्गंस्वयम्भूतंचन्द्रकान्ताद्वयस्थितम् ॥ चान्द्रायणशतकार्यैशक्तोनैवेद्यभक्षणात् । ग्राह्याग्राह्यविभा-गीयवाणलिङ्गेनविद्यते ॥ तदर्पितजलवाञ्छ ग्राह्य प्रासादसञ्ज्ञया । शिवनाममयलिङ्गंसदापूज्यंमह-र्षिभिः ॥ यतश्चसर्वलिङ्गेभ्यस्त-द्धिपूज्यतमंमतम् । चतुरङ्गुल

मुक्तायस्य वेदिकयायुतम् ॥ उत्तम लिङ्गमाख्यातपञ्चसूत्रसुसाधितम् । तदर्धमध्यमप्रोक्तंतदर्धमवरस्मृतम् ॥ तस्मान्न्यूनपूजनीय मकदापिनतत्फलम् ॥ रुद्राच शिवलिङ्गस्यस्थूलस्थूलप्रशस्यते । शालग्रामेनामंदृग्वसूक्ष्मसूक्ष्मोविशिष्यते ॥

वाणवार । पु० भटादेर्घोलाकृतिसन्नाहे । वारबाणे । चोलकै ॥

वाणवारक । पु० कञ्चुकै । वाणस्य वारकः ॥

वाणसुता । स्त्री० ऊषायाम् ॥ वाणस्यसुता ॥

वाणहा । पु० विष्णौ ॥

वाणा । स्त्री० वाणमूले । पु० स्त्री० नीलझिण्टाम् ॥ वण्यते । वणभ्वे । कर्मणिघञ् ॥

वाणाख्य । पुं० मुञ्जे ॥ वाणइत्याख्यास्य ॥

वाणाश्रय । पुं० धनुषि ॥

वाणासनम् । न० धनुषि ॥

वाणि । स्त्री० वस्त्रादेर्वयनक्रियायाम् । ब्यूतौ ॥ वयने ॥ वायदण्डे ॥ अम्बुदे ॥ मूल्ये ॥ सरस्वत्याम् ॥ वाणनम् । वण० । चुरादि । अचइ ॥

वाणिनी । स्त्री० मत्तंक्याम् ॥ मत्तांगनायाम् ॥ विदग्धवनितायाम् ॥ अवश्यवणति । वण० । आवश्यकेतियच्छादित्वाद्गणिनि ॥ अष्टिसञ्ज्ञकछन्द १६ प्रभेदे ॥ नजभजरैर्यदाभवतिवाणिनीगयुक्तैः ॥ यथा । स्फुरतुममाननेऽयनतुवाणिनीतिरम्य तवचरणप्रसादपरिपाकतः कवित्वम् । भवजलराशिपारकारणमममुकुन्दसततमस्तवे स्वरचितेस्तवानिनिश्चम् ॥

वाणी । स्त्री० सरस्वत्याम् । भारत्याम् ॥ वायक्रियायाम् । व्यूतौ ॥ वचने ॥ वण्यते । वण० । सर्वधातुभ्यइन्निति० इन् । कृदिकारादक्तिनइतिङीष् ॥

वातः । पुं० पवने । श्वसने । वायौ ॥ निमित्तभेदेनास्यगुणायथा । व्यजनस्यानिलस्त्वाखेदमूर्च्छाश्रमापहः ॥ तालवृन्तभवोवातस्त्रिदोषशमनोमतः ॥ वंशव्यजनजः सोष्णोरक्तपित्तप्रकोपनः । चामरोत्थस्सम्भूतोमायूरोवेत्रजस्तथा ॥ एतेदोषजितावाता स्निग्धोह्यास्तुपूजिता । वाति । वागतिगन्धनयोः । हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्निति तन् ॥ स्वातिनक्षत्रे ॥ रोगविशेषे ॥ हेमन्तवर्षाशिशिरेषुवायोः प्रकोपोभवति । यत । मार्गेपौषेतथामाघेआषाढेश्रावणेपिच । भाद्रेमासिविशि

स्याच्च वीतीराजाप्रकीर्त्तितद्रुति ॥
वातकः। पुं० शीतले। अपराजि
तायाम्। शणपर्ण्याम ॥ वातक
रोति। डुकृञ्०। अन्येभ्योपी
तिड ॥
वातकर्म्म। न० मरुत्क्रियायाम।
पर्द्दने ॥
वातकी। त्रि० वातरोगयुक्ते। वात
रोगिणि ॥ वातोऽतिशयितोऽस्य।
वातातीसाराभ्यांकुक्चेतीनि ॥
वातकुम्भ। पुं० गजकुम्भाधोभागे ॥
वातकेतुः। पुं० पांशौ। धूलौ ॥
वातकेलिः। पुं० कलालापे। चर्चरी
के ॥ विड्गदन्तपते ॥
वातखुडा। स्त्री० वात्यायाम् ॥ पि
च्छिलस्फोटे ॥ वामायाम् ॥ वात
शोणिते ॥
वातगुल्मः। पुं० वातूले बवण्डर०
बवूला० इतिभाषाप्रसिद्धे ॥
वातघ्नम्। न० तैले ॥ त्रि० वातना
शकर्त्तरि ॥ वातहन्ति। हन० अ
मनुष्यकर्तृकेचेतिटक् ॥
वातघ्नी। स्त्री० अश्वगन्धायाम् ॥ शा
लपर्ण्याम् ॥ शिमडीक्षुपे ॥
वातचक्रम्। न० आषाढ्यावायुविचारे
॥ तच्चोक्तं वाराहीभट्टोत्पलेन। य
था। आषाढपौर्णमास्यान्तुयद्येशा
नोनिलोभवेत्। अस्तं गच्छतितो
प्यांशौसस्यसम्पत्तिरुत्तमा ॥ पूर्वं

पूर्वसमुद्रवीचिशिखरप्रस्फालनाघू
र्णितश्चन्द्रार्कांशुसटाकलापकलि-
तोवायुर्यदाकाशत। नैकान्तस्थि
तनीलमेघपटलाशारदसवर्द्धिताचा
सन्तोत्कटसस्यमण्डिततलासर्वा
महीशोभते ॥ यदाग्नेयोवायुर्दहतिम
गनेखण्डिततनु. प्रवृत्यस्मिन्भूयोग्नि
भगवतिपतङ्गे प्रवसति। तदाग्नि
ज्वालाज्वलनशिखरालिङ्गिततला
क्षणेनाप्मोच्छ्वासैर्वमतिवसुधाभस्म
निकरम् ॥ तालीपत्रलतावितान
तरुभि शाखाम्रगान्नर्त्तयन्योगेस्मि
न्प्रवतिध्वनि' सुपरुषोवायुर्यदाद
क्षिणः'। तद्दोगसमुत्थितस्तुगज
वत्तालाङ्कुशैर्घट्टिताः क्षीनाशा
इवमन्दवारिकणिकामुञ्चन्तिमेघा
स्तदा ॥ सूक्ष्मैलालवलीलवङ्गनि
चयान्व्याघूर्णयन्सागरेभानोरस्त
मयेप्रवत्यविरतोवायुर्यदानैर्ऋतः
। क्षुत्तृष्णान्तमानुषास्थिशकल
प्रस्तारभारच्छदामत्ताप्रेतवधूरिवी
यचपलाभूमिस्तदालक्ष्यते ॥ (*)
यदारेणूत्पाते. प्रविचलसटाटोप
चपलः प्रवातः' पश्चार्द्धे दिनकर
करापातसमये। तदासक्षोपिताप्र
वरनिकरावद्धसमराक्षिति स्थान
स्थानेष्वविरतवसामांसरुधिरा ॥
आषाढीपर्वकालेयदिकिरणपतेर
स्तकालोपपन्नो वायव्योवहवेगः

पवनघनवपु . पन्नगार्थानुकारी ।
जानीयाद्वारिधाराप्रमुदितमुदितां
मुक्तमण्डूककण्ठोंसद्योल्लासैकवि
ह्लांमुखबहुलतया भाव्यसेनामिवो
र्वीम् ॥ मेरुग्रस्तमरीचिमण्डलत
सैग्रीष्मावसानेरवौ वात्यामोदिक
दम्बगन्धसुरभिर्वायुर्यदाचोत्तर : ।
विद्युद्भ्रान्तिसमस्तकान्तिकलना
भ्रमत्तास्तदातोयदाउन्मत्ताद्भवनष्टच
न्द्रकिरणागांपूरयन्त्यम्बुभि ॥
इतिवातचक्रनामाध्याय । २७ ॥
हस्तायामाषाढ्याङ्कष्णचतुर्थ्यामजै
कपादर्चे । यदिवर्षतिपर्जन्य .
प्रावृट्शस्तानचेन्नतत ॥

वातचटक । पुं॰ वार्त्तिकखगे ।
बटेर॰ इ॰ भा॰ ॥

वाततूलम् । न॰ मरुद्ध्वजे । वृद्धसू
चे । आकाशे॰ उड्डीयमानसूत्रे ।
ग्रीष्महासे ॥

वातचुडा । स्त्री॰ वातखुडा
र्थे ॥

वातध्वज . । पुं॰ मेघे ॥

वातपित्तजशूलम् । न॰ शूलरोगवि
शेषे ॥ तस्यौषध यथा । मातुलुङ्ग
स्यनिर्यास गुडाढ्येनसमन्वितम ।
वातपित्तजशूलानिहन्तिवैपानयो
गत ॥

वातपुत्र : । पुं॰ महाधूर्त्ते ॥ भीमसे
ने ॥ हनूमति ॥

वातपोत । )
वातपोतक . । ) पुं॰ पलाशे ॥

वातपोथ । पुं॰ पलाशे । किंशुके
। पर्णे । वैसू॰ इ॰ भा॰ प्र॰ वृक्षे
॥ वात पोथयति । पुथहिंसायाम्
। कर्मण्यण् ॥

वातप्रमी । पु॰ स्त्री॰ वातमृगे । वा
ताटहरिणे । नि शृङ्गमृगाकृतौ
॥ वात प्रमिमीते॰ वाताभिमुख
धावनात् । माङ्माने । वातप्रमी
रुणादिसूत्रेणमाङ्ईप्रत्यय . कित्
। स्त्रीत्वेकृदिकारादितिवाङीषित्य
के । अन्येतुकारग्रहणस्तत्परार्थ
त्वाद्दीर्घान्तान्ङीष्नेत्याहु नहि
कारग्रहणं केवल ग्रहणमितिमुनि
त्रयेणपरिभाषितम् । अतएव॰
वातप्रमीश्रीलक्ष्मीतिपद्येऽन्ता॰
सुसाधवद्धतिरचित॰ ॥ अश्वे ॥
नकुले ॥

वातफुल्लान्त्रम् । न॰ पुप्फुसे

वातमज । पुं॰ वातप्रमी । वाताट
हरिणे ॥ वातमजति । अजगति
क्षेपणयो । वातशुनीतिलक्षणे
ष्वजधेटतुदजहातिभ्यउपसङ्ख्या
नमितिखश् । अरुर्द्विषदितिमु
म् ॥

वातमजा । स्त्री॰ वातमृग्याम् ॥

वातमण्डली । स्त्री॰ वायुसहतौ ।
वात्यायाम् ॥

वातमृग । पुं॰ वातमजे । वातप्रमी ॥ वातद्रव॰ वातस्यवामृग ॥

वातरक्तम् । न॰ रोगविशेषे ॥

वातरक्तघ्न । पु॰ कुक्कुरे । ग्रन्थिपर्णे ॥

वातरक्तारि । पु॰ पित्तघ्नाम् । गुडूच्याम् ॥

वातरङ्ग । पु॰ अश्वत्थे ॥

वातरथ । पु॰ मेघे ॥ वातोरथोऽस्य ॥ गन्धे ॥

वारशन । त्रि॰ दिग्वाससि । दिगम्बरे ॥

वातरायण: । पुं॰ उन्मत्ते ॥ निष्प्रयोजनपुरुषे ॥ काण्डे । सायके ॥ करपत्रे । क्रकचे ॥ कूटे ॥ शरसङक्रमे ॥ परसङ्क्रमे॰ इ॰ मेदिनी ॥ सरलद्रुमे ॥

वातरूष । पुं॰ वातूले ॥ शक्रकार्मुके ॥ उत्कटे । इ॰ मेदिनी ॥ उत्कोचे । इ॰ हेमचन्द्र ॥

वातरोग पुं॰ वायुव्याधौ । चलातङ्के । अनिलामये ॥

वातरोगी । त्रि॰ वातरोगयुक्ते । वातकिनि ॥ वातरोगोऽस्यास्ति । इत्यहोपतापेतीनि ॥

वातर्षि । पुं॰ काष्ठलोहोभयनिर्मितपात्रे । काष्ठलौह्याम् ॥

वातल: । पुं॰ चणके ॥ त्रि॰ वायुकारके ॥ वातलाति । ला॰ । क ॥

वातलमण्डली । स्त्री॰ वात्यायाम् ॥

वातवैरी । पु॰ वाताटे ॥ त्रि॰ वातहरे ॥ वातस्यवैरी ॥

वातव्याधि । पुं॰ वातरोगे । कृष्णामलिथि । उद्भवे ॥

वातशीर्षम । न॰ वस्तौ ॥

वातशोणितम् । न॰ वातरक्तरोगे ॥

वातष्ठीला । स्त्री॰ वातव्याधिविशेषे ॥ यथा । नाभेरधस्तात्सञ्जात: सञ्चारीयदिवाचल: । अष्ठीलावद्घनोग्रन्थिरूर्ध्वमायतमुन्नत । वातष्ठीलांविजानीयाद्बहिर्मार्गनिरोधिनीम् ॥

वातसह । त्रि॰ अत्यन्तवायुयुक्ते ॥ वातूले ॥

वातसारथि: । पु॰ अग्नौ ॥

वातस्कन्ध: । पुं॰ आकाशस्यभागविशेषे ॥

वातहा । त्रि॰ वातघ्ने । वायुनाशकौषधौ ॥

वातहुडा । स्त्री॰ वातयुडायाँ ॥

वातज्ञ । पु॰ वायुग्रस्ताङ्गे ॥ वातज्ञ पारदारिक ॥

वाताट । पु॰ सूर्यघोटके । वातमृगे ॥

वाताण्ड । पु॰ मुष्करोगविशेषे ॥ तल्लक्षणंयथा । कुपथोदूषयेद्वायुर्मेघ्मणायस्यसंवृत. । तस्यामुष्कस्यशल्येकोरोगोवाताण्डसञ्ज्ञक ॥

वातात्मज । पु॰ हनुमति ॥

वाताद । पुं० वदामपादपे । मेचो पमफले ॥ वातादउष्णः सुस्निग्धो वातघ्नः शुक्रकृद्गुरुः । वातादमज्जा मधुरो वृष्यः पित्तानिलापहः ॥ स्निग्धोष्णः कफकृन्नेष्टो रक्तपित्तविकारिणाम् ॥ वातमत्ति । अद० । कर्मण्यण् ॥

वाताध्वा । पुं० वातायने ॥

वातापिः । पुं० इल्वलभ्रातर्यसुरविशेषे । वातमाप्नोति । आप्नु० । फलिग्रहिरात्मम्भरिश्चेतिचकारादिन् ॥

वातापिद्विट् । वातापिसूदन । वातापिहा । } पुं० अगस्त्यमुनौ ॥

वाताम : पुं० वातादे ॥

वातायन : । पुं० एकशफे । अश्वे । हये ॥ न० गवाक्षे ॥ ईयतेऽनेन । ऋण्० । करणेल्युट् वातस्यायनम् ॥ त्रि० शीघ्रगे ॥

वातायु : । पुं० मृगे । कुरङ्गे । हरिणे ॥ वातमयते । अय० । वाहुलकादुण् ॥

वातारि : । पुं० रक्तैरण्डे ॥ सयथा । वातारिवीजं प्रस्थञ्च चतुष्पक्वं निस्तुषीकृतम् । क्षीरद्रोणार्द्धसंयुक्तं भिषक् मन्दाग्निनापचेत् ॥ घृतप्रस्थार्द्धसंयुक्तं खण्डप्रस्थद्वयं क्षिपेत् । त्र्यूषणञ्चचतुर्जातग्रन्थिकवह्निचिवकम् ॥ छवामिसीशटीविल्वदीप्यमौरीनिशायुगम् । अश्वगन्धाबलपाठाहपुषावेरपौष्करम ॥ श्वदंष्ट्रा स्वधादारुवेल्लजवालकवरी । एतानिपिचुमात्राणिचूर्णयित्वाविनि. क्षिपेत् ॥ वातव्याधिसशूलञ्च राजयक्ष्मातथोदरम् । आनाहवर्ध्मगुल्मञ्चआमवातकटिग्रहम् ॥ जरुग्रहं तथाहिध्माश्वासकासहृदामयान् । अर्दितार्दं पविश्वाचीगृध्रसीमपतन्त्रकम् ॥ पक्षाघातपाण्डुवातभङ्गं दण्डापतानकम् । मन्यास्तम्भहनुस्तम्भं नाशयेदपिवेगतऽ इति ॥ पुत्रदात्रीलतायाम् ॥ यवान्याम् ॥ शेफालिकायाम् ॥ स्नुह्याम् ॥ भार्ग्याम् ॥ विडङ्गे ॥ शूरणे ॥ भल्लातके ॥ जतुकायाम् ॥ शतमूल्याम् ॥

वातालो । स्त्री० वातसंहतौ । वात्यायाम ॥

वाताश्व । पुं० कुलीनाश्वे । हयोत्तमे । जात्ये । आजानेये ॥

वातासह । त्रि० वातूले ॥

वाति । पुं० अनिले । वायौ ॥ सूर्ये ॥ सोमे ॥ वाति । वागतिगन्धयो । क्तिच् । वातेर्नित्यत्वात्तिर्वा ॥

वातिक : । पुं० कायुजव्याधौ । न० वातस्यशमने । वातस्यकोपने ॥ वातपित्तश्लेष्म : शमनकोपनयो

रूपसङ्ख्यानमितिठञ् ॥

वातिग . । पु० भण्टाक्याम् ॥ त्रि० धातुवादिनि ॥

वातिगम । पुं० वार्त्ताकौ ॥

वातिङ्गण: । पु० वार्त्ताकौ । भण्ट० भटा०कू०च०प्र०फलशाके ॥

वातीयम् । न० काञ्जिके ॥

वातुल: । पुं० वात्यायाम् ॥ त्रि० वायुरोगिणि ॥ वातसुखसेवनयोर दृत्त । वाहुलकादुलच् ॥ उन्मत्ते ॥

वातुलि: । स्त्री० सरुतूलिकायाम् । वादुड०दू०भा० ॥

वातूल . । पुं० वात्यायाम् ॥ त्रि०वातासहे । मारुतासहे ॥ वातानांसमूहः । वातनसहतेवा । वातात् समूहेचेत्यूल: । चात्तदसहने ॥ यद्वा । वाता: सन्त्यस्मिन्नृषा । सिध्मादित्वाल्लच् । वातदन्तबलललाटानामूङ्चेत्यूङ् ॥ उन्मत्ते ॥

वाता । पुं० वाते ।' वाति । वागति गन्धनयो: ॥ तृच ॥

वातोना । स्त्री० गोजिह्वाक्षुपे ॥ त्रि० वायुहीने ॥

वातोर्म्मी । स्त्री० त्रिष्टुप्छन्द: ११ प्रभेदे ॥ तल्लक्षणादियथा । वातोर्मीयंगदिताम्भौतगौग: । यथा ॥ ध्यातामूर्त्ति . क्षणमप्यच्युतस्यश्रेणीनाम्नागदिताक्लेयापि । ससा ऽऽस्निग्धदुरितंहन्निपुंसावातोर्म्मी पोतमिवाम्भोधिमध्ये ॥

वात्या । स्त्री० वातसमूहे । वातालीम् ॥ वातानांसमूहः । पाशादिभ्यो य: ॥

वात्सकम् । न० वत्सानांवृन्दे । वत्सा नांगणे ॥ वत्सानांसमूहः । गोत्रोक्षोष्ट्रेतिवुञ् ॥

वात्सल्य: । पुं० रसविशेषे ॥ न०प्रेम्णि ॥ त्रि०तद्वति ॥

वात्सल्यता । स्त्री० कृपालुत्वे ॥

वात्सीपुत्र: । पुं० नापिते ॥

वात्स्य: । पुं० मुनिविशेषे ॥ वत्सस्य गोत्रापत्यम् । गर्गादिभ्योयञ् । बहुत्वे ०वत्सा: । यञञोश्चेतिलुक् ॥

वात्स्यायन ' । पुं० शब्दादयोविषया भूयोभूयोभुज्यमानास्तत्त्वमितिकल्पनापरेकऋषिविशेषे । मल्लनागे । पक्षिले । स्वामिनि ॥

वाद . । पुं० यथार्थबोधेच्छोर्वाक्ये ॥ अरिविजिगीषोर्द्वयो: कथायाम् ॥ व्यक्तवाक्ये ॥ भगवद्विभूतिविशेषे ॥ यथोक्तंभगवद्गीतायांवाद: प्रवदतामहमिति । अस्यार्थ: । प्रवदतावादिनांसम्बन्धिन्योवादजल्पवितण्डाख्यास्तिस्र ' कथा: प्रसिद्धा:० तासामध्येवादोऽहम । यत्त्वाभ्यामपिप्रमाणतर्काभ्यांस्वपक्ष:

स्थाप्यते॰ परपक्षश्छलजातिनिग्रह स्थानैर्दूष्यते स जल्पो नाम। यत्वे कः स्वपक्षं स्थापयति॰ अन्यस्तु॰ छलजातिनिग्रहस्थानैस्तत्पक्षं दूषयति॰ न तु स्वपक्षं स्थापयति॰ सा वितण्डा नाम कथा तत्र जल्पवितण्डे विजिगीषमाणयोर्वादिनोः शक्तिपरीक्षामात्रफले॰ वादस्तु वीतरागयोः शिष्याचार्ययोरन्ययोर्वा तत्त्वनिरूपणफलः। अतोऽसौ श्रेष्ठत्वादादौ भूतिरित्यर्थः॥ इति श्रीधरस्वामिनः॥ अस्य लक्षणं गौतमोक्तं यथा। प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः॥ १। ४१॥ अत्र च॰ वाद इति लक्ष्यनिर्देशः॰ पक्षप्रतिपक्षौ विप्रतिपत्तिकोटी॰ तयोः परिग्रहस्तत्साधनो द्देश्यकोक्तिप्रत्युक्तिरूपवचनसन्दर्भः तावन्मात्रञ्च कथान्तरसाधारणम् तत्राह॰प्रमाणेत्यादि। प्रमाणतर्काभ्यां तद्रूपेण ज्ञाताभ्यां साधनोपालम्भौ यत्र स तथा। उभयत्रापि प्रमाणादिसद्भावकोटिद्वयस्यापि सिद्धिः स्यादतस्तद्रूपेण ज्ञाताभ्यामिति। ज्ञानमनाहार्यं विवक्षितम्॰ उपालम्भो दूषणम्॰ जल्पादौ तु प्रमाणाभासत्वादिना ज्ञाताभ्यामपि साधनोपालम्भौ भवत इति तद्वारणं तथा॰ इतरथा तु तद्धेतोरेव दुष्टत्व



म्॰ इत्यत्र च प्रमाणाभासत्वप्रकारकज्ञानविषयकरणकसाधनोपालम्भयोग्यान्यत्वे सतीत्यर्थः। तेन तादृशजल्पविशेषेणातिव्याप्ति। तच्च निग्रहस्थानविशेषनियमार्थं सिद्धान्तेत्यादिविशेषणद्वयम् अन्ये तु तदपि लक्षणघटकमेव॰ तदर्थश्च॰ तावन्मात्रनिग्रहस्थानयोग्यत्वम्॰ तावदतिरिक्तनिग्रहस्थानोपन्यासायोग्यत्वं वा॰ निग्रहस्थानप्रतिज्ञाहान्यादीनामेकं धृत्वा॰ तदुपन्यासायोग्यत्वमिति निष्कर्षः। तेनोक्तजल्पविशेषवारणमित्याहुः। सिद्धान्ताविरुद्ध इत्यनेनापसिद्धान्तोद्भावनम्॰ पञ्चावयवोपपन्न इत्यनेन न्यूनाधिकोद्भावने। अवयवाभासस्य दृष्टान्तासिद्ध्यादेश्चोद्भावनम्॰ प्रमाणेत्यनेन च प्रमाणाभासत्वेन हेत्वाभासानां तर्काभासस्य चोपन्यासो नियम्यते तथा चात्र हेत्वाभासन्यूनाधिकापसिद्धान्तरूपनिग्रहस्थानचतुष्टयोद्भावनमिति वदन्ति। वस्तुतस्तु वादस्य वीतरागकथात्वेन॰ तत्त्वनिर्णयस्योद्देश्यतया पुरुषदोषस्याविज्ञातार्थादेरिव न्यूनाधिकयोरपि नोद्भावनमुचितम्। अत एव पञ्चावयवावश्यकत्वमपि भाष्यकारेण नानुमेने। हेत्वाभासोद्भावनेनापि च तदेव कथाविच्छेदाय हि हेत्वन्तरेणापि साधयितुं नय

क्यते॰ इतरथातु तदूर्ध्वं तेरेवदुष्टत्वम् । इत्थञ्चपञ्चावयवोपपन्नइतिप्रायिकत्वाभिप्रायेणेतितत्त्वम् । वादाधिकारिणस्तुतत्त्वबुभुत्सवः॰ प्रकृतीतिका : ॰ अविप्रलम्भका . ॰ यथाकालस्फूर्त्तिका : ॰ अनाक्षेपका : युक्तिसिद्धप्रत्येतार · । अनुविधेयश्चेय · सभ्यपुरुषवतीजनतासभा अनुविधेयो राजादि · स्थेयान्मध्य · सावद्यादेनावश्यकोवीतरागकथात्वाद्दिति ॥ १ । ४१ ॥ अपिच । वादफलश्चतत्त्वनिर्णयस्तदुर्दुरूढवादिनिराकरणेन॰ संरक्षणार्थं विजगीषुकथे जल्पवितण्डे॰ जयपराजयमात्रपर्यन्ते । तदुक्तम् । तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखाप्रावरणवदिति ॥ छलजातिनिग्रहस्थानै . परपक्षोदूष्यते॰ इतिजल्पे वितण्डायाञ्चसमानम् । तत्रवितण्डायांमेकेनस्वपक्षस्थाप्यतएव॰ अन्येनचसदूष्यतएव । जल्पे तु॰ उभाभ्यामपिस्वपक्ष स्थाप्यते ॰ उभाभ्यामपिपरपक्षोदूष्यतइतिविशेष : । तदुक्तम् । यथोक्तोपपन्नश्छलजातिनिग्रह स्थानसाधनोपालम्भोजल्पः ॥ १ । ४२ ॥ सप्रतिपक्षस्थापनाहीनोवितण्डेति । १ ॥ ४३ ।



अतोवितण्डादय शरीरतुल्वाज्जल्पोनामनैककथा॰ किन्तुशक्त्यतिशयज्ञानार्थंसमयबन्धमात्रेणप्रवर्त्ततइतिखण्डनकारा : ॥ तत्त्वाध्यवसायपर्यवसायित्वेनतुवादस्य श्रेष्ठत्वमेव ॥ सङ्घातादिवादेषु ॥ तेचोक्तारामगोतोत्सवेयथा । सङ्घातवादोलोकायतिकानांनास्तिकानाम् । अनादीश्वरिकेलोकेनेश्वरादिरपेक्ष्यते । प्रत्यक्षसङ्घातभेदशक्तिभि : सर्वसिद्धित : ॥ यथोप्रधानांसङ्घातेमादोरागोरसायनम् । तथैवभूतसङ्घाते चैतन्यकान्यजीवता ॥ १ ॥ यथाचारम्भवादस्तार्किकाणामीमांसकानाञ्च । आत्माकाशाणुसुखत : कारणंपूर्वमिष्यते । कुलालादिवदण्डस्तुघटवज्जन्मनाशभाक् ॥ पृथिव्यम्भोग्निवायूनाकर्मसयोजिताणव · । दाण्वादिक्रमेणाण्डमारभन्तइदमहत् ॥ २ ॥ यथाचपरिणामवाद· साङ्ख्यपातञ्जलपाशुपतानाम् । गुणसाम्यप्रधान स्याद्गुणा : सत्त्वरजस्तम. । सुखदु · खमोहरूप इष्यतेहिस्फुटजगत् ॥ प्रधानस्यान्महान्सोऽहङ्कारोऽसौषोडशात्मना । जायतेपञ्चतन्मात्राण्यक्षाण्येकादशापिवत् । तन्मात्राणितुभूतानिजायन्तेतत्रसङ्ख्यया । चतुर्विंशति

रेतानितथात्मापञ्चविंशति : ॥ स
देवकार्यमुत्पत्ते : पूर्व्वं कारकरूप
कम् । आविर्भावतिरोभावौजन्म
नाशावुदीरितौ ॥ ३ ॥ यथाचजी
वोत्पत्तिवाद : पाञ्चरात्राणाम् ।
ब्रह्मणोवासुदेवाख्याज्जीव : सङ्कर्ष
णाभिध : । जायतेचमनस्तस्मात्प्र
द्युम्नाख्यतत : पुन : ॥ अहङ्कारोऽ
निरुद्धाख्यस्तत्त्वारोविश्वरूपका ।
वासुदेवाराधनार्थं जायतेवन्धमोक्ष
णम ॥ ४ ॥ यथाचक्षणिकविज्ञा
नातिरिक्तभावाभाववादोवौद्धाना
म् । विज्ञानबुद्धिरितिनार्थान्तर
म् । यदन्तर्ज्ञेयतत्त्व तदहिर्वदव
भासते । स्वप्नवज्जागरेसुप्तावभाव.
स्फुटएवहि ॥ ५ ॥ यथाचवाह्या
स्तित्ववादोवौद्धैकदेशिनाम् । समु
दायोऽणुसम्भूतोवाह्योभूम्यापगादि
क . । आन्तर : स्कन्धजश्चित्तचै
त्यरूपश्चतौजगत् ॥ मृदम्बुवह्निवा
यूनांखरस्निग्धोष्णचञ्चला . । चतु
र्णांचाणव : पञ्चस्कन्धारूपादिभेद
त · ॥ रूप : शब्दादयस्तेषांव्यक्ति
र्विज्ञानमुच्यते । वेदनासुखदु · खे
स्त : संज्ञाडित्थादिनामयत् ॥ स
स्कारोवासनाचैवमुक्तसङ्घदया
त्मकम् । जगत्प्रत्यक्षत · सिद्ध
किमन्यपरिकल्पनै : ॥ ६ ॥ यथा
चसप्तपदार्थवादश्चार्हतानाम् । जी

वाद :

वाजीवात्मकंविश्वचेतन : स्वशरी
रवत् । परिणामावयववानऽजीव :
षड्विध : स्मृत : ॥ मध्वीधरादिरे
क : स्यात्पञ्चधाचास्तवादिक . ।
आस्रव : स बरोनिर्जरोवन्धोमोक्ष
एवच ॥ इन्द्रियाण्यविवेकादि : की
र्णोल्लुञ्चादिभिस्तप : । जन्मान्यूर्द्ध्व
गतिश्चेतिपञ्चानामर्थ उच्यते ॥ स्या
दस्तीत्यादिनासप्तभङ्गीन्यायेनवा
दिन : । सप्तैवक्रमशोऽपास्यस्वमत
साधयेत्सुधी : ॥ सत्त्वासत्त्वोभयाऽ
वाच्यवादिन : स्युश्चतुर्विधा : । द्वि
धाऽऽद्याश्चावाच्यतोक्तावादिन · स
प्तकीर्त्तिता . ॥ ७ ॥ एतेषावादा
नांप्रमाणानपेक्षत्वाद्भ्रमाचमूलत्वा
द्दृश्यमाणप्रमाणबाधितत्वाच्चनसाम
ञ्जस्यम् । तथाहि । तावत्सङ्घा
तवादोनयुक्तिसह : । घटोपलब्धि
वत्सङ्घोपलब्धिर्भवतेस्फुटम् ।
साजीवोममदेहोयमितिभेदानुभूति
त . ॥ योगिनश्चाथमृतादेर्देहान्तर
गति : स्फुटम् । आत्माभाविकृत
ध्वंसोह्यकृताभ्यागमस्तथा ॥ क्षणि
कात्मोक्तार्थं जन्मसहकार्यं प्रतीक्षि
णा । सहकारिप्रतीक्षार्थंक्षणिक
त्वं पराहतम ॥ ईशानुभाजन्तुपुण्य
दन्ना . समर्थयामास । चक्षुष्मानो
लोका : किमवयववन्तोधिजगतामु
धिष्ठातारं किमवधिविरचनादस्यभ

वति । अनीशोवाकुर्याद्भवनजनने
च : परिकरीयवोमन्दास्त्वांप्रत्यमरव
रस ईशरतइमे ॥ इति । यतोवाइमा
निभूतानिजायन्ते येनजातानिजीव
न्तियत्प्रयन्त्यभिसंविशन्तितद्ब्रह्मे
त्यादिश्रुतयस्तु स्वतन्त्रमेवप्रमाणम्
॥ १ ॥ आरम्भवादोपिनयुक्तिस
ह : । यथा । अणुसंयोजकं कर्म
निर्निमित्तं यदाभवेत् प्रलयस्तर्हि
नभवेत्सनिमित्तं कथं वद ॥ शरी
राभावतस्तत्रप्रयत्नादेरसम्भवात् ।
नित्यत्वादीशयत्नोपिकादाचित्कोऽ
र्हितोनहि ॥ जीवात्मसमवेतत्वाद
दृष्टं नाणुषुक्वचित् । एवमादिवि
चारेणदुष्टाणुपरिकल्पना ॥ कुला
लवत्तटस्थश्चेदीश्वरस्तर्हिमत्सम:
। शरीरोपस्कराकाङ्क्षीविषमोनि
र्घृणस्तथा ॥ ईशेवेद : प्रमाणञ्चेत्त्वा
क्यातर्हितटस्थता ॥ यत : स्फुटं निरा
बाधंमायित्वंतत्रवर्ण्यते ॥ अखण्डस
च्चिदानन्दोजगद्रूपेणभासते । मा
यायांदुर्घटं नास्तिकिञ्चित्तद्रूप
णाहिसा ॥ परमाण्वादिकल्पना
विरोधिन्य : श्रुतय : । एकोऽहं
बहुस्यांप्रजायेयेति । एतस्मादात्म
नआकाश: सम्भूत : आकाशाद्वा
युर्वायोरग्निरग्नेराप : अद्भ्य : पृ
थिवीति । मायान्तुप्रकृतिं विद्या
न्मायिनन्तुमहेश्वरमिति । इन्द्रो



मायाभि : पुरुरूपईयते । इत्येव
मादायसङ्ख्यातापव । एवंस्मृ
तीतिहासवाक्यान्यपि । २ । परि
णामवादोपिनयुक्तिसह : । यथा ।
विचित्रजगतोहेतुर्नप्रधानमचेतन
म् । चेतनोपिहिनिश्चाङ्गोनसहाय
त्वमर्हति ॥ गुणकार्यंसुखादीना
मान्तरत्वप्रनिश्चयात् । घटादावन्व
योनास्तिकथमव्यक्तकार्यता ॥ कि
ञ्चापरिणतेतस्मिन्कार्योत्पत्ति
र्नयुज्यते । परिणामेतन्नाश :
कार्यस्यापिनिराश्रयात् ॥ नचप्र
धानकल्पनायाम् । अजामेकांलो
हितशुक्लकृष्णामित्यादिश्रुति प्र
माणम् । तस्या : यदग्ने रोहितं
रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां य
त्कृष्णं तदन्नस्येतिच्छान्दोग्योक्तवे
लोक्यात्मकप्रकृतिपरत्वेनमायापर
त्वेनापिसूरिभिर्व्याख्यातत्वात् । ए
वमन्यत्स्वयंसमाधेयम् । ३ ॥ जीवो
त्पत्तिश्चनयुक्तिसहा । यथा । जीवोत्प
त्तिर्नयुक्तेतिजीवस्यानादितास्मृता ।
विनाशेकृतनाश : स्यादकृताभ्या
गमस्तथा ॥ ४ ॥ विज्ञानवादोपि
नयुक्तिसह : । यथा । जागरेबाध्य
तेस्वप्नोजागरोनैवबाध्यते । तत्र
द्वाधकाभावाद्बाह्यमस्त्युपलब्धित
॥ बहिर्वदितितेप्युक्तिर्बाह्यमर्थं
प्रसाधयेत् । एवं नयुज्यते बुद्धे

बाद :

भंगदाकारतातव ॥ स्थिरचेतन राशिस्यात् स्वयञ्चचाचेतनत्वत : । स्म्र्त्यादिव्यवहारस्यलोपप्रसंगात : ॥ ममतु • आगरादिममा धिष्ठानभाखण्डबोधानन्दरूपब्रह्मण साक्षात्कारोबाधकोस्ति ॥ ५ ॥ बाह्यास्तित्ववादो ऽ पिनयुक्तिसह . । यथा । स्थिरचेतनराशित्वात् स्वयञ्चाचेतनत्वत ॥ सन्न्यामामणूनांवासमुदायोऽत्रयुज्यते ॥ ६ ॥ सप्तपदार्थीवादस्सनयुक्तिसह . । यथा । एकस्मिन् सदसत्वादिविरुद्धप्रतिपादनात् । अपन्याय : सप्तभङ्गीमजीवस्यसांशता ॥ अस्यार्थ : । स्यादस्ति १ । स्यान्नास्ति २ । स्यादस्तिचनास्ति च ३ । स्यादवक्तव्य : ४ । स्यादस्तिचाऽवक्तव्य : ५ । स्यान्नास्तिचावक्तव्य ६ । स्यादस्तिचनास्तिचावक्तव्यश्चेति ७ । सप्तभङ्गीवाक्यानि । तेषुचस्याच्छब्द ' ईषदर्थवाची निपात : । तदर्थे चपूर्वपक्षस्योक्तीनांसद्भावासद्भावाभयभावानिर्वचनीयवाद्वयसदनिर्वचनीयवादा, भयानिर्वचनीयवादिनांमतानि । क्रमेणाभिहितानि । तेचवादिन : समागच्छन्तं प्रतिजिन त्वन्मते मोक्षोस्तीत्यादिस्वस्वमतक्रमेणप्रच्छन्ति । तदाहंनतान् प्रतिप्रत्ये

बाद .

क क्रमेणतान्येवसप्तवाक्यानोषतन्त्रतान्युपगमनार्थं वाक्यानिप्रथक्पृथगेवोत्तरत्वेनब्रूते । तावतासर्वेवादिनोनिर्विण्णा ' सन्तोनोत्तर प्रतिपद्यन्तेएवंविधस्तेषासप्तभङ्गीरूपीय न्यायोऽपन्याय एव • अपकृष्टोन्यायोन्यायाभ्यास एवेत्यर्थ . । कुतइत्यतआह । एकस्मिन्निति । एकस्य जीवपदार्थस्यसदादिनप्रतिसद्रूपत्वम् • असदादिनंप्रत्यसद्रूपत्वञ्चेत्येवमादिविरुद्धधर्म्मप्रतिपादकत्वात् । नचजीवस्यसावयवत्त्व युज्यते • शरीरादिवदनित्यत्वप्रसङ्गात् । तदनित्यत्वे मोक्ष . कस्यपुरुषार्थ . स्यात् । तस्मान्न्यायाभासेनसप्तभङ्ग्याख्यनजीवादिपदार्थानानसिद्धिरिति ॥ ततश्चपारिशेष्याज्जगतोमायामयत्वसिद्धि ' । तदुक्तम् । ततोनिरञ्चानन्दे विवर्त्तोजगदिष्यताम् । अवस्थान्तरभानन्तुविवर्त्तोरज्जुसर्पवत् ॥ मायाशक्ति . कल्पिकास्यादिन्द्रजालिकशक्तिवत् । शक्ति श क्तात्पृथङ्नास्तितद्वद्दष्टे नचाभिदा ॥ प्रतिबन्धस्यदृष्टत्वाच्छक्त्यभावे तुकस्यस ' । शक्ति कार्यानुमेयाया अनिर्वाच्यत्वमिष्यताम् ॥ इति ॥ वदनम् । वदव्यक्तायामृवाचि । वञ् ॥

बादक. । त्रि० वाद्यकारे ॥ वक्तरि ॥
वादनम् । न० वाद्ये ॥ शिवागारेझ
ल्लकस्सूर्यागारेचशङ्खकम् । दु
र्गागारेवंशिवाद्यमधुरीञ्चनवादयेत्।
बादफलम् । न० तत्त्वनिर्णये ॥
बादरम् । न० कृष्णालाबीजे । काक
चिञ्च्याबीजे ॥ दक्षिणावर्त्तश
ङ्खे ॥ वीरे ॥ काकचिञ्चायाम्
॥ भारद्याम् ॥ कृमिजे ॥ जले ॥
कार्पासीफले ॥ वदरायाविकार :
फलम् । अवयवेचेत्यण् । तक्षफ
लेलुक् । वदरस्यविकार : । तस्य
विकारइत्यण् ॥ त्रि० कार्पासी
निर्मितवस्त्रादौ ॥
बादरङ्ग . । पुं० अश्वत्थवृक्षे ॥
बादरा । स्त्री० कार्पास्याम् ॥
बादरायण : । पुं० व्यासदेवे ॥
बादरायणि : । पुं० शुकदेवे । व्यास
तनये । बादरायणस्यापत्यम् । अ
तइञ् ॥ व्यासदेवे ॥
बादलम् । न० मधुयष्टिकायाम् ॥
बादवादी । पुं० जिनभेदे । आर्हते ॥
बादवित् । त्रि० धातुवादीमन्त्रवाद
श्चेत्यादयोवादामन्त्रभूताश्चन्तीति
वादज्ञे ॥ कल्पनैवैषा० ताम्रादि
मावेश्यितैनष्टेचकनकादिसम्भावा
सम्भावात् । मन्त्रवादेपि० कालद
ष्टोनजीवति । अकालदष्ट : स्वय
मेवोत्थास्यतीत्यभ्युपगमात्० व्या

मोहमात्रमेव ॥ वादज्ञे ॥
वादान्य । त्रि० बहुदातरि । बहु
प्रदे ॥
बादमम् । न० वादामे । वातादे ॥
बादाल : । पुं० मत्स्यप्रभेदे । सहस्र
दंष्ट्रे । वोयालि० इ० गौ० दे०
भाषाप्रसिद्धे ॥
वादि : । त्रि० विदुषि ॥ वक्तरि ॥ वा
दयति । वद० । वसिवपियजिरा
जिव्रजिसदिहनिवाशिवादिवारिभ्य
इञ् । सूत्रे वादीतिण्यन्तोनिर्दि
ष्ट : । बाहुलकादण्यन्तादपि । त
थाचभूवादिसूत्रे० वदन्तीतिवाद
योवाचकाइतिन्यासकारादय : ॥
वादित्रम् । न० आतोद्ये । वाद्ये ॥
वाद्यते० ध्वन्यते । वदेर्ण्यन्तात् ।
भूवदिगृभ्योणित्रन्० इति० णि
त्रन् ॥
वादी । त्रि० वक्तरि । वदनशीले ॥
अर्थिनि । विवादकर्त्तरि । पुका
क्ष० आद्० इ० मा० प्र० पूर्व्वप
क्षवर्त्तरि । वादोऽस्यास्ति । इनि ॥
वादिरम् । न० वदरीसदृशसूक्ष्मफल
वृक्षे ॥
वादिराट् । पुं० पूर्वजिने । मञ्जु
घोषे ॥
वादिराज . । त्रि० वादिश्रेष्ठे ॥ वा
दिनाराजा । टच् ॥ पुं० मञ्जु
घोषे ॥

वाद्यम्

वादित्र : । त्रि० साधुवादिनि ॥
वाद्यम् । न० वादनीये । वादित्रे । वातोद्ये ॥ वाद्यते० ध्वन्यते । वदेर्ण्यं न्तादचोयत् ॥ तच्चतुर्विधं यथा । ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंश्यादिकन्तु शुषिरं कांस्यतालादिकं घनम् ॥ अथवा द्यानि । तानिनराजतेगीतं तानि वादित्रसञ्ज्ञ. । गरीयस्तं सवादित्रं तच्चतुर्विधमुच्यते ॥ ततं शुषिरमानद्धं घनमित्यं चतुर्विधम् । ततं तन्त्रीगतं वाद्यं वंशाद्यं शुषिरन्तथा । चर्मावनद्धमानद्धं घनं तालादिकं मतम् ॥ तत्र ततं यथा । अलावनीब्रह्मवीणाकिन्नरीलघुकिन्नरी । विपञ्चीवल्लकीज्येष्ठाचित्राघोषवतीजया ॥ हस्तिकाकुब्जिकाकूर्मीशारङ्गीपरिवादिनी । त्रिशवीशतचन्द्रीचनकुलोष्ठीचढसवी॥ औडम्बरीपिनाकीचनिबन्ध. शुष्कलस्तथा । गदावारणहस्तश्चरुद्रोऽथ शरमण्डल. ॥ कपिलासोमधुस्यन्दी घोषा स्यादिततंभवेत् ॥ अलावणी यथा । कनिष्ठिकापरिध्यन्तेमध्यच्छिद्रेणसंयुत : । द्व्यग्रहस्तमितोदण्ड: खादिरोवेणवोथवा ॥ अध . करभवानूर्ध्वं छचावश्याभिशोभित : । न वाङ्गुलादधश्छिद्रोपरिचन्द्रार्द्धसन्निभाम् ॥ निवेश्यतुम्बिकांभद्रालाबु

वाद्यम्

खण्ड निवेशयेत् । द्वादशाङ्गुलविस्तारदृढपक्वं मनोहरम् ॥ तुम्बिका वेधमध्येनदण्डच्छिद्रे तुनिर्मिताम् । अलावुमध्यगांडोरींकृत्वातस्या नुकाष्ठिकाम् ॥ तथासवेष्टयतन्मध्ये काष्ठिकाभामयेत्ततः । यथा स्यान्निश्चलालाबुर्वंस्यकरभोपरि ॥ पञ्चाङ्गुलिपुसन्ध्यस्यालाबुस्तस्याश्च बन्धयेत् । कौशान्तनिर्मितापट्टमयीसूत्रकृताथवा ॥ समासूक्ष्मादृढा तत्रतन्त्रदेयाविचक्षणै : । एतल्लक्षणसंयोग्यान्यालावणीप्रकीर्त्तिता ॥ विन्दुनानससुपेतं तुम्बनि' च्चिष्य वक्षसि । मध्यमानामिकाभ्याञ्च वाद्यादक्षिणपाणिना ॥ तारेमन्द्रे चघोषेचविस्थानेबिन्दुरिष्यते । तुम्बीमूलं समुत्पन्नवामाङ्गुष्ठेन धारयेत् ॥ ततस्ताभिस्तुसर्वाभि : स्वरव्यक्तिर्विधीयते । निखरोदक्षिण' पार्श्वेवामस्तचतु : स्वर : ॥ अलावण्यांस्थिताज्ञेया ' समषड्जाद्य ' स्वरा: । रागव्यक्तिर्यथारागेभवेत्षड्जादिभेदत : ॥ अंशन्यासविभेदाश्चतथाचापिविधीयते । इयमलावणीप्रोक्तामन अवचरघ्नी ॥ प्रत्यचामारदादेवीवीणा रूपेणसस्थिता । इत्यलावणी ॥ अन्ये षालक्षणं विस्तरभयान्नोक्तम् ॥ शुषिरं यथा । वंशोथपारोमधु

रीतित्तिरीशङ्खकाहला । तोडही
मुरलीबुक्काशृङ्गिकास्वरनाभयः ॥
शृङ्गं कापालिकं चर्मं चर्मवंशस्तथा
परः । एते शुषिरभेदास्तु कथिताः
पूर्वसूरिभिः ॥ वर्त्तुलः सरलश्चै
कपर्वदोषविवर्ज्जितः । वैणवः
खादिरो वापि रक्तचन्दनजोऽथवा ॥
श्रीखण्डजोऽथ सौवर्णो दन्तिदन्तमयो
ऽपि वा ॥ राजतस्ताम्रजो वापि लौह
जः स्फाटिकोऽथवा । कनिष्ठाङ्गुलि
तुल्येन गर्भरन्ध्रेण शोधितः । शि
ल्पविद्याप्रवीणेन वंशः कार्यो म
नोहरः ॥ वंशेन वमतोऽपीति मतङ्ग
मुनिनोदितम् । ततोऽन्येऽपि तदा
कारा वंशा एव प्रकीर्त्तिताः ॥ तत्र
त्यक्त्वा शिरोदेशाद्व्यङ्गुलिमितमङ्गु
लम् । फूत्काररन्ध्रं कुर्वीत मित
मङ्गुलिपर्वणा ॥ पञ्चाङ्गुलानि सन्
त्यज्य तावद्रन्ध्राणि कारयेत् । कु
र्यात् तथान्यरन्ध्राणि सप्तसङ्ख्या
नि कौशलात् ॥ बदरीबीजतुल्यानि
सन्त्यज्यार्द्धार्द्धमङ्गुलम् । प्रा
न्तयोर्वंशनं कार्यं स्वरार्थेनादृते वे
॥ सिक्थकेन कलादेयात्तेन सुस्वरता
भवेत् । पञ्चाङ्गुलायं वंशः स्या
देकैकाङ्गुलिवर्द्धितः ॥ षडङ्गु
लानि नामान्याद्यावदष्टादशाङ्गु
लम् । फूत्कारताररन्ध्रस्य यावद
ङ्गुलिमन्तरम् ॥ तदेव नाम वंश



स्यवांशिकैः परिकीर्त्यते । एका
ङ्गुलो द्व्यङ्गुलश्च त्र्यङ्गुलश्चतुर
ङ्गुलः ॥ अतितारतरत्वेन वांशि
कैः समुपेक्षितः । अयोदशाङ्गु
लो वीणापरः । निन्दितो वंशतत्त्व
ज्ञैस्तथा सप्तदशाङ्गुलः ॥ महान
न्दस्तथानन्दो विजयोऽथ जयस्तथा ।
चत्वार उत्तमा वंशा मतङ्गमुनि
सम्मताः ॥ दशाङ्गुलो महानन्दो
नन्द एकादशाङ्गुलः । द्वादशा
ङ्गुलमानस्तु विजयः परिकीर्त्ति
तः ॥ चतुर्दशाङ्गुलमितो जय इ
त्यभिधीयते । ब्रह्मा रुद्रो रविर्विष्णु
क्रमादत्र व्यवस्थिताः ॥ नैविडा
प्रौढता चापि सुस्वरत्वञ्च शीघ्रता
। माधुर्यमिति पञ्चामी फूत्कृतेषु
गुणाः स्मृताः ॥ शीत्कारबहुल
स्तब्धो विस्वरः स्फुटितो लघुः ।
अमधुरश्च विज्ञेयाः षड्दोषाः
फूत्कृतेः क्रमात् ॥ तथा प्रयोगबाहु
ल्यमल्पता गीतवादने । एभिर्दोषै
र्युतो तीव निन्दितो वांशिको मतः
॥ स्थानकादित्रयाभिज्ञो गमकाढ्य
स्फुटाक्षरः । शीघ्रहस्तः कलाभि
ज्ञो वांशिकोत्तम उच्यते ॥ प्रमुक्ति
र्वद्धमुक्तिश्च युक्तिश्चेत्यङ्गुलेर्गुणाः
। सुस्थानत्वसुस्वरत्वमङ्गुलीसा
धनक्रिया ॥ समस्तगमकज्ञानं राग
रागाङ्गवेदिता । क्रियाभाषाविभा

ष।मुद्यता।गीतवादने ॥ स्थाने वादितु स्थाने।नाद।निर्माणकौश ल । गातृणास्थानदातृत्वं तद्दो षाच्छादनं तथा ॥ वाशिकस्यगुणा एतेमयासङ्क्षिप्यदर्शि ता ।इति वंश :॥ ॥ काहलाख्योनिषङ्क. । तोण्डकीमुरलीवृक्षादूर्ध्वे तेचस्त्रि यासप्तस्वराणांनाभिरिवस्वरनोभि' स्त्रियावर्त्तते । इतरेषाविस्तरभया न्नोक्तम् ॥ ॥ आनद्धं यथा । आनद्धं मर्दल : श्रेयान्नृत्यतु भरतादिभि' । अपिच । मुरजपट हढक्काविश्वकोदर्पवाद्यपणवघनस दर्दुरालावजाद्यचिरत्र्य '। करठक मठभेरीश्चातकुडुक्काहुडुक्काभनस मुरलीभल्लीढक्कलीदौण्डिमाना॥ डमरुटमुकिमड्डु ' कुण्डलीस्तुङ्गु मामारणमभिघटवाद्य दुन्दुभीचर ञ्च । क्वचिदपिटट्टवौणाद्यदु'र' वाद्यमुपाङ्गप्रकटितमन वद्धवाद्यमि त्यं'जगल्याम् ॥ त्रिपुरमथनकर्त्तु स्ताण्डवेतत्प्रयाणे ततसुखसुषिर स्थानद्धमित्यं घनस्य ॥ ॥ मर्दल खादिर : श्रेष्ठोनीन : श्वादन्यदा रुज :। रक्तचन्दनजोवाद्योगभीर ध्वनिरुच्यते . ॥ सार्द्धहस्तप्रमाणस्तु दैर्घ्य मस्यविधीयते । त्रयोदशाङ्गु लं'वाममथवाद्वादशाङ्गुलम् ॥ द क्षिणञ्चभवेदर्धेनमेकेनाङ्गुलेन

षा । करणानद्धवदनोमध्ये चैवपृ थुर्भवेत् ॥ मण मासीयोभवेद्वस्त स्तत्प्रमं'करण मतम् । मृत्तिकानि र्मि'तश्चैवमृदङ्ग परिकीर्त्ति'त ॥ पातयेत्खरलि वाद्यमार्दनार्थ सुमर्दली । विभूतिर्गैरिक भक्त बिन्दु किनचस'युतम् ॥ यद्वाचिपीटक देय जीवनीसत्त्वमिश्रितम् । सर्वं मेकत्रपिष्ट तल्लेप' खरलिरुच्यते ॥ वामास्ये पूरिकांकृत्वालेप दद्या त्सदक्षिणे ।। एवं मर्दलक ' प्रोक्त: सर्ववाद्योत्तमोमत :॥ अस्यसंयो गमासाद्यसर्व्वं वाद्यंशोभते । एतदङ्गैबीजकाष्ठे दलमर्द्धाङ्गु ल विदु . ॥ तधिधोतेमितिर्ज्ञेया' पाटवर्णा : मृदङ्गजा ' । थोंद ढें धिकटस्तद्धौताकं द द थोग धि धि ॥ खर्भ्भिंन गट दं थाकुटपा टामताचमौ । तधि थोंढें तकधोदों द द धिगणांतत तधि ॥ तक्त त ध धिदोंताधिपाटखण्डेत्यय'क्रम ॥ तथाचयतिमानेपाटखण्ड '। द्रग तथे जाद्रगतथे जांधोधोधिकताधि काथोजांथोजातकततधिकाथोता द्रगतताधिधिधिधिकततताकडना थोधिकथोजाधोताद्रगततद्रतता धि । इतियतिमानेपाटखण्ड ॥ ॥ यतिरोद्धाप्यवच्छेदोगजरोरूपकं ध्रुवम् । गलप ' सारिगीणीवनाद

तद्विधिर्वादिभिर्दृष्टस्तत्र : । इति
च्छन्दनम् ॥ ॥ कलासीविकलास
स्टाकलीचार्द्धटाकली । जीला
टाकलिकाचैव गोमुखोमुरजस्तथा
।। अलावुजवाद्यञ्च च्छवाद्यम् ।
मर्दलस्यवामाङ्गुलवाममुखोद्दाद
शाङ्गुलदक्षिणमुख. । मुरजस्त्वष्टा
दशांगुलवाममुख ' सप्तदशांगुलद
क्षिणमुख : । मर्दलमुरजयोरयभे
द ॥ ॥ घनयथा । अनुरक्त विर
क्तञ्चद्विविधघनवाद्यकम् । गीता
नुगमनुरक्त विरक्ततालसंश्रयम् ॥ कर
ताल ' कांस्यवलोजयघण्टोथशुक्ति
का । कम्बिकापटवाद्यञ्चपट्टा
तोघस्वघर्घरम् ॥ झञ्झातालस्त
मञ्जीरकर्त्तरी युं छुरइत्यपि । वाद्ये
वैमुनीन्द्रै रुकथिताघनसञ्ज्ञका : ॥
चयोद्वाङ्गुलव्यामौशुद्धकांस्यवि
निर्मितौ । मध्यमुखौस्तनाकारौत
न्मध्ये रज्जुगुम्फितौ ॥ पद्मिनीपत्र
सदृशौकराभ्यारज्जुयन्त्रितौ । कर
तालावुभौवाद्यौपाटिभर्नटकैरि
ति ॥ यद्वाचयोदशयवव्यासवक्रय
वोन्मितम् । यवपञ्चकगम्भीरमध्ये
चयवसप्तकम् ॥ विस्तृतवर्त्तुलनि
म्नं यवचयमित ततः । पृष्ठतोमध्य
देशेचशिवलिंगसमाकृतिम् ॥ च
स्य्यलपे ष्टौनिर्दिग्धशुद्धकांस्यवि
निर्मितम् । स रक्ताङ्गुलिमुक्ति

गधसुदीर्घमधुरध्वनिम् ॥ घनानि
सावितरक्त दृढ शुष्कमनोहरम् ।
काश्मीरादिसमुद्भूत तालमाहुर्मनी
षिण : ॥ सुनादं दक्षिण ताल तती
हीनञ्च वामकम । कुर्वीततद्द्व
यकार्यंतर्जन्यङ्गुष्ठयोगत. ॥ वा
महस्तस्थतालस्य मध्यम सन्निनादि-
तम् । तिर्यग्दक्षिणतालस्य परि
व्य शेनतालयेत् ॥ तालादीवाद्ये
श्चैवम्नुतदीर्घलघुद्रुतै. । इतिक
रतालविशेष ' । कंसरीघनविशे
ष. । डक्कुरश्चघनविशेषोऽदन्तरेफा
न्तपुंल्लिङ्ग अन्येषांलक्षणविस्तर
भयान्नोक्तम ॥ ॥ रुक्मिण्या : स
त्यभामाया : कालिन्दीमित्रविन्द
यो : । जाम्बवत्यानाग्निजित्याल
क्ष्मणाभद्रयोरपि ॥ कृष्णस्याष्टमहि
षीणापुरोद्वाहमहोत्सवे। ततंशुषिर
मानद्धघनञ्चयुगपज्जना: । चवा
द्यन्नसङ्ख्यातमितिपौराणिकी-
श्रुति ' । ततवाद्यन्तुदेवानांगन्ध
र्वाणाञ्चशौषिरम् । आनद्धं
राक्षसानान्तुकिन्नराणांघनंविदु . ।
निजावतारेगोविन्द : सर्वमेवानय
त्क्षितौ ॥ यावन्तिवाद्यभांडानि
रामरावणयोर्युधि । तावन्त्योनाभ
वन्सेना: कुरुपाण्डवसङ्गरे॥ ॥
किञ्च । निलिम्पकल्पम्पनतोस
रेश्वरं सुरारिमर्थनात्सुरेण । च

भूत्ततातूर्यैरपिसिंहनादैः साप्यभवत्स्वीतिकणादवादः ॥ युद्धे सैन्यानांयोऽहङ्कारख: ससिंहनाद । ततादिभिरेभिश्चतुर्भिर्वाद्यैः समंनांसिंहनादैश्चपञ्चशब्दीवाद्यमभूत् । सिंहनादेनसहवाद्यंपञ्चविधंभवतीत्यर्थः ॥ इतिसङ्गीतदामोदरः ॥ शिवागारेभल्लकं सूर्यागारेचशङ्खकम् । दुर्गागारेवंशीवाद्यं माधुरीञ्चनवादयेत् ॥ भालकंकांस्यनिर्मितकरतालम् । इतियोगिनीतन्त्रम् ॥ मत्स्यपुराणेपि । गीतवादित्रनिर्घोषं देवस्याग्रे चकारयेत् । लिखित्वाघण्टांढक्कांघण्टांतञ्चरीहबैयजेत् ॥ घण्टाभवेदशक्तश्चसर्ववाद्यमयीयत: ॥

वाद्यभाण्डम् । न० वादनीयपात्रे ॥

वाद्यकर: । त्रि० वादित्रकर्त्तरि । बजञ्जीतिभाषाप्रसिद्धे ॥

वाधनम् । न० वाधायाम् ॥

वाधुक्यम् । न० विवाहे ॥

वाध: । पुं० वधिरे ॥

वार्ध्रीणस: । पुं० खड्गी । गण्डके ॥ वार्ध्रीणसि ॥ पक्षिविशेषे ॥ यथा । रक्तग्रीवोरक्तशिरा: श्वेत पक्षोविहङ्गम: । सर्वेवार्ध्रीणस: प्रोक्तइत्येवानेगमीश्रुति: ॥

वानम् । न० सूतिकागृहे । सौवने ॥ कटे ॥ गतौ । गमने ॥ जलस्य स्रुतवातोर्म्याम् ॥ सुरङ्गायाम् ॥ सौरभे ॥ गोक्षीरजीतवक्षीरे ॥ वाजिनागतौ ॥ त्रि० शुष्कफले ॥ शुष्के ॥ वनजे ॥ वनसम्बन्धिनि ॥ वायतिस्म । पैओवैशोषणे । गत्यर्थाकर्मकेतिक्त: । ओदितश्चेतिनत्वम् ॥ वन्यते । वनुयाचने । घञ् वा ॥

वानप्रस्थ: । पुं० मधूकवृक्षे । गुडपुष्पे । किंशुके । पलाशवृक्षे ॥ तृतीयाश्रमे ॥ सचकालीनाश्चैव ॥ वनमिवप्रस्थोवनस्थवाप्रस्थ . प्रविश: । वनप्रस्थेवनेकदेशेभव: । तत्रभव: इत्यण् ॥

वानर: । पुं० मर्कटे । कपौ । प्लवङ्गे । शाखामृगे । बन्दर० इ० भा० ॥ वनेभवम्० फलादि० वानम् । अण् । वानंराति । रा० । आतोनुपसर्गेक: ॥ यद्वा । वानम् । वा० । सम्पदादित्वात्क्विप । वा० गमनेपि० नृणाति० वालकम् । नृनये । पचाद्यच् ॥

वानरप्रिय: । पुं० क्षीरिवृक्षे ॥

वानराक्ष: । पुं वनच्छागे ॥

वानराघात: । पुं० लोध्रवृक्षे ॥

वानरी । स्त्री० मर्कट्याम् । बांदरी इ० भा० ॥ वानरस्यस्त्री । ङीष् ॥ शूकशिम्ब्याम् ॥ वानरीइवबिवि

धचेष्ट्।इतुतत्वात् ।

वानरेन्द्र । पुं॰ सुग्रीवे । वानराणामिन्द्र ॥

वानल । पुं॰ वायवे । कालीवायु इ॰ इ॰ भा॰ ॥

वानस्पत्य : । पुं॰ पुष्पजातफलवृक्षे ॥ वानस्पत्य : फलै : पुष्पादित्यमर : ॥ वनस्पति : । पारस्करादित्वात्सुट् । वनस्पतौभव । दित्यदित्या।दित्यपत्युत्तरपदाण्ण्य । वनस्पतिसमूहे ॥ तस्यसमूहइतत्यर्थे॰पूर्वेण॰ण्य ।

वाना । स्त्री॰ वर्त्तिकापक्षिणि ॥

वानायु : । पुं॰ हरिणे ॥ वनवनमुवमयति । अय॰ । बाहुलकादुण् ॥ भारतवर्षस्योत्तरपश्चिमस्थेदेशविशेषे ॥ बहुवचनान्त : ॥

वानायुज । पुं॰ हयविशेषे ॥ वनायुषुजात : । सप्तम्यांजनेर्ड : । सएव । प्रज्ञादाण् ॥

वानीर । पुं॰ वेतसे । वञ्जुले ॥ वायति । मैप्रोवैशोषणे । क्विप् बाश्शुष्कमासमन्तान्नीरमस्य ॥

वानीरक : । पुं॰ मुञ्जतृणे ॥

वानीरजम् । न॰ कुष्ठे । कुठइ॰ प्र॰ ओषधौ ।

वानेयम् । न॰ कैवर्त्तीमुस्तके । मोथाख्ये । वनेपानीयेजायते । नद्यादिभ्योढक् ॥

वान्तम् । न॰ उद्गीर्णे ॥ त्रि॰ कृतवमने ॥

वान्ताद : । पुं॰ कुक्कुरे ॥ वान्तमत्ति । अण् ॥

वान्ताशी । त्रि॰ उद्गीर्णाशिनि ॥ पुं॰ शुनि ॥

वान्ति : । स्त्री॰ उल्लेखने । वमने ॥

वान्तिकृत् । पुं॰ मदनद्रुमे । मयनफल॰इ॰भा॰प्र॰ ॥ वान्तिकरोति । डुकृञ्॰ । क्विप् । तुक् ॥

वान्दिटा । स्त्री॰ कटुक्याम् ॥

वान्या । स्त्री॰ वनसमूहे ॥

वाप । पुं॰ क्षेत्रे ॥ उप्यतेस्मिन् । डुवप् घञ् ॥ वपने ॥

वापक : । त्रि॰ वपनकारयितरि ॥

वापदण्ड: । पुं॰ तन्तुवायदण्डे । वेमनि ॥ वपनम् । डुवप्॰ । घञ् । वापस्यदण्ड ॥

वापि । स्त्री॰ वापिकायाम् ॥ उप्यतेपद्मादयस्याम् । डुवप्बीजसन्ताने । वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्यइञ् ॥ भावे इञ्॰वपादिभ्यइतीञ्वा ॥

वापिका । स्त्री॰ वाप्याम् ॥

वापित : । त्रि॰ मुण्डिते ॥ बीजाकृते । उप्तकृष्टे ॥ न॰धान्यविशेषे । बीयाधान॰इ॰भा॰ ॥ वापितंशुकतद्धान्यविशिष्टद्वीजमवापित ॥

वापी । स्त्री॰ दीर्घिकायाम् ॥ वद्धसी

पानकूपे ॥ पाषाणैरिष्टिकाभिर्वा बद्धकूपाब्दहस्तरा । ससोपानाभवेद्वापीप्राहु: शास्त्रविशारदा ॥ प परिभाषेनद्रोणदशगुणावापीति । यथा । नव्यवर्द्धमानधृतीवशिष्ठ: । शतैनधनुभिं: पुष्करिणी० चिभि: शतैदींर्घिका० चतुर्भिर्द्रोण: पञ्चभिस्तडाग: द्रोणाद्दशगुणावावापी । तेनचतुर्दिक्षु पञ्चचिशद्धस्तान्यूनताथाद्वादशशतहस्तान्तरान्यूनत्वेनदीर्घिका ॥ चतुर्दिक्षु चत्वारिंशद्धस्तान्यूनतायाषोडशशतहस्तान्तरान्यूनत्वेनद्रोण: । चतुर्दिक्षु चिशद्धिकशतहस्तान्यूनतायाम्षोडशसहस्रहस्तान्तरान्यूनत्वेनवापीतिजलाशयोत्सर्गतत्त्वम् ॥ योबापोमथवाकूपंदेशेवारिविवर्ज्जिते । खानयेत्सदिवंयातिविन्दौविन्दौशतंसमा: ॥ तज्जलगुणास्तु । वाप्यगुरुकटुक्षारंपित्तलकफवातजित्० इ० ॥ उष्यतेपद्मादिकमत्राम् । वप० । वसिवपोत्यादिना० इञ् । तत: कृदिकारादिपाक्षिकोङीष् ॥ याचायोगान्तरे ॥ यथा । एकान्तरगतेलग्नात्कुंभेखेटेऽथवाऽशुभे । वापीयोगस्त्वरिव्रातितिमिरौघदिवाकर: ॥

वापीह: । पुं० चातकखगे ॥

वाप्यम् । न० कुष्ठौषधे । पारिभाव्ये ॥ वाप्यांभवम् । दिगादिभ्योयत् ॥ वापीजले ॥ वाप्यवारियदिक्षारपित्तकृत्कफवातहृत् । तदेवमिष्टकफकृद्वातपित्तहरभवेत् ॥ चि० वापीभवे ॥

वाभ्रवी । स्त्री० चण्डयाम् । दुर्गायाम् ॥ वभ्रोरपत्यंस्त्री । अण् । ङीप् ॥ वभ्रोर्विष्णोरियवा ॥

वाम् । अ० युवामित्यर्थे ॥

वाम । पुं० उमानाथे । हरे ॥ कामदेवे । पयोधरे ॥ न० धने ॥ वास्तूकै ॥ पुण्यकर्मफले ॥ चि० वल्गौ । चारौ । शोभने । पतिसुन्दरे ॥ प्रतीपे । प्रतिकूले ॥ सव्ये ॥ वमति० वम्यतेवा । टुवमउद्गिरणे । ज्वलितिकसन्तेभ्योण: भावेघञ्वा ॥ यद्वा । वाति । वागतिगन्धनयो: । अर्त्तिस्तुस्त्रिमन् ॥

वामदृक् । स्त्री० वनितायाम् ॥ वामामनोहराहक्दृष्टिर्यस्या सा॥

वामदेव । पुं० शिवे ॥ वामयति० दुष्टानामर्दमितिवाम: । टुवम्० । णिजन्तात्पचाद्यच् । वामश्चासौदेवश्च ॥ लोकविपरीतत्वात्० सुन्दरत्वाद्वावाम: । सचासौदेवश्च ॥ ऋषिविशेषे ॥

वामदेव्यम् । न० सामविशेषे ॥ वामदेवेनदृष्टम् । वामदेवात्

डात्‌डारी ॥
वामन । पुं॰ अच्युते । हरौ ॥ मन्व न्तरेप्यसम्प्राप्तेतथावैवस्वतेद्विज । वामन॰ कश्यपाद्विष्णुरदित्यांस म्बभूवहैतिविष्णुपुराणम् ॥ अङ्कोठवृक्षे । दक्षिणाशास्थ॥ुदिग्गजे॥ मुमुक्षुभि : सम्भजनीये ॥ त्रि॰ अ तिखर्वे । ह्रस्वे । बौना॰ हृ॰ भा प्र॰ ॥ खर्वत्त्वाद्वामन वामयति त्याजयतिमदम् । टुवम्॰ । नन्द्या दित्वाल्ल्युः ॥ वामशब्दादस्त्यर्थे पाक्षिकोनीवा ॥ न॰ अयुतवामना ख्यर्द्धे ख्युक्तसङ्ख्याविशिष्टे महा- पुराणविशेषे ॥
वामनतीर्थम् । न॰ तीर्थविशेषे ॥ त त्रकौशिकीदेवीतिष्ठति ॥
वामनी: । पु॰ अक्षिस्थे निरञ्जनेपुरु षे ॥ वामानिपुण्यकर्मफलानि॰ पु ण्यानुरूपं प्राणिभ्योनयतिप्रापयती तितथा ॥
वामनी । स्त्री॰ खर्वायांगवि ॥ वमन प्रदौषधिप्रभेदे ॥
वामनेत्रम् । न॰ सव्येचक्षुषि ॥ नेत्र स्याथ 'स्फुरणममङ्गलसङ्गरेभङ्गहेतु र्नैवोमान्तेहरतिनयनंनेत्रमूलेच- मृत्युः । नेत्रस्योर्द्ध्वंहरतिसकल मांसदु' खजातं वामेचैवफलम विकलंदक्षिणेवैपरीत्यम् ॥
वाममार्गः । पुं॰ पुन' पुनर्गम- नागमनवर्ज्जितेविद्यावतांमार्गे । देवयानाख्येऽर्चिरादिमार्गे शुक्लक्ष्णेगतीह्येतेजगत . शाश्वतेमते । एकयायात्यनावृत्तिमन्ययावर्त्तते पुन . ॥ दक्षिणादुत्तमं वाममित्यु क्तश्चकुलार्णवे ॥ अग्नेनयसुपथेति मन्त्रे॰ सुपथेतिविशेषण दक्षिणमा र्गनिवृत्त्यर्थम्॰ निर्विण्णोऽहदक्षि णेनमार्गेणगतागतलक्षणेन॰ अतो याचेत्वांपुन' पुनर्गमनागमनव र्ज्जितेनशोभनेनपथानयेत्याचार्य्य भाष्यम् ॥
वामलूर . । पु॰ नाकौ । वल्मीके । बांबी॰ हृ॰ भा॰ प्र॰ ॥ वामैर्वा मंवा॰ लूयते । लूञ् छेदने । बा हुलकाद्रक् ॥
वामलोचना । स्त्री॰ उत्कृष्टस्त्रीविशे षे ॥ वाम : कामोलोचनेयस्यालोच ने॰ नेत्रे वा॰ यस्या : यद्वा । वा मेसुन्दरेलोचनेचक्षुषीयस्या : ॥
वामशील . । त्रि॰ वक्रस्वभावे ॥ सु न्दरस्वभावे ॥
वामा । स्त्री॰ नार्याम् । वनिताया म् ॥ वमतिक्लेशम् । टुवम्॰ ज्व लादित्वाण्ण : ॥ यद्वा वाम' का मोऽस्त्यस्या '। अर्शआद्यच् ॥ दुर्गायाम् ॥ वामविरूपरूपन्तुविप रीतन्तुगीयते । वामेनसुखदादेवी वामातेनमताबुधै : ॥ पक्षिविशेषे ॥

वामाक्षी । स्त्री॰ वामलोचनायाम् ॥ वामेमनोहरेअक्षिणीयस्याः । षच् । ङीष् ॥

वामाचार । पुं॰ देवयानमार्गसाधकोदक्षिणाचारादुत्तमेसदाशिवोक्ताचारविशेषे ॥ वामश्चासावाचारश्च ॥

वामापीडन । पुं॰ पीलुवृक्षे ॥

वामिका । स्त्री॰ चण्डिकायाम् ॥

वामी । पुं॰ वामाचारयुक्ते ॥ वामस्य सुन्दरीवादक्षिणादुत्कृष्टत्वादाचार॰ सोऽस्यास्ति । अतइनिठनावितीनि । नतद्दक्षिणायाम्तिनाविश्वासस्तपस्विन । तत्रश्लोके ॥

वामिल । त्रि॰ दाम्भिके । वामे ॥

वामी । स्त्री॰ शृगाल्याम् ॥ वडवायाम् ॥ रासभ्याम् ॥ करभ्याम् वामयति । टुवम्॰स्वार्थेण्यन्त । मिताङ्कस्वइत्यचवेत्यनुवर्त्तनेङ्कस्व ॥ यद्वा । वमकृणममति । अमगत्यादौ । कर्मण्यण् । घञ्वा । गौरादि॰ ॥

वामोरूः । स्त्री॰ नारीविशेषे ॥ वामौसुन्दरीऊरूयस्याः । संहितशफलक्षणवामादेश्चेत्यूङ् ॥

वायक । पुं॰ गणे । समूहे ॥ तन्तुवायविशेषे ॥

वायदण्ड । पुं॰ वेमनि । वापदण्डे ॥ वयनम् । वेञ्तन्तुसन्ताने । भावेघञ् । आतोयुक् । वायस्य दण्ड ॥

वायनम् । न॰ व्रतोपायने । प्रहेणके । वायना॰ इ॰ भा॰ प्र॰ पूपादिद्रव्ये ॥

वायवी । स्त्री॰ वायुकोणे ॥

वायव्यम् । न॰ वायुदेवताकहविषि ॥ वायुदेवताकेऽस्त्रविशेषे ॥ वायुर्देवतास्य । वाय्वृतुपित्रुषसोयत् । गुणावादेशौ । त्रि॰ वायुसम्बन्धिदिगादौ ॥ न॰ षट्शतश्लोकाधिकचतुर्विंशतिसहस्रश्लोकात्मकेमहापुराणविशेषे ॥ वायव्यषट्शतानिचचतुर्विंशतिसङ्ख्यातद्धतिदेवीभागवतोक्तेः ॥

वायस । पुं॰ अगुरुवृक्षे ॥ श्रीवासे ॥ ध्वाङ्क्षे । काके ॥ वयते । वयगतौ । वयश्चेत्यसच् । णित् ॥ वायससमूहे ॥ तस्यसमूह इत्यण् ॥

वायसविरुतम् । न॰ शकुनविशेषे ॥

वायसादनी । स्त्री॰ तेजोवत्याम् ॥ महाज्योतिष्मत्याम् ॥ काकतुण्डाम् ॥

वायसारातिः । पुं॰ पेचके ॥ वायसस्यकाकस्यअरातिः ॥

वायसाह्वा । स्त्री॰ काकनामनि ॥ काकमाच्या ॥

वायसी । स्त्री॰ काकोदुम्बरिकाया

म् ॥ काश्मर्याम् । महाज्योतिष्मत्याम् ॥ काकनासिके ॥ काकतुण्डाम् ॥ वायसानामियम् । तस्येदमित्यण् । ङीप् ॥ काक्याम् ॥

वायसेक्षुः । पु० काशे । दुग्धगन्धायाम् ॥

वायसोलिका । स्त्री० काकोल्याम् ॥

वायसोली । स्त्री० काकोल्याम् ॥ वायसान् घोलयति । घोलकिवत् चापि । अन्येष्वपीतिड । शकन्ध्वादि ॥

वायुः । पुं० श्वसने । स्पर्शने । शातरिश्वनि । शब्दतन्मात्रसहितात् स्पर्शतन्मात्रादुत्पन्नः शब्दस्पर्शगुणे सर्वदाचलनस्वभावे रूपरहितस्पर्शवतिमारुते । शरीरान्तर्गतभेदेन वायुर्दशविधो यथा । प्राणः ॥ १ ॥ तस्य कर्म बहिर्गमनम् । अपानः ॥ २ ॥ तस्य कर्माधोगमनम् । व्यानः ॥ ३ ॥ तस्य कर्म कुञ्चनप्रसारणादि । समानः ॥ ४ ॥ तस्य कर्माऽशितपीतादीनां समं नयनम् । उदानः ॥ ५ ॥ तस्य कर्म० ऊर्ध्वनयनम् । उद्गारे नाग ॥ ६ ॥ आख्यातः कूर्म ॥ ७ ॥ उन्मीलने स्मृतः । कृकरः ॥ ८ ॥ क्षुत्करो ज्ञेयो देवदत्तो ॥ ९ ॥ विजृम्भणे ॥ न जहाति मृतञ्चापि सर्वव्यापी धनञ्जयः ॥ १० ॥ अन्यदप्युक्तं यथा । द्वितीयं

मारुतीभूतं त्वगध्यात्मञ्च विश्रुता । स्पृष्टव्यमधिभूतञ्च विद्युत्तत्राधिदैवतम् ॥ अस्य गुणा यथा । स्पर्शस्त्वगिन्द्रियञ्चापि लघुतास्पन्दनं तनेः । चेष्टा सर्वशरीरस्थवायोरेते गुणा मता ॥ अपि च । वायोरनियमस्पर्शो वादस्थानं स्वतन्त्रता । बलं शैघ्र्यञ्च नेत्रञ्च कर्म चेष्टात्मता भवः ॥ इ० म० भा० मोक्षधर्मे । अस्यार्थः । अनियमस्पर्शः । अनुष्णाशीतस्पर्शः ॥ १ ॥ वादस्थानम् । वागिन्द्रियगोलकानि ॥ २ ॥ स्वतन्त्रता । गमनादौ ॥ ३ ॥ बलम् ॥ ४ ॥ शैघ्र्यम् ॥ ५ ॥ नेत्रः सूत्रादिः ॥ ६ ॥ कर्म० उत्क्षेपणादि ॥ ७ ॥ चेष्टा० श्वासप्रश्वासादि ॥ ७ ॥ आत्मता० प्राणरूपेणाधिष्ठातृत्वम् ॥ ९ ॥ भवः जन्ममरणे ॥ १० ॥ इति टीका ॥ न्यायमतेऽस्य गुणादिर्यथा । अपाकजानुष्णाशीतस्पर्शस्तु पवने मतः । तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः ॥ पूर्ववन्नित्यताद्युक्तं देहव्यापित्वगिन्द्रियम् । प्राणादिस्तु महावायुपर्यन्तो विषयो मतः ॥ वायुं निरूपयति० अपाकज इति । अनुष्णाशीतस्पर्शस्य पृथिव्यामपि सत्त्वात् अपाकज इति । अपाकजस्पर्शस्य जलादावपि सत्त्वा दुक्तम्० अनुष्णाशीत इति । एतेन

वायोर्विजातीयस्पर्शोदृष्टिमितः । त
ज्जनकतावच्छेदकं वायुत्वमितिभा
वः ॥ एषवायुः स्पर्शादिलिङ्गकः ॥ वा
युर्हिस्पर्शशब्दधृतिकम्पैरनुमीयते ।
विजातीयस्पर्शेन • विलक्षणशब्देन
• तृणादीनांधृत्या • शाखादीनांक
म्पनेनच • वायोरनुमानात् । तथा
च वायुर्नप्रत्यक्षः । वायुर्नित्योऽ
नित्योवा • परमाणुरूपोनित्यस्तद
न्योऽनित्यः समवेतश्च । सोऽपित्रि
विध शरीरेन्द्रियविषयभेदात् ।
अत्रशरीरमयोनिज पिशाचादीना
म् । देहव्यापीति । शरीरव्यापकं
स्पर्शग्राहकमिन्द्रिय त्वक् । तच्च
वायवीयम् रूपादिषुमध्ये स्पर्शस्यैव
व्यञ्जकत्वात् । अङ्गसङ्गिसलिल
शैत्यव्यञ्जकव्यजनवातवत् । विष
य दर्शयति • प्राणादिरितियद्यप्यनि
त्योवायुश्चतुर्विधः तथापिचातुर्वि
ध्यं प्राणादिना • वृक्षकम्पनाकारे ।
तथापिसङ्क्षेपादत्रत्रैविध्यमुक्तम्
• प्राणस्त्वेकएवहृदादिनानास्था
नवशान्मुखनिर्गमादिनानाक्रिया
वशाच्च • नानासंज्ञांलभतइत्यर्थः ॥
॥ सप्तवायवोयथा । भूवायुराव
हइहप्रवहस्तदूर्द्ध्वः स्यादुद्वहस्तदनुसं
वहसञ्ज्ञितश्च । अन्यस्ततोपिसुवहः
परिपूर्वकोऽस्माद्वाह्यः परावह
इमेपवनाः प्रदिष्टाइतिशिरोमणिः



॥ प्रावाहोनिवहश्चैवउद्वहः संवह
स्तथा । विवहः प्रवहश्चैवपरिवह
स्तथैव च ॥ अन्तरीक्षेचवाह्येतेपृथ
ङ्मार्गविचारिणः । महेन्द्रप्रवि
भक्ताह्यामरुतः सप्तकीर्त्तिताः ॥
॥ वायोः सप्तस्कन्धायथा । वायु
स्कन्धाः सप्ततेषामेकैकः सप्तसप्त
भिः । आमेयादेवावहादिरूपयुंप
रिसंस्थिताः ॥ आवहप्रवहानुवह
उद्वह • पाठान्तरम् संवहविवह
परावहाश्चपरिवहेति पाठान्तरम्
मर्त्तेतिभेदात्सप्तवायोः स्कन्धाः
॥ तथाचपुराणम् । आवाहः
प्रवहश्चैवतथाचैवोद्वहः परः ।
संवहोविवहश्चैवतदूर्द्ध्वंस्यात्परावहः
॥ तथापरिवहश्चोर्द्ध्वं वायोर्वैसप्तने
मयइति ॥ तेषांस्थानानियथा ।
मध्येभूमेघयोर्वायुरावहः प्रवहस्त
तः । मेघभास्करयोः सूर्यशशिनो
रुद्वहस्ततः ॥ चन्द्रनक्षत्रगणयोः
संवहोविवहस्ततः । नक्षत्रग्रहम
ध्यस्थोग्रहसप्तर्षिमध्यगः ॥ परा
वहः परिवहः सप्तर्षिध्रुवमध्यगः
॥ इत्येवंवायवः सप्त वहन्तिभु
वनत्रयमिति ॥ वाति । वा • ।
कृवापाजीत्युण् । वातीयुगितियु
क् ॥ वायुरायुर्बलं वायुर्वायुर्धाता
शरीरिणाम् । वायुर्विश्वमिदं सर्वं
प्रभुर्वायुः प्रकीर्त्तितः ॥ वाञ्जम

खडलचक्रे षुयथाराजाप्रशस्यते । तथाशरीरमध्ये पिवायुरेक परीवि भु ॥ वायो : पत्नीस्वस्तिदेवी ॥
वायुकेतु । पुं॰ चितिकर्ण । धूलौ ॥
वायुगण्ड । पु॰ अजीर्णे ॥
वायुगुल्म : । ) पुं॰ आवर्त्त । अम्भसा
वायुगुल्मक ) भ्रमे ॥
वायुग्रस्त । त्रि॰ विचिप्तचित्ते ॥
वायुदारु । पुं॰ व्योमधूमे । मेघे ॥
वायुपुत्र । पु॰ भीमसेने ॥ हनूमति ॥
वायुफलम् । न॰ शक्रकार्मुके ॥ जलदोपले ॥
वायुभक्ष्य : पुं॰ सर्पे ॥ त्रि॰ वातभक्षके ॥
वायुवर्त्म । न॰ ख । नभसि ॥ वायोर्वर्त्म ॥
वायुवाह : । पुं॰ धूमे ॥
वायुवाहन । पुं॰ विष्णौ ॥ वहतः सप्त॰ र्वावहादीन् वाहयतीतिव्युत्पत्तेः सप्तवायुः ॥
वायुवाहिनी । स्त्री॰ वायुसञ्चारिण्यां शिरायाम् ॥
वायुष : । पुं॰ मत्स्यविशेषे । कालवायुपर्याना॰ श॰ गी॰ दे॰ भा॰ प्र॰ ॥ वायुषोह ष्योव्योमधूरो धातुवर्द्धन : ॥
वायुसख : । पुं॰ पावके । वह्नौ ॥ वायो : सखा । राजाह : सखिभ्यश्च ॥
वायुसखा । पुं॰ अनले ॥ अग्नौ ॥ वायु सखास्येतितथा । टजभावादनडसावित्यनङ् ॥
वार्य स्यदम् । न॰ आकाशे ॥
वा : । न॰ जले ॥ वारयति । वृञो वयस्मात्क्विप् ॥
वार । पु॰ सूर्यादिवासरे ॥ यथा । रवि : सोमोमङ्गलश्चबुधोजीव सित : शनि । एतेषांनामतोवाराविख्याता : सर्वकर्मसु ॥ सितेन्दु बुधजीवानांवारा : सर्वत्रशोभना : भानुभूसुतमन्दानांशुभकर्मसुकेष्वपि ॥ द्वारे ॥ हरे ॥ कुजवृक्षे ॥ निवहे । वृन्दे ॥ अवसरे ॥ वार्ये ॥ वारयति॰ व्रियतेवा । वृञ्॰ । प घाद्यच् । घञ्वा ॥ यद्वा । वार्यते॰ आच्छाद्यतेऽनेन । वृञश्वरादे पु॰ सौतिघ : ॥ स्यन्दने ॥ न॰ मदिरापात्रे ॥
वारक । पुं॰ अश्वगतौ ॥ अश्वविशेषे ॥ न॰ कष्टस्थाने ॥ ह्रीवेरे ॥ त्रि॰ कार्य्यनिषेधके ॥ वारयति वृञ् । ण्वुल् ॥
वारकी । पुं॰ शत्रौ ॥ निषादे ॥ पत्रांम् ॥ जौवे ॥ पत्राजीविनि पयोधौ ॥ श॰ मेदिनिकार : ॥
वारकीर : । पुं॰ श्याले ॥ द्वारपाहि

षि ॥ वाडवे॥ यूकायाम् ॥ वीथि

वीथिन्याम् ॥ जलौकायाम् ॥ नी

राजितद्रव्ये ॥

वारङ्कः । पुं॰ पक्षिणि ॥

वारङ्गः । पुं॰ खड्गादिमुष्टौ ॥ वा

रयति॰ व्रियतेवा । हञ् । स्व

र्थोन्तर्दृधिर्स्वे स्यच्च ॥

वारटम् । न॰ क्षेत्रे ॥ क्षेत्रसमूहे ॥

वरटा । स्त्री॰ हंस्याम् ॥

वारण । पुं॰ मतङ्गजे । गजे ॥

वाधवारे ॥ न॰ प्रतिषेधे । प्रव

त्तिविघाते ॥ नदेवगुरुविप्राणांदी

यमानन्तुवारयेत् । नचात्मानंप्रशं

सेद्वापरनिन्दाञ्चवर्ज्जयेत् ॥ वार

यतिशत्रुबलम् । वृञ्वारणे ।

ल्युः ॥

वारणवल्लभा । स्त्री॰ कदल्याम् ॥

वारणवुसा । स्त्री॰ कदल्याम् । र

म्भायाम् ॥ बुसत्ते । बुसउत्सर्गे ।

इगुपधज्ञाप्रीकिरः कः । वारणा

नांबुसा ॥

वारणसी । स्त्री॰ वाराणस्याम् । का

श्याम् ॥ वरणतद्गनस्य॰ वरान ।

श्रेष्ठोदकम् । तस्यादूरेभवा । अ

दूरभवश्चेत्यण् । वृद्धिः । ङीप्

। पृषोदरादिः ॥

वारप्रवृत्तिः । स्त्री॰ रेखादेशस्थलोका

नांसूर्य्यावलोकनसमये॥ रेखाभूमौ

दिवाप्रवृत्तिर्भवति । रेखाभूमि

स॰लङ्का सुमेरुपर्वतयोर्मध्यसूत्रग

तोदेश । यथा । यल्लङ्कोज्जयनीपु

रोपरिकुरुक्षेत्रादिदेशान्स्पृशन्

सूत्रमेरुगतंबुधैर्निगदितासामध्य

रेखाभुवः। यादौप्राग्दयोऽपरत्रवि

षयेपश्चाद्दृधिरेखोदयात् स्यात्त

स्मात् क्रियतेतदन्तरभुवखेटेष्वृण

स्वंफलम्॥ इतिसिद्धान्तशिरोमणि

॥ अपिच । रेखोक्तासूर्यसिद्धा

न्ते यथा । रेखामधिकृत्य । राक्ष

सालयदेवौकशशैलयोर्मध्यसूत्रगाः

। रोहितकमवन्तीचतथासन्निहितं

सरः ॥ अस्यार्थः । लङ्कासुमेरुप

र्वतयोर्मध्यसूत्रगादेशारेखास्थि

ताः । तान्देशानाह । रोहितक

देशोऽवन्तीदेश सन्निहत सर . कु

रुक्षेत्रमित्यर्थः । रेखायाः पूर्व

देशे॰ परदेशेच॰ यथासङ्ख्यसूर्यो

दयकालात्परकालम्॰ पूर्वकाल

ञ्च॰ वारप्रवृत्तिः स्यादित्यर्थः प

तेनैतदुक्तंभवति॰ रेखासंस्थदेशस्थ

लोकायदासूर्यंपश्यन्ति॰ तदैवसर्व

देशेवारप्रवृत्तिरित्यर्थः । तत्र॰ रे

खापूर्वस्थाः सन्निहितत्वादादौ

सूर्यंपश्यन्ति॰ तदनन्तरं रेखास्थाः

। अतोरेखापूर्वे॰ सूर्योदयात्पर

वारः । तथारेखास्थैः सूर्येदृष्टेस

ति । पश्चात् रेखापरस्थाः पश्यन्ति

अतोरेखापरदेशेसूर्योदयात् पूर्वेवार

वृत्यर्थ : । तत्कालपरिमाणमा
ह । रेखातोयावन्तिदेशान्तरयो
जनानि॰ तत्परिमिताभिर्घटी
भि : पलै : पादहीनाभि : चतु
र्थभागहीनाभिर्वारप्रवृत्ति : स्यादि
त्यर्थ : । देशान्तरसाधनप्रकारस्तु
सूर्यसिद्धान्ते॰ उक्त . ॥ रामदै
वज्ञोप्याह । पादोनरेखापरपूर्व
योजनै : पलैर्युतोनास्तिथयोदि
नार्द्धत : । ऊनाधिकास्तद्विवरोद्भ
वै : पलैरूर्द्ध्वतयाधोदिनपप्रवेशन
मिति ॥

वारमुख्या । स्त्री॰ जनै : सत्कृतायां
वेश्यायाम् ॥ वारे॰ वेश्यावृन्दे मु
ख्या ॥

वारम्वारम् । अ॰ पौन : पुन्ये ॥

वारम्वारेण । अ॰ मुहुरर्थे ॥

वारयिता । पुं॰ भर्त्तरि ॥ त्रि॰ निषे
धके ॥

वारवः : । पुं॰ वरवर्णिनाकृतेयर्थे ॥
कृतेयन्धद्रव्यत्व् ॥

वारला । स्त्री॰ गन्धोल्याम् । वरटा
याम् ॥ हंसकान्तायाम् ॥

वारलीक : । पुं॰ वल्वजायाम् ।
बाबुइ॰ इ॰ भा॰ ॥

वारवधू : । स्त्री॰ वेश्यायाम् ॥ वार
स॰सम्बूहस्यवधू : साधारणत्वा
त् ॥

वारवन्तीयम् । न॰ सामविशेषे ॥ वा
रवन्तशब्दोऽस्मिन्नस्ति । मतौच्छ
सूक्तसाम्नोरितिच्छ ॥

वारवाण . । पु॰ न॰ लोहचर्मणि ।
कवचे । कसुवी । चोलकाकृतिस
न्नाहे ॥ वाणं वारयति॰ वृणोतिवा
। वृञ्॰ ल्युन्तोवा । कर्मण्यण् ।
राजदन्तादित्वात्परनिपात ॥
वारमाच्छादकं वानमस्यवा । पूर्व
पदादितिणत्वम् ॥

वारणाधि. । पु॰वशीवादकी ॥ उत्तम
गायकी ॥ धर्माध्यक्षे ॥ सवत्सरे ॥

वारवाणि . । )
वारवाणी । ) स्त्री॰ वेश्यायाम् ।
शुल्कायाम् । आभ्भर्यायाम् ॥

वारविलासिनी । स्त्री॰ वेश्यायाम् ॥
वारे॰ जनसमूहे॰ विलासिनी॰
विलसनशीला ॥

वारवेला । स्त्री॰ यामार्द्धविशेषे ॥
यथा । चतु : सप्तद्विपञ्चाष्टत्रिषट्
सूर्यादिवारत : । यामार्द्धं वारवेला
स्यान्नशुभाशुभकर्मसु ॥ अपिच ।
कृतम् नियमशरमङ्गलरामस्तुभा
स्करादियामार्द्धे । प्रभवतिह्निवारवे
लानशुभाशुभ कार्यं करणाय ॥
इति ॥

वारसिद्धा । स्त्री॰ वासरविशेषेनन्दादि
तिथौ ॥ यथा । वारेनन्दापूर्व्वदे
वाधिंताव्रभंद्राविद्याऽऽरेजया॰
सैनिरिक्ता । पूर्णागीर्वाणेशवन्द्ये

ऽखिलेषु कर्म्मस्वेवं दोषवत्यस्तिसि
द्धा ॥ भौमादिवारे एता एव नेष्टा
यथा। सर्वारम्भे भूमिदायादभान्वो
र्नन्दा॰गुर्व्विन्द्वोश्च भद्रा जयार्क्के ।
रिक्ताधिष्ण्ये॰ हेलिसूनोश्च पूर्णा॰
र्त्ते यायाम्यागारदा॰कालविद्भिः ॥

वारसुन्दरी। स्त्री॰ वेश्यायाम्। म
ञ्जिकायाम्॥ वारस्य जनतायाः
सुन्दरी॰स्त्रीसामान्यत्वात्॥

वारस्त्री। स्त्री॰ गणिकायाम्। वेश्या
याम्॥ वारस्य वृन्दस्य स्त्री। साधार
णत्वात्॥

वारानिधिः। पुं॰ अम्बुधौ। समु
द्रे॥

वाराणसी। स्त्री॰ विश्वनाथनगर्य्याम्
। काश्याम्। तपस्थल्याम्। महा
श्मशाने॥ अविमुक्ते। आनन्दका
नने॥ मोक्षं सुदुर्लभं मत्वा॰स
सारञ्चातिभीषणम्। अश्मनाचर
णौ हत्वा वाराणस्यां वसेन्नरः॥
वरणायास्तथा चास्या मध्ये वाराणसी
पुरी। वाराणस्यां महादेवाज्ज्ञान
लब्ध्वा विमुच्यते॥ वरणासी च न
द्यौ द्वे पुण्ये पापहरे उभे। तयोरन्त
र्गता या तु सैषा वाराणसी स्मृता॥
विशेषोऽसिशब्दे द्रष्टव्यः॥ वरञ्च
तत् अनश्च वरानः श्रेष्ठोदकम्।
तस्य अदूरभवा। अदूरभवश्चेत्यण्
। आदिवृद्धिः। ङीप्। पूर्वप
दादस्यायामगहुतिणत्वम्॥

वाराणसीचक्रम्। न॰ सिद्धचक्रविशे
षे। काश्याम्॥

वाराणसेयः। त्रि॰ वाराणसीभवे॥
वाराणस्यां जातादिः। नद्यादिभ्यो
ढक्॥

वारासनम्। न॰ जलालये। वाः स
दने॥

वाराहः। पुं॰ महापिण्डीतकवृक्षे
॥ वराहार्थे॥ वराह एव। अण्॥
त्रि॰ वराहसम्बन्धिनि॥ न॰ चतु
र्विंशतिसहस्रश्लोकात्मके महापुरा
णविशेषे॥ चतुर्विंशतिसाहस्रं वारा
हं परमाद्भुतमिति भागवतोक्तेः॥

वाराहकर्णी।
वाराहपत्री। } स्त्री॰ अश्वगन्धायाम्॥

वाराहाङ्गी। स्त्री॰ दन्तीवृक्षे॥

वाराही। स्त्री॰ मातृप्रभेदे॥ योगिनी
विशेषे॥ तीर्थविशेषे वराहदेवस्य शक्ती
श्यामापक्षिणि॥ विष्वक्सेनप्रियाया
म्। वृष्टिभेषजे। गेंठी॰ इ॰भा॰
॥ अस्या गुणा यथा। वाराही पित्तला
वल्या कट्वी तिक्ता रसायनी। वायु
श्लेष्माग्निकृन्मेहकफकुष्ठानिलापहा
॥ वाराहीकन्दसंज्ञस्तु पश्चिमे गृष्टि
सञ्ज्ञकः। वाराहीकन्द एवान्यैश्च
र्म्मकारालुको मतः॥ अनूपे स भ
वेद्देशे वाराहइव लोमवान्॥ वराह
स्येयम्॰प्रियत्वात्। तस्येदमित्यण्॥

वाराही । स्त्री॰ शूकरीयाम् ॥ वराह स्यापत्य स्त्री । अतइञ् । तस्य॰ षणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे॰ इतिष्यङादेशः ॥

वारिः । स्त्री॰ वाचि । सरस्वत्याम् । गजबन्धनभूमौ ॥ वन्द्याम् । वारयति॰ वार्यते ऽनयावा । व सिवपिय जिराजीतीञ् ॥ न॰ वा रुके । ह्रीवेरे ॥ अम्बुनि । जले । नीरे ॥ रसोरसेन्द्रियग्राह्य श्चैव गुरुतातथा । स्नेहद्रवसमूहसम्पत्र वारिगुणाःस्मृताः ॥

वारिकण्टकः । पु॰ शृङ्गाटके ॥ सिंघाड़ा॰ इ॰ भा॰ ॥

वारिकर्णिका । स्त्री॰ कुम्भिकायाम् । खमूलिकायाम् ॥

वारिकपूरः । पुं॰ इल्लिशमत्स्ये ॥

वारिकुब्जः }
वारिकुब्जकः } पुं॰ वारिकण्टके । शृङ्गाटके ॥

वारिक्रिमिः । पुं॰ जलमक्षिकायाम् ॥

वारिचत्वरः पुं॰ कुम्भिकायाम् ॥

वारिचरः । पुं॰ मत्स्ये ॥ यादोमात्रे ॥

वारिचामरम । न॰ शैवले ॥

वारिजः । पुं॰ शङ्खे ॥ शम्बूके ॥ न॰ पद्मे ॥ द्रोणीलवणे ॥ गौर सुवर्णे ॥ लवङ्गे ॥

वारितस्करः । पुं॰ सूर्ये ॥ मेघे ॥

वारित्रा । स्त्री॰ अङ्गमकुट्याम् । रा जामूके॰ वारिवरसोमे॰ चलती तस्य॰ इ॰ भा॰ यथा । जलचा अङ्गमकुटीकावारौमूईकर्प्पं रीति हारावली । छत्रे ॥

वारिदः । पुं॰ जलदे । मेघे ॥ मुस्तके ॥ वारिददाति । डुदाञ्॰ । आतोनुपसर्गेकः ॥ न॰ वाला याम् । ह्रीवेरे ॥

वारिधरः । पुं॰ मेघे ॥

वारिधारः । पु॰ अद्रिविशेषे ॥

वारिधारा । स्त्री॰ जलधारायाम् ॥

वारिधिः । पुं॰ समुद्रे । अकूपारे । अर्णवे ॥ वारीणिधीयन्तेऽत्र । डुधाञ्॰ । कर्मण्यधिकरणे चे ति॰ किः ॥

वारिनिधिः । पुं॰ वारिधौ ॥

वारिपथिकः । त्रि॰ जलपथेनागते ॥ जलपथगामिनि ॥ वारिपथेनाहृतम्॰ तेनगच्छतिवा॰ । ठक् ॥

वारिपर्णिका । स्त्री॰ वारिपर्ण्याम् ॥

वारिपर्णी । स्त्री॰ कुम्भिकायाम् । खमूल्याम् । वारिपर्णीहिमातिक्तालघ्वीस्वाद्वीसरापटुः । दोषत्र यकरीरूक्षाशोषितज्वरशोफहृत् ॥ वारिणिपर्णान्यस्याः ॥ पाककर्णे तिङीष । यद्वा वारिणिपर्णि । पृ॰ । पापूरणे अस्यतिङीन । वारी तिङीष् ॥

वारिपालिका । स्त्री॰ खमूल्याम् ॥

वारिप्रवाह : । पुं॰ निर्झरे । झरे । उत्सान्निर्गतजलप्रवाहे । वारिणः प्रवाहः ॥

वारिप्रश्नी । स्त्री॰ कुम्भिकायाम् ॥

वारिबदरम् । न॰ प्राचीनामलके ॥

वारिभवम् । न॰ स्रोतोञ्जने ॥

वारिमसि : । स्त्री॰ पायोदे । मेघे ॥

वारिमुक् । पुं॰ खतमाले । मेघे ॥

वारिमूली । स्त्री॰ वारिपर्ण्याम् । वारिणिमूलं यस्याः । पाककर्णेति ङीष् ॥

वारिरथ : पुं॰ नावि । तरिके ॥

वारिराशि : । पुं॰ समुद्रे ॥

वारिरुहम् । न॰ कमले । वारिणि रोहति । रुह॰ । इगुपधेतिक ॥

वारिलोमा । पुं॰ अप्पतौ । वरुणे ॥

वारिवल्लभा । स्त्री॰ विदार्याम् ॥

वारिवास : । पु॰ सुराजीविनि । शौण्डिके ॥

वारिवाह : । पुं॰ जलदे । मेघे ॥ वारिवहति । वह॰ । कर्मण्यण् । सुखोयम् ॥

वारिवाहक : । पुं॰ बलाहके । मेघ ॥ वारिणोवाहक : ॥

वारिवाहन : । पुं॰ वारिदे ॥

वारिश : पुं॰ विष्णौ ॥

वारिशिरीषिका । स्त्री॰ शिरीषिकायाम् ॥

वारिसम्भव : । पुं॰ वावनालसारे ॥

न॰ उशीरे ॥ लवङ्गे ॥ सौवीराञ्जने ॥

वारी । स्त्री॰ गजबन्धन्याम् । हस्तिशालायाम् ॥ कलस्याम् ॥ वार्यतेऽनया । वृञ् । घञन्तः । वसिवपियजिराजीभ्योञ् । बह्वादित्त्वान्ङीष्वा ॥

वारीट : । पुं॰ गजे । हस्तिनि ॥

वारीश : । पु॰ समुद्रे ॥

वारु : । पुं॰ विजयकुञ्जरे ॥

वारुठ : । पु॰ अन्तशय्यायाम् ॥

वारुणि : । पुं॰ वरुणापत्ये ॥ व्यासवरुणस्यापत्यम् इञ् । अकारादेशश्च ॥

वारुण । पुं॰ भारतवर्षीयोपद्वीपविशेषे ॥ न॰ उपपुराणविशे ॥ शतभिषर्क्षे ॥ जले ॥ त्रि॰ वरुणसम्बन्धिनि ॥

वरुणकर्म । न॰ जलाशयखननादौ ॥

वारुणव्रतम् । न॰ नृपतेर्नियमविशेषे ॥ यथा । वरुणेनयथापाशैर्बद्धएवाभिदृश्यते । तथापापान्निगृह्णीयाद्व्रतमेतद्धिवारुणम् ॥

वारुणि : । पुं॰ अगस्त्यमुनौ ॥ वसिष्ठे ॥

वारुणी । स्त्री॰ गण्डदूर्वायाम् ॥ पश्चिमायाम् । प्रतीच्यांदिशि ॥ इन्द्रवारुण्याम ॥ दूर्वायाम् । शतभिषानक्षत्रे ॥ तिथिविशेषे ॥ यथा । [illegible]

वयोरूणी । गङ्गायांयदिलभ्येतसूर्यग्रहशते समा ॥ वरुण•शतभिषा ॥ इयमेवशनिवारयुक्ताचेन्महावारुणीतिशुभयोगयुताचेन्महामहावारुणीतिसंज्ञालभते । यथा । शनिवारसमायुक्तासमहावारुणीस्मृता । गङ्गायांयदिलभ्येतकोटिसूर्यग्रहे समा ॥ शुभयोगसमायुक्ताशनौशतभिषायदि । महामहेतिविख्याताचिकोटिकुलमुद्धरेत् ॥ सुराधिदेवतायाम् । प्रथमाभिमानिन्यांमहत्यादिवतायाम् ॥ मन्नावारुणीतिश्रुते ' ॥ ६ ॥ अन्नमय्यांसुरायाम । पैष्ट्याम् ॥ पुनर्नवाशालिपिष्टैर्विहितावारुणीस्मृता । संहितैस्तालखर्जूररसैर्यासापिवारुणी ॥ सुरावद्वारुणीलघ्वीपीनसाध्मानशूलनुत् ॥ वरुणप्रेरितवृन्दावनस्थकदम्बतरुकोटरनि:सृतायांबलदेवपीतवारुण्याम ॥ यथा । पराशरउवाच । वनेविचरतस्तस्यसहगोपैर्महात्मनः । मानुषच्छद्मरूपस्यशेषस्यधरणीभृतः निष्पादितोरुकार्य्यस्यकार्येणोर्वीविचारिणः । उपभोगार्थमत्यर्थंवरुणः प्राहवारुणीम् ॥ अभीष्टासर्वदायस्यमदिरेत्वमहौजसः । अनन्तस्योपभोगायतस्यगच्छमुदेशुभे ॥ इत्युक्तावारुणीतेनसन्निधानमथाकरोत्वृन्दावनवनोत्पन्नकदम्बतरुकोटरे ॥ विचरन्बलदेवोऽपिमदिरागन्धमुत्तमम् । आघ्रायमदिरातर्षमवापाथपुरातनम् ॥ ततः कदम्बात्सहसामद्यधारांसलाङ्गली । पतन्तींवीक्ष्यमैत्रेयप्रययौपरमामुदम् ॥ पपौचगोपगोपीभिः समवेतोमुदान्वितः । उपगीयमानोललितंगीतवाद्यविशारदैः ॥ इतिविष्णुपुराणेपञ्चमांशे २५ अध्यायः ॥ अश्वाद्याधिकारिणः प्रतिश्रीसदाशिवः । सम्यग्विधिविधानेनसुसमाहितचेतसा । पिबन्तिमदिरांमर्त्त्याअमर्त्त्याएवतेक्षितौ ॥ इयन्तुवारुणीदेवीनिपीताविधिवर्ज्जिता । नृणांविनाशयेत्सर्वंबुद्धिमायुर्यशोधनमितिकुलार्णवसेतु ॥ कुलार्णवेऽपिनिसङ्गोनिर्भयोधीरोनिर्लज्जोनिष्कुतूहलः । निर्णीतवेदशास्त्रार्थोवरदावारुणींपिवेदिति ॥ वरुणस्येयम् । तस्येदमित्यण् । ङीप् ॥

**वारुणीवल्लभः** । पुं० वरुणे । वारुणीवल्लभायस्य सः ।

**वारुण्ड** । पुं० फणिनांराज्ञि । पुं० न० सेकपात्रे । नौस्थजलनिस्सारणभाजने । नेत्रमले ॥ कर्णमले ॥

**वारुण्डी** । स्त्री० द्वारपिण्डाम् ॥

**वारूढ** : । पुं० बलाम्बले ॥ कपाटे ॥ बसने ॥ पञ्जरे ॥ शम्बले ॥

इति मेदिनिकरः ॥

वारेन्द्र । त्रि० वरेन्द्रांजाते । अण् ॥

वरेन्द्री । स्त्री० देशविशेषे । राजसाही० इति गौडदेशभाषाप्रसिद्धे ॥

वार्क्षम् । न० वने ॥ वृक्षाणां समूहः । तस्य समूह इत्यण् ॥ त्रि० वृक्षसम्बन्धिनि ॥

वार्क्षदुर्गम् । न० वृक्षैः समन्ताद्वेष्टिते पुरे पुराद्बहिः सर्वतो योजनमात्रं व्याप्य तिष्ठति महावृक्षकण्टकिगुल्मलताद्याश्रितैराच्छन्ने सस्थाने ॥

वार्क्षी । स्त्री० स्त्रीविशेषे । इति महाभारतम् ॥

वार्ज्जम् । न० पद्मे ॥

वार्णवः । त्रि० वर्णुदेशजे ॥ कच्छाद्यण् ॥

वार्णिकः । त्रि० लेखके ॥

वार्त्तम् । न० निस्सारे ॥ आरोग्ये । पाटवे । स्वास्थ्ये ॥ त्रि० वृत्तिमति । वृत्तिशालिनि ॥ नीरोगे ॥ वृत्तिरस्त्यस्य । वृत्तेर्षेतिण ॥

वार्त्तक । पुं० पक्षिविशेषे । बटेर इ० भा० । वर्त्तके ॥ न० वर्त्तकानां गणे ॥ वर्त्तकानां समूहः । तस्य समूह इत्यण् ॥

वार्त्ता । स्त्री० वर्त्तने ॥ वार्तिङ्गणे ॥ वार्त्ताक्याम् ॥ कृष्यादौ वृत्तौ ॥ यथा । कृषिवाणिज्यातद्वत्तृतीयं



पशुपालनम् । विद्धादेतां महाभाग वार्त्तां वृत्तित्रयाश्रया ॥ चतुर्विधापि सा प्रोक्ता कृष्णेन पितरं प्रति । कृषिवाणिज्यागोरक्षाकुसीदं तुर्यमुच्यते इति ॥ जनश्रुतौ ॥ उदन्ते ॥ वृत्तान्ते ॥ वृत्तिर्जीवनं सम० तदस्त्यस्याम् । वृत्तेर्षेतिवार्त्तिकेन० ण । दुर्गायाम् ॥ यथा । पश्वादिपालनाद्वीकृषिकर्मान्तकारणात् । वर्त्तनाधारणाद्वापि वार्त्ता सा परिगीयते ॥

वर्त्तिकः । पुं० वार्त्ताकौ ॥ वार्तिङ्गणे । वनभण्टा० इतिख्याते ॥ वार्त्तमारोग्यमाकयति । अककुटिलायाकृतौ । अन्तः कर्मण्यण् । वार्त्तफलापकयस्यका ॥ वार्त्तक पक्षिणि ॥

वार्त्ताकी । स्त्री० हिंगुल्याम् । भण्टाक्याम् ॥ आतिरितिङीष् । बृहत्याम् ॥ वार्तिङ्गणे । वनभण्टा० इति भा० ॥

वार्त्ताकु : । स्त्री० हिंगुल्याम् । भण्टाक्याम् । वृन्ताकौ । अस्या गुणा यथा । अग्निप्रदा मारुतनाशिनी च शुक्रप्रदा शोणितवर्द्धिनी च । हृद्या सकासारुचिनाशिनी च वार्त्ताकुरेषा गुणसंप्रयुक्ता ॥ सा बाल्यावस्था वातघ्नी मेदासव्रा पित्तला तथा । सदा फलानि दोषघ्नी रक्तपित्तप्रसादनी ॥

अङ्गारपक्वावार्त्ताकु . किञ्चित्पित्त
करीमता । कफमेदोऽनिलहरासरा
लघुतरापरा ॥ पुंलिङ्गोपीतिचिक्का
ण्डशेष ' ॥ वर्त्तते । वृतु० । वृतेर्वृ
द्धिश्चेतिकाकु ' ॥ बाहुलकादुका
रस्यात्वे वार्त्ताकमपि ॥

वार्त्तायन : । पुं० हेरिके । गूढपुरुषे
। प्रवृत्तिज्ञे । प्रणिधौ । चरे ॥
इतिहेमचन्द्र : ॥

वार्त्तावह : । पुं० कृषिवाणिज्यादि
जीवे । वैश्यधिके ॥ वार्त्तायाव
ह . ॥

वार्त्ताहारी । पुं० चारे । यथार्हव
र्वे ।

वार्त्तिक : । पुं० वर्त्तिके । वटेर०
हि० भा० ॥ वार्त्तिकोमधुरोवृष्य :
शीतलःकफपित्तनुत् ॥ वार्त्तिकौ ॥
चरे । स्पशे ॥ वैद्ये ॥ न० उक्ताऽ
नुक्तदुरुक्तार्थव्यञ्जकसङ्ग्रहे ॥ उक्ता
नुक्तदुरुक्तार्थचिन्ताकारितुवार्त्तिक
मितिहेमचन्द्र . ॥ वृत्तिमधीते०
वेदवा । उक्थादित्वठक् ॥ वृ
त्तौसाधुर्वा ' कथादिभ्यष्ठक् ॥

वार्त्तिका । स्त्री० वर्त्तिकायाम् ।
विष्णुलिङ्ग्याम् । बटेर० हि० भा०
॥ वर्त्तिकेतिशारावली ॥

वार्त्रघ्न: । पुं० पार्थे । अर्जुने ॥ वृ
त्रघ्नोऽपत्यम् । अण् ॥ जयन्तेचि०
इन्द्रसम्बन्धिनि ॥

वार्दल । पुं० मेलानन्दायाम् ॥
न० दुर्दिने । बादला० हि० भा०
॥ मस्याम् ।

वार्द्धकम् । न० वृद्धसङ्घाते ॥ वृ
द्धानासमूह । वृद्धाच्चेतिवक्त
व्यमितिवुञ् ॥ वृद्धस्यभावकर्म
णो ' । वृद्धत्वे । यौवनात्पराव
स्थायाम् ॥ यथा । तिथिवर्षमत
बाल्यं चिंशद्वर्षन्तुयौवनम् । मु
ख्य गौण द्विधाभिन्न वार्द्धकन्तुतत .
परम् ॥ वृद्धस्यकर्म्मभावोवा ।
मनोज्ञादित्वाद्वुञ् ॥ वार्द्धकेतप
आतिष्ठेदितिशास्त्रोदित वच ' ॥

वार्द्धक्यम् । न० वृद्धत्वे । वार्द्धके ॥
वृद्धसङ्घाते ॥ वार्द्धकमेव । चतु
र्वर्णादित्वात्० स्वार्थेष्यञ् ॥

वार्द्धि : । पुं० समुद्रे ॥ वारीणिधीय
न्तेऽत्र । कर्मण्यधिकरणे चेतिधा
ञ : कि : ॥

वार्द्धिभवम् । न० द्रोणीलवणे ॥ *

वार्द्धुषि । त्रि० वृद्ध्याजीवे ॥ वृद्ध्य
र्थं द्रव्यं वृद्धिं ' तत्प्रयच्छति ।
प्रयच्छतीतिगर्ह्यमितिठक् । वृ
द्धेर्वृधुषिभाव : ॥ पृषोदरादि
त्वात्कलोप ' ॥

वार्द्धुषिक । त्रि० कुसीदिके । वृद्
ध्याजीवे । वार्द्धुषी । वहुरा० हि०
भा० ॥ तल्लक्षणं यथा । समर्घं धा
न्यमादायमहार्घं य : प्रयच्छति ।

सर्वैवार्द्धुषिकोनाम हव्यकव्यवहि
ष्कृत . ॥ तस्य वृद्धिग्रहणनियमो
यथा । अशीतिभागं गृह्णीयान्मा
साद्वार्द्धुषिक: शतात् । द्विकं शतं
वा गृह्णीयात्सतांधर्ममनुस्मरन् ॥
द्विकं शतञ्चगृह्णानोनभवत्यर्थकि
ल्विषीति । शतकार्षापणेऽशीति
भागं विंशतिपणा , द्विकं पुराण
द्वयम् । एवं विध नियममतिक्रम्य
अनापदि स्वयमन्यद्वारावाखाच्छ
न्द्येनयोव्यवहरतितस्यैवप्रायश्चित्त
म् । आपदितुस्वयङ्करणे नियमा
तिक्रमेपनदोष : । इतिप्रायश्चित्त
विवेक ॥ वृद्ध्यर्थं द्रव्यवृद्धि .
। तांप्रयच्छति । प्रयच्छतिगर्ह्यंमि
तिठक् । वृद्धेर्वृधुषिभावोवक्त
व्य : ॥

वार्द्धुष्यम् । न० धान्यवर्द्धने ॥

वार्धेयम् । न० द्रोणीलवणे ॥

वार्द्ध्रम । न० स्त्री० चर्म्मणि ॥ व-
ध्र्यैवइदम् । चर्मणोऽञ् वि० वध्र
स्यविकारे । तस्यविकारइत्यण् ॥

वार्ध्री । स्त्री० चर्मरज्जाम् । वधी० इ०
भा० । वाध्रीन् ० ङीष् ॥

वार्ध्रीणस : । पुं० वार्ध्रीणसे । छाग
विशेषे ॥ यथा । त्रिपिवस्त्विन्द्रिय
क्षीणं श्वेत वृद्धमजापतिम् । वा
र्ध्रीणसमितिप्राहुर्याज्ञिका. पितृक
र्मणीतिनिगमे । एकचरे । गण्ड

के । गौडा० इ० भा० ॥ पक्षिविशे
षे । यथा । नीलग्रीवोरक्तशीर्ष :
कृष्णपाद सितच्छद : । वार्ध्रीण
स : स्यात्पक्षीशोममविष्णोरतिप्रि
य . ॥ रोहितस्तुमत्स्यस्यमांसैर्वा
र्ध्रीणसस्यच । तृप्तिमाप्नोतिवर्षाणा
शतानिचौणिमत्प्रिया ॥ महिषा
णाञ्चखड्गानांरुधिरै : शतवार्षि
कीम् । तृप्तिमाप्नोतिपरमांशार्दूल
रुधिरैस्तथा ॥ इतिकालिकापुरा
णे ६६ ऽध्याय : । वार्ध्रीवनासि
काऽस्य । अञ् नासिकायाइत्यच्
नसादेशश्च । पूर्वपदादितिणत्वम् ॥

वार्भट । पुं० नक्र । कुम्भीरे । वा
रिजलेभट : ॥

वार्म्मणम् । न० वर्मसमूहे ॥ वर्मणां
समूह । भिक्षादिभ्योण् ॥

वार्म्मिणम् । न० वर्मिणासमूहे ॥

वार्म्मुक् । पुं० अम्भोदे । मेघे ॥
वा . मुञ्चति . मुच्ल० । क्विप् ॥

वार्य्य . । पु० ऋत्विजि ॥ व्रियते ।
वृङ् सम्भक्तौ । ण्यत् । क्यप् तु० वृ
त्तअएव । —*— ॥

वार्य्य . । त्रि० वरणीये ॥ वारिसम्ब
न्धिनि ॥

वार्य्युद्भवम् । न० पद्मे । त्रि० जलजे ।

वाराशि : । पुं० समुद्रे । इतिपुरा
णम् ॥

वार्व्वट । पुं० वहित्रे ॥

वार्व्वणा । स्त्री॰ वर्वणायां ॥

वार्षकम् । न॰ सुश्रुतकृतपृथिवीद्वभागान्तर्गतभागविशेषे ॥

वार्षगण्य । पुं॰ पतञ्जली ॥ वृषगणस्यगोत्रापत्यम् । गर्गादित्वाद्यञ् ॥

वार्षभाणवी । स्त्री॰ वृषभानुकन्यायाम् । श्रीराधायाम् ॥ यथापरात्पर . कृष्णस्तथैव वार्षभाणवीति पद्मपुराणम् ॥

वार्षलम् । न॰ वृषलकर्मणि ॥ यथा । नकथञ्चनकुर्वीतब्राह्मण : कर्म्मवार्षलम् । वृषल . कर्मचत्रास्य पतनीयेहितेतयोः ॥

वार्षिकम् । न॰ त्रायमाणायाम् । बलभद्रिकायाम् ॥ वृष्टिजले ॥ यथा । वार्षिकं तदृहवृष्टभूमिष्ठमहित जलम् । विरावमुषित ततुप्रसन्नमसतोपमप ॥ त्रि॰वर्षाभवे ॥ वर्षासुभवम् । जातम्॰साधुवा । वर्षाभ्यष्ठक । ठ ञ्चक ॥ वर्षभवे वात्सरिके । वर्षासम्बन्धिनि ॥ यथा । वार्षिकाश्चतुरोमासा दुर्गमा : पथिसर्वदा । तस्मादेकत्रविबुधै : स्थातव्यमितिनिश्चय : ॥ चातुर्मास्यांस्तुप्रवसेत्सदाकार्य्यवशाद्द्विज . । वर्षाकालेगमनस्य प्रवासिसुखमिच्छती तिभागवते नारद . ॥

वार्षिकी । स्त्री॰ त्रायमाणायाद्मोषधौ ॥ वेलड्ड॰ प्र॰ पुष्पविशेषे ॥ यथा । श्रीपद्योषट्पदानन्दावार्षिकीमञ्जुभञ्जनेतिभावप्रकाश । वार्षिकीशीतलालघ्वीतिक्तादोषत्रयापहा । कर्णाक्षिमुखरोगघ्नी॰तत्तैलंतद्गुणस्मृतम् ॥ इतिच ॥ वर्षकर्त्तव्यपूजादौ ॥ वर्षासुभवा । ठक् । ङीप् ॥ कालाट्ठञ् वा ॥

वार्षिला । स्त्री॰ करकायाम ॥

वार्ष्णेय । त्रि॰ वृष्णिवंशोद्भवे ॥

वार्हतम् । न॰ वृहतीफले ॥ वृहत्याफलम् । प्लक्षादिभ्योऽण् विनोनसामध्यात्तस्यफलेनलुक् ॥

वार्हद्रथ । वार्हद्रथि । पुं॰ नृपे ॥ वृहद्रथस्यापत्यम् । अण् इञ् वा ॥

वार्हस्पत्य . । पुं॰ नास्तिके ॥ यथा । स्याद्वादवाद्यार्हत स्या॰ च्छून्यवादीतुसौगत । नैयायिकस्त्वक्षपादो॰ योग साङ्ख्यस्तुकापिल वैशेषिक स्यादौलूक्यो॰ वार्हस्पत्यस्तुनास्तिक . । चार्वाकोलौकायतिकश्चैतेषडपितार्किका . ॥ मैत्रेये ॥ कस्याश्चिद्विद्यायामेवयोवृहस्पते . शिष्य ॥ न॰ नीतिशास्त्रे ॥ वृहस्पतिदेवताके त्रि॰ वृहस्पतिसम्बन्धिनि ॥ वृहस्पतिर्देताऽस्य॰ वृहस्पतेरिदंवा । दित्य

दित्यादित्वपद्युत्तरपदाख्य ' ॥

वालक । पु॰ न॰ पारिहार्ये ॥ त्रि॰ अङ्गुरीयके ॥ वालको ऽस्त्रीपारिहार्ये॰ त्रिपुस्यादङ्गुरीयके । इ॰मेदिनि ' ॥ वालकै ॥

वालव : । पु॰ द्वितीयकरणे । तत्र जातस्य फलयथा । कार्यस्य कर्तास्व जनस्य भर्तासिनाप्रणेताकुलशीलयुक्त ' । उदारबुद्धिर्बलवान्मनुष्य स्ये हालवाख्ये जननस्थियस्य ॥

वाल्कम् । न॰ क्षौमादिवस्त्रे ॥ त्रि॰ वल्कभवे ॥ वल्कस्यवल्कलस्य॰ विकार : । तस्य विकारइत्यण् ॥

वाल्कलम् । त्रि॰ वल्कलनिर्मिते ॥ वल्कलस्येदम् । अण् ।

वाल्कली । स्त्री॰ मदिरायाम् ॥

वाल्मिकि ।
वाल्मीक : । पु॰ } कविश्रेष्ठे ॥
वाल्मीकि ।

प्राचेतसेभृगुवंशीयमुनिविशेषे ॥

वाव । अ॰ अवधारणार्थे ॥ प्रसिद्धौ ॥

वावदूक ' । त्रि॰ वाचोयुक्तिपटौ । वाग्मिनि । वक्तरि ॥ कुर्वादिषु वावदूकशब्दपाठसामर्थ्यादिदेदृक ॥ यद्वा पुन पुनरतिशयेनवावदति॰ इति॰ वदेर्यङन्तात्॰ उलूकादयश्चेत्यूक ' ॥

वावय : । पु॰ तुलसीविशेषे । वावुद्र॰ इ॰ भा॰ ॥ इतिशब्दचन्द्रिका ॥

वावृत ' । त्रि॰ कृतवरणे । वृते । वृतौ । स्वयंवरादिनास्वीकृतवरादौ ॥ वावृत्यतेस्म । वावृतुवर्तने । क्त ॥

वाशा । स्त्री॰ वासके ॥ वाश्यते । वाशृशब्दे । गुरोश्चेत्य ' । टाप् ॥

वाशि । पुं॰ छेदनसाधने । कुठारप्रभेदे ॥ वह्नौ ॥ वाश्यते । वाशृ॰ । वसिवपीत्यादिनाइञ् ॥

वाशिका । स्त्री॰ वासके ॥ वाश्यते । वाशृ॰ । गुरोश्चहलइत्य : टाप् । क ' । यद्वा । उश्यते । वशकान्तौ । सञ्ज्ञायामित्यनेन॰ ण्वुल् ।

वाशितम् । न॰ पशुपक्ष्यादिशब्दे ॥ वाशनम । वाशृ॰ भावेक्त ॥

वाशिनायनि : । पुं॰ वाशिनोपत्ये ॥ उदीचांवृद्धादगोत्रादिति॰ फिञ् दाशिनायनेति॰ द्विर्भावः ॥

वाशिष्ठ । त्रि॰ वशिष्ठसम्बन्धिनि ॥

वाशिष्ठी । स्त्री॰ । गोमत्याख्याम् ॥ तीर्थविशेषे ॥ यत्रैवकपिलक्ष्या तीर्थम् ॥ वशिष्ठसम्बन्धिन्याम ॥

वाशुर : । पुं॰ गर्दभे ॥ वाश्यते । वाशृ॰ । मन्दिवाशिमथिचतिचङ्क्यङ्किभ्यउरच् ॥

वाशुरा । स्त्री॰ रात्रौ ॥ वाश्यते ऽस्याम् । वाशृ॰ । मन्दिवाशी

ष्युरच् । टाप् ॥

वाश्र . । पु॰ दिवसे ॥ शकुनौ ॥ रासभे ॥ न॰ मन्दिरे ॥ चतुष्पथे॥ वाश्यते । वाश्॰ । स्फायितञ्चिव ञ्चोष्यादिना - रक् ।

वाष्पः । पु॰ न॰ नेत्रजले। भाफइ॰ भा॰ प्र॰ ॥ ऊष्मणि ॥ वायति । बोधे शोषणे॰ वातिवा । वागष्या दौ । खष्पशिल्पशष्पवाष्परूपपर्प तल्पा . इतिसाधु । बाधतेर्नेच मितिवा । बाधते : षोनिपातना त् ॥ लोहे ॥ इतिमेदिनीकार : ॥

वाष्पक । पु॰ मारिषे । यथा । मा रिषोवाष्पकोमार्षं स्त्रंतोरक्तसस स्मृत . ॥

वाष्पका । स्त्री॰ हिङ्गुपत्याम् ॥

वाष्पायमाण . । त्रि॰ वाष्पमुद्वमति ॥

वाष्पिका । स्त्री॰ हिङ्गुपत्याम् । कार व्याम् ॥ वाष्पमिव इवेप्रतिकृता विति कन् ॥

वाष्पी । स्त्री॰ वाष्पिकायाम् ॥

वाष्पीका । स्त्री॰ त्वक्पत्याम् । वाष्पि कायाम् । रांधुनी॰ इ॰ गौ॰ दे॰ भा॰ प्र॰ ॥ वाष्पमिव । कन् । टाप् । पृषोदरादि . ॥

वास : । पु॰ वेश्मनि ॥ अवस्थाने ॥ वासके ॥ वसन्त्यत्र । वसनिवासे । हलश्चेतिघञ् ॥ लघ्वादिविक ल्पे॰ । ऽ॰ ॥

वासकोष . । पु॰ वस्त्रपेटके ॥

वासक । पु॰ वैद्यमातरि । वृषे । अटरूषे । सिंहास्ये । वासा॰ वासू टी॰ इ॰ भा॰ प्र॰ वृचे ॥ अस्य गुणायथा । वासकोवातकृत् स्वर्यं कफपित्तास्रनाशन । तिक्तस्तुवर कोहृद्योलघु . शीतस्तृडर्त्तिहृत् ॥ श्वासकासज्वरच्छर्दिमेहकुष्ठक्षया पह , ॥ नानाङ्गविशेषे ॥ त्रि॰ गन्ध कृति ॥ वासयति । ण्वुल ॥ यद्वा । वस्त्र॰ आच्छादर्यति । वसआ च्छादने । ण्वुल् ॥

वासकर्णी । स्त्री॰ यज्ञशालाया म् ॥

वासकसज्जा । स्त्री॰ स्त्रीयादिनायिका भेदे ॥ अद्यमेप्रियवासर . ॰ इत्य निश्चित्य॰या॰ सुरतसामग्रींसज्जी करोतिसा॰ वासकसज्जा । वास कोवासर : ॥

वासका । स्त्री॰ वासकद्रवे ॥

वासगृहम् । न॰ गर्भागारे । गृहमध्य भागे ॥ शयनगृहे ॥ स्थितिगेहे ॥ वासाय॰ वासस्य वागृहम् ॥

वासतेयी । स्त्री॰ रात्रौ ॥ वसनम्॰ वसति . वसतौसाधु : । पथ्यति थिवसतिस्वपतेर्ढञ् ॥

वासनम् । न॰ धूपने ॥ वारिधान्या म् ॥ वस्त्रे ॥ निक्षेपाधारे ॥ वासे ॥ ज्ञाने ॥ त्रि॰ वसनेनक्रीते ॥

शतमानविंशतिकसहस्रवसनाद
या् ॥

वासना । स्त्री० प्रत्याशायाम् ॥ ज्ञाने ॥ देहात्मबुद्धिजन्यमिथ्यासंस्कारे । दुर्गन्धाम् ॥ यथा । वसत्यहष्टा सर्वेषुभूतेष्वन्तर्हितायच । धातुर्वसनिवासितोवासनातेनसास्मृतेति ॥ स्मृतिहेतौ । संस्कारे । भावनायाम् ॥ धर्माधर्मरूपेजीवगतसंस्कारविशेषे ॥ वासनाद्विविधा । मलिना० शुद्धाच । शुद्धा० दैवीसम्पत्० शास्त्रसंस्कारप्राबल्यात्तत्त्वज्ञानसाधनत्त्वेनैकरूपैव । मलिनातु० त्रिविधा । लोकवासना० शास्त्रवासना० देहवासनाचेति । सर्वेजनायथा ननिन्दन्ति० तथैवाचरिष्यामीति०अशक्यार्थाभिनिवेशो लोकवासना । तस्याश्चलोकमाराधयितुम् समर्थइतिन्यायेन०सम्पादयितुमशक्यत्वात्० पुरुषार्थानुपयोगित्वाच्चमलिनत्वम् । शास्त्रवासनातु०त्रिविधा । पाठव्यसनम्० बहुशास्त्रव्यसनम्० अनुष्ठानव्यसनञ्चेति । क्रमेण० भरद्वाजस्य० दुर्वाससो० निदाघस्यचप्रसिद्धा । मलिनत्वञ्चास्या : क्लेशावहत्वात्०पुरुषार्थानुपयोगित्वात् ० दर्पहेतुत्वात् ० जन्महेतुत्वाच्च । देहवासनापित्रिविधा । आत्मत्वभ्रान्ति ० गुणाधानभ्रान्ति ० दोषापनयनभ्रान्तिश्चेति । तत्रात्मत्वभ्रान्तिर्विरोचनादिषुप्रसिद्धा० सोवलौकिकी । गुणाधानं द्विविधम्० लौकिकं० शास्त्रीयञ्च । समीचीनशब्दादिविषयसम्पादनम् लौकिकम्० गङ्गास्नानशालग्रामतीर्थादिसम्पादनं शास्त्रीयम् । दोषापनयनमपिद्विविधम्० लौकिकं ०शास्त्रीयञ्च । चिकित्सकोक्तैरौषधैर्व्याध्याद्यपनयनं लौकिकं० स्नानाचमनादिभिरशौचाद्यपनयनंवैदिकम् एतस्यास्सर्वप्रकाराया मलिनत्वम्० अप्रामाणिकत्वात्०अशक्यत्वात्० पुरुषार्थानुपयोगित्वात्०पुनर्जन्महेतुत्वाच्चशास्त्रप्रसिद्धम् । तदेतल्लोकशास्त्रदेहवासनात्रयमविवेकिनामुपादेयत्वेनप्रतिभासमानमपि ० विविदिषोर्वेदनोत्पत्तिविरोधित्वात्० विदुषोज्ञाननिष्ठाविरोधित्वाच्च०विवेकिभिर्हेयम् । तदेवं बाह्यविषयवासना० त्रिविधानिरूपिता । अभ्यन्तरवासनातु०कामक्रोधदम्भदर्पाद्यसुरसम्पद्रूपासर्वानर्थमूल मानसीवासनेत्युच्यते । तदेव बाह्याभ्यन्तर वासनाचतुष्टयस्य०शुद्धवासनयाक्षय : सम्पादनीयोविवेकिभि ॥ अवशिष्ट

॥ शुभाशुभाभ्यामार्गाभ्यांवहन्तीवा सनासरित् । पौरुषेणप्रयत्नेनयोज नीयाशुभेपथि ॥ अशुभेषुसमाविष्ट शुभेष्वेवावतारयेत् । स्वमन . पुरु षार्थेनबलिनबलिनावर ॥ अशुभा च्चालित यातिशुभ तस्मादपीतरत् । अन्योन्यचित्तशिशुवत् तस्मात् तच्चालयेद्बलात् ॥ अपिच । वास नानापरित्यागैयदियत्नकरोष्यलम् । तत् तेशिथिलतांयान्तिसर्वाधिव्या धय क्षणात् ॥ पौरुषेणप्रयत्नेन बलात् सन्त्यज्यवासना : । स्थिति बध्नासिचेत् तर्हि पदमासादयस्यल मिति ॥

वासनाक्षय । पुं॰ वासनानाशे ॥ यथा । पूर्वापरपरामर्शमन्तरेण॰ सहसोत्पद्यमानस्यक्रोधादिवृत्तिवि शेषस्य॰ हेतुश्चित्तगत संस्कार विशेषोवासना । पूर्वपूर्वाभ्यासेन॰ चित्तेवासमानत्वात् । तस्या : क्षयोनाम॰ विवेकजन्यायांचित्तप्र शमवासनायांदृढायांसत्यपिबाह्ये निमित्तेक्रोधाद्यनुत्पत्ति : । तत्र॰ तत्त्वज्ञानेसति॰मिथ्याभूतेजगति ॰ नरविषाणादाविव॰ धीवृत्त्यनुद यात् ॰आत्मनश्चद्रष्टृत्वेन॰ पुनर्द्र ष्टव्यत्वेनअनुपयोगात् ॰ निरिन्धनाग्निवत् स्वयमेवोपशाम्यति॰नष्टेचमनसि॰सस्का रोद्बोधकस्यबाह्यस्यनिमित्तस्याऽप्र तिपत्तौ॰ वासनाक्षीयते । एव क्षीयमाणायांवासनायां॰ हेत्वभावे नक्रोधादिवृत्त्यनुदयात् मनोनश्य ति॰नष्टेचमनसि॰शमदमादिसम्प त्त्या॰तत्त्वज्ञानमुदेति॰एवमुत्पन्ने तत्त्वज्ञाने॰रागद्वेषादिरूपावासना क्षीयते॰ क्षीणायाञ्चवासनायाप्रति बन्धाभावात् तत्त्वज्ञानोदय इति परस्परत्वदृशनीयम् ॥ वासनाया क्षय ॥

वासनाक्षयाभ्यास . । पुं॰ वासनाक्ष यस्याभ्यासे ॥ यथा । इत्यासक्षव वेधिनरागद्वेषादितानवे । रति घ्नोदितायासौतत्त्वाभ्यास : स उ च्यते ॥

वासनात्याग : । पुं॰ पूर्वसंस्कारो पेक्षायाम् ॥ वासनाका . त्या ग . ॥

वासनापरित्याग । पुं॰ मनोनिग्रह णोपायविशेषे ॥ यस्तु॰ विद्यामदा दिदुर्वासनयापीड्यमानोनसाधून नुवर्त्तितुमुत्सहते॰ तस्यविवेकेन वासनापरित्यागएवोपाय : ॥ वास नाया : परित्याग . ॥

वासनिक . । पु॰ निवासी । मार्गे निवासी ॥

वासन्त . । पुं॰ परपुष्टे । कोकिले ॥ करभे । उष्ट्रे ॥ विटे ॥ मुद्गे ॥ कृष्णमुद्गे ॥ मदनवृक्षे ॥ त्रि॰ वस

वासवदत्ता । स्त्री० गद्यरूपे० आख्यायिकाग्रन्थविशेषे ॥ वासवदत्तामधिकृत्यकृता० आख्यायिका । वृद्धाच्छ । तस्यलुक् ॥

वासवानुज . । पुं० उपेन्द्रे ॥ वासवस्यअनुजः ॥

वासवी । स्त्री० व्यासमातरि । सत्यवत्याम् । दासेय्याम् । उपरिचरवसोर्वीर्य्यजातायाम् ॥ वसोरपत्यम् । अण् । ङीप् ॥ इन्द्राण्याम् ॥

वासवेय : । पुं० व्यासे । पाराशर्ये ॥ वासव्याअपत्यम् । स्त्रीभ्योढक् ॥

वास : । न० वस्त्रे ॥ वसतेऽनेनवा० वस्तेशरीरंवा । वसआच्छादने । वसेर्णिदित्यसुन् ॥

वाससज्जा । स्त्री० नायिकाप्रभेदे ॥

वासा । स्त्री० अटरूषे । वासके ॥ वासायांविद्यमानायामाशायांजीवितस्य च । रक्तपित्तक्षयीकासीकिमर्थमवसीदति ॥ वासयति । वसनिवासे । ण्यन्त : । पचाद्यच् ॥

वासागारम् । न० भोगगृहे । कन्याटे ॥ वासस्यआगारम् ॥

वासि : । पुं० कुठारभेदे । छेदनसाधने । वसूला० इ० भा० ॥ वास्नादीनामिवकरणानांकर्तृव्यापार्यत्व नियमादितिविशेषिका : ॥ वसति० वस्तेवा । वसनिवासे० आच्छादनेवा । वसिवपियजीत्यादिना० इञ् ॥

वासिका । स्त्री० वासके । वासैव । स्वार्थेकन् । प्रत्ययस्थादितीत्वम ॥

वासितम् । न० रुते । खगाऽऽरावे ॥ ज्ञानमात्रे । त्रि० सुरभीकृते । धूपितव्यञ्जनादौ । भाविते ॥ वस्त्रकर्म्मे ॥ वासुतैलम् । वासलेपना दौ । चुरादि । क्त । वासउपर्शिवायामवा ॥ ख्याते ॥

वासिता । स्त्री० करिण्याम् । नार्य्याम् ॥ वासयति । वसनिवासे० ण्यन्त : । वासुरिवाग्रामवा । क्त : । टाप् ॥

वासिनी । स्त्री० सितझिण्ट्याम् ॥

वासिष्ठ : । पुं० वसिष्ठापत्ये ॥ अपत्य । बहुत्वे० वसिष्ठा : ॥ न० रुधिरे ॥ उपपुराणविशेषे ॥ वसिष्ठकृतेयोगशास्त्रादौ ॥ त्रि० वसिष्ठसम्बन्धिनि ॥

वासी । स्त्री० तक्षण्याम् । वसूली० इ० भा० प्र० ॥

वासु : । पुं० विष्णौ । नारायणे ॥ वसतिसर्वभूतेषु जीवरूपेणात्मरूपेणवा० वासयतिसर्वाणिभूतानिस्वात्मनिवा । वस० । वासुलका

टुण् ॥ पुनर्वसौ ॥ विश्वरूपे ॥

वासुकिः। पुं० अहिराजे। सर्पराजे। सर्पजातिभेदानांमध्ये० भगवतोविभूतौ ॥ वसु रत्नं कं मूर्द्धि यस्य। वसुकायतिवा। कै शब्दे। आतोनुपसर्गेकः। वसुकस्यापत्यम्। अतइञ् ॥

वासुकेयः। पुं० अहिराजे ॥

वासुकेयस्वसा। स्त्री० विषहर्याम्। मनसादेव्याम् ॥ आस्तीकस्यमुनेर्माताभगिनीवासुकेस्तथा। जरत्कारुमुनेः पत्नी मनसादेविनमोस्तुते ॥

वासुदेवः। पुं० चित्ताधिष्ठातरि। विष्णौ। नारायणे। वृष्णीनांमध्ये० वसुदेवपुत्रत्वेनप्रसिद्धे०ऽर्जुनोपदेष्टरिभगवद्विभूतौ॥ तस्येश्वरस्यापिविभूत्वन्तः पाठसंगरूपेणचिन्तनार्थः। एवरामादावप्यवगन्तव्यम् ॥ वसुदेवस्यापत्यम्। ऋष्यन्धकेत्यण् ॥ यद्वा। वसतीति वासुः। वस० बाहुलकादुण्। वासुश्चासौदेवश्च ॥ विष्णुपुराणेनामव्युत्पत्तिर्यथा। सर्वत्रासौसमस्तञ्चवसत्यत्रेतिवैयतः। ततोसौवासुदेवेतिविद्वद्भिः परिगीयते ॥ इतिविष्णुपुराणम् ॥ यद्वा। वस्ते आच्छादयति० स्वमायया आवृणोतिजगदितिवासुः। वसेरौणादिकउः। अन्येषामपिदृश्यतइतिवसुशब्दाकारस्यदीर्घः। बाहुलकादुण्प्रत्ययोवा। दीव्यतिप्रकाशतइतिदेवः वासुश्चासौदेवश्च ॥ छादयामिजगत्सर्वंभूत्वासूर्यइवांशुभिरितिमोक्षधर्मेभारतम् ॥ अत्रदेवत्वयथा। दक्षिणेतुकरेचक्रमधस्तात्पद्ममेवच। वामेशङ्खगदाधस्ताद्वासुदेवस्यलक्षणमित्यग्निपुराणम् ॥

वासुदेवप्रियङ्करी। स्त्री० शतावर्याम् ॥ श्रीकृष्णप्रियकारिण्याम् ॥

वासुदेववरीयसी। स्त्री० शतावर्याम्

वासुपूज्य.। पुं० जिनविशेषे ॥

वासुभद्रः। पुं० श्रीकृष्णे ॥

वासुरा। स्त्री० वासितायाम् ॥ रात्रौ ॥ भुवि। वासतेयभूमौ ॥

वासूः। स्त्री० नाट्योक्त्यांबालायाम् ॥ वाश्यते० रूयते। वसेर्ण्यन्ताद्बाहुलकादूः ॥

वासौकः। न० शयनागृहे। वासमन्दिरे ॥

वास्तवम्। न० परमार्थभूते। परमात्मनि ॥ वस्त्वेव। स्वार्थेऽण् ॥ जीवे ॥ वस्तुनोंऽशत्वात् ॥ मायायाम ॥ वस्तुनः शक्तित्वात्। जगति वस्तुनः कार्यत्वात् ॥

वास्तविकः। त्रि० परमार्थभूतेवस्तुनि ॥

वास्तव्यः। त्रि० वस्तरि। वासकर्त

रि ॥ वसति । वस० । वसेस्तव्यत् कर्त्तरिणिच्चेतितव्यत् ॥ वासयोग्ये ॥ पु०वसती ॥

वास्तु । न० वास्तुकशाके । वास्तूके ॥ पुं०न०पुर्याम् ॥ सीम्नि ॥ सुरङ्गायाम ॥ गृहार्थभूमौ । वेश्मभूमौ ॥ वसन्त्यत्र । वसनिवासे । वसेस्तुन् । अगारेणिच्च ॥ पु० दैत्यविशेषे ॥ जलाशयगृहारामसेतुसङ्क्रमशालिनाम् । देवतानाप्रतिष्ठायांवा स्तुदैत्य प्रपूजयेत् ॥ अनर्च्चयित्वा योवास्तु कुर्यात्कर्माणिमानव । विघ्नं तस्यचरेद्वास्तु, परिवारगणैः सहेतिनिर्वाणतन्त्रम् ॥ अपिच । मारीभयेरोगभयेडाकिन्यादिभयेतथा । औत्पातिकेमत्यदोषेव्याघ्रिरत्नाभये पिचेति ॥ ध्यात्वाचपूजयेद्वास्तु सर्वशान्तिस्ततो भवेदित्युक्त ॥

वास्तुकम् । न० वास्तूकशाके । वथुवा० हू० भा० प्र० ॥ यथास्वगुणा । लघुदीर्घपत्रभेदाद्वास्तुकद्वितयं मतम् । वास्तुकद्वितयस्वादुक्षारंपाकेकटुदितम ॥ दीपनंपाचनंरुच्य लघुशुक्रबलप्रदम् । सरंप्लीहास्रपित्ताशं, क्रिमिदोषत्रयापहम ॥ वास्तीभवम् । पथ्यात्मादित्वाट्ठञ् । इसुसुक्तान्तात्कः ॥

वास्तुकी । स्त्री० चिल्लीशाके । क्षुद्रवास्तुके ॥

वास्तुपुरुष । पुं० वास्तुरक्षसि ॥ पूर्वमासीन्महद्भूतंसर्वभूतभयङ्करम् । तद्देवैर्निहतंभूमौसवास्तुपुरुषस्मृत ॥

वास्तुविद्या । स्त्री० वास्तुविधानशास्त्रे ॥ पद्मवाराहीमत्स्यचर ॥

वास्तूकम् । न० वास्तुके । बथुवा० हू०प्र०शाके ॥ वसतिर्देहेचिरम्० गुणावाऽस्मिन्वसन्ति । वस० । उलूकादयश्चेतिसाधु ॥

वास्तेयम् । त्रि० वस्तिसदृशे ॥ वस्तिरिव । वस्तेढञ् । ङीपि०वास्तेयी ॥

वास्तोष्पतिः । पु० सुरपती । बलारातौ । इन्द्रे ॥ वास्तोर्गृहस्येचस्य० पतिरधिष्ठाता । वास्तोष्पतिगृहमेधाच्छचेतिनिपातनादलुक्०षत्वं चलोके । इयः परत्वात्०कस्कादिषुचेतिषत्वम ॥ देवे ॥

वास्तोष्पतीयम् । न० वास्तोष्पतत्ये० हविषि ॥ वास्तोष्पतिर्देवतास्य । द्यावापृथिवीत्यादिनाछ ॥

वास्तोष्पत्यम् । न० वास्तोष्पतीये । वास्तोष्पतिर्देवताऽस्य । द्यावापृथिवीत्यादिनायत् ॥

वास्त्र । त्रि० वस्त्रावृतरथे ॥ वस्त्रेणपरिवृतोरथ परिवृतोरथइत्यण् ।

वास्थ । त्रि० जलस्थे ॥

वाहिकः । पुं० ढक्कायाम् ॥ गोवाहि । शकटादौ ॥

वाहितः । त्रि० लङ्घिते ॥

वाहित्थम् । न० हस्तिकुम्भाधोभागे ॥ कुम्भोऽत्रवातकुम्भः । वाहित्थं वातकुम्भाधइतिभागुरिः । सचललाटाधोभागः । अवश्यवहति । वह० । आवश्यकेणिनिः । सतिष्ठत्यत्र । घञर्थेकः । पृषोदरादित्वात्सधनः ॥

वाहिनी । स्त्री० तरङ्गिण्याम् । सैवलिन्याम् ॥ सेनायाम् ॥ सेनाविशेषे । त्रिगुणपत्तिषु ॥ यथा । इभाः ८१ । रथाः ८१ । अश्वाः २४३ । पदातयः ४०५ । एतत्परिमाणपरिमितायासेनायाभिन्न्यर्थः । समस्तसङ्ख्या ८१० ॥ वहति । वह० । ग्रह्यादित्वाण्णिनिः ॥ वाहःसन्त्यस्यावा । इनिः ॥

वाहिनीपतिः । पुं० सेनापतौ । सेनान्याम् ॥ समुद्रे ॥ वाहिन्याः सेनायाः । वाहिनीनांनदीनांवा पतिः ॥

वाहीकः । पुं० देशविशेषे ॥ जलिरुआती जाट० अट्ट० टू० भा० प्र० जातौ ॥ यथोक्तंकर्णपर्वणि २० अध्याये । तत्रत्व पुराणता कथा । कश्चिद् द्विजोत्तमः । वाहीकदेशंमद्रांश्चकुत्सयन्वाक्यमब्रवीत् ॥ पञ्चानांसिन्धुषष्ठानामन्तरयेसमाश्रिताः । तान्धर्मवाह्यानशुचीन्वाहीकान्परिवर्जयेत् ॥ शाकलंनामनगरमापगानामनिम्नगा । जर्त्तिकानामवाहीकास्तेषांवृत्तंसुनिन्दितमिति ॥ शतद्रुविपाशैरावतीवितस्ताचन्द्रभागेतिपञ्चनद्यः सिन्धुः षष्ठः तन्मध्यदेशोवाहीकइतिव्याख्यातारः ॥ म्लेच्छप्रभेदे ॥ गवि ॥ वाहवौ ॥ वहति । वह० । बलीकादित्वात्कीकन् । वहतेर्वृद्धिश्च ॥ त्रि० वाह्ये ॥ प्राग्दीव्यतीयेष्वर्थेषु० ईकक्चेतिवार्तिकेन० ईकक् ० बहिष्टिलोपश्च ॥ वाहीकाः पुं० भूम्नि० देशविशेषे । टक्कनामसु ॥ वाहीकाष्टक्कनामानोवाह्लीकावह्लिकाह्वयाइतिहेमचन्द्रः ॥

वाहुवारः । पुं० श्लेष्मातके । बहुवारे ॥

वाह्यम् । न० याने । युग्ये । पत्रे । वाहने । वह्ने ॥ त्रि० वहनीये । बलीवर्दादौ ॥ बहिरर्थे ॥ बहिर्भवे ॥ वाहयितुंयोग्यः । बहेर्यत् ॥ बहिर्भवोवा । बहिष्टिलोपोयञ्चेतियञ् ॥

वाह्यप्रपञ्चः । पुं० आन्तरप्रपञ्चातिरिक्ते ॥ सयथा । पृथिव्यादिपञ्चभूततज्जन्यब्रह्माण्ड तदन्तर्भूतोप०

र्ध्वपरिविद्यमानभूर्भुवः स्वर्महर्ज नस्तपः सत्यनामकाधोधोविद्यमा नातलवितलसुतलतलातलमहात लरसातलपातालनामकचतुर्दशभु वनतन्निष्ठजरायुजाण्डजस्वेदजोद्भि ज्जचतुर्विधभूतग्रामसमुदायोयथा योग्य विविधनाम रूपगुणधर्मश्च तत्याश्रयो॰ बाह्यप्रपञ्च ॥ *

बाह्यमानः। त्रि॰ पृष्ठेनोह्यमाने ॥

बाह्यवृत्तिः। पुं॰ श्रोत्रवागादौ ॥

बाह्यास्तित्ववादः। पुं॰ बौद्धैकदे शिनांवादे ॥ तद्यथा। समुदायोऽ णुसम्भूतोबाह्योभूम्यापगादिकः। आन्तरः स्कन्धजश्चित्तचैत्यरूपश्च तोजगत् ॥ मृदम्बुवह्निवायूनां खरस्निग्धोष्णाचञ्चला। चतुर्द्धाणा वः पञ्चस्कन्धारूपादिभेदतः॥ रूपशब्दादयस्तेषाव्यक्तिविज्ञानमु- च्यते। वेदनासुखदुःखेस्तः संज्ञा डित्थादिनामयत् ॥ संस्कारोवास नाचैवमुक्तलङ्घयात्मकम्। ज गत्प्रत्यक्षतः सिद्धंकिमन्यपरिक ल्पनैरिति ॥ नायवादोयुक्तिसहः। यतः। यथा। स्थिरचेतनराहि त्यात्स्वपक्षोचेतनत्वतः। नस्क न्धानामणूनांवासमुदायोत्रयुज्यते।

बाह्येन्द्रियम्। न॰ श्रोत्रत्वक्चक्षुर्जि ह्वाघ्राणेषु ॥ वाक्पाणिपादपा यूपस्थेषु ॥

बाह्येन्द्रियविषयम्। न॰ श्रोत्रादिवि षयेषु ॥ यथाहुः। बुद्धीन्द्रिया णितेषांपञ्चविशेषाविशेषविषयाणि। वाग्भवतिशब्दविषयाशेषाणितुप ञ्चविषयाणि ॥ अस्यार्थः। तेषांद शानामिन्द्रियाणांमध्ये॰ पञ्च॰ वि शेषाविशेषविषयाणि॰विशेषाः॰ स्थूलाः शब्दादयः शान्ताघोरामू ढाः पृथिव्यादिरूपा॰ अविशेषाः तन्मात्राणि॰ सूक्ष्माः शब्दादयः। तन्मात्रग्रहणेन॰ स्थूलभूतभा वमपाकरोति॰ विशेषाश्चअविशे- षाश्चविशेषाविशेषाः॰तएवविषया येषांबुद्धीन्द्रियाणांतानि॰ तथो क्तानि। तत्रोर्द्ध्वरेतसांयोगिनां चश्रोत्रम्॰ शब्दतन्मात्रविषयंस्थू लशब्दविषयञ्च॰ अस्मदादीना न्तुस्थूलविषयमेव। एवंतेषांत्व क्॰ स्थूलसूक्ष्मस्पर्शविषया॰ अ स्मदादीनान्तुस्थूलस्पर्शविषयैव। एवंचक्षुरादयोपि॰ तेषामस्मदा दीनाञ्चरूपादिषुस्थूलेषुद्रष्टव्या एवंकर्मेन्द्रियेषुमध्ये॰ वाग्भव तिशब्दविषया॰ स्थूलशब्दविषया॰ तद्धेतुत्वात्॰ नतुशब्दतन्मात्रस्यहे तुः॰ तस्याहङ्कारकार्यत्वेन॰ वा गिन्द्रियेणसहैककारणत्वात्। शेषा णितुचत्वारि॰ पाणिपादपायूप स्थानि॰ पञ्चविषयाणि॰। पाण्य

ध्याहार्यापटादीनापत्रच्छब्दाध्यात्मकत्वात् ॥

बह्लि: । पुं० अश्वयोनौदेशविशेषे ॥

बाह्लिक: । पुं० बाह्लीकदेशे ॥ बाह्लीकदेशोत्पन्ने ऽश्वे ॥ न० धीरे । कुङ्कुमे ॥ हिङ्गुनि ॥ बह्लिकदेशेभव: । बोपधादित्यण् ॥

बाह्लिज: । पुं० बाह्लिदेशोत्पन्नेतुरगे ॥

बाह्लीक: । पुं० बलख० इ० मा० प्र० देशविशेषे ॥ यथोक्तं शक्तिसङ्गमे । काम्बोजदेशमारभ्यमहार्णवान्तानुपूर्वके । बाह्लीकदेशोदेवेशिअश्वोत्पत्तिपरायणः ॥ तद्देशोत्पन्नाश्वे ॥ न० हिङ्गुनि ॥ धीरे । कुङ्कुमे ॥ उच्यते० वहतिवा । वहप्रापणे । अलीकादयश्चेतिसाधु: ॥ यद्वा । वह्लतो । वह्लप्राधान्ये । बाहुलकादीकन् ॥ त्रि० वह्लीकदेशेभवे ॥ वह्लीकदेशभव: कच्छादिभ्यश्चेत्यण् ॥ पुं० गन्धर्वविशेषे ॥

वि । अ० निग्रहे ॥ नियोगे ॥ पदपूरणे ॥ निश्चये ॥ सहने ॥ हेतौ ॥ अव्याप्तौ ॥ विनियोगे ॥ ईषदर्थे ॥ परिभवे ॥ शुद्धावलम्बने ॥ विज्ञाने ॥ श्रेष्ठे ॥ अतीते ॥ विगते ॥ विशेषे ॥ गतौ ॥ आलस्ये ॥ पालने ॥ नानार्थे ॥ गते ॥ विरुद्धे ॥

वि । पुं० स्त्री० पक्षिणि । वातिगन्धनयो: । वातेर्डिच्चेतीण् ॥

विश । त्रि० विंशते पूरणे विंशतितमे ॥ तस्यपूरणेडट् ॥

विंशक: । त्रि० विंशत्या क्रीते ॥ विंशतित्रिंशद्भ्यांड्वुन्नसञ्ज्ञायाम् । तिविंशतेर्डितीतिलोप ॥

विंशति । स्त्री० सङ्ख्याविशेषे । एकाऽधिकोनविंशतौ ॥ सङ्ख्यार्थे०एकद्विबहुवचनान्त । सङ्ख्येये०एकवचनान्त । यथा । विंशत्याद्या: सदैकत्वे सर्वा: सङ्ख्येयसङ्ख्ययो: । सङ्ख्यार्थेद्विबहुत्वेस्तस्तासुचानवति स्त्रिय: ॥ द्वौदशतोपरिमाणमस्य । पङ्क्तिविंशतोतिनिपातनात्० प्रकृतेर्विन्भाव: शतिप्रत्ययश्च ॥

विंशतिक: । त्रि० विंशत्याक्रीतद्यर्थे ॥ विंशतित्रिंशद्भ्यांड्वुन्नसंज्ञायामित्यत्रयोगविभागात्कन् ॥

विंशतितम: । त्रि० विंशे । विंशतेः पूरण: ॥ तस्यपूरणेडट् । विंशत्यादिभ्यस्तमडन्यतरस्याम्० इतिडटस्तमडागम ॥

विंशी । पुं० विंशती ॥

विकम् । न० सद्य: प्रसूताया: गो: क्षीरे ॥ यथा । क्षीरसद्य: प्रसूताया: पेयूष: पालनविकमितिशब्द

चन्द्रिका ॥

विकङ्कट । पुं० गोक्षुरे ॥ इति शब्दमाला ॥

विकङ्कत । पुं० स्वादुकण्टके । स्रुवावृक्षे । ग्रन्थिले । व्याघ्रपादि । कटुफले । बङ्ग० बं० हु० गौ० दे० भा० प्र० ॥ विकङ्कते । कङ्कि गतौ । अतच् प्रत्ययः ॥ विकङ्कतफलं पक्वं मधुरं सर्वदोषजित् ॥

विकङ्कता । स्त्री० अतिबलायाम् ॥

विकच । पुं० क्षपणे । केतुग्रहे ॥ त्रि० प्रकाशे । केशशून्ये । विकसिते । स्फुटिते ॥ कचति । कचबन्धने । पचाद्यच् ॥ विगतः कचोऽस्मात् ॥

विकचा । स्त्री० महाश्रावणिकायाम् ॥

विकच्छः । त्रि० कच्छरहिते । मुक्तकच्छे ॥

विकट । पुं० विस्फोटके । साकुरुण्डवृक्षे ॥ त्रि० उरौ । विशाले । पृथुले । पृथौ । विकराले । रम्ये । सुन्दरे । दन्तुरे । कटाभावे । विकटति । कटे वर्षावरणयोः । पचाद्यच ॥ यद्वा । सम्प्रोदश्चेति चकारादुरपि कटच् ॥

विकटा । स्त्री० बौद्धदेव्यन्तरे । मायादेव्याम् । मारीच्याम् । त्रिमुखायाम् । वज्रकालिकायाम् । वज्रवाराह्याम् । गौर्याम् । पीपिरयायाम् ॥

विकटानन । पुं० राक्षसान्तरे ॥ त्रि० भीषणास्ये ॥

विकण्टक । पुं० विकङ्कते ॥ दुरालभायाम् ॥ विगतः कण्टकोऽस्य ॥

विकत्थन न० मिथ्याश्लाघायाम् ॥ यथा । श्लाघाप्रशंसार्थवादः सा तु मिथ्याविकत्थनम् । इ० हेमचन्द्रः ॥ विकत्थ्यते । कत्थ श्लाघायाम् । भावे ल्युट् । त्रि० तच्छीले । ताच्छील्ये युच्० आत्मरूपविधेर्नानित्यत्वज्ञापकत्वात्० बोधनस्ते इति विनुण् विषये० चलनशब्दार्थादित्यु च् ॥ लघुपश्लाघनादौ ॥

विकत्थी । त्रि० विकत्थनशीले ॥ विकत्थते । तच्छील । कत्थ० । वीकषलसकत्थस्रम्भः । इति घिनुण् ॥

विकथा । स्त्री० अध्ययनेऽनुपयुक्तायां कथायां ॥

विकनीनिकः । त्रि० काणे । विगता कनीनिका तारा यस्मात् ॥

विकम्पितः । त्रि० विशेषेण कम्पविशिष्टे ॥

विकर । पुं० रोगे । विकीर्यते । कृ० । ऋदोरप् । त्रि० करशून्ये ॥

विकरालः । त्रि० भयानके ॥

विकर्णः । पुं० विदिशि । कोणे ।

द्वयोर्मध्ये ॥ यथा । शक्रादीनां पुरे तिस्रस्य शर्व्यपपुरत्रयम् । विकर्णौ दो॰ विकर्णं स्वलीन बीयान् द्वेपुरे तथेति विष्णुपुराणम ॥ दुर्योधनानुजे ॥ त्रि॰ कर्णरहिते ॥

विकर्णिक । त्रि॰ कर्णिकारहिते ॥ पु॰ भूमि॰ सारस्वतदेशे ॥ यथा । काश्मीरास्तु माधुमता सारस्वता विकर्णिका । इति हेमचन्द्रः ॥

विकर्णी । स्त्री॰ शयाङ्कुशेश्वरे॰ उदारे ऽन्तहारिणि ॥

विकर्त्तन । पुं॰ अर्के । मार्त्तण्डे । सूर्ये ॥ विकर्त्तयति भक्तं रागात् । कृतीछेदने । णिजन्तात् ल्युट् ॥ यद्वा । विशेषेण कर्त्तनं यस्य । विश्वकर्म्मणो यन्त्रोल्लीढत्वात् ॥ अर्क वृक्षे ॥

विकर्म्मकृत् । त्रि॰ निषिद्धकर्म्मकारिणि ॥

विकर्म्म । न॰ शास्त्रप्रतिषिद्धे॰ व्यापारे ॥

विकर्म्मस्थ । त्रि॰ निषिद्धकृति । चौर्ये देविकस्वकर्म्मणो विरोधीनि यानि कर्म्माणि॰ अगस्त्यागमनादीनि तत्कारिणि ॥

विकर्ष । पु॰ । कर्षणा ॥ विकर्षणम् । कृष॰ । घञ् ॥ बाणे ॥

विकर्षणम् । न॰ आकर्षणे ॥

विकज । त्रि॰ जगे ॥ विह्वले ॥ खण्डिते । [illegible] विकलाङ्गस्य ॥ निष्फले ॥

विकलपाणिक । पु॰ कुण्ठे । कुत्सिते । विकृतकरे ॥ विकलः पाणिर्यस्य ॥

विकला । स्त्री॰ ऋतुहीनायाम् ॥ राश्यादिकलाया षष्टितमांशे ॥

विकलाङ्ग । त्रि॰ स्वभावतो न्यूनाधिकाङ्गे । अपोगण्डे ॥ विकलमङ्गमस्य ॥

विकली । स्त्री॰ ऋतुहीनायाम् । गौरादित्वात् ङीष् ॥

विकल्प । पु॰ भ्रमे । भ्रान्तौ ॥ कल्पने ॥ सङ्कल्पविपर्यये ॥ वितर्के ॥ संशये ॥ तुल्यबलकृतविरोधे विकल्पो भवति ॥ शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ विकल्पनम् । कृपू सामर्थ्ये । भावे घञ् ॥ विविधकल्पे ॥ विशिष्टकल्पे ॥

विकल्पक । त्रि॰ निर्मातरि ॥

विकल्पित । त्रि॰ विपरीतत्वेन कल्पिते ॥

विकषा । स्त्री॰ मांसरोहिण्याम् ॥ मञ्जिष्ठायाम् ॥ विकषति । कषहिंसायाम् । पचाद्यच् ॥

विकस । पु॰ सिन्धुनन्दने ॥ चन्द्रे ॥

विकसत् । त्रि॰ जृम्भमाणे ॥

विकसनम् । न॰ स्फुटने ॥

विकसा । स्त्री॰ मञ्जिष्ठायाम् ॥ विकसति । कसगतौ । अच् ॥

विकसित : । त्रि॰ उज्जृम्भिते । विनिद्रे । दलानामन्योन्यविश्लेषे । दलिते ॥ व्यकासीत् । कस॰ । गत्यर्थेतिक्त ' ॥

विकस्वर । त्रि॰ विकसनशीले । विकाशिनि ॥ विकसति । कस॰ । स्थेशभासपिसकसोवरच् ॥

विकस्वरा । स्त्री॰ रक्तपुनर्नवायाम् ॥

विकार ' । पुं॰ प्रकृतेरन्यथाभावे । विकृतौ ॥ स्वरूपपरित्यागेनरूपान्तरापत्तौ । कार्ये ॥ प्रथमस्त्वाभूतान्येकादशेन्द्रियाणीतिषोडशकोगणे॥जन्मादिनाशान्तपरिणामे । सचयास्केनपठितोयथा। जायते॰अस्ति॰वर्द्धते॰विपरिणमते॰अपक्षीयते॰विनश्यतीतिषट्भावविकारा.वृत्ति शान्त'ज्योति कथमनुदितानस्तनिर्ध्यप्रकोशं विश्वोत्पत्तौव्रजतिविकृति निष्फलं'निर्मलश्च । अश्वत्थोत्पलदलकमलमञ्जुवोद्घातलीनाप्रादुर्भावे भवतिनभस 'कोदृशोवाविकार ॥ विकरणम् । कृञ् । घञ् । रुजि । रोगे ॥

विकारहीन . । त्रि॰ निर्विकारे । जायतेऽस्तीत्यादिषड्भावविकारशून्ये ॥

विकारावर्त्ति ' । न॰ निर्गुणे॰भगवद्रूपे ॥ विकारेषुनवर्त्ततद्वृत्तितथा ॥

विकारी । पुं॰ षष्टिवत्सरान्तर्गतवत्सरविशेषे ॥ विषमस्थं जगत्सर्वं विरोधिभयसम्प्लवम् । विकारीसर्वतोऽपायोममवाक्यन्तुनान्यथा ॥ ३३ ॥ त्रि॰ उपचयादिमति । परिणामिनि ॥ विकारोऽस्यास्ति । इनि : ॥ षड्भावविकारयुक्तं देहवति ॥ तथाहि । ब्रह्मादिदृश्यपर्यन्तादेहवन्तोविकारिण । किंविष्णु किं शिवोब्रह्मामघवाकिं बृहस्पति' । देहवान्प्रभवत्येवविकारी . स युत' सदेतिव्यास . ॥

विकार्य्य : । पुं॰ सोमादौ॰ कामशेषे ॥ विक्रियते । डुकृञ्॰ । विभाषाकृवृषोरितिक्यप्भावे॰कृदहोण्यत् । वृद्धि : । आद्गुणे ॥ विविध कार्यमस्य । सचत्रिविध ; । तामसोराजससात्त्विकश्चेतिभेदात् । तत्रतामसाज्जडानिभूतसूक्ष्माणिजायन्ते॰ राजसाद्बहिर्मुखानिदशेन्द्रियाणि॰ सात्त्विकान्मनबुद्धिरन्द्रियदेवताश्चजायन्ते ॥

विकाल . । पुं॰ दिनान्ते । सायाह्नि ॥ दैवपैत्रादिकर्मणिवाविरुद्ध' कालः ॥

विकालक : । पुं॰ विकाले ॥

विकालिका । स्त्री॰ ताम्राम् । मा

नरन्प्रायाम् । तावी० द्व० गौ दे० भा० प्र० बाधे ॥

विकाश : । पु० विजने ; रहसि ॥ प्रकाशे । व्यक्ते ॥ विकाशनमस्मिन वा । काश्टदीप्तौ । भावेऽलसे त्यधिकरणे वाघञ् ॥ यद्वा । विकशनमथवा कशशब्दे । पूर्ववद्घञ् ॥ विजृम्भणे ॥

विकाशनम् । न० विकाशे ॥

विकाशी । त्रि० विकस्वरे । विकासशीले ॥ विकाशोऽस्यास्ति । अतइनि ॥

विकाषी । त्रि० विकाशिनि ॥ वीकषेतिघिनुण् ॥

विकास . । पु० विकस्वरे ॥

विकासी । त्रि० विकस्वरे । विकसति । कसगतौ ॥ वौकषेतिघिनुण् । पृषोदरादि . ॥ विकासोऽस्यास्ति वा । अतइनि . ॥

विकिर. पुं० खगे । पक्षिणि । विकिरति । कृविक्षेपे । इगुपधेति क ॥ कूपे ॥ पूजासमयेविघ्नोत्सारणार्थं क्षेपणीयलाजादौ । यथा । लाजाचन्दनसिद्धार्थभस्मदूर्वांकुशाक्षता : । विकिराइतिसन्दिष्टा : सर्वविघ्नौघनाशका . ॥ पर्णमदग्धादौनांपिण्डदाने ॥ न० जलविशेषे ॥ यथा । नद्यादिनिकटे भूमिर्याभवेद्वालुकामयी । उद्धृतोयत्तु तज्जलं विकिरं विदुः ॥ विकिरं शीतलं स्वच्छं निर्दोषं लघुचस्मृतम् । तुवरं स्वादुपित्तघ्नं मनाक्कफकरं स्मृतम् ॥

विकीरण : । पुं० रक्तार्कवृक्षे ॥ विकिरति । कृविक्षेपे । कॄदॄतिक्युन् । इत्वरपरत्वम् । बाहुलकाद्दीर्घ : ॥ विक्षेपणे । बखेरणा० द्र० भा० ॥ विहिंसने । विज्ञाने ॥

विकीर्ण . । त्रि० विस्तीर्णे । लुलिते कीर्णे । विक्षिप्ते । बिखराइति ख्याते ॥ विललापविकीर्णमूर्द्धजेति० कुमारसम्भवे ॥ विकीर्यते स्म । कॄ० । क्त ॥

विकीर्णरोम । न० स्थौणेये । कुकुरौंधा० द्र० भा० प्र० चोषधौ ॥ विकीर्णानिरोमाण्यस्मिन् ॥

विकीर्णसञ्ज्ञम् । न० स्थौणेये ॥ *

विकुण्ठित । त्रि० कुण्ठीकृते ॥

विकुर्वाण । त्रि० हर्षमाणे । हृष्टचित्ते ॥ विकुरुते । करोतेश्शानश् ०शानज्वा ॥ विक्रियमाणे ॥ विकृते ॥

विकुस्र । पुं० चन्द्रे ॥ विकसति । वौकसेरितिरक्० उस्रोपधाया ॥

विकूणिका । स्त्री० नासिकायाम् ।

विकूननम् । न० आस्यगतविकारे । बिरावना० कूटकढावना० क्षीलना० इत्यादिभाषाप्रसिद्धे ॥

विकृतम् । न० विकारे । तस्य लक्षणं यथा । क्रोधतेर्ष्यादिभिर्यन्नोच्यते स्वविवक्षितम् । व्यज्यते चेष्टयैवेद विकृतं तद्विदुर्बुधाः ॥ पु० वत्सर विशेषे ॥ तत्फलं यथा । सर्वा प्रजा पीड्यन्ते व्याधि ... श्रजायते । शिरोवक्षोऽक्षिरोगश्च पापुच्चविकृते जनाः ॥ ७४ ॥ त्रि० वीभत्से ॥ रोगिते ॥ असंस्कृते ॥ वीभत्साख्यरसान्विते ॥ विकारिता विकृतम्० जुगुप्साप्रभवत्वा त् ॥ विक्रियते स्मेति । क्त ॥

विकृतिः । स्त्री० विकारे ॥ तत्त्वि ॥ डिम्बे ॥ यत्र समग्राङ्गोपदेशः साविकृतिरिति मीमांसकाः० यथा सौर्यादि । तत्प्रकृतिपयाऽङ्गाना मतिदेशेनापि प्राप्तत्वात् ॥ मद्यादौ ॥ विकरणम् । कृञ् : क्तिन् ॥

विकृष्टः । त्रि० दीर्घे ॥ आकृष्टे ॥ विकृष्यते स्म । कृषविलेखने । क्तः ॥

विकेशः । त्रि० केशरहिते ॥

विकेशी । स्त्री० केशशून्यायाम् ॥ पटवस्त्रोमे ॥

विकोकः । पुं० वृकासुरपुत्रे ॥

विकोषः । त्रि० कोषरहिते । निष्कोषे ॥

विक्कः । पुं० करिशावके । कलभे ॥

विक्रमः । पुं० पादविन्यासे ॥ आक्रमे । क्रान्तिमात्रे ॥ शक्तिसम्प त्तौ । यथा । प्रमथ्य त्वभियुक्तेषु दैवेन प्रकृतेषु च । विक्रमास्त्वप्रसिद्ध्यन्ति परीक्ष्य विधिना कृता ॥ कृ तियुद्धकाण्डे रावणं प्रति विभीष णवाक्यम् ॥ शौर्यातिशये ॥ स्वर णे ॥ शिक्षाशास्त्रप्रयोगकौशले ॥ लग्नात् तृतीयभवने ॥ प्रभवादिषु चतुर्दशवर्षे ॥ यथा । जायन्ते स सर्वशस्यानि मेदिनी निरुपद्रवा । सर्वमधुगव्यसमर्घ्यं विक्रमे प्रि ये ॥ विक्रमादित्यभूपतौ ॥ विक्र मणम्० क्रमेणचा । क्रमुपादवि क्षेपे । घञ् ॥ त्रि० क्रमात् च्युते ॥

विक्रमादित्यः । पुं० स्वनामख्यातिप्र सिद्धे नृपतिश्रेष्ठे । साहसाङ्के । शकारौ ॥ विक्रमेण आदित्य इव ॥ अथ विक्रमार्कवर्णनम् सन्दधाति- ज्योतिर्विदाभरणसमाप्तौ श्रीकालि दासः । वर्षे श्रुतिस्मृतिविचारविवे करम्ये श्रीभारते खधृतिसम्मित १८० देशपीठे । मत्तोऽधुनाकृतिरियं स तिमालवेन्द्रे श्रीविक्रमार्कनृपराज वरे समासीत् ॥ प्रथमन्नृपत्रभाया पण्डितवर्गं वर्णयति । शङ्कुः सुवा ग्वररुचिर्मणिर ग्रुदत्तो जिष्णुस्त्रि लोचनहरी घटखर्पराख्यः । अन्ये पिसन्ति कवयोऽमरसिंहपूर्वा यस्यै व विक्रमनृपस्य सभासदोऽमी ॥

सप्तोवराहमिहिर श्रुतसेननामाश्री
बादरायणमणित्थकुमारसिंहा .
। श्रीविक्रमार्कनृपस सद्सन्ति
चैतेश्रीकालतन्त्रकवयस्त्वपरे मदा-
द्या ॥ धन्वन्तरि क्षपणकोऽमर
सिंहशङ्कुवेतालभट्टघटखर्परका-
लिदासा । ख्यातोवराहमिहिरो
नृपते सभायारत्नानिवैवररुचिर्न
वविक्रमस्य । अथपरिजनान् वर्ण
यति । अष्टौयस्यशतानिमण्डलध
राधीशा . सभायामदस्यु सस
तृपरिणाहकोटिसुभटा ' सत्पण्डि
ता षोडश । दैवज्ञादशषण्मि
ता० अभिषजो० भट्टा० स्तथा० ढङ्ढि
नो० वेदज्ञारसचन्द्रमा १६ विजयते
श्रीविक्रम ' सोधिभू ॥ अथास्य
सैन्यवर्णयति । यस्याष्टादशयोज
नानि कटको० पादातिकोटित्रयम्
३००००००० वाहानामयुतायुतम्
१००००००० च० नवतेस्त्रिघ्ना । कृ
ति २४३०० र्हस्तिनाम । नौकाल
क्षचतुष्टय • विजयिनोयस्यप्रयाणे
भवेत्• सोय विक्रमभूपतिर्विजयते•
नान्योधरित्रीतले । अथास्यशाकप्र
वृत्ति दर्शयति । येनास्मिन वसुधा
तलेधनगणान् सर्वादिश . सङ्गरेह
त्वापश्चनवप्रमान् ५५५५५५५५५
कलियुगेशाकप्रवृत्ति कृता ।
श्रीमद्विक्रमभूभुजाप्रतिदिन मुक्ता



मणिस्वर्णगोमत्तोभान्नपवस्त्रैर्जनवि
हितोधर्म सुवर्णानिन ॥ अथा
स्यदिग्विजयमाह । उड्ड मद्रविडद्र
मैकपरश्रुलाटाटवीपावकोमल्लादुङ्ग
भुजङ्गराजगरुडोगौडाब्धिकुम्भोद्भव
। गर्व्वाद्रुत्तङ्गराजसिन्धुगन्धिधारा
न्धकारार्यमाकाम्बोजाम्बुजचन्द्र
माविजयतेश्रीविक्रमार्कोनृप ' ॥
अथास्यप्रभुत्वादिगुणान् वर्णयति
। येनाप्ययमहोधराविषयेदुर्गाण्य
सङ्ख्यान्यहोनीत्वायानिनतोक्तास्त
दधिपाद्दत्तानितेषांपुन । कुन्द्रा
श्रोध्यमरद्रुमस्मरसुरत्माभङ्गुणैना
स्त्रस श्रीमद्विक्रमभूभृताखलजनाश्रो
जेतुनामण्डले ॥ अस्यपुरीवर्णय
ति । यद्राजधान्युज्जयिनीमहापुरी
सदामहाकालमहेशयोगिनी । स
माश्रितप्राग्र्यपवर्गदायिनी श्रीवि
क्रमार्कोऽवनिपोजयत्यपि ॥ योरू
मदेशाधिपति शकेश्वर जित्वागृही
त्वोज्जयिनीमहाहवे । आनीयस
भ्राम्यमुमोचतन्तुहोश्रीविक्रमार्क :
समसह्यविक्रम ॥ तस्मिन् सदा
विक्रममेदिनीशेविराजमानेसमव
न्तिकायाम् । सर्वप्रजामण्डलसौ
ख्यसम्पद्बभूवसर्वत्रचवेदकर्म ॥ श
ङ्क्वादिपण्डितवरा कवयस्त्वने
केज्योतिर्विद : समभवश्ववराहपू-
र्वा. । श्रीविक्रमार्कनृपस सदिमा

अवुविस्तेरप्यह नृपसखाकिलका
लिदास ॥ इतिज्योतिर्विदाभरण
म् ॥ पाकविशेषे ॥ यथा । घृतेगु
ड्पल विंशत्पचेत्सम्यग्भिषग्वर
। उत्तार्य चापिदेयांखण्डस्य पलवि
र्णति । तालमूलीतुरङ्गीचशुण्ठो
चेतिपलार्द्धकम् । जातीफल चक
कोल लवङ्गश्चेतिकार्षिकम् ॥ मा
लतीचकुलिञ्जश्चकावकरभत्वच
म् । एतेषांकोलमात्रञ्चायसस्य
पलद्वयम् ॥ पलैक मोदक कृत्वा ए
कैक भक्षयेद्दिने । धातुक्षीणोग्नि
क्षीणश्चबलानलकर परम् ॥ नेत्र
रोगेषुसर्वेषुकासश्वासेचकामले ।
प्रमेहान् विंशतिहन्याद्विक्रमादि
त्यमोदकइति ॥

विक्रमार्क । पुं० विक्रमादित्ये ॥

विक्रमी । पुं० सिंहे ॥ त्रि० शक्ति
मति ॥ विक्रम . शौर्यम् . तद
स्यास्मिन्वाचास्ति । अतइनिठना
वितीनि ॥

विक्रय . । पु० विक्रयणक्रियायाम्
। विपणे । मूल्यग्रहणपूर्वकद्रव्य
त्यागे । वैद्या० इ० भा० ॥ क
न्याविक्रयेदोषा यथा । य . कन्या
पालन कृत्वाकरोतिविक्रय यदि ।
विपद्धनलोभेन कुम्भीपाक स ग
च्छति ॥ कन्यामूत्रपुरीषञ्चतत्भक्ष
तिपातकी । कृमिभिर्दशित . का
कौर्यावदिन्द्राश्चतुर्दश । मृतश्चव्याध
योनीच सलभेज्जन्मनिश्चितम् ।
विक्रीणीतेमासभार वषत्वं वदिका
निशमितिब्रह्मवैवर्त्तपुराणे ॥
विक्रयणम् । डुक्रीञ् द्रव्यविनिम
ये । एरच् ॥

विक्रयणम् । न० विक्रये ॥ यथा ।
यमाद्दिशक्राग्निहुताशपूर्वानिष्टा :
क्रयेविक्रयणे प्रशस्ता . । पौष्णाश्वि
चित्राशतविष्णुवाता : क्रयेहिता
विक्रयणे निषिद्धा . ॥

विक्रयिक । त्रि० विक्रेतरि ॥ विक्र
येणजीवति । वस्नक्रयविक्रयाट्ठ
न् । क्रयविक्रयग्रहण सङ्घातविगृ
हीतार्थम् ॥

विक्रयी । त्रि० विक्रयकर्त्तरि ॥

विक्रान्त : । पुं० शूरे ॥ विक्रान्तस्य
लज्जाभूषणम् ॥ सिंहे ॥ न०
वैक्रान्तमणौ ॥ नीचवज्रे । क्षुद्र
वज्रे ॥ विक्रामतिस्म । क्रमु० गत्य
र्थेक्तः ॥

विक्रान्ति । स्त्री० अश्वगतौ । पुला
यिते ॥ विक्रमे ॥

विक्रयिक । त्रि० विक्रेतरि ॥

विक्रिया । स्त्री० विकारे । विकृतौ
॥ विकरणम् । कृञ : शच ॥
विशिष्टत्वेनक्रियतेइतिवा ॥ विश्री
याकारे ॥

विक्रीत . । त्रि० कृतविक्रये । येन

रज्ज्वनारोपित • तेनताद्दृशकथा
विक्षेपोविक्षेप । तेनराजपुरुषा
दिभिराकारणे •गृहजनादिभिर्वा
वश्यकार्यार्थमाकारणे • स्वगृह
द्वाहादिना पश्चतीगमनेवा• शिरो
रोगादिनाप्रतिबन्धेवा• नविक्षे
प । ननुकार्यव्यासङ्गेनावनं
कृत • सभाक्षोभादिनाचेत्• अन
नुभाषणमेव• उत्तराप्रतिपत्त्याचे
त्• अप्रतिभैवेतिचेन्न । उत्तराव
सराभावात् । वस्तुतस्तूत्तरस्फू
र्त्तावपि• तद्दूषणसत्त्वावगतावि
क्षेपसम्भवात । यथाक्षितिः सक
र्तृकाकार्यत्वादित्युक्ते• अङ्कुरे
व्यभिचारस्तावन्नगोवाङ्गाव्य•तत्र
चेदंपक्षसमत्वं ब्रूयात्• तदानी
किमुत्तरम्• यदीऽयमत्रार्थविलि
खितमयाचविचारितम्• किञ्चि
त्कार्यमुक्ताव्यग्रत्वेनाद्दृश्यते• इ
त्थं वनिक्षेपसम्भवादिति ॥ वि
क्षेपणम् । क्षिप• । भावे• घञ्॥
विक्षेपशक्तिः । स्त्री• अज्ञानसाम
र्थ्यं । मायाशक्ती ॥ यथा• रज्ज्व
ज्ञान• स्वावृतरज्जौ• स्वशक्त्या•
सर्पादिकमुद्भावयति । एवम• अ
ज्ञानमपि• स्वावृतात्मनि• तथा
विक्षेपशक्त्या• आकाशादिप्रपञ्च
मुद्भावयतिताद्दृशसामर्थ्यम् । वि
क्षेपशक्तिर्लिङ्गादिब्रह्माण्डान्तंजग



त्सृजेदित्युक्तेः । विविधस्वरूपेण
भवनविक्षेपशक्तिः ॥
विक्षेपसहभू । पुं• अन्तरायविशे
षेषु ॥ तेचयोगसूत्रे प्रदर्शिताः ।
यथा । दुःखदौर्मनस्याङ्गमेजयत्वश्वा
सप्रश्वासाविक्षेपसहभुव• इति ॥
अस्यार्थः । कुतश्चिन्निमित्तादुत्प
न्नेषु विक्षेपेषु• एतेदुःखादय
प्रवर्त्तन्ते । तत्रदुःखञ्चित्तस्यराज
सः परिणामोबाधनालक्षणः• य
द्बाधात्प्राणिनस्तदुपघातायप्रवर्त्त
न्ते । दौर्मनस्यं बाह्याभ्यन्तरैः
कारणैर्मनसोदौःस्थ्यम् । अङ्ग
मेजयत्वं सर्वाङ्गीणवेपथुरासनमन
स्थैर्यस्यबाधकः । प्राणोयद्बाह्यंवा
युमाचामतिसश्वासः । यत्कौ
ष्ठ्यंवायुनिः श्वसितिसप्रश्वासः
। तएते विक्षेपैः सहप्रवर्त्तमाना
यथोदिताभ्यासवैराग्याभ्यांनिरोद्ध
व्याः समाहितचित्तस्यैते नभवन्ति
•विक्षिप्तचित्तस्यैवभवन्तीतिविक्षे
पसहभुवोऽन्तरायाएव । एतेअभ्या
सवैराग्याभ्यांनिरोद्धव्याः ईश्वर
प्रणिधानेनवा ॥
विख्रः । त्रि• विगतनासिके ।
विख्मा । पुं• स्रष्टरि । ब्रह्मणि ॥
विख्रुः । त्रि• गतनासिके ॥ विगता
नासिकाऽस्य । खुरोचवक्तव्या वि
गतनासिकाया . ख्रुः ॥

विखुर । पु॰ राक्षसे ॥ चौरे ॥

विखिद । त्रि॰ गतमोहे ॥ विगत खिदोस्य ॥

विख्य । त्रि॰ विखौ ॥ विगताना सिकास्य । ख्यस्तेनासिकाया ख्यादेशोऽच् प्रत्ययश्च ॥

विख्यात . त्रि॰ प्रसिद्धे । ख्याप्य ॥ विपूर्वात्ख्याते क्तः ॥

विख्याति । स्त्री॰ अतिप्रसिद्धौ ॥ विख्यानम् । ख्याप्रकथने । स्त्रियां क्तिन् ॥

विख्यापनम् । न॰ व्याख्याने ॥ प्रकाशने

विखु । त्रि॰ विख्य ॥ विगतानासिकास्य । खुखौचवक्तव्यौविर्तिनासिकायाः खु ॥

विगणनम् । न॰ ऋणमुक्तौ । ऋणादिनिर्यातने ॥

विगत .। त्रि॰ निष्प्रभे । अलोके । प्रभारहिते ॥ वीते । गते ॥ विगच्छतिस्म । गम्लृगतौ । गत्यर्थेति क्तः ॥ च्युते ॥

विगतकल्मष . । त्रि॰ निर्गतमले । निर्मले । स्वच्छे ॥ संसारहेतुधर्माधर्मरहिते ॥

विगतक्लम । त्रि॰ शरीरक्लमशरहिते ॥

विगतज्वर . त्रि॰ ऐहिकपारत्रिकदुर्भोगनरकपातादिनिमित्तशोकरहिते ॥ ज्वरहोने ॥

विगतशोक । त्रि॰ निःशोके । शोकरहिते ॥ विगताशोकोयस्य ॥

विगतस्पृह: । त्रि॰ देहजीवितभोगेष्वपिस्पृहारहिते । सर्वदृश्येषुदोषदर्शनेन॰मिथ्याबोधपरमानन्दरूपमोक्षगुणदर्शनेनच॰सर्वतोविरक्ते ॥ स्पृहारहिते ॥ विगतास्पृहायस्य ॥

विगतार्त्तवा । स्त्री॰ निष्फलायाम् । पञ्चपञ्चाशदव्दध्योनिवृत्तरजसिस्त्रियाम् ॥ विगत आर्त्तवरजोऽस्या ॥

विगन्धक । पुं॰ इङ्गुद्याम् ॥

विगन्धिका । स्त्री॰ हबुषायाम् ॥

विगम:। पु॰ नाशे ॥ यथा । एकदलिङ्गनोविद्यात्तिनस्तु॰यदुपाध्यनवच्छिन्नस्यब्रह्मणोविशुद्धरूपता॰तादृशोपाधिविगमएवकैवल्यम् । चिद्लिङ्गनस्तु॰आनन्दमयपरमात्मनि॰जीवात्मनोलयोमोक्ष: । जीवात्मपरमात्मनोरभेदेपि॰उपाधिविशेषविशिष्टस्यात्मनोजीवरूपतया॰तयौपाधिक परमात्मभेद । इतिभेदकोपाधिविगमएवजीवस्यपरमात्मनिलय .। यथाघटाकाशस्यघटविगमएवशुद्धाकाशेतस्यलय: । लिङ्गशरीरावच्छिन्नस्यैवात्मनोजीवभाव . इतिलिङ्गशरीरनाश

एवपथ्यं वसितीमोघ : । इतिमु
ग्धिबाद् . ॥

विगर्हणम् । न० विगर्हणायाम् ॥

विगर्हणा । स्त्री० निन्दने । भर्त्सना
याम्

विगर्हित: । त्रि० जुगुप्सिते । निन्दि
ते ॥ निषिद्धे ॥

विगलित । त्रि० सुखलिते ॥ यथा ।
विगलितवसन परिहृतवसन घटय
जघनमपिधानम् । किसलयशयने
पङ्कजनयनेनिधिमिवहर्षनिधान
म् ॥

विगाढ । त्रि० प्रविष्टे ॥ विगाहते
स्म । गाहूविलोडने । क्त : ॥ क
ठिने ॥ प्ररूढे ॥ स्नाते । अवगा
हिते ॥

विगाथा । स्त्री० मात्रावृत्तप्रभेदे ॥ य
था । गाथाद्वितीयतुर्यौ०पादौभव
तोयदाचविपरीतौ । सेयंभवतिवि
गाथा०फणिनायकपिङ्गलेनोक्ता॥
यथा । वृन्दारण्यविहारी०बल्लवनारी
मनोहारी । गोपालीकरतालो०न
र्त्तनशालीपुनातुवनमाली ॥

विगानम् । न० निन्दायाम् ॥ परदे
वते ॥ विरुद्धगानम् ॥

विगाहनम् । न० स्नाने ॥

विगाह्यमान : । त्रि० प्रविश्यमाने ॥
विगाहते । गाहू० । शानच् ।
मुक् ॥

विगीत । त्रि० निन्दिते ॥

विगुण । त्रि० गुणवैपरीत्यविशि
ष्टे ॥ यथा । यथामनोममाचष्टने
य मातातथामम । विगुणेष्वपिपु
त्रेषुनमाताविगुणाभवेत् ॥ अ
ङ्गविकले ॥

विगूढ । त्रि० गर्हिते ॥ गुप्ते ॥

विगृह्यवाद । पुं० जयपराजयप्रधा
नेजल्पन्याये ॥

विग्न । त्रि० भीते ॥

विग्र । त्रि० गतनासिके ॥ विग
तानासिकाऽस्य । वेर्ग्रोवक्तव्य. ।
प्रादिभ्योधातुजस्येतिसमास . ॥

विग्रह : । पुं० काये । शरीरे ॥ वि
भागे ॥ विस्तारे ॥ समासवाक्ये ।
विस्तरे । तदर्थबोधकवाक्ये ॥ पुं०
न० राज्ञांगुणभेदे । वैरे । रणे ।
युद्धे । कलहे । सङ्ग्रामे ॥ सम
ज्यायोभ्यांसन्दधीत० हीनेनविग्र
हणीयात् । यथा । वालोवृद्धोदी
र्घरोगी तथाज्ञातिवहिष्कृत :
भीरुकोभीरुकजनोलुब्धोलुब्धजन
स्तथा॥विरक्तप्रकृतिश्चैवविषयेष्वति
शक्तिमान् । अनेकचित्तमन्त्रश्चदेव
ब्राह्मणनिन्दक ॥ दैवोपहतश्चैव
दैवचिन्तकएवच । दुर्भिक्षव्यसनो
पेतोवलव्यसनसंयुत . ॥ अदेश
स्थोवहुरिपुर्युक्ताकालविपर्यय : ।
सत्यधर्मव्यपेतश्चविंशति पुरुषा

घसा: ।। एतै: सर्विंगकुर्वीत विग्रहृणीयात् केवलम् वृत्तिकामन्दकीर्त्ति: ॥ विरुद्ध विविध वा० ग्रहणम् । ग्रह० । ग्रहग्रद्रिश्यप् ॥ विविधैर्व्याधिभिर्गृह्यतेवा । अप् ॥ विविध सुखदु:खादिगृह्णाति वा । अच् ॥ त्रि० ग्रहणुन्ये ॥

विग्राहरम् । न० पृष्ठे ॥

विग्लापनम् । न० श्रमहेतौ ॥ विग्लापयति । ग्लै० । ल्युट् ॥

विघटनम् । न० विरुद्धनिर्माणे ॥

विघटिका । स्त्री० पले ॥

विघटित: । त्रि० नाशिते ॥

विघटी । स्त्री० पले ॥

विघट्टनम् । न० सङ्घर्षे ॥

विघट्टित: । त्रि० अभिहते ॥ विशेषेणचालिते ॥ विपूर्वात् ० घट्टते: क्त: ॥ कृट् ॥

विघस: । पु० भुक्तशेषे । अतिथिगुर्वादिभुक्तावशेषे ॥ शिष्टैरद्यते । अद० उपसर्गेऽदश्ल्यप् । घञपोश्चेतिघसल ॥ आहारे ॥ न० सिक्थकै ॥

विघसाशी । त्रि० अतिथिगुर्वादिभुक्तशेषभुज ॥ विघसभुक्तशेषमश्नाति । अश० । णिनि ॥ विघसाशीभवेन्नित्यं नित्यं वाऽमृतभोजन: । विघसोभुक्तशेषन्तुयज्ञशेषं तथामृतम् ॥

विघात: । पुं० मारणे ॥ हनन घात । विशिष्टोघात ॥ व्याघाते । आघाते ॥

विघाती । त्रि० निवारके ॥ घातके ॥

विघूर्णम् । त्रि० भ्रमति ॥ घुणघूर्णभ्रमणे । अनुदात्तेत्वप्रयुक्तात्मनेपदस्य० वस्विडोडित्वेनानित्यत्वज्ञापनात् ० परस्मैपदम् ॥ ॥

विघ्न । पु० अन्तराये । प्रत्यूहे । समाप्तिप्रतिबन्धकादुरिते ॥ विहननम्० विघ्नन्तिमनांस्यस्मिन्वा० विहन्यतेऽनेनवा । हन० । घञर्थेक: ॥

विघ्नकारी । त्रि० घोरदर्शने ॥ विघातिनि । विघातस्यकारके ॥

विघ्नचतुष्टयम् । न० लयविक्षेपकषायरसास्वादलक्षणं षु चतुष्कु ॥ निर्विकल्पसमाधौक्रियमाणेचैतेचत्वारोविघ्नाः सम्भवन्ति ॥ विघ्नानाचतुष्टयम् ॥

विघ्ननायक: । पु० गणेशे । विघ्नानां नायक ॥

विघ्ननाशक: । पुं० विनायके । गणेशे ॥ विघ्नानानाशक ॥

विघ्ननाशन: । पु० गणेशे ॥

विघ्नराज: । पुं० विनायके । गणाधिपे ॥ विघ्नानांराजा । राजाह० सखिभ्यष्टच् ॥

विघ्नविनायक: । पुं० श्रीगणेशे ॥

विघ्नहारी । पुं० गणाधिपे । लम्बोदरे ॥ अवश्यं हरति । हृञ् ० । णिनि । विघ्नस्य हारी ॥

विघ्नित । त्रि० सञ्जातविघ्ने ॥ इतच् ॥

विघ्नेश । पुं० हेरम्बे ॥ विघ्नानामीशः ॥

विघ्नेशवाहन । पुं० महामूषके ॥ विघ्नेशस्य वाहन ॥

विघ्नेशानकान्ता । स्त्री० श्वेतदूर्वायाम् ॥

विङ्क । पुं० अश्वखुरे । पुटे ॥

विङ्का । स्त्री० अश्वगतिप्रभेदे ॥ शूकशिम्ब्याम् ॥ नस्य ङे । कु० मेदिनिकरः ॥

विचकिल । पुं० मल्लीप्रभेदे । त्रिपुटायाम् ॥ मदनवृक्षे ॥ इति मेदिनिकरः ॥

विचक्षण । पुं० पण्डिते ॥ विचष्टे चक्षिङ् ० । अनुदात्तेतश्च हलादेरिति युच् । कर्त्तरिख्याञितिख्या सकारः ॥ त्रि० विचारकुशले ॥ निपुणे । तत्तत्कालकर्त्तव्यतायां चतुरे । निपुणतरवस्तुदर्शिनि ॥

विचक्षणा । स्त्री० नागदन्त्याम् ॥

विचक्षुः । त्रि० विमनसि ॥ चक्षुर्हीने ॥

विचयः । पुं० अन्वेषणे ॥ विचीयते । चिञ् चयने । भाव एरच् ॥

विचयनम् । न० मार्गणे ॥ समीक्षणे ॥ विविधम्० चयनम् ॥ चिञ्० । ल्युट् ॥

विचर्च्चिका । स्त्री० रोगविशेषे । पामनि । पामायाम् ॥ दाल्यतेत्वक् खराकण्डूपापाणयोर्याविचर्च्चिका । पादेविपादिकाज्ञेया स्थानभेदात् विचर्च्चिका ॥ दाल्यते० ॥ विदार्यते ॥ विचर्च्यते । चर्च्च अध्ययने । रोगाख्यायांण्वुल्बहुलम् । प्रत्ययोपसर्गाभ्यां रोगप्रतीतिः ॥

विचल । त्रि० अस्थिरे ॥

विचलनम् । न० विभ्रमे ॥

विचलित । त्रि० स्खलिते । पतिते ॥ स्थानान्तरप्राप्ते ॥

विचार । पुं० कार्याकार्यरूपेविमर्शे ॥ तत्त्वनिर्णये । सन्दिग्धे वस्तुनिप्रमाणैस्तत्त्वपरीक्षायाम् । वितर्के । प्रमाणैर्वस्तुतत्त्वपरीक्षायाम् । चर्चायाम् । सङ्ख्यायाम् ॥ सन्दिग्ध सप्रयोजनञ्च० विचारमर्हति ॥ विवेके ॥ कोहं कथमिदं जातं कोवैकर्त्तास्य विद्यते । उपादानं किमस्तीह विचारः सोयमीदृशः ॥

विचरणम् । न० विचरत्यनेनवा । चर० । वञ ॥

विचारणा । स्त्री० विद्यायाम् ॥ यथा । परीक्षापरीक्षाचविद्यार्थाविचारणा । तत्रापरीक्षविद्याया

विचारोऽत्र समाप्यते ॥ त्रि॰ विचारोत्पन्न। विचाराज्जाते ॥ जनी॰। ड ॥

विचारणम्। न॰ विचारे ॥ चरस गत्यर्थ् रादि' युच् ॥

विचारणा। स्त्री॰ विचारे। चर्चायाम् ॥ मीमांसाशास्त्रे ॥ चरस गये॰ चरादि। ण्यासश्रन्थोयुच्। टाप् ॥

विचारणीयम्। न॰ शास्त्रे ॥ त्रि॰ विचार्ये ॥

विचारित.। त्रि॰ कृतविचारे। विमृष्टे। विर्णे ॥ विचार्यतेस्म। चर गतौ॰ण्यन्त। क्त ॥ विचार सञ्जातोऽस्या। तारकादित्वादितच् ॥

विचार्य्यः। त्रि॰ विचारयोग्ये। विचारितव्ये। विचारणीये ॥

विचार्य्यमाण.। त्रि॰ चिन्त्यमाने ॥ ज्ञान स्व यतथाज्ञातावितय भाति मायया। विचार्यमाणे वितयेषा तवैकोऽवशिष्यतइतिश्रीमद्भागवतम्। ॥

विचाल:। पुं॰ न॰ अन्तरे। अभ्यन्तरे। अन्तराले ॥ रूपान्तरापत्तौ ॥ यथापयसोदध्यादिरूपताविचाल.॥

विचि:। पुं॰ स्त्री॰ अल्पतरङ्गे ॥

विचिकित्सा। स्त्री॰ संशये। वितर्का नैकस्मिन्नप्यगादिज्ञाने ॥ विचिकित्सनम्। कितस शये। गुप तिज् किद्भ्य. सन्। तत॰ अप्रत्ययो दित्यकारप्रत्यय। टाप् ॥

विचिकित्सित:। त्रि॰ संशयिते। सन्दिग्धे ॥ विचिकित्सासञ्जातास्य। तारकादित्वादितच् ॥

विचिकिल। पुं॰ त्रिपुटायांमल्लिकायाम् ॥ दमनके। शु॰ष्टि॰चन्द्र.॥

विचित॰। त्रि॰ अन्विष्टे ॥

विचित्त। त्रि॰ उन्मत्ते ॥

विचित्रम्। न॰ कर्बुरवर्णे ॥ पुं॰ न॰ अलङ्कारविशेषे ॥ विचित्र स्वविरुद्धस्फलस्यात्समुद्यमङ्गतिल यात् ॥ त्रि॰ विचित्रवर्णवति ॥ नानाविधे ॥

विचित्रक:। पुं॰ भूर्जद्रुमे ॥

विचित्रदेह॰। पुं॰ मेघे ॥ त्रि॰ आश्चर्यशरीरे। नानावर्णदेहे ॥

विचित्रवीर्य्य॰। पुं॰ चन्द्रवंशीयनृपतिविशेषे ॥

विचित्रवीर्य्यसू॰। स्त्री॰ सत्यवत्याम् ॥

विचित्रा। स्त्री॰ मृगेर्वारौ ॥ चित्रा ख्यनागाम् ॥

विचित्राङ्ग:। पुं॰ शिखिनि। मयूरे। व्याघ्रे ॥ त्रि॰ आश्चर्यशरीरे ॥ विचित्राणि॰ अङ्गानियस्य स.॥

विचिन्वन्। त्रि॰ मृगयमाणे। अन्विष्यति॥

विची । स्त्री० वीच्याम् । तरङ्गे ॥ बु० विरूपवीचि ॥

विचेतन । त्रि० चेष्टारहिते ॥ विग तापेतनायस्य सः ॥ ( ७ ) ॥

विचेता । त्रि० दुर्मनसि । अन्तर्मनसि । विमनसि । विगतचित्ते ॥ भगवद्ध्यानजनितदुःखप्रतिबद्ध विवेकविज्ञाने । विक्षिप्तचित्ते ॥ उद्विग्नचित्ते ॥

विचेय : । त्रि० मृग्ये ॥

विचेष्टनम् । न० अङ्गपरिवर्त्तने ॥

विचेष्टितम् । न० विरुद्धाचरणे ॥ व्यापारे ॥

विच्छन्द : । पुं० विच्छन्दके ॥ विशिष्टश्छन्दोऽस्य ॥

विच्छन्दक । पुं० ईश्वरसद्मप्रभेदे ॥ विशिष्टश्छन्दोऽभिप्रायोऽस्य ॥ यद्वा । विशिष्टान् ० छन्दयति ० अभिलाषान् करोति । छदि० । ण्वुल् ० कुन् वा ॥ उपर्युपरिगृहैश्च तद्व्च्छन्दकस प्तकमिति भरतः ॥

विच्छर्दक : । पुं० विच्छन्दके ॥ उच्छृदिर् दीप्तौ ॥ ण्वुल् ॥

विच्छाय : । पुं० मणौ ॥ न० पक्षिणां छायायाम् ॥ त्रि० हतप्रभे ॥ छायारहिते ॥ विगता छाया यस्य ॥

विच्छाया । स्त्री० पक्षिच्छायायाम् ॥ ओजलोचिता ० छाया बाहुल्य इति सम ण्वात् ॥

विच्छित्ति । स्त्री० अङ्गहारे ॥ विच्छेदे ॥ हावभेदे ॥ यथा । मण्डनानादरन्यासो विच्छित्तिरल्पदर्पतः । आभरणविलेपनादीनां कुतश्चित् प्रियापराधादीर्ष्ययानादरेण न्यस्तानां सखीनां प्रयत्नेन धारणं विच्छित्तिः ॥ प्रियेण दत्तप्रीतिनियमेन स्वल्पमपि विभूषणं विच्छित्तिरित्यन्ये । आकल्पकल्पनाल्पापि विच्छित्तिः कान्तिपोषकृदित्युज्ज्वलनीलमणिः ॥ विच्छेदनम् । छिदिर् द्वैधीकरणे । क्तिन् ॥ छेदे ० विनाशे ० विच्छित्तिरिति त्रिकाण्डशेषः ॥ शोभायाम् ॥ इति हेमचन्द्रः ॥

विच्छिन्न : । त्रि० समालब्धे । कृत । काटा० बु० मा० ॥ विभक्ते ॥ कुटिले ॥ विशेषेणच्छिन्नः ॥

विच्छिन्नावस्था । स्त्री० विच्छेदावस्थायाम् । अभिव्यक्तस्य जनितकार्यस्यापि ० केनचिद् बलवताभिभवे ॥

विच्छेद । पुं० वियोगे । विरहे ॥ कान्तायाः कान्तविच्छेदात् मरणादितिरिच्यते ॥ विच्छेदनम् । छिदिर् ० । घञ् ॥

विच्छेदावस्था । स्त्री० विच्छिन्नावस्थायाम् ॥

विच्युत : । त्रि० विघटिते ॥ विगते ॥

विच्युति : । स्त्री० वियोगे ॥

विजन । त्रि० निर्जने । विविक्ते ।

नि । प्रलापी । रक्षसि ॥ यथा ।
आहारनिर्हारविहारयोगाः सदैव
सद्भिर्विजने विधेयाः ॥ अखण्डान
न्दे ब्रह्मणि ॥ यादोवन्तेयमध्येयत्र
लोयश्चिन्नविद्यते । योनिदसततव्या
प्तसदैवोविजन स्मृतः ॥ विगतो
जनोऽस्मात् ॥

विजननम् । न० प्रसवे ॥ पुं० सूति
मासि । विजायतेऽस्मिन् । अनो० ।
करणेतिल्युट् ॥

विजन्मा । पु० मेषे । सुधन्वाचार्य्ये ॥

विजपिलम । न० पिच्छिले ॥

विजय । पुं० जये । शत्रुपराजयनि
मित्तकत्कर्षे ॥ पार्थे । अर्जुने पा
ण्डवे ॥ विमाने । विष्णुनुचरविशे
षे ॥ कुलार्हत्पितरि ॥ जिनबल
देवे ॥ यमे ॥ कल्किनृपे । वत्स
रविशेषे ॥ तत्फलयथा । अस्यतो
यास्याम्मेघावर्षन्तिखण्डमण्डले ।
भवन्तिसर्वशस्यानिविजयेनाभस
शय ॥ २७ ॥ यात्रायोगान्तरे ॥
यथा । दिग्गीशोद्दिवलोचेत्स्यात्
स्वेशस्वसुहृद्यदि । विजयोनामयो
गोयं याताराजाजयीभवेत् । सम
स्यात्रायोगे ॥ गुरौवीर्य्येकेन्द्रयुक्ते बु
धे वाभृगुनन्दने । विजयोनामयो
गोययातुर्विजयदः सदा ॥ विजय
नम् । विजये । एरण्ड ॥ एकादशे
मुहूर्त्ते ॥ चतुर्दिग्द्वारगृहे ॥ परमे
श्वरे ॥ विजयशेखाशवैराग्येश्वर्य्य
दिगुणैर्विक्रम् । विपूर्वाज्जयते
पचाद्यच् ॥

विजयक । पु० विजयिकुमारे ॥ आ
कर्षादित्वात्कन् ॥

विजयकुञ्जर । पु० राजवाह्यमा
तङ्गे ॥

विजयच्छन्द । पु० पञ्चशतमौक्ति
कहारे ॥

विजयनन्दन । पु० इक्ष्वाकुवंशज
राजविशेषे ॥ जये ॥ अभिमन्यौ ॥
विजयश्चनन्दन ॥

विजयमर्द्दल । पु० ढक्कायाम् ।
जयढाक० इ० भा० ॥

विजयसख । पु० श्रीकृष्णे ॥ विज
यस्यसखा । राजाह० सखिभ्य-
ष्टच् ॥

विजया । स्त्री० उमायाम् । आख्या
यन्याम् । दुर्गायाम् ॥ यथा । जि
जिष्णुपद्मनामानदैत्यराजमहाबल
म् । विजयातेनसादेवीलोकेषुचैवाप
राजितेतितदेवीपुराणम् ॥ उमास
ख्याम् ॥ तिथिविशेषे ॥ यथा ।
इषमासिसिताद्दशमीविजयाशुभ
कर्मसुसिद्धिकरीकथिता । श्रवणर्क्ष
युतासुतरांशुभदानृपतेस्तुगमेजयस
न्धिकरी ॥ अस्यानीलकण्ठदर्शन
विधिर्यथा । हृत्वानीराजनराजा
बलवृद्धौयथाबलम् । शोभनखञ्ज

मपक्षेऽजलगोगोष्ठसन्निधौ ॥ द र्शनानन्तरतन्नमस्कारमन्त्रोयम् । श्रीलयीवशुभयीवसर्वकामफलप्रद । पृथिव्यामवतीर्णोसिखञ्जरीटन मोस्तुते ॥ त्वयोगयुक्तोमुनिपुङ्गव स्त्वमदृश्यतामेषिशिखोद्गमेन । त्व दृश्यसेप्रावृषिनिर्गतायांत्वखञ्जना श्चर्यमयोनमस्ते ॥ द्रव्यविशेषोपरि स्थितखञ्जनदर्शनफलंयथा ॥ ज लेपुगोषुगजवाजिमहोरगेषु राज्य प्रदः कुशलदः शुचिशाद्वलेषु । भस्मास्थिकेशनखलोमतुषेषुदृष्टो- दुःखददातिवहुधा खलुखञ्ज रीटः ॥ अशुभदर्शनेप्रायश्चित्तंय था । अशुभखञ्जनदृष्टादेवब्राह्म णपूजनम् । दानंकुर्वीतकुर्याञ्चस्ना नसर्वौषधीजलैरिति ॥ मादकद्रव्य विशेषे । भङ्गायाम् ॥ तस्यानामानिगुणाश्चयथा । भङ्गागञ्जा मातुलानीमादनीविजयाजया । भङ्गाकफहरीतिक्ताग्राहिणीपाच नीलघुः । तीक्ष्णोष्णापित्तलामोह मदवाग्वह्निवर्द्धनी इतिभावप्र काशः ॥ अपिच । भङ्गाभनतुती व्रोष्णामोहकृत्कुष्ठनाशनम् । वल मेधाग्निकृच्च श्लेष्मदोषहारिरसाय नम् ॥ जातामन्दरमन्थनाज्जलनि धौपीयूषरूपापुराचैलोक्ये विजय- प्रदेतिविजयाश्रीदेवराजप्रिया ॥ लो

कानांहितकाम्ययाक्षितितलेप्राप्ता नरैः कामदासर्वातङ्कविनाशहर्ष जननीयैःसेवितासर्वदा ॥ इतिरा जवल्लभः ॥ वचायाम् ॥ यमभार्या याम् ॥ हरीतक्याम् ॥ अलाबुप त्राविजयेतिलक्ष्म्याम् ॥ जयन्त्या म् ॥ शेफालिकायाम् ॥ मञ्जि ष्ठायाम् ॥ शमीभेदे ॥ अग्निमन्थे । गणिकार्याम् ॥ अष्टमशाहाद श्यन्तर्गतद्वादशीविशेषे ॥

विजयासप्तमी । स्त्री॰ सप्तमीतिथिप्र भेदे ॥ सायथा । शुक्लपक्षस्यसप्तम्यां सूर्यवारोयदाभवेत् । सप्तमीविज यानामतत्रदत्तंमहाफलम् ॥

विजयी । त्रि॰ विजयशीले ॥ विशेषि णजेतुशीलमस्य । जिदृक्षीत्यादि ना॰ इनि ॥

विजर । पुं॰ वेदान्तवेद्यआत्मनि ॥ त्रि॰ जरारहिते ॥ विगताजरा यस्य ॥

विजलम् । न॰ विज्जिले । पिच्छिले इतिहेमचन्द्रः ॥ त्रि॰ जलशून्ये ॥

विजल्प । पुं॰ वाक्यविशेषे ॥ यथा । व्यङ्गयाश्रूययागूढमानमुद्रान्तरा लया । अघद्विषिकटाक्षोक्तिर्विज ल्पोविदुषांमतः ॥ इत्युज्ज्वल नीलमणिः ॥

विज्ञात. त्रि॰ विज्ञते ॥ जाते ॥

विजाता । स्त्री॰ जातापत्यायाम् ।

प्रजातायाम् ॥
विजातीय . । त्रि॰ विभिन्नधर्माक्रान्ते ॥ विलक्षणे । भिन्ने ॥ यथाह चाद्विजातीय : भिन्नादि ' ॥
विजिगीष ' । त्रि॰ जयेच्छौ ॥
विजिगीषा । स्त्री॰ विजयेच्छायाम् ॥ स्तोदरपूरणासक्तिनिमित्तकनिन्दात्यागेच्छायाम् ॥
विजिगीषाविवर्ज्जित ' । त्रि॰ आढ्ने । औदरिके ॥ स्तोदरपूरणासक्तिनिमित्तकनिन्दात्यागोविजिगीषा॰व्यवसाय : कश्चित्प्रकर्षोवा॰ आलस्यात्तेनविहीनोय : केवलमुदराधीनवृत्तिभाव : ॥
विजिगीषु : । त्रि॰ जयेषिणि । जयेच्छाशीले । प्रतिवादिजयकामे ॥ यथा । जेतुमीषणशीलस्यविजिगीषुरितिस्मृत । इति ॥ मल्लस्यहि विजिगीषो ' कार्यसाधनंप्रधानम्॰ अन्यत्समयरचणाद्यप्रत्यक्षेतिनीति : ॥ विजेतुमिच्छाधाती . कर्मण्युक्तिसन् । सनाशंसभिचउ . ॥
विजिघत्स : । त्रि॰ विगताशनेच्छे ॥ विगताजिघत्साचु,धायस्य ॥
विजिज्ञासितव्य ' । त्रि॰ स्वसंवेद्यतामापादयितव्ये॰निजात्मनि ॥ विशेषेणज्ञातुमेष्टव्य ' ॥
विजित . । त्रि॰ पराजिते ॥ विजीयतेस्म । जिअभिभवे । क्त ' ॥

विजितात्मा । त्रि॰ स्ववशीकृतदेहे ॥ वशीकृतान्त करणे ॥ विजित आत्मादेहो॰मनोवायेन ॥
विजिताश्व । पुं॰ पृथो : पुत्रे ॥ त्रि॰वशीकृततुरगे ॥
विजिति । स्त्री॰ विजये ॥ यथाह दण्डी । चितिविजितिस्थितिविहितिव्रतरतय : परगतय : । उरुरुधुगुरुदुधुवुयुधिकुरव . स्मरिकुलम् ॥ इति ॥
विजिलम् । त्रि॰ पिच्छिले । मण्डयुक्तजलयुक्तव्यञ्जनयो . ॥ विजन विजि । औविजीभयचलनयो : । इगुपधात्कित्किदितीन् । विजिला ति । ला॰ । आतोनुपसर्गेक : ॥
विजिवल : । त्रि॰ विजिले ॥ इतिहेमचन्द्र : ॥
विजिहीर्षा । स्त्री॰ विहर्त्तुमिच्छायाम् ॥
विजिह्म ' । त्रि॰ कुटिले । वक्रे ॥ विशेषेणजिह्म : ॥
विजुल ' । पुं॰ शाल्मलीकन्दे ॥
विजृम्भणम् । न॰ विभ्रमे ॥ विकासे ॥ जृम्भणे ॥
विजृम्भितम् । न॰ चेष्टायाम् ॥ त्रि॰ विकसिते । विकासनशीले ॥ आच्छृ र्ज्जिते ॥ उल्लसिते ॥ जृम्भायुक्ते ॥ विजृम्भासञ्जाताऽस्य । तारकादित्वादितच् ॥

विजोहा । स्त्री॰ वर्णवृत्तान्तरे ॥ यथा । यचपञ्चिद्वयं दृश्यते सुन्दरम् । सर्पराजोदितासाविजोहामता ॥ यथा । आलिवर्गोधरेकामकेलीपरे । किमयासाधितमौनमारोपितम् ॥

विज्जलम् । न॰ तीरे । सायके ॥ त्रि॰ पिच्छिले ॥

विज्जिलम् । न॰ विजिले ॥

विज्जुलम् । न॰ गुडत्वचि । त्वचे ॥

विज्जुलिका । स्त्री॰ जतुकायाम् ॥

विज्ञः । त्रि॰ निपुणे । अभिज्ञे । शिक्षिते । प्रवीणे ॥ विजानाति । ज्ञाअववोधने । आतश्चोपसर्ग इति कः ॥

विज्ञप्तिः । स्त्री॰ विज्ञापने ॥ विज्ञाने ॥

विज्ञबुद्धि । स्त्री॰ जटामांस्याम् ॥ त्रि॰ सुशिक्षिते ॥

विज्ञात । त्रि॰ विश्रुते ॥ ख्याते ॥ निश्चिते ॥ अथं परिज्ञानात् सर्वं विज्ञात भवति ॥ ज्ञाते । विशिष्य ज्ञातेर्थे ॥ व्यज्ञायि । ज्ञा॰ । क्त । यद्वा । विजानाति । मतिबुद्धेति क्तः ॥

विज्ञाता । त्रि॰ अनुभवितरि ॥

विज्ञानम् । न॰ ज्ञाने । कर्मणि ॥ विज्ञानं ज्ञानकर्मणोरिति मेदिनी ॥ कार्मणे ॥ विज्ञानं कार्मणे ज्ञाने इति हैमचन्द्रः ॥ निश्चये । संशयविपर्ययरहितज्ञाने ॥ विष्णौ । विज्ञमितरूपे ब्रह्मणि ॥ अपरोक्षज्ञाने । ब्रह्मात्मैक्यानुभवे । विज्ञप्तौ ॥ यथादिकर्मकौशले ॥ विवेकबुद्धौ ॥ उपासने ॥ शास्त्रार्थविषयज्ञाने । शिल्पबुद्धौ । शिल्पकर्मणि ॥ विज्ञायतेऽनेन । ज्ञा॰ । करणे ल्युट् ॥ विवेकेन ज्ञानं वा ॥ मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोरित्यमरः । अस्यार्थः । विशिष्टेषु सामान्येन च॰ अववोधने मोक्षो मुक्तिः शिल्पं चित्रादि॰ शास्त्रं व्याकरणादि । मोक्षे॰ शिल्पे॰ शास्त्रेचयाधीः सा॰ ज्ञान॰ विज्ञान चोच्यते॰ एषा विशेषप्रवृत्तिः । अन्यत्र॰ घटपटादौ॰ याधीः सापि ज्ञानं विज्ञानञ्चोच्यते । एषा सामान्यप्रवृत्तिः । मोक्षे धीर्ज्ञानं॰ विज्ञानं यथा । ज्ञानान्मुक्तिरिति॰ सायाचितार्थविज्ञानतुष्टाश्रियं प्रयच्छतीति । अन्यत्र यथा । ज्ञानमस्तिसमस्तस्यजन्तोर्विषयगोचरे॰ इति । घटत्वप्रकारकज्ञानमिति । येकेचित्प्राणिनो लोके सर्वे विज्ञानिनो मता इति । ब्रह्मणो नित्यविज्ञानानन्दरूपत्वात्॰ इति । एवं चित्रज्ञानं व्याकरणज्ञानं घटपटविज्ञानमित्यादिकं प्रयुज्य

तएवतद्विगमे गतत्मदादिशब्दव
त् गतत्मशब्दोऽपिगरुडपक्षिमा
त्रे प्रवर्त्तते । मोक्षहेतुनिमित्तस
मो मोक्षनिमित्तं शिल्पशास्त्रयो
र्धीर्ज्ञानमुच्यते । तन्निमित्ततोऽन्य
निमित्तं यातयोर्धीः साविज्ञा
नमितिकेचित् । मोक्षविषयामोक्ष
फलाधीर्ज्ञानम् अन्यधीर्विज्ञान
म् । ज्ञान्यत्रेत्याह शिल्पशास्त्रयोरि
तिकेचित् । अवबोधरूपव्यापृत्य
मोक्षविषये अवबोधोधीर्ज्ञानम्
अन्यत्रघटपटादिविज्ञानं शिल्पशा
स्त्रविषयेविज्ञानमितिकेचिदितिभ
रत ॥

विज्ञानतत्त्वम् । न॰ महत्तत्त्वे ॥

विज्ञानपाद । पु॰ वेदव्यासे ॥ इ
तिकेचित् ॥

विज्ञानमय । पुं॰ पञ्चसुकोषेषु चतु
र्थे । ज्ञानेन्द्रियैः सहितायांबुद्धौ
। ज्ञानशक्तिमतिकर्तृरूपे बुद्धि
मये । लीनः सुप्तौ वपुर्बोधे
व्याप्नुयादानखाग्रगा । चिच्छायो
पेतधीनात्माविज्ञानमयशब्दभाक् ॥

विज्ञानमातृक । पुं॰ बुद्धे । सुगते ॥

विज्ञानवान् । त्रि॰ निपुणे । विशे
षविशिष्टे ॥ विज्ञानमस्त्यस्य । तद
स्यास्तीतिमतुप् ॥

विज्ञानवाद । पुं॰ बौद्धानांक्षणिक
विज्ञानातिरिक्तभावाभाववादे । वि
ज्ञान । बुद्धिरितिनार्थान्तरम् ।
यदन्तर्ज्ञेयतत्त्वंतद्बहिर्वदवभासते ।
स्वप्नवज्जागरेसुप्तावभावः स्फुटए
वहि ॥ अथस्वप्नादौमयुक्तिस्तु ।
तथाहि । जागरेबाध्यतेस्वप्नोजाग
रोनैवबाध्यते । तत्रतद्बाधकाभावा
द्बाह्यमस्त्युपलब्धितः ॥ बहिर्वहि
तिनेप्युक्तिर्बाह्यमर्थंप्रसाधयेत् । ए
वंमयुच्यतेबुद्धैर्जगदाकारतात
व । स्थिरचेतनराहित्यात्स्वयंज्ञ
क्षणिकत्वतः । सृष्ट्यादिव्यवहार
श्चलोपस्यतवदारुणः ॥ ममतुजाग
रादिभमाधिष्ठानस्याऽखण्डबोधान
न्दरूपस्यब्रह्मणः साक्षात्कारोबाध
कोस्ति ॥

विज्ञानवादी । पु॰ बौद्धविशेषे । तेषां
भ्रान्तिस्तु । एकैकाश्वासनातत्प्रति
क्षणविनाशिनीम् । आहुः क्षणिक
मात्मानंबौद्धाविज्ञानवादिनः ॥ ता
स॰ बुद्धौ वासनातद्धेतुभूता
वृत्तिमितियावत् ॥

विज्ञानस्कन्ध । पु॰ आलयविज्ञानस
न्ताने । रूपस्कन्धाभिव्यक्तो ः अह
मित्याकारोरूपादिविषयकमिन्द्रियज
न्योदण्डायमानोविज्ञानस्कन्धइति
वाचस्पतिमिश्राः । अहमित्याकारमा
लयविज्ञानमिन्द्रियादिजन्यं रूपा
दिविषयकज्ञानमेतद्द्वयं दण्डा
यमानं प्रवाहापन्नंविज्ञानस्कन्धइ

स्यर्दूतिकस्यतत् । अहमितिप्रत्य योविज्ञानस्कन्धस्तूलानन्दगिरि ॥

विज्ञानावसित । त्रि० विज्ञानेननि श्चिते ॥

विज्ञानिक । त्रि० वैज्ञानिके । प्रवी णे ॥ विज्ञानमस्त्यस्य । अोह्यादि त्वान्मत्वर्थीयठन् ॥

विज्ञापनम् न० बोधने । अमा०बना० बुआ०बना०कृ०भा०प्र० ॥ विपूर्वात् ज्ञयन्तज्ञानातेर्ल्युट् ॥

विज्ञेयम् । न० परमात्मतत्त्वे ॥ त्रि० विज्ञातव्ये । इदमेवमितिविस्पष्ट ज्ञानार्हे ॥ विज्ञातुयोग्यः । ज्ञा० । अचोयत् । ईद्यति ॥

विज्यम् । न० निर्गुणे धनुषि ॥ विग ताज्यायस्मिन्०दक्षाशा०तत् ॥

विज्वर । त्रि० विगतज्वरे ॥ विगत मनस्तापे ॥ विगतोज्वरोयस्य ॥

विझर्झर । त्रि० विषमे ॥

विञ्जामरम् । न० चक्षुष शुक्लदेशे ॥ इतिकश्चित् ॥

विञ्जोली । स्त्री० वीथ्याम् । पङ्क्तौ ॥

विट । पुं० षङ्गे ॥ लवणविशेषे ॥ षिङ्गे । स्त्रैणे ॥ मूषिके ॥ खदि रे ॥ कामुकानुचरे ॥ धूर्ते ॥ काम तन्त्रकलाकोविदे ॥ नारङ्गवृक्षे ॥ वे टति । विटशब्दे । इगुपधलक्षण क : ॥

विटका । स्त्री० वीटिकायाम् ॥ इति कश्चित् ॥

विटङ्क । पुं० न०गृहप्रान्ते रचितप क्षिस्थाने । कपोतपालिकायाम् ॥ विशेषेणटङ्क्यते ऽत्र । टङ्कबन्धने । हलर्श्चेतिघञ् ॥ तोरणस्तम्भयोरुप रितर्यङ्निहितेदारुणि ॥ त्रि०सु न्दरे ॥ यथा । तस्मिन्नतीत्यमुनय षडसत्यमाना . कचा : समानम यसावयसप्रमोयाम् । देवाववत गृहीतगदौपराह्नकेयूरकुण्डलकि रीटविटङ्कवेषौ ॥ इतिभा०तृ०स्क न्धे १५ अध्याय : ॥

विटङ्कित : । त्रि० अलङ्कृते ॥

विटप : । पु० विटाधिपे । पारदारिकश्रे ष्ठे ॥ आदित्यपत्रे ॥ पुं०न०शाखा पल्लवसमुदाये । विस्तारे ॥ स्तम्बे । गुल्मे ॥ शाखायाम् ॥ पल्लवे ॥ मु ष्कवङ्क्षणयोरन्तरे । मध्यवीध्ये ॥ विटान्पाति । पा० । आतोनुपे तिक : ॥ यद्वा । विटानांपानम् । पा० । घञर्थेक : ॥ वेटति०विक्ष तिवा । विटचाक्रोशे०शब्देच । वि टपविष्टपविशिपोलपा : ०कृ०सो धु : ॥

विटपी । पुं० पादपे । तरौ । वृक्षे ॥ वटे ॥ विटप : शाखाविस्तारोऽस्या स्ति । अतइनि : ॥

विटप्रिय । पुं० मुद्गरवृक्षे । मोगरा० कृ० भा० प्र० ॥ विटानांप्रिय : ॥

विटमाक्षिक । पु॰ धातुविशेषे । ताप्ये । नदीजे । कामारी ॥

विटि . । स्त्री॰ पीतचन्दने ॥

विट्कारिका । स्त्री॰ पक्षिविशेषे । गोराख्याम् ॥

विट्खदिर . । पुं॰ दुर्गन्धिखदिरे । अरिमेदे ॥ विड्गन्धि खदिर ॥

विट्चर । पुं॰ ग्राम्यशूकरे ॥ विष विष्ठाचरति । चर॰ । पचाद्यच् । मूलविभुजादित्वात्कोवा ॥ विषचरोवा ॥

विट्ठल . । पुं॰ अज्ञानुग्राहकदेवे ॥ यद्वाद्दुर्वाचीनादाक्षिणात्या . । विदाज्ञानेनठान्शून्यान्॰लाति अदत्तेआत्मीयतयागृह्णाति । ला॰ । आतोनुपसर्गइतिकः । विदाज्ञानेनठान्शून्यान्लातिगृह्णातिय . स्वयम् । अज्ञानुग्रहकृद्देवो विट्ठल . कथ्यतेबुधैरिति प्रक्रियाप्रसादः ॥

विट्पतिः । पु॰ जामातरि ॥ यथा । मातामहमातुलस्वस्त्रीयश्वशुरगुरुम् । दौहित्रंविट्पतिंबन्धुमृत्विग्याज्यौचभोजयेत् । एतान्मातामहादीन्॰दशमुख्यणोषिया द्यसम्भवेभोजयेद् । गुरुर्विद्यागुरुराचार्यादि ' । विट्दुहितातस्या . पतिः । इतिकुल्लूकभट्टः ॥ भोजयेत्॰श्राद्धे॰इतिशेषोबोध्यः ॥ नृपतौ ॥ वैश्यवर्य्ये ॥

विट्सारिका । स्त्री॰ पक्षिविशेषे । कुणप्याम् । गुयासालक्॰इ॰गौ॰ दे॰भा॰प्रसिद्धे ॥

विठर । पुं॰ वाग्मिनि ॥

विडम् । न॰ कृत्रिमलवणे । पाक्ये । खारीलूण॰इ॰भा॰ ॥ अस्यगुणायथा । विडसक्षारमूर्द्ध्वाधःकफवातानुलोमनम् । अन्नकफमघोवातसञ्चारयेदिष्टमयं . । दीपनंलघुतीक्ष्णोष्णं रूक्ष रुच्य व्यवायिच । विबन्धानाहविष्टम्भहृद्गगौरवशूलनुत् । विडति । विडभेदने । इगुपधज्ञाप्रीकिर.क . ॥

विडङ्ग । पुं॰ न॰वेल्ले । चित्रतण्डुलायाम् । कृमिघ्ने । विडङ्गंकटु तीक्ष्णोष्णं रूक्षं वह्निकरं लघु । शूलाध्मानोदरश्लेष्मकृमिवातविबन्धनुत् ॥ त्रि॰अभिज्ञे । विडति ॥ विड॰ । विडचाक्रोशेवा । विडादिभ्यः कित्वञ्च ॥

विडम्बनम् । न॰ अनुकरणप्रतारणे ॥

विडम्बना । स्त्री॰ विडम्बने । अनुकृतौ ॥

विडम्बमान' । त्रि॰ अनुक्रियमाणे ॥

विडम्बितः । त्रि॰ अनुकृते ॥ व्यस्ते ॥ दुर्गते ॥ उपहसिते ॥

विडम्बा : । त्रि॰ उपहासास्पदे ॥

विडार : । पुं० विडाले ॥ रत्नयोर भेदे ॥

विडारक । पुं० विडाले ॥

विडाल । पुं० खोतौ । मार्जारे । वृषदंशके ॥ नेत्रपिण्डे ॥ विडति० विडालेवा । विडआक्रोशे । तमि विशिबिडिमृगिकुलिकपिपलिपञ्चिभ्य'कालन् ॥ नेत्रौषधविशेषे ॥ रत्न० ८ । ८० ॥

विडालकम् । न० हरिताले ॥ पुं० नेत्ररोगौषधविशेषे ॥

विडालपद : । पुं० तोलकद्वयपरिमाणे ॥ न०मार्जारचरणे ॥

विडालपदकम् । न० कर्षपरिमाणे ॥

विडाली । स्त्री० भूमिकूष्माण्डे । विदार्याम् । मार्ज्जार्याम् ॥

विडीनम् । न० खगानांगतिप्रभेदे ॥ विशिष्टंडयनम् । डीङ्विहायसा गतौ । क्तादि० । नपुंसकेभावेक्त : । क्तादयश्चेतिडल्यतिदेशात्चोदित्त्वान्निष्ठानत्वम् । विडीनंविचित्रपक्षिण : पतनमितिमहाभारत ॥

विडुल । पुं० वेतसवृक्षे ॥

विडोजा : । पुं० इन्द्रे । वेवेष्टि । विष्लृव्याप्तौ । क्विप् । विट्० व्यापकम्०ओजस्तेजोऽस्य ॥ विट् सुप्रजासु० मनुष्येषुवा० ओजोयस्येतिवा ॥

विडौजा : । पुं० पाकशासने । इन्द्रे ॥ विडति । शिडभेदने । इगुपधेतिक : । विडंभेदकमोजोऽस्य । सान्त : ॥

विड्भ्रम् । न० विड्लवणे ॥

विड्ज : । त्रि० विष्ठायांजाते ॥

विड्लवणम् । न० विडे ॥

विड्वराह : । पुं० विट्चरे ॥

वितस । पुं० वीतसे ॥

वितण्डा । स्त्री० कच्चीशाके ॥ शिलाह्वये ॥ करवीर्याम् ॥ दर्व्याम् ॥ वादप्रभेदे । परपक्षप्रतिवादे । स्वपक्षस्थापनहीनायाम्विजिगीषुकथायाम् ॥ तथाचन्यायसूत्रम् । सप्रतिपक्षस्थापनाहीनोवितण्डा । यद्यपितच्छब्देनजल्पोनपरामष्टुं शक्यते० जल्पस्यस्थापनाद्वयवत प्रतिपक्षस्थापनाहीनत्वस्यविरुद्धत्वात् । तथापिस्थापनाद्वयवत्त्वंविहाय०जल्पैकदेश : परामृश्यते । प्रतिपक्षोद्वितीयपक्ष । तथाच०प्रतिपक्षस्थापनाहीनाविजिगीषुकथा० वितण्डेति । नचस्वस्यस्थापनीयाभावात्कथमियंकथाप्रवर्त्तामितिवाच्यम् । परपक्षखण्डनेनजयस्यैवोद्देश्यत्वात् । परेतु०यत्परपक्षखण्डनेनैवस्वपक्षसिद्धेर्यादिनसिद्धेतत्साधनाभावेपिनप्रक्षत्यनुपपत्तिरितिवदन्ति ॥ १ । ४२ ॥ वितण्डातेपरक्षोऽमया

। तडिघवादौ । गुरोश्चेत्य : ॥

विततः । त्रि० विस्तृते ॥ विशेषेणत त. ॥

विततिः । स्त्री० विस्तारे ॥

वितथम् । न० अनृतवचसि ॥ त्रि० तद्वति ॥ विगतंतथासत्यंयस्मात्० तत्०वितथम् । अजितियोगविभागात्समासान्तोऽच् ॥

वितन्द्रः । त्रि० जागरूके ॥ तन्द्रारहिते ॥ विगतातन्द्रायस्यस ॥

वितन्यमानः । त्रि० वितायमाने ॥ तनोतेः कर्मणिलट : शानजादेश. ॥

वितन्वन् । त्रि० विस्तारयति ॥

वितमाः । त्रि० तमोगुणरहिते ॥

वितरणम् । न० दाने ॥ तृप्लवनतरणयोः विपूर्व. । भावेल्युट् ॥

वितर्कः । पुं० ऊहे ॥ संशये ॥ विपरीततर्के ॥ वितर्कणम् । तर्कभाषार्थसुरादौ । भावेघञ् ॥ ज्ञानसूचके ॥

वितर्कणम् । न० वितर्के ॥ तर्क० । ल्युट् ॥

वितर्द्दिः । स्त्री० वेदिकायाम् ॥ विगतातर्द्दिं हिंसाऽस्या. । तर्दहिंसायाम् । सर्वधातुभ्यइन्नितीन् ॥

वितर्द्दिका । स्त्री० वेदिकायाम् ॥ स्वार्थेकः ॥

वितर्द्दी । स्त्री० वेदिकायाम् ॥ कृदिकारादिक्तिनोङीष् ॥

वितलम् । न० पातालप्रभेदे ॥

वितस्ता । स्त्री० नदीविशेषे ॥ तीर्थविशेषे ॥ काश्मीरेवितस्ताख्यनागसदनमस्ति ॥

वितस्तिः । पुं० स्त्री०कनिष्ठयासहविततेङ्गुष्ठे । द्वादशाङ्गुलपरिमाणे ॥ वितस्यति०वितस्यतेवा । तसु उपक्षये । वीतसिरितिति : ॥

वितानः । पुं० न०यज्ञे ॥ क्रतुकर्मणि । गार्हपत्यकुण्डस्थानामग्नीनामाहवनीयदक्षिणाग्निकुण्डयोर्विहारे ॥ कादके । उल्लोचे चन्द्रातपे ॥ विस्तारे ॥ न०वृत्तविशेषे । अवसरे ॥ त्रि०मत्ते ॥ तुच्छे ॥ शून्ये ॥ मन्दे ॥ विताननम्०वितन्यतेवा । तनुविस्तारे । घञ् ॥

वितानकः । पु० माण्डच्चे ॥ पुं०न० चन्द्रातपे ॥

वितानतनिका । स्त्री० पटमण्डपरज्जौ ॥

वितानमूलकम् । न० उशीरे ॥

वितायमानः । त्रि० वितन्यमाने । विस्तीर्यमाणे । वितनोतेः कर्मणि लट शानजादेशः। तनोतेर्यकीति० वा० आकारादेशः ॥ विटङ्किते । अलङ्कृते ॥

वितिष्ठमानः । त्रि० अवतिष्ठमाने ॥ समवप्रविभ्यस्थइत्यात्मनेपदम् ॥

वितीर्ण । त्रि० दत्ते । अवगाढे ॥

वितुन्नम् । न० सुनिषण्णे । शिषखप रिया० कू० भा० प्र० शाकि ॥ शे वाले ॥ विगतम्तुन्न व्यथनमस्मात् ॥ त्रि० व्यथिते ॥

वितुन्नक । पु० न० धन्याके ॥ भाटा मलौषधौ । तामलक्याम् । भू- म्यामलक्याम् ॥ मुस्तायत्पिलवपु रशुकाशखावितुन्नकाम् ॥ वितुन्न कश्चिमतिक्तं कषायकटुकान्तिदम ॥ कफपित्तास्रश्वासपर्प कुष्ठकाण्डु विषप्र णुत ॥ वितुद्यतेसा । तुदव्यथने कर्मणि क्त । स्वार्थेकन् ॥ विगत तुन्नदु . खमस्माद्वा । कप् ॥

वितुन्ना । ) वितुन्निका । ) स्त्री० तामलक्याम् । भूम्यामलक्याम् ॥ वितुन्नकै ॥

वितृप्त । त्रि० सन्तुष्टे ॥ विशेषेण तृप्त . ॥

वितृष्ण । त्रि० निष्कामे ॥

वित्तम् । न० धने ॥ न्यायाज्जिंतध मे ॥ धर्माययशसेऽर्थायकामायस्वज नायच । पञ्चधाविभजन् वित्तमि हामुत्रचमोदते । प्रभूतेहिरण्य रत्नादौ ॥ ज्ञाने ॥ लब्ना दिद्वितीय भवने । त्रि० ख्याते । विचारिते ॥ विचारिते ॥ विद्यतेस्म विदविचार णे । क्त ॥ नुदविदेतिपक्षेनत्वा भाव : ॥ यद्वा । अवेदि । विद्लृ लाभे । क्त । वित्तोभोगप्रत्यय योरितसाधु । लब्धे ॥

वित्तद । पु० पूर्वदक्षिणोत्तरद्वारे गृहे ॥ त्रि० धनदातरि ॥ वित्तद दाति । डुदाञ् दाने । आतश्च तिक ॥

वित्तप : । पुं० कुबेरे ॥ त्रि० धनर क्षके ॥ वित्तंपाति । पा० क : ॥

वित्तमय । त्रि० धनप्राये ॥

वित्ति । स्त्री० विचारे । ज्ञाने ॥ यथा । सत्य भावनवित्तिर्व्यपनुद तियत . कर्मनाप्योघटादिर्मिथ्या भूतयत्कर्मयपयतिनतथावित्तिचा- स्य यतस्तत् । इत्थं सिद्धेविभागेस्फु तिशिखरगिराविं वित्तिधाप्रतीतोव स्तोमिथ्येतिसिद्धं नतदपयतयेक सैज्ञातसमर्थम् ॥ वृत्ति ॥ लाभे ॥ सम्भवे ॥ विदेर्भावादौस्त्रियांक्तिन् ।

वित्तेश । पुं० धनपतौ कुबेरे ।

वित्तैषणा । स्त्री० धनलाभेच्छायाम् ॥ कर्मयासाधनेवित्ते तृष्णावित्तैष- णामता ।

वित्रस्त : । त्रि० त्रासयुक्ते ॥ विप् र्वात् त्रसि । क्त : ॥

वित्रास । पुं० भये । त्रसीउद्वे गे० विपूर्व . । घञ् ॥

विद्यन : । पुं० वृषभे ॥

विधुर : । पुं० चौरे । राक्षसे ॥ व्य थते । व्यथभयचलनयो : । व्य थे :

सम्प्रसारणं किञ्चेष्युरच् ॥

विघ्या । स्त्री० गोजिह्वायाम् ॥

वित्-द्ृ । त्रि० विदुषि ॥ न० ज्ञाने ॥ वेदनम् । विदज्ञाने । सम्पदादित्वात् भावे क्विप् ॥

विद् । पुं० पण्डिते । वेत्ति । विद० क : ॥

विदंश : । पुं० अवदंशे ॥ विदश्यते । दंश० । कर्म्मणि० भावेवाघञ् ॥

विदग्ध । त्रि० चतुरे । दग्धे ॥ नागरे ॥ पण्डिते ॥ अस्यन्तपक्वे ॥

विदग्धता । स्त्री० विदग्धत्वे ॥

विदग्धा । स्त्री० परकीयान्तर्गतनायिकाप्रभेदे ॥

विदथ । पुं० योगिनि ॥ कृतिनि । प्राज्ञे ॥ वेत्ति । विदज्ञाने । रुदिविदिभ्यां ङिदित्यथ : ॥ यज्ञे ॥ वेत्ति० अस्मिन्देवान् ॥

विदम् । त्रि० पण्डिते ॥

विदटञ्चु । त्रि० विदर्शयिष्णौ । उपदेशेच्छावति । दशे सन्नन्तादु प्रत्यय : ॥

विदन्ता । स्त्री० नातिदीर्घायावराटिकायाम् ॥

विदर : । पुं० स्फुटने । भिदायाम् । फटना० इ० भा० । विदरणम् । दृविदारणे । ऋदोरप् ॥ न० विश्वसारके । नागफणीथूहर० इ० भा० ॥ त्रि० दरशून्ये । निर्भये ॥

विदरणम् । न० विदरे ॥ विद्रधौ ॥

विदर्भ । पुं० कुण्डिनपुरे ॥ सतुवङ्गदेशस्यदक्षिणपश्चिमेवर्त्तते० अधुना० अडानागपुर० इतिख्यात । भद्रकालीमहापूर्वेरामदुर्गाच्चपश्चिमे । श्री विदर्भाभिधोदेशो।वैदर्भींतत्रतिष्ठति ॥ त्रि० दर्भशून्ये ॥ कर्मठे ॥ विशिष्टेनदर्भेणोपलक्षित ॥

विदर्भजा । स्त्री० अगस्त्यमुनेपत्न्याम् । कौशीतक्याम् । लोपामुद्रायाम् ॥ दमयन्त्याम् । रुक्मिण्याम् ॥

विदर्भराज । पुं० विदर्भदेशाधिपतौ । भीमाभिधे पुराणप्रसिद्धे राजनि । दमयन्तीजनके ॥

विदर्भसुभ्रू । स्त्री० दमयन्त्याम् ॥

विदर्भाधिपति : । पुं० कुण्डिनपतौ । भीष्मकाभिधे । रुक्मिणीजनके ॥

विदल । पुं० रक्तकाञ्चने ॥ पिष्टके ॥ न० वंशादिकृतपात्रविशेषे ॥ वेणुदले ॥ शिफाविदलरज्ज्वाद्यै र्विदध्यान्नृपतिर्दमम्मितिमनु : ॥ दाडिमवल्कले ॥ द्विधाकृतकलायादौ । दाल० इ० भा० ॥ स्वर्णादेरवयवे ॥

विदला । स्त्री० त्रिवृति ॥ पत्रशून्यायाम् ॥

विदा । स्त्री० ज्ञाने ॥ मनीषायाम् ॥ भिदादित्वाद्विदेरङ् । टाप् ॥

विदाय : । पुं० गमनानुमतौ ॥ यथा । त्वयं याचम्प्रकवनं गच्छवातिष्ठसु

न्दरि । मणगृहस्थयाश्चामि विशिष्टं कार्यमस्तिमे । विदायदेहिसम्प्रीत्या स्वर्गमांप्राणवल्लभे ॥ इति ब्रह्मवैवर्त्ते श्रीराधाप्रति श्रीकृष्णवाक्यम् ॥

विदारः । पुं॰ जलोच्छासे । वायौ । युधि ॥ दारणे ॥ विदार्यते । दृ॰ । कर्म्मणिघञ् ॥

विदारक । पुं॰ शुष्कनद्यादौवार्य्यर्थंकृतगर्त्ते । कूपके ॥ नद्यादौस्रोतोरुद्धकारिणितरुशिलादौ । कूपके ॥ याचायोगान्तरे ॥ यथा । मार्गेशः शनिसयुतः सप्तमेऽस्तगतोयश्च ॥ विदारकमिमं मन्ये प्राहुः पत्नीविनाशकम् ॥ पुनश्च । मार्गेशात्सप्तमेभानुः पञ्चमेक्रूरखेचरः । विदारकाख्यएवासौभार्य्यामरिवशनयेत् ॥ न॰ वज्जचारे ॥ विदार्यते । दृ॰ विदारणे । णिच् । बाहुलकात्कर्म्मणिण्वुल् ॥ यद्वा । विदार्यते । कर्म्मणिघञ् ॥ कुत्सितोविदारः । कुत्सायांकः ॥ त्रि॰ विदारणकर्त्तरि ॥ विदृणाति । दृ॰ । ण्वुल् ॥

विदारकसमाख्यः । पुं॰ याचायानिषिद्धयोगान्तरे ॥ यथा । भार्य्येशोव्ययगोनीचपुत्रश्चास्तेशनैश्चरः । विदारकसमाख्योऽयंयातुःपत्नींनिहन्तिवै ॥ विदारकेणसमाख्यायस्यसः ॥

विदारणः । पुं॰ कर्णिकारवृक्षे ॥ न॰ विडम्बे । विडम्बने ॥ भेदे ॥ भेदने ॥ पुं॰ स्त्री॰ रणे । सम्पराये । समीके ॥ विदार्य्यतेऽनेन दृ॰ । ण्यन्तः । ल्युट् ॥ विदारयतिवा ॥

विदारिका । स्त्री॰ शालपर्ण्याम् ॥ विदार्य्यर्थे ॥ विदार्य्येव । स्वार्थेकः ॥

विदारिगन्धा । स्त्री॰ अंशुमत्याम् । शालपर्ण्याम् ॥ विदार्य्याः गन्ध विदारिगन्ध । ङ्यापोरितिह्रस्वः । सोऽस्त्यस्याः ॥

विदारिणी । स्त्री॰ काश्मर्य्याम् ॥

विदारितः । त्रि॰ भेदिते ॥ विदार्यतेस्म । दृ॰ । ण्यन्तः । क्तः ॥

विदारी । त्रि॰ विदारणकर्त्तरि ॥ विपूर्वाद्दृणातेः कर्त्तरिणिनिः ॥

विदारी । स्त्री॰ शालपर्ण्याम् । अष्टादशप्रकारकण्ठरोगान्तर्गतरोगविशेषे ॥ यथा । सदाहतोदश्वयथुंसुताम्रमन्तर्गलेपूतिविशीर्णमांसम् । पित्तेनविद्याद्वदने विदारीं पार्श्वे विशेषात्सतुयेनशेते ॥ सपुरुषोयेनपार्श्वेन॰ विशेषाद्बाहुल्येनशेते॰ तस्मिन् पार्श्वेसाविदारीभवतीत्यर्थः ॥ इक्षुगन्धायाम् । श्वेतभूकुष्माण्डे ॥ विदारीचोरशुक्लेक्षुगन्धाक्रोष्ट्रीचेत्यमरः ॥ अस्याः गुणास्तु । विदारीमधुरास्निग्धाबृंहणीस्तन्यशुक्रदा । शीतास्वर्य्यामूत्रलाचजीवनीबलवर्णदा ॥ गुरु पित्तास्रपव

महार्हद्दन्तिरसायनीति ॥ विदारय
ति । दृ विदारणे० अप्रत ' । पचा
द्यच् । गौरादिः ॥ विदार्या .फलं
मूलश्च० विदारी । अनुदात्तादेश्च
स्त्र ० पुष्पमूलेषुबहुलमिति० लु
पि० युक्तवद्भाव : ॥

विदाह : । पुं० कफपादे । कफ
खासे ॥

विदाहि । न० परिणामेऽम्लपाकमु
पयाते० दाहजनकद्रव्ये ॥ विदा
हिद्रव्यमुद्गारमम्लं कुर्यात्तथातृषा
म् । हृदिदाहञ्चजनयेत्पाकंगच्छ
तितच्चिरात् ॥

विदिक्चक्र : । पुं० हरिद्राङ्गप
क्षिणि

विदित : । पुं० कवौ ॥ त्रि० बुधि
ते । अवगते । ज्ञाते । विदिक्रिय
यातिशयेनाप्ते । विदिक्रियाकर्म
भूते ॥ यथा । तस्मिन्ब्रह्मणिवि
दितेविश्वमशेषंभवेदिदविदितम् ।
कारणमृदिविदितायांघटकर्णाद्या-
यथाऽवगम्यन्ते ॥ ७५ । श्रुते ॥
अर्थिते ॥ स्वाज्ञानवति ॥ अ
भ्युपगते ॥ व्याकृते ॥ विद्यतेस्म ।
विदज्ञाने । क्त : । यस्यविभाषेती
ट् ॥ विदितवेदनमस्यास्तिवा । अ
र्शआद्यच् ॥

विदिक् । स्त्री० अपदिशं । अपदिशे
। दिशोर्मध्ये । अभिनिष्टतिवा

व्योशानकोणचतुष्टये ॥ दिग्भ्या
विनिर्गता० प्रान्ताविदिक् ॥

विदिशा । स्त्री० नगरीविशेषे ॥

विदीर्ण । त्रि० कृतविदारणे ।
चीरा० फाडा इ० भा० ॥ दृ० ।
कर्मणिक्त : । ऋतद्भूत्० रपर ।
रदाभ्यामितिनत्वम् । णत्वम् ॥

विदु . । पुं० हस्तिकुम्भयोर्मध्यभागे
॥ कुम्भौतुपिण्डौशिरसस्तयोर्मध्ये
विदु ' पुमान् ॥ वेत्तिसञ्ज्ञामपचा
तेन । विद० । बाहुलकात्कु ॥

विदुर . । पुं० नागरे ॥ धीरे ॥ धृत
राष्ट्रानुजे । कौरवाणामन्त्रिणि ॥
त्रि०ज्ञानशीले ॥ वेदनशील . ।
विदिभिदिच्छिदे : कुरच ॥

विदुल . । पुं० अम्बुवेतसे ॥ वेतसे ॥
गन्धरसे । बोले ॥ वेत्तिविद्यतेवा ।
बाहुलकात्कुलच्०गुणाभावश्च ॥ न
म्रवेतसे ॥

विदुषी । स्त्री० पण्डितायांनार्याम् ॥
वेत्ति । विदे : शतुर्वसु ' । उगित
श्चेतिङीप् ॥

विदुष्मती । स्त्री० पण्डितवत्यांपु-
र्याम् ॥

विदून : । त्रि० परितप्ते ॥ विदूयते
स्म । टुदुउपतापे । क्त : । स्वादि
भ्यस्वेतिनिष्ठानत्वम् ॥ विशेषेणदू
नोवा ॥

विद्रम् । न० देशविशेषे । मालवा

थे ॥ बालवायाद्रेः समीपवर्त्ति निनगरे ॥ त्रि॰ अतिदूरस्थदेशादौ । विप्रकृष्टे ॥

विदूरजम् । न॰ वैदूर्यमणौ ॥

विदूरथः । पु॰ राजविशेषे ॥

विदूरभूमिः । स्त्री॰ विदूरदेशे ॥

विदूराद्रिः । पुं॰ रोहणपर्वते ॥

विदूषकः । पुं॰ क्रीडनीयकपात्रे । षिड्गे । विटे । व्यलीके । कामकेलौ । चाटुवटौ । वासन्तिके । वैहासिके । प्रहासिनि । परनिन्दाकरे । खले । अभीरौ । सूचके । कण्टके । परदेषिणि ॥ नायकविशेषे ॥

विदेशः । पु॰ परदेशे ॥ कोतिभारः समर्थानां किं दूरं व्यवसायिनाम् । कोविदेशः सविद्यानां कः परः प्रियवादिनाम् ॥

विदेहः । पुं॰ जनकान्वयभूमिपे । मैथिले ॥ विदेहाः पु॰ भूम्नि । देशविशेषे । तीरभुक्तौ । तिरहित इ॰ भा॰ प्र॰ ॥ यथा । गण्डकीतीरमारभ्य चम्पारण्यान्तकं शिवे । विदेहभूः समाख्याता तीरभुक्त्यभिधः स तु ॥ त्रि॰ कायशून्ये । निर्देहे ॥

विदेहमुक्तिः । स्त्री॰ मुक्तिविशेषे ॥ सा यथा । तत कालवशादेव प्रारब्धे तु क्षयङ्गते । वैदेहीमामकीमुक्तिं याति नास्त्यत्र संशय इति ॥ ततो जीवन्मुक्त्यनन्तरम् ॥

विदेहा । स्त्री॰ मिथिलायाम् ॥

विद्ध । त्रि॰ वेधिते । कृतच्छिद्रे ॥ क्षिप्ते ॥ सदृशे ॥ बाधिते ॥ ताडिते ॥ विध्यतेस्म । व्यधताडने । क्तः । यहिज्येति सम्प्रसारणम् ॥

विद्धकर्णः । पुं॰ विद्धकर्ण्याम् ॥ त्रि॰ कृतकर्णवेधे ॥ विद्धौकर्णौ यस्य ॥

विद्धकर्णा । )<br>विद्धकर्णिका । ) स्त्री॰ विद्धकर्ण्याम् ॥

विद्धकर्णी । स्त्री॰ पाठायाम् । अम्बष्ठायाम् ॥ विद्धौकर्णौ यया॰ यस्या वा । पाककर्णेति ङीष् ॥

विध्यर्थः । पुं॰ विधिफले ॥ कृतिसाध्यत्वमर्थहेतुत्वमनर्थाहेतुत्वञ्च लिताक्रियायादर्शनम् ॥ भाट्टमते विद्ध्यर्थस्तु॰ श्येनफलस्य व्यभिचारस्यानर्थहेतुत्वादधर्मत्वम्॰ श्येनस्य तु विहितस्य समीहितसाधनस्य धर्मत्वमेव । अर्थपदव्यावर्त्यन्तु॰ कलञ्जभक्षणादेर्निषिद्धस्यैवेति । फलतोऽनर्थहेतुत्वेऽपि तु॰ शिष्टानां श्येनानौ न धर्मत्वेन व्यवहारः । तदुक्तम । फलतोपि च यत् कर्म नानर्थेनानुबध्यते । केवलप्रीतिहेतुत्वात् तद्धर्म इति कथ्यते ॥

विद्ध्वंसः । पु॰ विनाशे ॥ विशि

ष्टोध्वंस . ॥

विद्यमान . । त्रि॰ वर्त्तमाने ॥

विद्या । स्त्री॰ उमायाम् । शिवायाम् । दुर्गायाम् ॥ मन्त्ररूपायाम् ॥ देवताज्ञाने । उपासनायाम् ॥ विज्ञाने ॥ श्रेयोविषयायाम् ब्रह्मविद्यायाम् ॥ अनावृतसवित्ताद्वात्मापन्ना यांत्रह्माकारान्त . करणवृत्ती ॥ आत्मसाक्षात्कारे ॥ वेदार्थपरिज्ञाने ॥ शास्त्रे ॥ आन्वीक्षिकीत्रयीवार्त्तादण्डाख्यासु चतसृषु ॥ यथा । आन्वीक्षिकींत्रयींवार्त्तांदण्डनीतिंच पार्थिव: । तद्विद्यैस्तत्क्रियोपेतैश्चिन्तयेद्विनयान्वित . ॥ आन्वीक्षिक्यात्मविज्ञानं॰धर्माधर्मौत्रयीस्थितौ । अर्थानर्थौतुवार्त्तायांदण्डनीत्यांनयानयौ ॥ विद्याश्चतस्रएवैतायोगक्षेमायदेहिनाम् । विद्याविनीतोनृपतिर्नकृच्छ्रेष्ववसीदति ॥ इति ॥ पुराणादिचतुर्दशसु ॥ यथा । पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिता . । वेदा : स्थानानिविद्यानांधर्मस्यचचतुर्दश ॥ इति ॥ अष्टादशविद्यासु ॥ यथोक्तं विष्णुपुराणे । अङ्गानिवेदाश्चत्वारोमीमांसान्यायविस्तर : । धर्मशास्त्रंपुराणञ्चविद्याह्येताश्चतुर्दश । आयुर्वेदोधनुर्वेदोगान्धर्वश्चेतितेत्रय : । अर्थशास्त्रंचतुर्थञ्चविद्याह्यष्टादशैवता : ॥ इति ॥ तत्रा ङ्गानिषट्॰यथा । शिक्षाकल्पोव्याकरण निरुक्त छन्दोज्योतिषमिति । ऋग्यजु ' सामाथर्वाख्या . वेदाश्चत्वारईरिता • । विचारोवेदवाक्यानांमीमांसाप्रोच्यतेबुधै ॥ साचपूर्वोत्तरभेदाद्द्विधा । तथाहि । कर्मप्रतिपादनपराजैमिनिप्रणीताद्वादशाध्यायी॰पूर्वमीमांसा । ब्रह्मप्रतिपादनपराव्यासप्रणीताचतुरध्यायी॰उत्तरमीमांसेति । पदार्थनिर्णयपरंतर्कशास्त्रंन्याय: ॰अत्रैववैशेषिकनयस्यान्तर्भाव : । मन्वत्रिविष्णुहारीतादिप्रणीतधर्मशास्त्रम्।कापिलपातञ्जलपाशुपतपाञ्चरात्रादीनामागमानामपिधर्मशास्त्रएवान्तर्भाव : । सर्गादिपञ्चलक्षणलक्षितम्॰मत्स्यमार्कण्डेयभविष्यभागवतब्रह्मब्रह्माण्डब्रह्मवैवर्त्तवायुवामनविष्णुवराहाग्निनारदीयपद्मलिङ्गगरुडकूर्मस्कन्दभेदादष्टादशविधंपुराणम् । तदुक्तम् । मद्वयभद्वयञ्चैव॰ब्रत्रयंवचतुष्टयम् । अनापलिङ्गकूस्कानिपुराणानिविदुर्बुधा . ॥ उपपुराणानामप्यत्रैवान्तर्भाव : । रोगोपशमपूर्वकानन्दफलकोऽष्टस्थानसंयुतआयुर्वेद : । शस्त्रास्त्रप्रयोगोपसंहारप्रतिपादकमन्त्रसहित :पादचतुष्टयात्मकोधनुर्वेद' । षड्जर्षभादिस्वरतानपरिच्छेदप्रयुक्तानवधानेपृथक्खण्डादि

खरसमुद्राथोगान्धर्ववेद : । चतु : षष्टिकलासङ्ख्याहकमौशनसादिशा स्त्रमर्थशास्त्रमिति ॥ सर्वद्रव्येषुवि द्यैवद्रव्यमाहुरनुत्तमम् । अहार्य्यं त्वादनर्घ्यत्वादक्षयत्वाञ्चसर्वदा ॥ विद्याददातिविनयंविनयाद्याति पात्रताम् । पात्रत्वाद्धनमाप्नोति धनाद्धर्मंततः सुखम्इतिविष्णु शर्म्मा ॥ दानेनतपसायज्ञैरुपवास व्रतैस्तथा । नतागतिमवाप्नोतिवि द्यायाथामवाप्नुयादितियम : ॥ वि दन्त्यनया०अस्यामितिवा । विद्- ज्ञाने । सञ्ज्ञायांसमजनिषदनिपत मनविद्षुञ्शीङ्भृञिणइतिक्य प् ॥ ब्रह्मविद्यादि०दृश्यमिथ्यात्वं दृश्यस्तुन स्वप्रकाशत्वंबोधयति ॥ प रापरविभेदेनविद्याद्वैविध्यमीरित म् ।ऋग्वेदाद्याऽपराविद्यापरात्व क्षरतत्परा ॥ व्यवहारस्वदृशेयवि द्याविद्येतिभेदपरिभाषा।नोस्ये वतत्त्वदृष्ट्यातत्त्व ब्रह्मैवनान्यदस्त्य स्मात् ॥ तत्त्वदृष्ट्या०ब्रह्मात्मैक त्त्वविषयादृष्ट्या । तत्त्वम्० यथार्थ स्वरूपम् ॥ गणिकार्यामोषधी ॥

विद्यागुरु :। पुं० आचार्यातिरिक्तउ पाध्यायादौ ॥

विद्यातीर्थम् । न० सन्ध्यातीर्थे ॥ विद्यादानपात्रे ॥

विद्यादल :। पुं० भूर्जवृक्षे ॥

विद्यादाता । त्रि० विद्यादानकर्त्त रि ॥ यथा । अन्नदाताभयत्राताप त्नीतातस्तथैवच । विद्यादाताज न्मदातापञ्चैतेपितरोनृणाम् ॥

विद्यादानम् । न० अध्यापने ॥ पुस्त कदाने ॥ अन्नदान महादान वि- द्यादानंततोधिकम् । अन्नेनक्ष- णिकातृप्तिर्यावज्जीवन्तुविद्यया ॥ अपिच । वाजपेयसहस्रस्यसम्यगि ष्टस्यतत्फलम् । तत्फलंसमवा प्नोतिविद्यादानोन्नसंशय : ॥ त स्माद्देवालयेनित्यं धर्मशास्त्रस्यवा श्रुते । पठनं कारयेद्राजन्यदीच्छेद्ध र्ममात्मन : ॥ गोभूहिरण्यवासा सिशयनान्यासनानिच । प्रत्यहं ते नदत्तानिभवन्तिनृपसत्तम ॥ ध र्माधर्म्मनजानातिलोकोयं विद्यया विना । तस्मात्सदैवधर्मात्मन्वि द्यादानरतोभव ॥ इतिवह्निपुराणे विद्यादाननामाध्याय : ॥ अपिच गारुडे ५१ अध्याये। विद्यांदत्वाब्रा ह्मणायब्रह्मलोकेमहीयते । दद्याद्व हरहस्तान्तुश्रद्धयाब्रह्मचारिणे ॥ स र्वपापविनिर्मुक्तोब्रह्मस्थानमवाप्नुया त् इति॥ यस्तुदेव्या गृहेनित्यविद्या दानंप्रवर्त्तयेत् । सभवेत्सर्वलोका नापूज्य : पूजापदंव्रजेत् ॥ धर्मा र्थैश्चनत्वातांशुश्रूषावामितद्विधा । तत्रविद्यानवप्तव्याशुभंबीजमिवो

परे ॥ विद्ययैव समं काममर्त्तव्यं ब्र
ह्मवादिना । आपद्यपि हि घोरायां
न त्वेनामिरिणे वपेत् ॥ विद्या ब्रा
ह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम्
। असूयकाय मां मादास्तथा स्यां वीर्य्य
वत्तमा ॥ यमेव तु शुचिं विद्यान्नियत
ब्रह्मचारिणम् । तस्मै मां ब्रूहि वि
प्राय निधिपायाप्रमादिने ॥ इति
मनुः ॥

विद्यादेवी । स्त्री० विद्याधिष्ठात्र्या
म । सरस्वत्याम् ॥ जिनषोडश
देवीषु ॥ यथा । विद्यादेव्यस्तु षोड
श ॥ १५२ ॥ रोहिणी प्रज्ञप्ती वज्रशृ
ङ्खला कुलिशाङ्कुशा । चक्रेश्व
री नरदत्ता काल्यथोऽसौ महापरा ॥
गौरी गान्धारी सर्वास्त्रमहाज्वाला च
मानवी । वैरोट्याच्छुप्ता मानसी महा
मानसिकेति ताः ॥ १५४ ॥ इ०
हे० च० ॥

विद्याधनम् । न० विद्ययोपार्ज्जिते
वित्ते ॥ यथाह कात्यायनः । उप
न्यस्ते तु यल्लब्धं विद्यया पणपूर्व्वक
म् । विद्याधनन्तु तद्विद्याद्विभा
गेन नियोजयेत् ॥ शिष्यादार्त्विज्य
तः प्रश्नात्सन्दिग्धप्रश्ननिर्णयात्
। स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्यय
नाच्च यत् । विद्याधनन्तु तत्प्राहु
र्विभागेन प्रयोजयेत् । शिल्पेष्वपि
हि धर्म्मज्ञ० मूल्याद्यच्चाधिकं भवेत्



साधारणस्वर्णादिकमादाय० कुण्ड
लादिकं निर्म्माय० स्वर्णादिमूल्यात्०
शिल्पगुणेन यदधिकं मूल्यं स्यात्त
दित्यर्थः ॥ परनिरस्तं यल्लब्धं विद्य
याद्यूतपूर्व्वकम् । विद्यातिशयेनै
पुण्येन० द्यूतपूर्व्वकं यल्लब्धमित्यर्थः
॥ विद्याधनन्तु तद्विद्यान्न विभाज्यं
बृहस्पतिः ॥ अस्यार्थं वचनार्थानु
क्रमेणाह । यदीति । यदि भवान् भ
द्रमुपन्यस्यति० तदा भवते० एतम
यैतद्देयमिति पणितं यच्चोपन्यासनि
स्तीर्णं लभते तन्न विभाज्यम् ॥ शिष्या
दध्यापितात्० आर्त्विज्यतः ८
यजमानाद्दक्षिणया लब्धं धनम्० द
क्षिणा च न प्रतिग्रहो वेतनरूपत्वात्त
स्या० तथा यत्किञ्चिद्विद्यया प्रश्न
निस्तीर्णे० पणितमेव यदि कश्चि
त्परितोषाद्ददाति० प्रश्ने निस्तीर्णे०
प्रश्नस्य सम्यगुत्तरे दत्ते इत्यर्थः सन्दि
ग्धप्रश्ननिर्णयादिति व्याचष्टे । तथे
ति० तथा योऽस्मिन् शास्त्रार्थे मम स
शयमपनयति० तस्मै सुवर्णमिदं द
दानीत्युपस्थितस्य संशयमपनीय यल्ल
ब्धम्, तच्चैव विकल्पे न व्याख्यान्तर-
माह यद्वेति । यद्वा० वादिनो वा
दसन्देहे० न्यायकरणार्थमागतयोः
सम्यङ्निरूपणेन यल्लब्धं षष्ठांशादि
कम् । स्वज्ञानशंसनादिति व्याच
ष्टे० तथेति० तथा शास्त्रादिषु प्रक

ष्ज्ञानविभाज्यतत्प्रतिग्रहादिनाल
ब्धम् । शौर्य्यादित्यस्यार्थमाह॰ तथे
ति । तथाद्वयोः शास्त्रज्ञानविवादे॰
अन्यत्रापियत्रकुत्रचिदन्योन्यज्ञान-
विवादे॰ निर्जित्ययल्लब्धम्॰ नि
र्जित्य॰ एककोटिव्यवस्थापनेनवि
वादमपनीय॰ लब्धम्॰ वादिपणि
तराज्ञावाप्रसाददत्तमित्यर्थः. प्रा
ध्ययनादितिव्याचष्टे॰ तथेति॰ त
थैकस्मिन्देयेबहूनामुपप्लवे॰ येन
प्रकृष्टमधीत्य॰ यल्लब्धम् । शिल्पि
ष्वपीत्यस्यार्थमाह॰ तथेति॰ तथा
शिल्पादिविद्यया॰ चित्रकारसुवर्ण
कारादिभिर्यल्लब्धम्॰ शिल्पगुणेन
यदधिकंलब्धम् । तथाद्यूतेनापि
परंनिर्जित्ययल्लब्धं॰ तत्सर्वंविद्या
धनमविभाज्यमितरैरित्यर्थः.। त
स्माद्यथाकथाचविद्ययालब्धमर्ज-
कस्यैवतन्नेतरेषामिति॰ प्रदर्शना
र्थन्तुकात्यायनेनविस्तारितमितिदा-
यभाग :॥ अथनारद :। कुटुम्बं
बिभृयाद्भ्रातुर्योविद्यामधिगच्छत :
। भागंविद्याधनात्तस्मात्सलभे
ताश्रुतोपिसन्निति ॥ बिभृयादित्य
कवचननिर्द्देशाद्बहव '। यदिवि
द्यामभ्यस्यतोभ्रातु : कुटुम्बमपरो
भ्राताखधनव्ययशरीरायासाभ्यांसं-
वर्द्धयति॰ तदातद्विद्यार्जितधने
तस्याधिकारः॰ अश्रुतोमूर्खः :।



विद्याधर । पुं॰ देवयोनिविशेषे ।
जीमूतवाहनपुष्पदन्तादौ॰ कामरू
पिणि॰ खेचरे ॥ विद्यायागुटिका
ञ्जनादिविषयिण्याः॰ धरोधारकः
॥ रतिबन्धविशेषे ॥ यथा । नार्य्याऊ
रुयुगंधृत्वाकराभ्यांताडयेत्पुन '।
कामयेन्निर्भयंकामीबन्धोविद्याधरो
मत :॥ यन्त्रविशेषे ॥ यथा ॥
विद्याधरयन्त्रम् । न॰ डमरुयन्त्रे ॥
विद्याधार: । पुं॰ वर्णवृत्तान्तरे ॥
यथा । नागाधीशैर्मोक्तंवृत्तं विद्या
धारम्॰ षड्भि : कर्णैः शेषे पूर्णंभू
मीसारम् । ख्यातंस्मिन्विश्रामोवेदै
र्वेदैर्वेदै॰ कृत्वायस्मात्पूर्णंधीर: की
र्त्यायुक्त .॥ यथा । वन्देपादाम्भो
जन्नित्यंसीताभर्तु : कृत्वासिन्धौ
सेतुरक्षोनाथहन्तु .। पित्र्यामाज्ञा
ज्ञात्वाप्राप्तंराज्यंहातु ' सौध्यैः स
र्वैर्लोकै : सार्द्धंनाकंयातु : ॥ वि
द्यां धरति । धृञ्॰ । कर्म्म
ण्यण् ॥
विद्याधिकारी । त्रि॰ उपनिषन्निर्व्व
चनेनोक्ते ॥ विद्यायाः ब्रह्मविद्या
या : अधिकारी ॥ सद्विविधः॰
कृतोपास्तिरकृतोपास्तिश्च । तत्रो
पास्तिमाक्षात्कारपर्य्यन्तामुपासना
कृत्वायोज्ञानेप्रवर्त्ततेसमुख्योविद्या
धिकारी । इदानीन्तनस्तुप्रायेणा
कृतोपासनएवौत्सुक्यमात्रात्सहसा

विद्यायांप्रवर्त्ततेसतुगौणोधिकारी॰ तस्यज्ञानस्यसवातप्रदेशप्रदीपवत्स हसानिवर्त्तनात् । ननुसर्वेषाम पिविदुषामात्मनोनित्यप्राप्तिरूपो मुख्याधिकारः किन्नस्यादविशेषा दविद्यानिवृत्तिरितिचेत्॰शृणु॰स्व स्वायम्भाव॰ । यस्तूपास्यदेवतासा साक्षात्कारपर्यन्त सगुणोपासन वि धायविद्यायांप्रवृत्तस्तस्यविचारेणज्ञा नोत्पत्तौविघ्नपाभावात्॰आत्मधी र्निश्चप्राप्तैव । य॰ पुनरुपासनमकृ त्वाश्रवणाद्यनुष्ठायतत्त्व निश्चिनोति तस्यचित्तवशीकरणाभावेविघ्नपस म्भवात्तस्यातिनियमविधि. । नच तत्त्वज्ञानेमाज्ञानस्यनष्टत्वाद्विभिवै यर्थ्यमितिवाच्यम्॰वशीकरणा भावे॰शास्त्रेणनश्चेत्परमार्थबुद्धिरि त्यज्ञानेपरमार्थत्वांशनाशेपि॰जन्म हेत्वज्ञाननाशायोगात् । अन्यथा वेदान्तेषूपास्तिविधीनामैकाग्र्याद्द्वा राऽद्वितीयब्रह्मपरत्व नस्यात् । अ तस्तेषांश्रुतिप्रसिद्धप्रणवोच्चारणपूर्व कमप्रतिबद्धसाक्षात्कारायनिरन्तर निर्गुणब्रह्मभावनाकार्या । अतएव शास्त्रे॰विदुषोविधिर्नास्तीत्युक्त्वा॰ पुनर्विद्वानज्ञवद्विधिमर्हतीतिब्रह्म निष्ठाविधीयते॰इत्याद्युक्तिर्नविरु ध्यते । अधिकारिभेदेनव्यवस्थास म्भवात् ॥

विद्यानिधि । पुं॰ विद्यासम्प्रदाय प्रवर्त्तके ॥

विद्यानैपुण्यकाम॰ । त्रि॰ विद्याति शयमात्रार्थिनि ॥

विद्याप्रयोजनम् । न॰ आत्यन्तिकसंस सारनिवृत्तौब्रह्मप्राप्तिलक्षणायाम्॥ विद्यायाः प्रयोजनम् ॥

विद्याभीप्सी । त्रि॰ विद्यार्थिनि ॥

विद्यारम्भः । पुं॰ प्राप्तेतुपञ्चमेवर्षे विद्यारम्भञ्चकारयेदितिवचनबोधि तेविद्यायाः प्रारम्भे ॥

विद्यार्थी । त्रि॰ विद्याभीप्सिनि ॥ विद्यैवार्थ॰ सोऽस्यास्तीति॰इ- नि: ॥

विद्यावान् । त्रि॰ विद्याविशिष्टे ॥ पण्डिते ॥ विद्यास्त्यस्य । म- तुप् ॥

विद्याविषयः । पुं॰ परब्रह्मणि॰प्र त्यगात्मभूते ॥ विद्यायाः विष यः ॥

विद्युज्जिह्वः । पुं॰ राक्षसविशेषे ॥ त्रि॰तडिदाभजिह्वे ॥

विद्युज्ज्वाला । स्त्री॰ कलिकारीवृ- क्षे ॥ तडित्प्रभायाम् ॥

विद्युत् । स्त्री॰ मेघेमुहर्श्चे॰दीर्वाका रे॰ज्योतिषि । तडिति । सौदा मिन्याम । चञ्चलायाम् ॥ साचतु र्विधायथा । वातायकपिलाविद्युदा तपायहितोहिता । पीतावर्षायवि

स्नेयाद्गुर्भिर्वायासिताभवेत् ॥ स
न्ध्यायाम् ॥ विशेषेणद्योतते । द्यु
तदीप्तौ । भ्राजभासीतिक्विप् ॥
त्रि० निष्प्रभे ॥

विद्युत्केश : । पुं० राक्षसविशेषे ॥

विद्युत्प्रियम् । न० कांस्ये ॥

विद्युत्वान् । पुं० मेघे ॥ विद्युत :
सन्त्यस्मिन् । मतुप् ॥

विद्युन्माला । स्त्री० अनुष्टुप्छन्दोभे
दे ॥ यथा । मोमोगोगोविद्युन्मा
ला । वासोवल्लीविद्युन्मालावर्हश्रे
णीशाङ्गश्चाप : । यस्मिन्नास्तातापो
च्छित्यैगोमध्यस्थ : कृष्णाम्भोद : ॥
अपिच । उक्तायस्यामष्टौवर्णा : पा
देपादेसर्वेदीर्घा । विश्राम : स्याद्वि
ह्वैर्वेदै : साविद्युन्मालानिर्दिष्टा
॥ यथा । आगामिन्योनोयामिन्यो
यायायाताभूयोभूय : । अभ्रच्छाया
बलारुध्यमानेनानेनस्यात्किन्ते ॥

विद्युन्माली । पुं० राक्षसविशेषे ॥

विद्योपयोग : । पुं० विद्यायेष्टसिद्धौ ॥
चतुर्भिस्प्रकारैर्विद्योपयुक्ताभवति
। आगमकालेन० आगमकालस्यवि
द्याग्रहणकाल : । १ । स्वाध्यायका
लेन० स्वाध्यायकालस्याभ्यासकाल :
। २ । प्रवचनकालेन० प्रवचनकालोऽ
ध्यापनकाल : । ३ । व्यवहारकालेन०
व्यवहारोयज्ञानुष्ठनकर्मणि । ४ ।
तत्राद्ययोर्विद्याध्ययबुद्धिमानिस्याद्

रपूर्वकमन्त्रवस्त्रादिलाभरूपोपयोग
। तृतीयेप्रतिष्ठा० सच्छिष्यलाभद्वा
रार्थप्राप्ति सत्कारविशेषस्य । चतु
र्थे० यज्ञादानुष्ठानकालेऽपमन्त्रप्रयो
गप्रयुक्तप्रायश्चित्ताभाव . ० कर्मसा
द्गुता० दक्षिणालाभ . प्रतिष्ठाचेत्युप
योग । ० तादृशस्योपयोग : सर्वाध्य
यनएवेतिमहाभाष्यकारादय : ॥

विद्रम् । न० छिद्रे ॥

विद्रधि . । पुं० रोगविशेषे । स्त्रद्रन्यौ
। हृद्व्रणे ॥ अस्यसम्प्राप्तिपूर्वकसा
मान्यलक्षणंयथा । त्वपक्वमासमेदां
सिप्रदुष्याखिसमाश्रिता । दोषा :
शोथंशनैर्घोरंजनयन्त्यायताभृशम् ॥
महामूलरुजावन्तंवृत्त व्याप्यथवाय
तम् । सविद्रधिरितिख्यातोविज्ञे
य : षड्विधश्च स : ॥ पृथग्दोषै : स
मस्तैश्चक्षतेनाप्यसृजातथा । विद्रधि
: षड्विध : प्रोक्तोविशेषोभावसङ्कटे ॥
अलोकापातनंशस्तसर्वस्मिन्नपिविद्र
धौ । स्टुर्विरेकोलघ्वन्न स्वेद : पित्तो
त्तरविना ॥ वेदनम् । विदेर्बहुल
मन्यत्रापिसञ्ज्ञाछन्दसोरितिवारक्
। यद्वा । विद्रास्वप्ने पलायने । आ
तश्चोपसर्गइतिक: । विद्रधीयतेऽ
स्याम् । डुधाञ् ० । कर्मण्यधिक
रणे चेतिकि : ॥ यद्वा । विद्रस्यधा
नम् । कृक्षुण्यादिभ्य : ॥

विद्रधिनाशन : । पुं० शोभाञ्जनवृक्षे ॥

विद्रव : । पुं॰ विद्रुतौ । पलायने ॥ धि थि । बुद्धौ ॥ विद्रवणम् । द्रुगतौ । त्रदीरप् ॥ निन्दायाम् ॥ चरणे ॥
विद्रावित : । त्रि॰ पलायिते ॥
विद्रुत : । त्रि॰ पलायिते ॥ प्रचलिते ॥ द्रवीभूतेस्त्र' प्रासद्रवीभावे । विलीने । द्रुते ॥ विद्रवतिस्म । द्रु गतौ । गत्यर्थेतिक्त ॥
विद्रुति' । स्त्री॰ पलायने । प्रद्रावे ॥
विद्रुम : । पुं॰ रत्नवृक्षे ॥ प्रवाले ॥ किशलये ॥ विशिष्टोद्रुम ॥ य द्वा । विशिष्टे द्रौवृक्ष भव . । विशि ष्टोद्रुमोस्यस्यवा । वा द्रु भ्यांम . ॥ त्रि॰विगतद्रुमेभूमिपर्वतादौ ॥
विद्रुमलता । स्त्री॰ नलीनामौषधौ ॥ शुषिराविद्रुमलताकपोताङ्घ्रिर्नटी नली ॥ विद्रुमस्येवलता ॥
विद्रुमलतिका । स्त्री॰ विद्रुमलतायो म् ॥
विद्वत्कल्प : । त्रि॰ ईषदूने विदुषि । विद्वद्देश्ये ॥
विद्वत्संन्यास । पुं॰ सम्यगनुष्ठितै : श्रवणमननिदिध्यासनै: परन्तत्त्वं विदितवद्भि' सम्पाद्यमाने॰ ज्ञा नफलभूतेचतुर्थाश्रमे ॥ तच्चयाज्ञव ल्क्यादय : सम्पादयामासु : ॥
विद्वान् । त्रि॰ प्राज्ञे । दक्षे ॥ पण्डि ते ॥ वेदविदि ॥ विदितसकलवे द्ये । आत्मविदि ॥ व्युत्थानमप रिग्रहञ्चेतिद्वयविविदिषुणासाध नत्वेनोक्तम्॰ तत्॰ विदुषाख त : सिद्धमित्याह । लोकद्वयार्थेष णाभ्योव्युत्थानञ्चापरिग्रह । द्वय वे।श्रमस्त्विषैवविदुषानतुयत्नत ' ॥ आनन्दे कस्वभावस्यमात्मानपश्य त . कुत ' । काम परिग्रहोवा स्यादुर्योकामइतिचश्रुते ॥ वेत्ति ॥ विद्ज्ञाने । विदे शतुर्वसुरिति पाणिनीवसुरादेश ॥ नशिल्पादि ज्ञानयुक्ते विद्वच्छब्द . प्रयुज्यते ॥ विद्वत्वञ्चनृपत्वञ्चनैवतुल्यं कदाच नास्वदेशेपूज्यतेराजाविद्वान्सर्वत्रपू ज्यते ॥
विद्विट् । त्रि॰ शत्रौ ॥
विद्वेष . । पुं॰ विद्वेषणे । द्वेषिपक्ष प्रीतौ । वर्ज् ॥
विद्वेषक : । त्रि॰ विद्वेष्टरि । द्वे षकर्त्तरि ॥ विद्वेष्टि । द्विष॰ ण्वुल् ।
विद्वेषणम् । न॰ विद्वेषे । वैरे ॥ अभिचारकर्मविशेषे ॥ स्निग्धाना द्वेषजननमिथो विद्वेषणं मतम् ॥
विद्वेषणी । स्त्री॰ स्त्रीविशेषे ॥
विद्वेषी । त्रि॰ शत्रौ । वैरिणि ॥ विद्वेषोस्यस्यास्मिन्वा । इनि : ॥
विधनम् । त्रि॰ विनाशयति ॥
विधवनम् । न॰ कम्पने ॥
विधरण : । त्रि॰ विधारयितरि ॥

विधवा । स्त्री० रण्डायाम् । मृतभ र्त्तृकायाम् । विश्वस्तायाम् । प तिहीनाचयानारीकामंभवतुपुत्रि णी । धनधान्यसमृद्धापिविधवेत्यु च्यतेबुधैः । विगतोधवोभर्त्तायस्याः॥

विधा । स्त्री० गजाशने । प्रभाग्रे ॥ ऋद्धौ ॥ विधौ ॥ विधानम् । डु धाञ् धारणपोषणयोः ॥ आतङ्क तिक ॥ वेतने ॥ कर्माणिविधी यन्तेऽनया ॥ प्रकारे ॥ वेधने ॥

विधाता । पुं० वेधसि । द्रुहिणे ॥ स्म रे । कामदेवे ॥ विशिष्यदृष्पाति । डुधाञ्० । तृच् । विरन्यापसर्गे निवृत्त्यर्थः ॥ मदिरायामितिरा जनिघण्टः ॥ भृगुमुने पुत्रे॥ विष्णौ कर्माणिदर्शपूर्णमासादी नि० तत्फलानिस्वर्गादीनिचविद धातिसृजति । पूर्ववत्तृच् ।

विधात्लभू । पुं० नारदमुनौ ॥

विधाचायु : । पुं० सूर्यआभायाम्॥ ब्रह्मणोवयसि ॥

विधाची । स्त्री० पिप्पल्याम् ॥ म दये ॥ विधानकल्याम् ॥

विधानम् । न० हस्तिकवले ॥ विधौ॥ कारणे ॥ अप्रवृत्तप्रवर्त्तने ॥ वेदे ॥ विधीयन्तेऽनेनकर्माण्यग्निहो त्रादीनि । डुधाञ्० । ल्युट् ॥

विधानग : । पुं० पण्डिते ॥ विधानं गायति । गैशब्दे । गापोष्टक् ॥

विधानोक्त । त्रि० विधिशास्त्रबोधि ते ॥ विधानेनउक्तः ॥

विधाय । अ० कृत्वेत्यर्थे ॥

विधायक . । त्रि० विधेर्ज्ञापके । विधानस्यकर्त्तरि ॥ विपूर्वोधाञो ण्वुल् ॥

विधायी । त्रि० विधानकर्त्तरि ॥

विधारक . । पुं० विधरणे ॥

विधि . । पुं० ब्रह्मणि । परमेष्ठिनि । काले ॥ दैवे । नियतौ ॥ विधाने ॥ विधिवाक्ये ॥ प्रकारे ॥ कल्पे ॥ क्रमे ॥ नियोगे ॥ विष्णौ ॥ वै द्ये ॥ योगोपदेशग्रन्थे ॥ कर्मणि ॥ लिङाद्यर्थे ॥ वेदे । । कुर्यात्क्रि येतकर्त्तव्य भवेत्स्यादितिपञ्चमम् । एतत्स्यात सर्ववेदेषुनियतविधि लक्षणमितिन्यायविदास्मरणम् ॥ तथाच० पुरुषार्थमुद्दिश्य० कर्मोपा सनाज्ञानात्मककाण्डत्रयविधायको वेदो० विधिरितिफलितोर्थः ॥ अज्ञा तज्ञापकोवेदभागो० विधिरितिमीमां सकाः । सचताद्दशप्रयोजनवदर्थ विधानेनार्थवान्० यादृश चार्थं प्रमाणान्तरेणाप्राप्त विधत्ते । य था० अग्निहोत्रं जुहुयात् स्वर्गका मइतिविधिर्मानान्तरेणाप्राप्त स्वर्ग प्रयोजनवद्धोम विधत्ते० अग्निहो त्रहोमेनस्वर्गंभावयेदितिवाक्यार्थबो ध. । यत्रकर्ममानान्तरेणाप्राप्त०

तत्र तदुद्देशेन गुणमात्रं विधत्ते । यथा दध्ना जुहोतीत्यत्र । होमस्याग्निहोत्रं जुहुयादित्यनेन प्राप्तत्वाद्धोमोद्देशेन । दधिमात्रविधानं । दध्ना होमं भावयेदिति । यत्र तूभयमप्राप्तं । तत्र विशिष्टं विधत्ते । यथा । सोमेन यजेतेत्यत्र । सोमयागयोरप्राप्तत्वात् । सोमविशिष्टयागविधानम् । सोमपदे मत्वर्थलक्षणया । सोमवता यागेनेष्टं भावयेदिति । वाक्यार्थबोधः । न चोभयविधाने वाक्यभेदः । प्रत्येकमुभयस्याविधानात् । किन्तु । विशिष्टस्यैकस्य विधानात् ॥ विधिस्तु त्रिविधः नियोगविधिरधिकारविधिः प्रयोगविधिश्चेति ॥ विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसङ्ख्या विधीयते ॥ अप्राप्तप्रापको विधिरिति वैयाकरणाः ॥ न्यायमते विधिर्यथा । प्रवृत्तिः कृतिरेवात्र सा चेच्छातो यतश्च सा । तज्ज्ञानं विषयस्तस्य विधिस्तज्ज्ञापकोऽथवा ॥ विधिजन्यज्ञानात् । प्रवृत्तिर्हि यत्नः । सा । इच्छातः । चिकीर्षातः । चिकीर्षा च कृतिसाध्यत्वेष्टसाधनत्वज्ञानात् । तज्ज्ञानस्य विषयः कार्यत्वमिष्टसाधनत्वञ्च विधिरिति प्राचीनमतम् । स्वमतमाह । तज्ज्ञापकोऽथवेति । इष्टसाधनत्वानुमापकप्रमाभिप्रायो विधिप्रत्ययार्थः । इति हरिदासीयकुसुमाञ्जलिः ॥ विधिर्विधायक इति न्यायसूत्रम् । इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यं विधिः । अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादि ॥ विधीयते अनेन सुखदुःखे । डुधाञ् । उपसर्गे घोः किः ॥ विधत्त इति विधिर्वा । बाहुलकात् कर्त्तरि किः ॥ यद्वा । विध विधाने । इन् । इगुपधात् किदिति कित्त्वान्न गुणः ॥ विधानमनेन वा । पूर्ववत् किः ॥

विधिगोचरः । त्रि॰ विधिकिङ्करे ॥

विधिज्ञः । त्रि॰ शास्त्रज्ञे ॥

विधित्समानः । त्रि॰ विधातुमिच्छति ॥

विधित्सा । स्त्री॰ विधातुमिच्छायाम् ॥ विपूर्वाद्दधातेः सनि मीमेत्यादिना इकारः । अत्र लोपोऽभ्यासस्येत्यभ्यासलोपः ततः स्त्रियामित्यनुवृत्तौ अप्रत्ययादिति अप्रत्यये टाप् ॥

विधित्सितः । त्रि॰ विधातुमीप्सिते । कर्त्तुमिष्टे ॥

विधित्सुः । त्रि॰ विधातुमिच्छौ ॥ विपूर्वाद्दधातेः सन्नन्तादुप्रत्ययः ॥

विधिदर्शी । पुं॰ सदस्ये । न्यूनाधिकविचारकर्त्विग्विशेषे ॥ विधिं द्रष्टुं शीलमस्य । णिनिः ॥

विधिदृष्टः । त्रि॰ यथाशास्त्रनिश्चिते ॥ विधिना दृष्टः ॥

विधिदेशक : । पुं॰ सदस्ये । विधिद र्शिनि ॥

विधियज्ञ : । पुं॰ विधिनानुष्ठेयमा नेवाह्ययज्ञे । दर्शपौर्णमासादौ ॥ विधिविषयीयज्ञ : ॥

विधिवत् । अ॰ यथाविधि , विध्यनु सारेणेत्यर्थे ॥

विधिविषय : । त्रि॰ विधिजन्यप्रय त्नभाव्ये ॥ विधेर्विषय : ॥

विधिहीन . । त्रि॰ यथाशास्त्रबोधित विपरीते ॥ विधिनाहीन : ॥

विधु : । पुं॰ सुधांशौ । सोमे । चन्द्रे ॥ कर्पूरे । अच्युते । हरौ । ब्रह्म णि ॥ राक्षसे ॥ विध्यतिविरहिणम् ॰विध्यत्यसुरान्वा । व्यधताडने । पृभिदिव्यधिगृधिधृषिभ्य : कु : । ग्रहिज्येतिसम्प्रसारणम् ॥

विधुक्षय : । पुं॰ अमावास्यायाम् ॥

विधुत : । त्रि॰ त्यक्ते ॥ निरस्ते ॥ क म्पिते ॥ विशेषेणधुत : ॥

विधुति : । स्त्री॰ कम्पने ॥

विधुन्तुद : । पुं॰ राहौ । सैंहिकेये । विधुतुदति । तुद॰ । विध्वरुषोस्तु दइतिखश् । मुम् ॥

विधुपञ्जर : । पुं॰ खड्गे ॥

विधुप्रिया । स्त्री॰ चन्द्रपत्न्याम् ॥ दा क्षायिण्योविधुप्रिया : ॰इतिकोषा न्तरम् ॥

विधुरम् । न॰ प्रविश्लेषे ॥ वैकल्ये त्रि॰विकले ॥ विगताधू : कार्यभा र : ।ऋक्पूरित्यप् । धुरोविगतइ तिप्रादिसमासोवा ॥ न॰प्रत्यवाये ॥ कष्टे ॥

विधुरा । स्त्री॰ रसालायाम् ॥ ङ्॰मे॰ ॥

विधुरित । त्रि॰ विश्लिष्टे ॥

विधुवनम् । न॰ विधूनने । कम्पने ॥ धूविधूनने । ल्युट् । गाङ्कुटादि भ्यइतिङित्वाद्गुणाभाव . ॥

विधूत । त्रि॰ कम्पिते ॥ त्यक्ते ॥ वि धूयतेस्म । धूञ्कम्पने । क्त : । य स्यविभाषेतिनेट् ॥

विधूननम् । न॰ कम्पने । विधुवने । धूञ्कम्पनेचुरादि । ल्युट् । धू ञ्प्रीञोर्नुग्वक्तव्य : ॥ अश्वादीना मृगाश्वकम्पने ॥

विधूनित : । त्रि॰ व्याहते ॥ कम्पिते ॥ धूञोण्यन्तात्कर्मणि॰क्त : ।धूञ् प्रीञोरितिनुगागम : ॥

विधूम्र : । पुं॰ धूसरे ।कृष्णरक्तमिश्रि तवर्णे ॥ त्रि॰तद्वति ॥

विधृत : । त्रि॰ विधारिते ॥ विशेषेण धृते ॥ विष्टब्धे ॥

विधृति . । स्त्री॰ विधरणे ॥

विधेय : । पुं॰ मन्त्रे ॥ विधीयतेवि नियुज्यतेज्ञाप्यतेवाक्येनकर्माङ्गत्वे नेतिहरिहरभाष्यम् ॥ त्रि॰विनय ग्राहिणि । वचनेस्थिते ॥ विधित्व त्वबोधविषये ॥ यथा । अनुवाद्यम

मुक्तास्तुनविधेयसुदीरयेत् । नह्यल्पव्यास्यदकिञ्चित्कुत्रचित्प्रतितिष्ठति ॥ विधातुं शक्य : । प्रचीयत् । ईप्सति । । गुण : ॥ विधिगम्ये । अनुष्ठेये । कर्त्तव्ये ॥ वश्ये ॥

विधेयता । स्त्री॰ विधेयत्वे । विधिजन्यबोधविषयत्वे ॥ यथा ॥ यथात्र ब्रह्मवधादिषुपापस्यनिषितयोपयुक्ता ब्राह्मणादिस्वानिष्टेगुण्य॰तथागङ्गास्नानादिषुपुण्यस्यविधेयतावच्छेदकगङ्गादिस्नानेष्टगुण्यमितिप्रायश्चित्ततत्त्वम् ॥ .

विधेयवर्त्ती । त्रि॰ वशवर्त्तिनि ॥ विधेयेवर्त्तते॰विधेयवर्त्तयतिवा । णिनि . ॥

विधेयात्मा । पुं॰ वशीकृतान्त : करणे ॥ विधेयआत्माअस्य ॥

विनत : । त्रि॰ प्रणते ॥ भुग्ने ॥ शिक्षिते ॥ विनमतिस्म । नम॰ । क्त : ॥ विशेषेणनतोवा ॥

विनता । स्त्री॰ तार्क्ष्यजनन्याम् । सुपर्णायाम् ॥ पिटकाभेदे ॥

विनतासूनु : । पुं॰ अरुणे । सूर्यसारथौ ॥ गरुडे । खगेश्वरे ॥ विनताया : सूनु . ॥

विनति : । स्त्री॰ विनये ॥ विशिष्टानति ॥

विनद : । पुं॰ कणावी । गिलोत्रृं ॥

विनम्र : । त्रि॰ विनयिनि ॥ विशेषेणनम्र : ॥

विनम्रकम् । न॰ तगरपुष्पे ॥

विनय । पुं॰ शिक्षायाम् ॥ प्रणतौ । विनीतत्वे । निरहङ्कारे । सौशील्ये । अनौद्धत्ये । अवनतौ ॥ विनयप्रशंसायथा । विनयोपपन्नानभूत्ये कुर्वीतनृपति : सुतान् । अविनीतकुमारंहिकुलमाशुविशीर्यति । विनीतमौरसपुत्रं यौवराज्येऽभिषेचयेत् ॥ अपिच । वृद्धांश्चनित्यं सेवेत विप्रान्वेदविद : शुचिन् । वृद्धसेवीहिसततं रक्षोभिरपिपूज्यते ॥ तेभ्योधिगच्छेद्विनयविनीतात्मापिनित्यश : ॥ विनीतात्मादिनृपतिर्नविनश्यतिकर्हिचित् ॥ बहवोऽविनयान्नष्टाराजान : सपरिच्छदा : । वनस्थाअपिराज्यानिविनयात्प्रतिपेदिरे ॥ वेणोविनष्टोऽविनयान्नहुषश्चैवपार्थिव : । सुदासोयवनश्चैवसुमुखोनिमिरेवच ॥ पृथुस्तुविनयाद्राज्यंप्राप्तवान्मनुरेवच । कुवेरश्चधनैश्वर्यंब्राह्मण्यञ्चैवगाधिज : ॥ इतिमनु : ॥ द्विविधोविनय स्वाभाविक . कृत्रिमश्चेतिकौटिल्य । विशिष्टोनय : ॥ दण्डे ॥ त्रि॰ क्षिप्ते ॥ क्षिप्ते ॥ निभृते ॥ विजितेन्द्रिये ॥

विनयग्राही । त्रि॰ विधेये । वचनेस्थिते । आश्रवे ॥ विनयंग्रहीतुंशीलमस्य । सुपोतिणिनि : ॥

विनयस्थ ' । त्रि॰ विधेये । आश्रवे । वचनेस्थिते । आज्ञाकारिणि ॥ विनयेतिष्ठति । स्था॰ । क: ॥

विनया । स्त्री॰ वनौषधौ । बाव्याल वे ॥

विनयी । त्रि॰ विनयान्विते ॥ विनयो ऽस्यास्ति । इनि: ॥

विनद्द' । पु॰ ऋषभकूजितसमेश्वर विशेषे ॥ विशिष्टोनद्द ' ॥

विनशनम् । न॰ तीर्थविशेषे । कुरुक्षेत्रे । सरस्वत्या प्रथमादर्शनस्थले ॥ विनाशे ॥

विनष्ट । त्रि॰ अन्तर्हिते ॥ विनश्यति स्म । णश अदर्शने । गत्यर्थेतिक्त ॥ छिन्ने । भिन्ने ॥ नाशाश्रये । ध्वस विशिष्टे ॥ पतिते ॥

विनष्टि ' । स्त्री॰ विनाशे ॥ अशिर्भावेक्तिन् ॥

विनस: । त्रि॰ विघ्रे । गतनासिके ॥

विना । अ॰ वर्जने । पृथक् । अन्तरेण । ऋते । हिरुक् । विनञ्भ्यानानाञौनसहेति॰निषेधार्थादिशब्दात्रा ॥

विनाकृत ' । त्रि॰ विरहिते । भिन्ने ॥ द्व॰त्रि॰ ॥

विनाम ' । पु॰ शरीरस्यनम्रतायाम् । व्यथयावपुषोनमने ॥ विनमनम् । णम । घञ् ।

विनामक: । पु॰ अधिमासे ॥

विनायक ' । पु॰ विघ्नराजे । गजानने । हेरम्बे ॥ तार्क्ष्ये ॥ विघ्ने ॥ ॥ जिने ॥ गुरौ ॥ विनयतिशितमनुशास्ति । णीञ॰ । ण्वुल् ॥ विशिष्टोनायकइतिवा ॥ विगतोनायकोनियन्ताऽस्येतिवा ॥ त्रि॰नायकवर्जिते ॥

विनायिका । स्त्री॰ तार्क्ष्यपत्न्याम ॥

विनारुहा । स्त्री॰ चिपर्णिकायाम् ॥

विनाश: । पु॰ अदर्शने । विनष्टे ॥ ध्वसे ॥ विनशनम् । णशअदर्शने । । घञ् ॥

विनाशक: । त्रि॰ विनाशकर्त्तरि ॥ विनाशयतितक्षोलादि । णश॰ । विपूर्वोहेतुमण्ण्यन्त. । निन्दहिंसक्लिशखादिविनाशपरिक्षिपेत्यादिनावुञ् ॥

विनाशी । त्रि॰ अनित्ये । देशकालवस्त्वात्मकत्रिविधपरिच्छेदवति ॥ विनष्टुंशीलमस्य । णिनि ॥ विनाशकारणशीले ॥

विनाशोन्मुख । त्रि॰ पक्वे ॥ नाशोद्यते ॥ विनशनविनाश: । भावेघञ् । उद्गतंमुखमारम्भोऽस्य । विनाशेउन्मुख: ॥

विनासक । त्रि॰ अनासिके । गतनासिके ॥ विगतानासायस्यस: ॥

विनाह । पु॰ कूपाननपिधानके ॥ आच्छादने । इलश्चेतिघञ् ॥

विनिगमकः । त्रि॰ विशेषेणनितरां बोधके । ज्ञापके ॥

विनिगमना । स्त्री॰ एकतरपक्षपातिन्यांयुक्तौ । वैकल्पिकेषुवस्तुष्वेकस्मिन्नवधारणाशक्तौ ॥

विनिद्र । त्रि॰ उन्मीलिते । विकसिते । स्फुटिते । निद्रारहिते ॥ विगतानिद्राऽस्य ॥

विनिद्रत्वम् । न॰ निद्रारहितत्वे ॥ प्रबोधे ॥

विनिनीषु । त्रि॰ विनेतुमिच्छौ ॥

विनिपातः । पुं॰ निपाते । अपाते । दैवादिव्यसने । दैविकाम र्थे । विशिष्टोनिपातः ॥ अवमाने ॥

विनिमयः । पुं॰ परिदाने । प्रतिदाने ॥ व्यतिहारे ॥ व्यत्यये । अन्यस्मिन्नन्याभासे ॥ बन्धके ॥ यथा । विक्रयेगोविनिमयेदस्यागोमांसखादके । व्रतं चान्द्रायणं कुर्याद्वधे साक्षाद्वधीभवेत् ॥ कृतिगोभिलवचनम् ॥ विशेषेणनिमीयते । मीञ् हिंसायाम् । एरच् ॥

विनियोगः । पुं॰ विनियोजने ॥ अनेनेदन्तुकर्त्तव्यंविनियोगः प्रकीर्त्तितः ॥ विशिष्टोनियोगः ॥ विभजने ॥ विनियोगोऽर्पणंफले॰ हे॰ हेमचन्द्र ॥

विनियोगविधिः । पुं॰ अङ्गप्रधानसम्बन्धबोधकोविधौ ॥ यथा । दध्नाजुहोतीति । सहितृतीयाप्रतिपन्नाङ्गभावस्यदध्नोहोमसम्बन्धंविधत्ते॰ दध्नाहोमं भावयेदिति । गुणविधौच धात्वर्थस्यसाध्यत्वेनैवान्वय । कारकाश्रयत्वेनापि । यथादध्नेन्द्रियकामस्यजुहुयादित्यत्र॰ दधिकरणकेनेन्द्रियं भावयेत् । तस्यविनियोगमित्याकाङ्क्षायां॰ सन्निधिप्राप्तहोमस्याश्रयत्वेनान्वेति । एतस्य धेः सहकारिभूतानि॰ श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि षट्प्रमाणानि । एतत्सहकृतेनानेनविधिनाङ्गत्वंपरोद्देशसाध्यप्रवृत्तिकृतिसाध्यत्वरूपपाराथ्र्यापरपर्यायंज्ञाप्यते ॥

विनियोजितः । त्रि॰ प्रवर्त्तिते । विनियुक्ते ॥

विनिर्णीतः । त्रि॰ विचार्यस्थापिते ॥ विशेषेणनिर्णीतः ॥

विनिर्देश्यः । त्रि॰ वक्तव्ये ॥

विनिर्धूतः । त्रि॰ दूरतस्त्यक्ते । विशेषेणनितरांकम्पिते ॥ समुन्मूलिते ॥ परित्यक्ते ॥

विनिर्भयः । पुं॰ साध्यगणविशेषे । त्रि॰भयरहिते ॥

विनिर्मुक्तः । त्रि॰ वियुक्ते ॥

विनिर्मोकः । पुं॰ विनिर्मुक्तौ ॥

विनिवृत्तः । त्रि॰ निष्पन्ने । समाप्ते ।

विनिवृत्त । निवृत्तविशिष्टे । निरस्ते । शान्ते ॥

विनिवृत्तकाम '। त्रि॰ विवेकवैराग्यद्वारात्यक्तसर्वकामेषि ॥ विशेषेणनिवृत्त ' कामोऽस्य ॥

विनिवेशित :। त्रि॰ प्रतिष्ठापिते । स्थापिते ॥

विनिश्चित । त्रि॰ प्रमाणतोनिर्णीते ॥

विनिष्कल :। त्रि॰ निरवयवे ॥ विशेषेणनिर्गता कला यस्मात् ॥

विनिहत :। त्रि॰ विनष्टे ॥

विनीत '। पु॰ सुवहाश्वे । साधुवाहिनि ॥ वणिजि ॥ दमनकवृक्षे शिक्षितवृषभादौ ॥ त्रि॰ जितेन्द्रिये । अपनीते । हृते । निभृते ॥ विनयान्विते । अनुवृते । नम्रे ॥ शिक्षिते ॥ क्षिप्ते ॥ कृतदण्डे ॥ व्यनायि॰ विनीयतेस्मवा । णीञ् प्रापणे । क्त ' ॥

विनीतक । पुं॰ दमनकवृक्षे ॥ पुं॰ न॰ वैनीतके । परम पराबाहने ॥

विनीय :। पु॰ पिष्टओषधिअंश । कल्के ॥ कपट । 'वनीयतेसिद्धिं प्राप्यत ॥ णीञ्॰ । विपूर्वाद्विनीयेतिक्यप् ॥ पापे ॥

विनीयमान :। त्रि॰ शिक्ष्यमाणे ॥

विनेता । पुं॰ देशके । नियामके ॥ राजनि ॥ श॰ मे॰ ॥ विशिष्टोनेता ॥ देशिके ॥ श॰ हे॰ चन्द्र. ॥

विनेय :। त्रि॰ नेतव्ये ॥ विनेतुंयोग्य ' । णीञ्॰ । अचोयत् ॥ दण्डेर ॥

विनेयक :। पु॰ आदेशके ॥ राज्ञि ॥

विनोक्ति '। स्त्री॰ अलङ्कारविशेषे ॥ यथा । विनोक्तिश्चेद्विनाकिञ्चित्प्रस्तुतहीनमुच्यते । विद्याहृद्यापिसावद्याविनाविनयसम्पदम् ॥ किञ्चित्॰विनाप्रस्तुतवर्ण्यंहीनदुष्टमुच्यतेचेत्तदाविनोक्तिर्नामालङ्कार इत्यर्थ . ॥ प्रकारान्तरमपि । तच्चत्किञ्चिद्विनारम्यविनोक्ति सापि कथ्यते । विनाखलैर्विभात्येषाराजेन्द्रभवत :सभा ॥ तत्प्रस्तुतंकिञ्चिद्विनारम्यञ्चेत्सापिविनोक्तिर्नामालङ्कार . कथ्यते ॥

विनोद । पुं॰ क्रीडायाम् ॥ यथा । विनोदायचैतन्यमेकविभज्यद्विधादेधि॰जीवस्वरूपेतिनाम्ना । शिवस्याजीवत्वमापादयन्तीपुनर्जीवमेनशिववाकरोषीति ॥ कुतूहले ॥ चमत्कारविशेषे ॥ अपनोदे ॥ राजगृहविशेषे ॥ आलिङ्गनविशेषे ॥ तल्लक्षणयथा । नायकोनायिकायादक्षिणपादंवामपादंवास्वमध्यदेशे॰स्वदक्षिणपादंवामपादंवा॰नायिकामध्यदेशेनिधाय॰वक्षसिवक्ष . ॰ओष्ठेष्ठ दत्त्वायदाश्लिष्यतितदितिकामशास्त्रम् ॥

विनोदित :। त्रि॰ अपनीते ॥ सन्ना

त्रविभेदे ॥ तारकादित्वादितच् ॥

बिन्द । पुं॰ विजयाख्यमुहूर्त्ते ॥ बिन्दति । विद्लृ लाभे । अनुपसर्गात् लिम्पविन्दधारीत्यादिनाश । श्रेमुचाद्यौनामिति नुम् ॥

बिन्दु । पुं॰ जलकणायाम । विप्रुषि पृषते ॥ दन्तक्षतान्तरे ॥ भ्रुवोर्मध्ये ॥ रूपकार्थप्रकृतौ ॥ लवे ॥ अनुस्वारे ॥ नादोद्भवे ॥ त्रि॰ वेदितरि । ज्ञातरि । विज्ञानशीले ॥ बिन्दति॰ विदिष्ववयवे । बाहुलकाद् उः । पवर्गीयादिः ॥ यद्वा । वेत्तिातच्छील । बिन्दुरिच्छुरितिसाधुः ॥ दातरि ॥ वेदितरि ॥

बिन्दुचित्रकः । पुं॰ मृगविशेषे ॥ बिन्दुभिश्चित्र॰सप्तकः ॥

बिन्दुजालम् । न॰ बिन्दुजालके ॥

बिन्दुजालकम् । न॰ तारुण्याज्जायमानेगजमुखादिस्थबिन्दुसमूहे । पद्मके ॥ बिन्दूनांजालकमिव ॥

बिन्दुतन्त्रः । पुं॰ शारिफलके ॥ तुरङ्गे ॥

बिन्दुपत्रः । पुं॰ भूर्जवृक्षे ॥

बिन्दुरेखकः । पुं॰ पक्षिविशेषे ॥

बिन्दुसरः । न॰ हैमवते॰सरोविशेषे ॥ यथा । अभ्युत्तरेणकैलासशिवसर्वौषधि गिरिम् । गौरन्तुपर्वतश्रेष्ठं हरितालमयप्रति ॥ हिरण्यशृङ्गः सुमहान्दिव्यौषधमयोगिरिः । तस्यपादेमहद्दिव्यं सरः काञ्चनसन्निभम् ॥ रम्यबिन्दुसरोनामयत्रराजाभगीरथः । गङ्गार्थंसतुराजर्षिरुवासबहुलाः समाः ॥ दिवयास्यामिमेपूर्वंगङ्गात्रीयपरिप्लुता । तत्रत्रिपथगादेवीप्रथमन्तुप्रतिष्ठिता ॥ सोमपादात्प्रसूतासासप्तधाप्रतिभ्यते । यूपामणिमयास्तत्रचितयश्चहिरण्मयाः ॥ तत्रेष्ट्वाक्रतुभिः सिद्धः शक्रः सुरगणैः सह । दिव्यच्छायापथस्तत्रनक्षत्राणान्तुमण्डलम् ॥ दृश्यतेभास्वरारात्रौदेवीत्रिपथगातुसा । अन्तरीक्षंदिवञ्चैवभावयित्वाभुवंगता । भवस्याङ्के पतितासरुद्धायोगमायया । तस्यायेबिन्दवः केचित्क्रुद्धायाः पतिताभुवि ॥ कृतस्तुतैर्बिन्दुसरस्ततोबिन्दुसरः स्मृतम् ॥ इतिमात्स्ये १०१ अध्याय ॥

विन्ध्य । पुं॰ जलवालके । विन्ध्याचले ॥ व्याधे ॥ विरुद्ध ध्यायति । ध्यै चिन्तायाम् । आतश्चोपसर्गे इति कः पृषोदरादिः ॥ यद्वा । विन्ध्यते । भिद्यतेदीप्तोयस्मात् । अन्तर्भावितण्यर्थः । शकन्ध्वादिः । अद्ध्यादिवौ ॥ नर्मदासुरसाद्याश्चनद्योविन्ध्यविनिर्गताः ॥

विन्ध्यकूटः । पुं॰ अगस्त्यमुनौ ॥ विन्ध्याद्रिशृङ्गे ॥

विन्ध्यवासिदेश : । पुं॰ विन्ध्यस्थदेशे षु ॥ यथा । मालवाश्चकरूषाश्च मेकलाश्चोत्कलैः सह । उत्तमार्णा दशार्णाश्च भोजाः किष्किन्धकैः सह ॥ तोषला कोशलाश्चैव त्रैपुरा वैदिकास्तथा । तुमुरास्तुम्बुराश्चैव षट् सार्द्धं निषधैः सह ॥ अनूपास्तुण्डिकेराश्च वीतिहोत्रा अवन्तय । एते जनपदाः ख्याता विन्ध्यपृष्ठनिवासिन ॥ इति मत्स्यपुराणम् ॥

विन्ध्यवासी पुं॰ व्याडिमुनौ ॥

विन्ध्यवासिनी । स्त्री॰ विन्ध्याचलनिवासिन्यां दुर्गायाम् ॥ विन्ध्ये वतीर्य्य देवार्थं हतौ घोरौ महाभट । यथा पितृवसा वासात्तेनसा विन्ध्यवासिनी ॥ इति देवीपुराणम् ॥

विन्ध्यस्थ : । पुं॰ व्याडिमुनौ ॥ त्रि॰ विन्ध्याचलस्थिते ॥ विन्ध्ये तिष्ठति ष्ठा॰ । क : ॥

विन्ध्या । स्त्री॰ लवलीवृक्षे ॥ त्रुटौ । सूक्ष्मैलायां ॥

विन्ध्याचलनिवासिनी । स्त्री॰ विन्ध्यवासिन्याम् ॥ नन्दगोपगृहे जाता यशोदागर्भसम्भवा । ततस्तौ नाशयिष्यामि विन्ध्याचलनिवासिनी ॥ विन्ध्याचलेतथापि गङ्गातीरेनिवासिनीतिबोध्यम् । अयमवतारो भगवत्याजातएवेतिपुराणे प्रसिद्धम् ॥

विन्ध्यावली । स्त्री॰ बलिपत्न्याम् । बाणराजमातरि ॥

विन्ध्यावलीपुत्र । पुं॰ बाणासुरे ॥

विन्ध्यावलीसुत । पुं॰ बाणराजे ॥

विन्न : । त्रि॰ विचारिते । लब्धे ॥ स्थिते ॥ जाते । विद्यतेस्म । विद विचारणे । क्त. । नुदविदेतिवा नत्वम ॥

विन्यस्त । त्रि॰ क्रमेणस्थापिते । रचिते ॥ कृतविन्यासे ॥ विशेषेणन्यस्ते ॥ विन्यस्यतेस्म । असु॰ । क्त : ॥

विन्याक । पुं॰ छवाक्षे ॥

विन्यास । पुं॰ विभज्यस्थापने ॥ यथा । गुणेन मणिविन्यासो विधेयो नमदण्डवत् । विशुद्धगौरवन्यासो विधेय सद्मोपरि ॥ विनस्ततिविनष्टक्लिष्टशिष्टानिमन्त्रीभुजा मिति युक्तमष्टपदक : ॥ विन्यसनम् । असुक्षेपणे । विनिपूर्व॰ । ततो घञ् ॥ सन्निवेशे ॥ विशिष्टोन्यास ॥ रचने ॥

विपक्ष : । पुं॰ रिपौ । द्विषि । प्रति । शत्रौ ॥ स्वाभाववति । निश्चितसाध्याभाववति ॥ यथा॰ धूमवत् हेतौहृद ॥ विरुद्ध: पक्षोस्य । विविध . पक्षोऽस्यवा ॥

विपञ्चिका । स्त्री॰ विपञ्च्याम् ॥

विपञ्ची । स्त्री वीणायाम् । वल्लक्या

म् ॥ विपञ्चीषु सप्तस्वरान् वा दयन्त्यस्तवद्वारिगायन्तिगन्धर्वक-न्या ' । त्वय सावधानेनचित्तेनमा स समाकर्णं शल्वं मयाप्रार्थितासि विप चपतिविस्तारयतिशब्द ' पचि विस्तारे । अन्तादच् । गौरादि . ॥ केली । लीलायाम् ॥

विपण : । पुं० विक्रये । विक्रयक्रिया याम् ॥ विपणनम् । पणव्यवहा रे । घञ् । स ख्यापूर्वकत्वाज्जवि: ॥ खनोघचेतिचोबा ॥

विपणि : । पुं० स्त्री० विक्रयार्थप्रसा रितनानाद्रव्यायांवणिग्वीथ्याम् । पण्यवीथिकायाम् । वणिज् व्यवहा र० बजार० वाणिज्यावीथी० इतिच भाषाप्रसिद्धायाम् । पण्यवीथ्याम् । वणिजांविक्रयस्थाने ॥ विपण्यते० अस्यांवा । पण० । सर्वधातुभ्यइन् ॥ विपणन्तेऽत्रवा । इकृष्यादिभ्य. ॥

विपणी । पुं० वणिजि ॥ विपणोव्यव हार . सोऽस्यास्ति । इनि : ॥ बुध भेदे ॥

विपणी । स्त्री० पण्यवीथ्याम् ॥ कृदि कारादितिङीष् ॥

विपण्यु : । त्रि० विगतव्यवहारे ॥

विपति : । पुं० खगेश्वरे । गरुडे ॥

विपत्ति : । स्त्री० यातनायाम् ॥ आ पदि । विपदि ॥ मरणे । विनाशे ॥ यथा । यस्मिन्राशिगतेभानौविप त्तिं यान्तिमानवा ' । तेषातचैवक र्त्तव्यापिण्डदानोदकक्रिया ॥ विपद नमनयावा ॥ पदगतौ । स्त्रियांक्तिन् ॥ पु० विशिष्टपदातौ ॥

विपथ : । पुं० निन्दितपथे । व्यध्वे । दुरध्वे । कदध्वनि । कापथे ॥ वि रुद्ध : पन्था : । प्रादयोगताद्यर्थेप्र तिसमास . । ऋक्पूरित्य : ॥

विपत्० द् । स्त्री० विपत्तौ ॥ विपदनम नयावा । सम्पदादित्वात्क्विप् ॥ तृतीयताराायाम् ॥

विपदम् । न० नभसि ॥ वीनांवयसां पदविहारस्थानम् ॥ त्रि० विगतप्र तिष्ठे ॥

विपदा । स्त्री० विपदि ॥

विपन्न : । पुं० भुजङ्गमे ॥ त्रि० विपदा क्रान्ते ॥ नष्टे ॥ विपद्यतेस्म । प द० । क्त : । नत्वम् ॥

विपरिणाम : । पुं० विशिष्ट : परि-णामे ॥

विपरिश्रम : । पुं० आयासेसत्यपिश्र मरहिते ॥

विपरीत : । त्रि० तम : प्रकाशावि वान्योन्यव्यावृत्तरूपे । प्रतिकूले । उलटा० इ० भा० ॥ यथा० धर्मविप रीतोऽधर्म : ॥ पुं० रतिबन्धविशेषे ॥ यथा । पादमेकमुरौकृत्वाद्वितीयकटिसंस्थितम् । नारीपुरमतेकामीविपरीतस्तुबन्धक : ॥ अपिच

। पादमेकमुरौकृत्वा द्वितीयस्कन्धसं स्थितम । कामिन्या : कामयेत्का मौबन्ध · स्याद्विपरीतक ॥

विपरीतभावना । स्त्री॰ अतस्मिंस्तद्बु द्धौ ॥ यद्यथावस्तुतत्त्वं हित्वा ऽन्यथात्वधी : । विपरीताभावना स्यात्पित्रादावरिधीर्यथा ॥

विपरीता । स्त्री॰ कामुक्याम् ॥

विपर्ण : । त्रि॰ पर्णरहिते ॥

विपर्णक : । पुं॰ पलाशवृक्षे ॥ त्रि॰ पत्ररहिते ॥

विपर्य्यय : । पुं॰ व्यतिक्रमे । व्यत्या से । विपर्यासे । व्यत्यये ॥ मिथ्या ज्ञाने ॥ यथाशुक्तं विन्दुरजतमिति ॥ अन्यथाभावे । देहादिष्वात्माभि मानलक्षणे । यथार्थानिश्चये । अ तत्त्वज्ञाने ॥ विपर्ययादिष्यतेबन्ध . । अविद्यास्मितारागद्वेषाभिनिवे शा : यथासङ्ख्यतमोमोहमहामो हतामिस्रान्धतामिस्रसञ्ज्ञका ' पञ्च विपर्ययभेदाभवन्ति ॥ लक्षणञ्चयथा । किञ्चित्सामान्यतोऽन्यत्रमतिरन्या विपर्ययः । किञ्चित्साधारणादन्य स्मिन्नन्याहृशोबुद्धिर्विपर्यय ' । मरु मरीचिकास्विवजलावगति ' ॥ अ पिच । विपर्ययस्तमोयोनिर्मिथ्या रूपव्यासत्र । सामान्यमात्रकाभा सात्सत्त्वात्मेतिविनिश्चितः ॥ वि पर्ययस्यमिथ्यारूपत्वात्तम प्रभ

वत्वम्॰ सचविपर्यय ' साधारण्य मात्रप्रथनात्प्रकाशरूप ' सत्त्वात्म कोपिनिश्चित : ॥ विपर्ययणम् । इ ण्गतौ । एरच ॥

विपर्य्यस्त । त्रि॰ मिथ्याज्ञानविशि ष्टे ॥ विपरीते ॥

विपर्य्याय । पुं॰ विपरीतमयने । अन्यस्यान्यरूपग्रहणे ॥

विपर्य्यास . । पुं॰ विपर्यये । व्यत्य ये । व्यतिक्रमे । अतस्मिंस्तद्बुद्धौ । अविवेके ॥ विपर्य्यसनम् । अ सु॰ । घञ् ॥

विपव्य : । त्रि॰ शोधनीये ॥

विपश्चित् । त्रि॰ विदुषि । दोषज्ञे । पण्डिते । अत्यन्तविवेकिनि । मे धाविनि ॥ सर्वज्ञे॰ निरस्तभेदे॰ अ विपरिलुप्तचैतन्यस्वभावे ॥ परमात्म नि ॥ विप्रकृष्ट निश्चिनोति॰ चेतति॰ चिन्तयतिवा । पृषोदरादि : ॥

विपाक : । पुं॰ पचने ॥ स्वादे ॥ कर्मणोविसदृशफले ॥ कर्मण : परिणामे । दुर्गतौ ॥ जात्यायु र्भोगात्मकेकर्मफले ॥ पचनं पा क : विशिष्टपाक : विरुद्ध : पो कोऽस्यवा ॥ विपच्यतेवा । घ ञ ॥ विपाककटुयत्कर्मं तत्त्वज्ञं सन्निपण्डिता : ॥ जाठरेणा ग्निनायोगात्यदुदेतिरसान्तरम् । रसानांपरिणामान्तेसविपाकइति

स्य, तद्वतिसुश्रुत ' ॥ अपिच । मि
ष्ट ' कटुस्समधुरमम्लोऽम्लं पच्य
ते रस ' । कटु, तिक्तकषायाणांवा
क स्यात्प्रायश . कटु ' ॥ तथा
चवागभट : । त्रिधारसानांपाक
स्यात्स्वाद्वम्लकटु,कात्मक ' । प्रा
य . पदेन० व्रीहि : स्वादुरम्लविपा
क ' शिवाकषायामधु,पाका । शु
एठीकटु,कमधु,रपाकीत्यादि ' ॥
विपाकानांगुणायथा । स्निग्धम्लम
धु,र ' पाकौवातपित्तहरौमत . ।
अम्लस्तुकुरुतेपित्तं वातस्नं श्लगदा-
पह : ॥ कटु, : करोतिपवनंकफं
पित्तस्यनाशयेत् । विशेषएवरसतो
विपाकानांनिदर्शित : ॥

विपाचनम् । न० नरके ॥

विपाट : । पु० वाणे अस्त्रकण्टके
। शरे ॥ विपाटयति । पचाद्यच् ॥

विपाण्डु : । पु० शुभ्रे ॥ अति
शुभ्रे ॥ त्रि० तद्वति ॥

विपादिका । स्त्री० । पादस्फोटे । वि
वाइ० इ० भा० ॥ प्रहेलिकायाम् ॥
वैपादिकपाणिपादेस्फुटनंतीव्रवेद
नम् । कण्डुमद्भि . सरागैश्च ग
एडैरलसकं चितम् ॥ विपादिका
वातस्रेष्मोद्भवेतिमाधव : । अयंकु
ष्ठरोग : ॥

विपाट् । स्त्री० विपाशायाम् ॥ पा
श विमोचयति । सत्त्वायपाशेस्था
दिना० पाशान्मोचनद्गुतिणिच् ।
क्विप्चेतिक्विप् ॥

विपाश ' । त्रि० पाशरहिते ॥

विपाशा । स्त्री० नदीविशेषे । विपा
शि ॥ पाशं विमोचयति । सत्त्वा
पपाशेत्यादिना० पाशान्मोचनद्गुति
णिच् । तत : पचाद्यच् । पुत्र
शोकाद्वसिष्ठेपाशबद्धाप्रविष्ट वशिष्ठ
पाशच्छेदात्विपाशितवतीविमुक्त
पाशं कृतवतीतिविपाशा । अस्या
जलस्यगुणायथा । शतद्रौविपा
शायुज ' सिन्धुनद्या ' सुशीत ल
घुस्वादुसर्वामयघ्नम । जल निर्मलं
दीपन पाचनञ्चप्रदत्ते बल बुद्धिमेधा
युषश्चे तिराजनिर्वण्ट : ॥

विपिनम् । न० अरण्ये । गहने ।
वने ॥ वेपन्तेऽत्र । टुवेपृकम्पने ।
वेपितुह्योर्ह्रस्वश्चेतीनन् ॥ विशेषे
णपियन्त्यत्रवा । पिगतौ । बाहुल
काद्नक् ॥

विपिनतिलकम् । न० अतिशक्करी
छन्द ' प्रभेदे ॥ तल्लक्षणंयथा ।
विपिनतिलक नसनरेफयुग्मैर्भवे
त् । यथा । विपिनतिलक विकासि
तं सिन्तागमेमधु,व्रतमदैर्मधु,करै '
क्वणद्भिवृतम् । मलयमरुतारञ्जित
लास्यमालोकयन्व्रजयुवतिभिर्विह
रतिस्मसुधोहरि : ॥

विपीड : । त्रि० निर्बाधे ॥

विपुल । पु० मेरुपश्चिमभूधरे । मेरोः स्थैर्याय वेधसा सृष्टेषु चतुर्षु विष्कम्भशैलेषु० प्रतीच्यां विपुलो नाम विष्कम्भशैलो नीलवर्णः पश्चाश्वत्सहस्रयोजनोच्छ्रायोऽस्ति० यच्चयोजनसहस्रोन्नतिमानश्वत्थपादपोऽस्ति ॥ सुमेरौ ॥ हिमाचले ॥ त्रि० पृथुले । विशाले ॥ अगाधे । दक्षिणपश्चिमोत्तरद्वारगृहे ॥ विपोलति । पुलमहत्त्वे । इगुपधेति कः ॥ विशिष्टपुलके ॥

विपुलपुलिना । स्त्री० नद्याम् ॥

विपुलरसः । पुं० इक्षौ ॥

विपुला । स्त्री० वेश्याम् । क्षितौ ॥ आर्याप्रभेदे ॥ यथा । पथ्या विपुला चपला मुखचपला जघनचपला च । गीत्युपगीत्युद्गीतय आर्यागीतिश्च नवधार्या ॥ संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः । यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥ पुंसां कलिकालव्यालक्षतानां नास्त्यपरतिरत्यापि । वीर्यं विपुलामुखे चेत्स्याद् गोविन्दाख्यमस्त्रोऽस्ति ॥

विपुलांस । त्रि० मांसलोन्नतभुजशिरस्के ॥

विपुलाश्रवा । स्त्री० गृहकुमार्याम् ॥

विपूय । पुं० रज्ज्वादिकरणाय शोधयितव्ये० मुञ्जे ॥ विपूयते । पूञ् पवने । विपूयविनीयेति क्यप् । मुञ्जे ॥ यथा । वसाना वल्कलेश्चुद्र्धेविपूयैः कृतमेखलाम् । चामामञ्जनपिण्डाभाद् गिण्डनीमजिनान्तरामितिभट्टिः ॥

विपोथित । त्रि० आघातेनाधःपातिते ॥ आमर्हिते ॥

विप्र । पुं० ब्राह्मणे ॥ तल्लक्षणं यथा । जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते । विद्यया याति विप्रत्वं त्रिभिः श्रोत्रियलक्षणमिति प्रायश्चित्तविवेकः ॥ विशेषेण प्राति पूरयति षट्कर्माणि । प्रा पूर्तौ । आतश्चोपसर्ग इति कः ॥ उप्यते धर्मबीजमत्र वा । डुवप् बीजसन्ताने । क्रदिन्द्रेति साधुः ॥ विपाति वा । विपति वा । विपर्चपे ॥ अश्वत्थे ॥

विप्रकर्ष । पुं० विशेषे ॥ विशिष्टः प्रकर्षः ॥

विप्रकार । पुं० अपकारे । निकारे ॥ विप्रकरणम् । कृञ्भावे घञ् ॥ तिरस्कारे ॥

विप्रकाष्ठम् । न० तूलवृक्षे ॥

विप्रकृत । त्रि० तिरस्कृते । निकृते । यस्यापकारः कृतस्तस्मिन् ॥ विप्राकारि । क्त ॥ विप्रेण कृते ॥

विप्रकृतिः । स्त्री० विप्रकारे ।

विप्रकृत्यम् । न० ब्राह्मणस्य कर्त्तव्ये ॥

यथा । अध्यापनमध्यायनस्तयाजन दानप्रतिग्रहमंजनप्रतिग्रह : । क र्माणिषड्‌यजनायवजन्मेवकर्मवा मध्ययनतथेतिराट ॥ वैश्य . सदा प्रापधिकोक्षिजन्माद्विजन्मसेवारति रेतदीयम् । "कर्मस्यऽन्यव्यवहार जानिकर्माध्यमेकान्यपराध्यजाना म् ॥ वहन्कर्माणितदेनकालसंसा धितान्यं वहियस्मिसिविम् । ततस्व स्वयं व्यवहारकालनयेन्मनोर्वायुग पश्नयष्टिम् ॥ अथविप्रादीनांस्वभाव कर्मयमाह । शमोदम : सत्यमथा जंवक्षमाशौच तपोज्ञानकथामराच नम् । तीर्थं तथास्तिक्यमभिन्नसङ्ग ति . स्वभावकर्मायजनेभवत्रतम् ॥ शौर्यंबलंधैर्य धृतिर्धृतिर्मृध विद्या सुदोवं श्वरतापवज्नं नम् । क्षमा भूत ' कर्मनिसर्ग जविशेवाविज्य गोजीवनकर्षयन्त्विति ॥ द्विजाति सेवावनिदेवताश्रयाधर्मोविधि :शू द्रनिसर्गकर्मच । स्वभावकर्मप्रविहा यवोन्यथास्वयच्चरेत्सोन्त्यजकर्मनम भाक् ॥ इतिकालिदास . ॥

विप्रकृष्ट : ) वि॰ दूरे ॥ विप्रकृष्य
विप्रकृष्टक : )

तेस्म । कृषि : त्त . । स्वार्थेकनिविप्र कृष्टकोपि ॥

विप्रचित्ति : । पुं॰ दनोर्गर्भकश्यपा ज्जातोऽसुरविशेषे ॥

विप्रतिपत्ति स्त्री॰ विरुद्धकोटिद्वयोप स्थापकेशब्दे ॥ विरुद्धाप्रतिपत्ति ॥ विरोधे ॥ विकृतौ ॥

विप्रतिपन्न : । वि॰ विरुद्धतयावगते ॥

विप्रतिषिद्ध ' । वि॰ निषिद्धे ॥

विप्रतिषेध : । पुं॰ तुल्यबलविरोधे ॥ परस्परविरोधे ॥ विप्रतिपूर्वात्‌कर्म व्यतिहारेवर्त्तमानात्‌सेधतेर्घञ् ॥

विप्रतिसार : । पुं॰ पश्चात्तापे ॥ विप्र तिसरणम् । सृगतौ । घञ् । उप सर्गस्यघञीतिपाक्षिकोदीर्घाभाव: ॥

विप्रतीसार . । पुं॰ पश्चात्तापे । अ नुतापे । कौकृत्ये ॥ अनुशये ॥ क वि । रोषि ॥ विप्रतिसरणम् । सृ॰ । घञ् । उपसर्गस्यघञीतिदीर्घ ॥

विप्रदेश ' पुं॰ फलमूलादिशुष्कद्रव्ये ॥ ग्रा म्यायतने ॥ विगत : प्रदेश : विशेषेण प्रकृष्टोवादेशोस्य । विप्रस्यवादेश : ॥

विप्रप्रिय : । पुं॰ पलाशे ॥ विप्राणां प्रिय : ॥ विष्णौ । श्रीरामचन्द्रे । वि॰ ब्राह्मणवल्लभे । विप्रा : प्रियायस्य म . ॥

विप्रदास : । पुं॰ कायस्थे । मसीशे ॥

विप्रयाणम् । न॰ पलायने ॥

विप्रयुक्त : ' वि॰ विभिन्ने । विश्लिष्टे ॥

विप्रयोग : । पुं॰ विरहे ॥ ब्राह्मणे : सहसङ्गमे ॥ विप्रयोजनम् । युजिर् योगे । घञ् ॥ विरुद्ध : प्रयोगो वा ॥ विशेषेणप्रकृष्टोवायोग : ॥ विप्राणांवायोग : ॥ विप्रलम्भे ॥

विरहोविसम्वादेविेतिखामी ॥ रागिणोर्विच्छेदे ॥ इतिसुभूति: ॥

विप्रलब्ध '। त्रि॰ वञ्चिते ॥ विप्रलभ्यतेस्म । डुलभष्प्राप्तौ । क्त '॥

विप्रलब्धा । स्त्री॰ स्वीयादिनायिकाभेदे ॥ सङ्केतनिकेतनेप्रियमनवलोक्य समाकुलहृदयाविप्रलब्धेतिलक्षणम् ॥

विप्रलब्धा । त्रि॰ प्रतारके ॥

विप्रलम्भ : । पुं॰ विसंवादे । अङ्गीकृतासम्पादने ॥ वञ्चने ॥ वियोगे । विरहे । रागिणोर्वियोजने ॥ विशेषेणप्रलम्भनम् । डुलभष् प्राप्तौ । घञ् । उपसर्गादितिनुम् ॥ विप्रलब्धि '। लभेर्घञ् वा ॥

विप्रलम्भक : । पुं॰ मिथ्यावचनै : परस्यवञ्चके । ठग १ इ॰भा॰प्र॰ ॥

विप्रलाप : । पुं॰ विरोधोक्तौ । अन्योन्यविरुद्धवचने ॥ यथा॰एकोब्रूते॰ आगताकल्याणीति॰अन्योब्रूतेनेति । तथाभ्युदाहारसर्वानन्द.। एकःसमन्मथसरोजमवेतिवक्तृमन्य : सुधाकिरणविम्बमदोमृगाच्या: । यूनोर्मुहुर्विवदतोर्वदनेवभूवु : सिद्धान्तवन्मधुपराजिगतागतानीति ॥ विरुद्ध . प्रलाप '॥ अनर्थकवाक्ये । अपार्थवचने ॥

विप्रलिप्सा '। स्त्री॰ वञ्चनेच्छायाम् ॥

विप्रलिप्सु . । त्रि॰ वञ्चके ॥

विप्रलुम्पक '। त्रि॰ अन्यायेनधनग्राहिणि ॥

विप्रलोभी । पुं॰ अशोकपादपे । किङ्किराते ॥

विप्रवसित : । त्रि॰ कृतदूरदेशगमने ॥

विप्रश्निका । स्त्री॰ जनानांलक्षणादिनाशुभाशुभनिरूपिकायाम् । ईक्षणिकायाम् । दैवज्ञायाम् ॥ विविध : प्रश्नोस्त्यस्या . । ठन् ॥

विप्रसृत : । त्रि॰ विक्षिप्ते ॥ विप्रसरतिस्म । सृगतौ । गत्यर्थेति- क्त : ॥

विप्रिय : । पुं॰ अपराधे । आगसि । त्रि॰ अप्रिये ॥

विप्रियकृत् । त्रि॰ शठे ॥

विप्रुट् । स्त्री॰ विन्दौ । जलकणे ॥ प्रुषुदाहे । सम्पदादित्वात्क्विप् । विगतापुष्वाविप्रुट्दाहोऽस्मात् ॥

विप्लव '। पुं॰ डिम्बे । धाकडलुटनादौ ॥ अयस्त्वकलङ्के ॥ विप्लवनम् । प्लुङ्गतौ । ऋदोरप् ॥ परचक्रादिभये ॥ राष्ट्राद्युपद्रवे ॥ नाशे ॥ मतिसम्मोहे ॥

विप्लाव . । पुं॰ अश्वस्यप्लुतगतौ ॥

विप्लुत : । त्रि॰ व्यसनार्ते । विप्लवे ॥ खण्डिते ॥ विप्लवनम् । प्लुङ् । क्त : ॥

विप्लुताक्ष : । त्रि॰ अश्रुपूर्णनयने ॥

विभ्रुति । स्त्री० स्वभावच्युतौ ॥

विभ्रुष्ट । त्रि० निर्दग्धे ॥ विशेषि चभ्रुष्ट ॥

विफल । त्रि० निरर्थके । मोघे ॥ विगतं फलं यस्य ॥

विफला । स्त्री० वीतक्याम ॥ ऋतुहीनायाम् ॥

विवध । पु० पर्याहारे । उभयतोबद्धशिक्येस्कन्धवाह्यकाष्ठे ॥ अध्वनि ॥ भारे ॥ विगतोवधोऽस्मात् ॥

विवधिक । त्रि० वैवधिके ॥ विवधेनहरति । विभाषाविवधादितिष्ठन् । ङीषि० विवधकी ॥

विवस्व । पु० आनाहे । आध्माने । मूत्रादिरोधे ॥ यथास्वचिकित्सा । तुल्यकारणकार्यत्वादुदावर्तहरीक्रियाम । अनाहेपिचकुर्वीतविशेषश्चाभिधीयते ॥ त्रिवृत्कृष्णाहरीतक्योद्विचतुष्पञ्चभागिकाः । गुडेनतस्यावटिकाहरन्त्यानाहमुल्वणम् ॥ वर्तिस्त्रिकटुकसैन्धवसर्षपगृहधूमकुष्ठमदनफलैः । मधुनिगुडेवापक्वैर्निर्हितास्याङ्गुष्ठपरिमाणा ॥ वर्तिरियदृष्टफलाशने ' प्रणिहितागुदेघृताभ्यक्ते । आनाहोदावर्तौशमयतिजठरतथागुल्मम् ॥ त्रिकटुकाद्यावर्तिर्भावप्रकाशे ॥ विवस्वनम् । वस्ववस्वने

। घञ् ॥ करणेवाघञ् ॥

विबाधा । स्त्री० विहिठने ॥

विविध । त्रि० नानाप्रकारे ॥

विबुद्ध । त्रि० तत्त्वसाक्षात्कारवति ॥

विबुध । पु० ज्ञे । पण्डिते ॥ सुरे । देवे ॥ चन्द्रे ॥ विशिष्टोबोधोयस्य । विशेषणबुध्यतेनखपितीतिवा । बुधअवगमने । इगुपधेतिक ॥

विबुधान । पु० आचार्य ॥ पण्डिते ॥ देवे ॥

विबुधानुग । पु० किन्नरादिषु ॥

विबुभूषु । त्रि० विविधभवितुमिच्छौ ॥

विबोध । पु० प्रबोधे ॥

विबोधनम् । न० प्रबोधने । जागरणा० इ० भा० ॥

विभक्त । त्रि० विभज्यस्थापिते । कृतविभागे ॥ विभिन्ने । परस्परव्यावृत्ते ॥ प्राप्तविभागे ॥ विभज्यतेस्म । भज० । कर्मणिक्त ॥ विभक्ताभ्रातरपुत्र्यचतु० विभक्तमेषामस्तीतिमत्वर्थीयोऽर्शआद्यजित्यच् । नतुकर्तरिक्त । सकर्मकेभ्यस्तस्यविधानाभावात् ॥ अथवोत्तरपदलोपोद्रष्टव्यः । विभक्तधनाविभक्ताः । गम्यार्थस्याप्रयोगएवलोपेभिमतः । तेनविभक्ताभ्रा

तदद्रव्यवधनस्ययदिभक्तास्वंतत् । भ्रातृभ्यारोप्यते ॥ विभक्तोपिधने यस्तुस्त्रीयासप्रतिपादयेत् । पुनर्विभज्यतद्द्रव्यमप्रागंशायदापयेत् ॥

विभक्तज. । पुं॰ विभागानन्तरजाता पत्ये ॥ पुत्रे : सहविभक्तानपि चायतत्स्वयमर्जितम् । विभक्तजस्यतत् सर्वमनीशा. पूर्वजा. स्मृता. ॥

विभक्ति: । स्त्री॰ विभागे ॥ सुप्तिङो ॥ यथा । सङ्ख्यात्वव्याप्यसामान्ये शक्तिमान्प्रत्ययस्तुय. । साविभक्तिर्द्विधाप्रोक्ता सुप्तिङ्चेति प्रभेदत: ॥ सङ्ख्यात्वावान्तरजात्यवच्छिन्नशक्तिमान्य प्रत्यय. साविभक्ति । सुप्तिङिति भेदात्साद्विधेतिशब्दशक्तिप्रकाशिका ॥ कारकगतौ ॥ विभज्यतेप्रातिपदिकार्थोऽनया । स्त्रियांक्तिन् ॥

विभजनीय । त्रि॰ विभाज्ये । विभागयोग्ये ॥ भजनार्हे ॥

विभज्य: । त्रि॰ विभक्तव्ये ॥ ऋहलोर्ण्यतिप्राप्ते॰ विवजनविभज्योपपदे॰ इतिसदपवादोयन्निपात्यते । तेनविभाज्यमितिनभवति ॥

विभव: । पुं॰ राये । धने ऐश्वर्ये ॥ विभवति । भू॰ । पचाद्यच् ॥ भिक्षाप्राणरक्षणार्थंकन्या शीतनिवारणी । चपलाकौशवेभक्तिर्विभवे : किंप्रयोजनमितिसन्यासिधर्मः ॥ निर्हतौ ॥ मोक्षे ॥ विगत : भवोयस्मिन् ॥ षष्टिवत्सरान्तर्गतद्वितीयवत्सरे । यथाभविष्यभैरवउवाच । सुभिक्षं क्षेममारोग्य सर्वव्याधिविवर्जिता: । प्रशान्तामानवास्तत्रबहुशस्यावसुन्धरा । हृष्टास्तुष्टाजना: सर्वेविभवेवरानने ॥ २ ॥

विभवी । त्रि॰ ऐश्वर्यवति ॥ विभवोऽस्यास्ति ॥ इनि : ॥

विभा । स्त्री॰ शोभायाम् ॥ प्रकाशे ॥ किरणे ॥ उदीच्यासीमस्यपुर्याम ॥

विभाकर: । पुं॰ अर्के । वह्नौ ॥ सूर्ये ॥ विभांकरोति । दिवाविभानिशेतिटः ॥ अर्कवृक्षे । चित्रकवृक्षे ॥

विभाग: । पुं॰ अंशे । भागे ॥ विवेके ॥ विविच्यप्रयोगे ॥ सयोगनाशकेनवद्रव्यवृत्तिनिगुणे ॥ स्वत्वनिर्णयानुकूलव्यापारे ॥ विभज्यते॰ विभजनंवा । भज॰ । भावेवाघञ् ॥

विभागी । त्रि॰ अंशिनि ॥ विभागोऽस्यास्ति । अतइनिठनावितीनि: ॥

विभाजित: । त्रि॰ विभागेनस्थापिते ॥

विभाज्य । त्रि॰ विभजनीये । विभागयोग्ये ॥ विपूर्व्वाद्भजधातोर्ण्यत् ॥

विभाण्डक । पुं॰ ऋष्यशृङ्गपितरि॰ मुनिविशेषे ॥

विभाण्डी । स्त्री॰ आवर्त्तकीलतायां ॥

विभान् । त्रि॰ भासमाने ॥ शचन्त् ।

विभातम् । न॰ प्रभाते । प्रत्यूषे ॥ विभातुं प्रवृत्तम् । भा॰ । आदिकर्म्मणि क्तः ॥

विभातकम् । न॰ प्रत्यूषे ॥

विभावः । पुं॰ परिचये ॥ रसस्योद्दीपनादौ ॥ रत्यादीनां कारणेषु । ललनोद्यानादिष्वालम्बनोद्दीपनकारणेषु ॥

विभावनम् । न॰ विभावनायाम ॥

विभावना । स्त्री॰ अलङ्कारविशेषे ॥ विभावनाविनापिस्यात्कारणं कार्य्यजन्मचेत् । अप्यलाक्षारसासिक्तं रक्ततच्चरणद्वयम् ॥ अत्रलाक्षारसासेककारणाभावेपिरक्तिमाकथितः स्वाभाविकत्वेनविरोधपरिहारः ॥

विभावरी । स्त्री॰ तमस्विन्याम् । रजन्याम् । यामिन्याम् ॥ निशायाम् । हरिद्रायाम् । कुट्टन्याम् ॥ वक्रयोषिति ॥ विवादवत्स्त्रगुण्ठाम् । विभातिनक्षत्रादिभिः । क्वनिप् । वनोरचेतिङीब्रौ ॥ मौखर्य्यनिरतस्त्रियाम् ॥ मेदाद्रव्ये ॥

विभावसुः । पुं॰ ग्रहपतौ । सूर्य्ये ॥ अर्कवृक्षे ॥ पावके ॥ हारभेदे ॥ चित्रकवृक्षे ॥ चन्द्रे ॥ विभाप्रभावसुधनयस्य । असुरविशेषे ॥ मणौ ॥

विभावित । त्रि॰ अभ्यूहिते । ज्ञाते ॥ विचिन्तिते ॥ विशेषेणोत्पादिते ॥ विशेषेणप्रापिते ॥ विमिश्रयिते ॥ विशेषेणभावित ॥

विभाविन् । त्रि॰ प्रभावसम्पन्ने ॥ विभावोस्यास्ति । इनिः ॥

विभाव्यः । त्रि॰ सलक्ष्ये ॥

विभाषा । स्त्री॰ विकल्पे ॥ विभाष्यते॰विकल्प्यते। भाषव्यक्तायांवाचि। गुरोश्चहलइत्यकारः । ततष्टाप् ॥

विभिन्नः । त्रि॰ मिश्रिते ॥ विदारिते ॥ विदीर्णे ॥ विभक्ते ॥ समालब्धे । पक्षिभिन्ने ॥ विकसिते ॥

विभीतः । त्रि॰ विभीतके ॥ विगतं भीतं रोगभयमस्मात् ॥ त्रि॰निर्भये ॥

विभीतक । त्रि॰ कर्षफले । भूतवासे । कलिद्रुमे बहेडुके । बहेडा॰ इतिख्याते ॥ बिभीतकस्वादुपाककषायकफपित्तनुत् । उष्णवीर्य्यंहिमस्पर्शंभेदनकासनाशनम ॥ रूक्षं नेत्रहितंकेश्यंकृमिवैस्वर्य्यनाशनम् । बिभीतमज्जातृट्छर्द्दिकफवातहरो॰

लघु.॥ व्ययायीमदकल्पाथधाल्म
स्त्रापितद्रुणा ॥ विगतभीतिरीगभ
यमस्मात् ॥ स्वार्थेक स्त्रियां०जा
तेरितिङीप् ॥

विभीषण । पु० रावणानुजे । नल
द्रुमे ॥ त्रि०भयानके ॥ विशेषेणभी
षयते । ञिभीभये । नन्द्यादित्वा
ल्लु' । भियोहेतुभयेषुक् ॥ निर
स्ताविर्धे ॥ विगतभीषणं भयङ्करम
स्मानयस्मात् ॥

विभीषिका । स्त्री० भयप्रदर्शने । य
था । कृत्वाशस्त्रविभीषिकांकतिप
यग्रामेषुदीना.प्रजा ०मधुन्तो
बिटजल्पितैरुपहता 'क्षोणीभुजस्ते
किल । विद्यासोपिवयपरविजगतां
सर्गस्थितिव्यापदांमौशस्तत्परिचर्य
याभगणितोयैरेषनारायण ॥इति
शिल्हणमिश्र.॥

विभु: । पुं० शङ्करे । सदाशिवे ॥ प
रमेश्वरे ॥ सर्वमूर्त्तसंयोगिनि । प
रममहत्त्ववति ॥ सतु०आत्मादिर्ये
था । आत्मेन्द्रियाद्यधिष्ठाताकरणं
हिसकर्तृकम् । विभुर्बुद्ध्यादिगुणवा
नबुद्धिस्तुविविधामतेतिभाषापरिच्छे
द । विभुरिति०विभुत्त्वपरममह
त्त्वमितिसिद्धान्तमुक्तावली ॥ काल
खात्मदिशांसर्वगतत्त्वंपरमंमहदिति
भाषापरिच्छेद: ॥ अर्हति॥ नित्ये
॥ भृत्ये ॥ विष्णौ ॥ त्रि०व्यापके ॥
प्रभौ ॥ सर्वगते । दृढे ब्रह्मणि ॥ य
था । नित्यं.सर्वगतं'ख्वानामीशा
न प्रभुरव्यय । अद्वैत सर्वभा
वानादेवस्तुयोविभु स्मृतइत्यागभ
॥ विविधभवतिप्रभुत्वात् । भू० । वि
प्रसम्भाड्डुतिडु' ॥

विभुता । स्त्री० सामर्थ्ये ॥ भावेतल् ॥

विभूति: । स्त्री० भूतौ । ऐश्वर्ये । अ
णिमादिषु ॥ यथा । अणिमालघि
माप्राप्ति' प्राकाम्यंमहिमातथा । ई
शितावशिताचैवतथाकामावशायि
तेति ॥ भस्मनि ॥ शिवधृतभस्मनि
॥ अग्नौ ॥ विविधभवे । विशेषेणभ
वनम् । स्त्रियांक्तिन् ॥विभूतिरिति
कथनमन्यप्रादिनिवृत्त्यर्थम् ॥

विभूतिद्वादशी । स्त्री० विष्णोर्व्रतविशे
षे ॥

विभूतिमत् । त्रि० ऐश्वर्ययुक्ते ॥ विभू
तिर्विद्यतेऽस्य । मतुप् ॥

विभूमा । त्रि० परिपूर्णे ॥ विगतोभू
मायस्मात् । यमपेक्ष्यान्यत्रमहत्त्व
नास्तीति ॥'

विभूषणम् । न० अलङ्कारे । आभर
णे ॥ विशिष्टं भूषणम् । विभूष्यते
ऽनेनवा । भूषअलङ्कारे । ल्युट् ॥
पुं०मञ्जुघोषे ॥

विभूषा । स्त्री० शोभायाम् ॥ आभर
णे ॥

विभूषित: । त्रि० अलङ्कृते ॥

विभृत । त्रि० धृते ॥ पुष्टे ॥

विभ्यत् । त्रि० भयकुर्वति ॥

विभेद । पुं० विशेषे ॥

विभ्रंस: । पुं० नाशे ॥

विभ्रत् । त्रि० धारणकर्त्तरि ॥ पोषणकर्त्तरि ॥

विभ्रम । पुं० भ्रान्तौ ॥ संशये ॥ शोभायाम् ॥ भ्रमणे ॥ हावप्रभेदे । स्त्रीणांशृङ्गारभावजातक्रियाविशेषे ॥ तथाहि । मदरागहर्षजनितविपर्यासोविभ्रमः । यथा । अन्यनिमित्तमानसादुत्थायान्यवसन॰प्रियारब्धकथामाक्षिप्यसख्यासहालपन॰सुहर्षितक्रोधौ॰पुष्प॰दीनाद्या॰सहसैवतत्परित्यागः । वस्त्राभरणमाल्यानामकारणात खण्डनमाननस्य । यदुक्तम् । क्रोध स्मितकुसुमाभरणादियोज्ञातहर्षोनसहसैवविमण्डनस्य । आक्षिप्यकान्तवचनलपनसखीभिर्निष्कारणोत्थितगतश्चविभ्रमतत् ॥ इति ॥ चित्तवृत्त्यनवस्थानंशृङ्गाराद्विभ्रमोमत । इत्यन्यत्र ॥ अपिच । विभ्रमस्त्वरयाकालेभूषास्थानविपर्यय । यथा । श्रुत्वायान्तंबहि कान्तमसमापितभूषया । भालेञ्जनंदृशोर्लाक्षाकपोलेतिलक कृत । इति ॥ योषितायौवनजोविकारोविभ्रमइत्यके ॥ अपिच । वल्लभप्राप्तिवेलायांमदनावेशसम्भ्रमात् । विभ्रमोहारमाल्यादिभूषास्थानविपर्यय ॥ विविधभ्रमणम् । भ्रमणमवस्थाने । घञ् । नोदात्तोपदेशेतिनवृद्धि. ॥

विभ्रमा । स्त्री० विस्रसायाम् । जरायाम् । वार्द्धक्ये ॥

विभ्राट्॰ड । त्रि० भ्राजिष्णौ । रोचिष्णौ । अलङ्कारादिनाशोभमाने ॥ विशेषेणभ्राजते । भ्राजृदीप्तौ भ्राजभासेतिक्विप् ॥

विभ्रान्त । त्रि० विभ्रमयुक्ते । यथा । विभ्रान्तबुद्धेर्मनुजात्कार्याकार्यमजानत । स्वानिष्टस्यपरानिष्टजायतेस्मात्पदेपदे ॥ इतिमहानिर्वाणतन्त्रम् ॥

विभ्रान्ति । स्त्री० विभ्रमे ॥

विमत. । त्रि० विरुद्धमतिविशिष्टे ॥

विमति. । स्त्री० नानामतौ ॥ विरुद्धमतौ ॥

विमत्सर । त्रि० मात्सर्यरहिते ॥ अद्वितीयात्मदर्शनेननिर्वैरबुद्धौ । विगतोमत्सरोयस्मात् ॥

विमना. । त्रि० दुर्मनसि । अन्तर्मनसि । चिन्तादिनाव्याकुलचित्ते ॥

विमनस्क । त्रि० विमनसि ॥

विमनीकृत । त्रि० वैमनस्यप्रापिते ॥ अविमना, विमना सम्पद्यमान कृत, अभूततद्भावेइति च्विप्रत्ययसलोपौ ।

अस्यचत्वारितोकार . ॥

विमय । पु॰ परिवर्त्तने । विनिमये ॥ विमीयते । मीञ् । एरच् ॥

विमर्द्द . । पुं॰ कालङ्कतस्वर्द्धे । चक्रमर्द्दे ॥ युद्धे ॥ व्यालोडने ॥ सङ्घर्षे ॥

विमर्द्दक '। पुं॰ चक्रमर्द्दे । कासों॰दीतिप्रसिद्धभ्रुपटे ॥

विमर्द्दनम् । न॰ कुङ्कुमादिनामर्द्दने । परिमले । स्टद्धोदे । ल्युट् ॥

विमर्द्दना । स्त्री॰ कुङ्कुमादिमर्द्दे ॥

विमर्द्दोत्थ . । पुं॰ परिमले । मर्द्दनाज्जातेसुगन्धादौ ॥ यथा । अथगन्धेपरिमलोविमर्द्दोत्थेमनोहरे ।दूरगामीमनोहारीगन्धआमोदईरितइति शब्दरत्नावली ॥

विमर्श : । पुं॰ विचारे ॥ न्यायमार्गेणविचारे॥ संशयात्मिकायांवृत्तौ ॥

विमर्शनम् । न॰ परामर्शे । वितर्के ॥

विमर्शित : । त्रि॰ विचारिते ॥ विमर्श . सञ्जातोऽस्य ।तारकादित्वादितच् ॥

विमर्ष . । पुं॰ विचारणायाम् ॥ इति जटाधर ' ॥ विशिष्टार्थाक्षमायाम् ॥

विमर्षणम् । न॰ ज्ञाने ॥ कर्मणाकर्मनिर्हारोनह्यात्यन्तिकइष्यते । अविद्वदधिकारित्वात्प्रायश्चित्तंविमर्षणम् ॥ इतिभागवतेषष्ठस्कन्ध : ॥

विमल : । पुं॰ सूर्यपरिवारे ॥ अर्हति । जिने ॥ न॰तारद्दैमविधाकृते॰उपरसविशेषे । निर्मले । स्वच्छधातुके ॥ त्रि॰निर्मले । वीध्रे ॥ विगतमलंयस्मात् ॥ चारौ ॥ रागादिशून्ये ॥

विमलतीर्थम । न॰ तीर्थविशेषे ॥ यथा व्यापिमीवर्णराजतमव्याहृश्यन्ते ॥

विमलदानम् । न॰ नित्यनैमित्तिककाम्यदाने ॥ यथोक्तं गरुडपुराणे । नित्य नैमित्तिकंकाम्यविमलदानमीरितम् । चेतनासत्त्वयुक्तेनदानंतद्विमलस्मृतमितिग॰पु॰ ॥ ईश्वरप्रीणनार्थदाने ॥

विमलमणि . । पुं॰ स्फटिके ॥

विमला । स्त्री॰ शीतलायाम् । सप्तलायाम् । सौहृखण्डप्रभेदे ॥ भुवप्रभेदे ॥ देवीप्रभेदे ॥ यथा । उत्कलेनाभिदेशस्तुविरजाक्षेत्रमुच्यते । विमलाचमहादेवीजगन्नाथस्तुभैरव ' ॥

विमलात्मक ' । त्रि॰ वीध्रे । निर्मले । स्वभावनिर्मले ॥ विमलआत्मास्वभावोऽस्य ॥

विमलाद्रि ' । पुं॰ शत्रुञ्जयपर्वते ॥

विमलेश्वर । पुं॰ शिवे ॥ विमलेशादेव्यधिष्ठितेपुण्यस्थाने ॥

विमाता । त्रि॰ गणयितरि ॥

विमाता । स्त्री॰ मातु : सपत्न्याम् ॥ विरुद्धामाता । प्रादयोगतेतिसमास : ॥

विमातृज ' । पुं॰ सापत्न्यभ्रातरि ।

वैमात्रेये ॥ विमातुर्जात । पक्ष
स्यामजातादित्तिड : ॥

विमान । पु॰ न॰ देवतायाने । व्योम
याने ॥ सार्वभौमगृहे ॥ घोटके ॥ या
नपात्रे ॥ विशिष्टं मानयन्त्यनेन । पु
सिसञ्ज्ञायामितिकरणे घ. ॥ विशे
षेण मान्त्यस्मिन्निति वा । अधिकरणे
ल्युट् ॥ विगतमानमुपमाऽस्येति
वा ॥ त्रि॰ मानहीने ॥

विमानक । पु॰ विमाने ॥

विमानता । स्त्री॰ तिरस्कारे ॥

विमानित : । त्रि॰ अनादृते ॥

विमार्ग । पुं॰ कुपथे ॥

विमिश्र : । त्रि॰ विभिन्ने ॥

विमुक्त । त्रि॰ विरहिते ॥ पृथग्भू
ते ॥ सर्वैषणाविनिर्मुक्ते ॥ नित्य
मुक्ते चिदानन्दरसआत्मनि ॥ विशे
षेण ॰ अविद्याकामक्रोधादिभिर्मुक्त.
परित्यक्त . ॥ त्रिषे ॥ जीवन्मु
क्ते ॥ जीवन्नेव दृष्टबन्धात्कामादे
र्विशेषेणमुक्त : सन् देहपातेभावि
बन्धाद्विशेषेणमुच्यते । विमुक्तश्चवि
मुच्यतइतिश्रुते . ॥

विमुक्ति : । स्त्री॰ मोक्षे ॥ विमोच
ने । अनुध्यानरूपेऽनुग्रहे ॥

विमुख । त्रि॰ पराङ्मुखे ॥ विग
त मुख यस्य ॥

विमुद्र । त्रि॰ प्रस्फुटे । प्रफुल्ले ॥ मु
द्रारहिते ॥

विमूढ । त्रि॰ विचित्ते ॥ अनुत्पन्न
ब्रह्मात्मैक्यसाक्षात्कारे । दृष्टादृष्ट
विषयभोगवासनाकृष्टचेतस्तयाआ-
त्मानात्मविवेकायोग्ये । अदूर
दर्शिनि ॥ विगतमूढभावेऽतिचतु
रे॰ सुख्यर्थविवेचनकुशले ॥

विमूढभाव । पुं॰ व्याकुलचित्तत्वे ॥

विमूढात्मा । त्रि॰ रागद्वेषादिदूषिता
न्तःकरणे ॥ विमूढआत्मायस्य ॥

विमूढेन । त्रि॰ मूर्खशिरोमणौ ।
देहात्मवादिनि । सुखनादरकारि
णि ॥ विमूढानामिन ॥

विमूल्य । त्रि॰ अमोलविमोलइतिभा
षायांख्याते । महार्घे ॥

विमृत्यु । पुं॰ विगतकामाविद्ये ।
वेदान्तवेद्यआत्मनि ॥

विमृश । पुं॰ विमर्शे ॥

विमृष्ट । त्रि॰ विभाविते ॥

विमृष्य । त्रि॰ विचार्ये ॥ विमृषे
ऋदुपधाच्चाक्लृपिचृतेरितिक्यप् ॥

विमृष्यकारी । त्रि॰ विवेकिनि ॥ वि
मृष्यकरोति । णिनि ॥

विमोक्ष । पु॰ विमोचने ॥

विमोक्ष । पुं॰ मुक्तौ ॥

विमोक्षण । न॰ विमोचने । परि
त्यजने ॥

विमोचनम् । न॰ दूरीकरणे । विमु
क्तौ । विपूर्वान्मुचेर्ल्युट् ॥ ती
र्थविशेषे ॥

विमोह । पुं० भ्रमपरम्परायाम् । विशिष्टोमोहः ॥

विमोहनम् । न० आकुलीकरणे । वैचित्तीकरणे ॥

विमोहित । त्रि० विविध मोह भ्रम परम्पराप्रापिते । मोहयुक्ते ।

विम्ब । पुं० कृकलासे ॥ न०प्रतिविम्बे ॥ विम्बीफले ॥ वर्णवृत्तान्तरे ॥ नगणकरगम्बकर्णभवतिनवत्रयंपूर्णम् । फणिभट्टनभूषण यत्तद्दितिकिलविम्बमेतत् ॥ यथा । कपटकृतगोपवेश : शयनवरभूतशेष । जगतिकृतनन्दहर्षोगिरिविधुतवातवर्ष : ॥ पुं० न०सूर्यचन्द्रमण्डले ॥ वेतिशोभते । वीगत्यादिषु । उल्वादयश्चेति०वन् नमोगमञ्जस्वानि ॥ विम्बोष्ठाइ अशान्नाम्बन्तरे ॥

विम्बकाम् । न० मण्डले ॥ विम्बीफले ॥

विम्बजा । स्त्री० विम्बिकायाम् ॥

विम्बट । पुं० सर्षपे ॥

विम्बभूत । त्रि० कारणभूते ॥

विम्बा । स्त्री० विम्बिकायाम् ॥

विम्बिका । स्त्री० तुण्डिकेर्याम् । रक्तफलायाम् । पीलुपर्ण्याम् । कंदूरी०कुंदुरुइतिभाषा ॥ विम्बीं कायति ॥ कैशब्दे । आतोनुपसर्गेक : । ङ्यापोरितिह्रस्व : ॥

विम्बी । स्त्री० विम्बिकायाम् ॥ गौरादित्वान्ङीष् ॥

विम्बीफलम् । न० विम्बिकायाम् । कदूरी०इ०प्र०फले । विम्बीफलस्वादुशीतगुरुपित्तास्रवातजित् । स्तम्भन लेखन रुच्य विबन्धाध्मानकारकम् ॥

विम्बु : । पुं० गुवाके ॥

वियच्चारी । पुं० चिल्लखगे ॥ त्रि०आकाशगामिनि ॥

वियत् । न० विष्णुपदे । गगने । आकाशे ॥ विविशतएतिव्याप्नोति । इण शतृ ॥ यद्वा । वियच्छति० नविरमति । विपूर्वाद्यमेरन्येभ्योपीतिक्विप् । क्कौचगमादीनामिति मलोपितुक् ॥

वियद्गङ्गा । स्त्री० मन्दाकिन्याम् । स्वर्णद्याम् । सुरदीर्घिकायाम् ॥ वियति०वियतीवागङ्गा ॥

वियद्भूति : । स्त्री० तमसि । अन्धकारे ॥

वियन्मणि । पुं० सूर्ये । सहस्रांशौ ॥ वियतोमणिरिव ॥

वियम । पुं० सयमे ॥ विविधयमने ॥ वियमनम् । यम . समुपनिविषुचेतिपक्षे०अप् ॥

वियात : । पुं० धृष्टे । निर्लज्जे ॥ विरुद्धंयातचेष्टितंयस्य ॥ विरुद्धमयासीद्वा । गत्यर्थेतिक्त : ॥

वियाम : । पुं॰ संयमे । विविधयमने ॥ वियमनम् । यम ' समुपनिविषु चेति॰ अबभावेघञ् ॥

वियुक्त । त्रि॰ वियोगविशिष्टे ॥

वियोग । पु॰ विच्छेदे । विप्रलम्भे । रागिणोर्वियोजने । विरहे ॥ स्मृत्वावियोगज दु खमत्यजन्स्वंप्रियेजने । अतिस्नेहपरिष्वङ्गाद्वर्तिरार्द्रापिदह्यते ॥ वियोजनम् । युजिर्योगे । घञ् । वियुज्यतेऽनेनवा ॥

वियोगभाक् । त्रि॰ विच्छेदयुक्ते ।

वियोगी । पुं॰ चक्रवाके । कोके ॥ त्रि॰विरहिणि । वियोगयुक्ते ॥ वियोगोऽस्यास्ति । इनि ॥

वियोगिनी । स्त्री॰ विरहिण्याम् ॥

वियोजित । त्रि॰ पृथक्कृते । वियोग प्रापिते

विरक्त : । त्रि॰ विरागवति ॥ सच॰ कुटीचकबहूदकहंसपरमहंसभेदाच्चतुर्विध ॥ विपूर्वाद्रञ्ज ' क्त ॥ अतिरक्तवर्णे ॥

विरक्ता । स्त्री॰ सांसारिकविषयेषुविरागविशिष्टायाम् ॥ दुर्भगायाम ॥ अननुकूलायाम् ॥ याचिन्तयामिसततं मतिसाविरक्ता ।।

विरक्ति ' । स्त्री॰ वैतृष्ण्ये ॥ तीव्रातीव्रतराचेतिविरक्तिर्द्विविधामता । तत्रसत्यान्तुतीव्रायांन्यसेद्योगीकुटीचके । अशक्तोबहूदकेतीव्रतरायाहंमस्थिते । मुमुक्षु परमेहंसेसाक्षाद्विज्ञानसाधने ।। रञ्ज क्तिन् ॥

विरङ्गम् । न॰ काङ्कुष्ठे ।।

विरचनम् । न॰ निर्माणे ।। विशेषेणरचनम् ।।

विरचित । त्रि॰ निर्मिते ॥ विशेषेणरचित ॥

विरजम् । न॰ तीर्थविशेषे ॥

विरजा : । त्रि॰ विगतधर्माधर्मे ॥ रजोगुणरहिते ॥ विगत रजोयस्य स ॥

विरजा ' । स्त्री॰ विगतार्तवायाम् ॥

विरजस्तमा । पु॰ द्व्यातिमे । निस्तरजस्तमोगुणे ॥ रजस्तमोभ्याविगत । निरादयइतिसमास ॥ विगतेरजस्तमसीयस्मादितिवा ॥

विरजा । स्त्री॰ कपित्थपर्ण्याम् ॥ दूर्वायाम् ।। ययातिमातरि ॥ गोलोकेश्रीकृष्णसखीविशेषे ।। दौर्गाविशेषे ।। देवयानपथवर्त्तिन्यांनद्याम् ॥ जगन्नाथक्षेत्रे ।। यथा । मुण्डनञ्चोपवासश्चसर्वतीर्थेष्वयंविधि । वर्जयित्वागयागङ्गाविशालाविरजांतथा ।।

विरजाक्षेत्रम् । न॰ पुरुषोत्तमतीर्थे ॥ यथा । उत्कलेनाभिदेशन्तुविरजाक्षेत्रमुच्यते । विमलासामहादेवीजगन्नाथस्तुभैरव इति तन्त्रचूडामणौपीठनिर्णय ।

शिरजाहोम । पुं० अवधूतत्वस म्पादके० आगमप्रोक्तकर्मविशेषे ॥

विरञ्च । पु० द्रुहिणे । ब्रह्मणि ॥ विरचयति । रचप्रतियत्ने । पचा द्यच् । पृषोदरादित्वान्नुमागम ॥

विरञ्चि । पुं० स्रष्टरि । ब्रह्मणि ॥ विरचयति । रच० । स्वार्थण्य न्तादच्च० । पृषोदरादित्वान्नु म् ॥

विरणम् । न० वीरणतृणे ॥

विरत । चि० निवृत्ते । विरक्ते ॥

विरतिः । स्त्री० आरतौ । उपरा मे । निवृत्तौ ॥ विरमणम् । र मक्रीडायाम् । क्तिन् ॥

विरथः । चि० भग्नरथे ॥

विरमणम् । न० विरतौ ॥ विपू र्वाद्रमेर्ल्युट् ॥

विरमित । चि० निरस्ते ॥

विरलम् । न० दधि ॥ चि०अवका शे । पेलवे । तनौ । सान्तरे ॥ विराति । रादाने । बाहुलकात्क लन् ॥ पुं० निर्जने ॥

विरलजानुकः । चि० वक्रजानुवि शिष्टे । प्रज्ञौ । प्रज्ञे ॥ ड्र० हे० चन्द्रः ॥

विरलद्रवा । स्त्री० अच्छायवाग्वाम् ॥ यथा । यवागुरुष्णिकाश्राणा सैवतुद्र् तसिक्थिका । विलेपीत रलाचस्यात्साअच्छाविरलद्रवा ॥

शिरस । चि० रसहीने ॥ विग तोरसोयस्मात् ॥

विरह । पुं० विप्रलम्भे । वियो गे । विच्छेदे ॥

विरहिणी । स्त्री० वियोगिन्याम् ॥ विच्छेदविशिष्टायाम् ॥ नायामृभ्र्त तौ ॥ ङीप् ॥

विरहित । चि० त्यक्ते । विहीने विशेषेणरहितः ॥

विरही । पु० वियोगिनि । विरह विशिष्टे ॥ विरहोस्यास्ति । अ तइनि.॥रघुनेराभीस्याद्येर्येणिनिर्वा॥

विरहोत्कण्ठिता । स्त्री० नायिका विशेषे ॥ चिरमप्यनुरनागते विरहोत्कण्ठितोन्मनेतिलक्षणात् ॥

विराग । पु० वैराग्ये । रागप्र तिबन्धिनि ॥ चि० गताभिला षे ॥ विगतः रागोस्य ॥

विरागार्ह । चि० विरागयोग्ये । वैरङ्गिके ॥ अर्हति । अर्ह० । पचाद्यच् । विशिष्टोरागः विरा गः । विरागस्यअर्हः ॥ भन वति ॥

विरागी । चि० विरक्तिमति ॥

विराट् । पुं० विविधराजमानत्वा त्स्थूलसमष्ट्युपहितचैतन्येभगवत. स्थूलरूपे ॥ यथा तत्कार्यं चवि राड्देहः स्थूलदेहोयमात्मनइति । पञ्चीकृतभूतानांयत्कार्यंततत्का-

र्थं विराट् देहे भवति स च देहः परमेश्वरस्य स्थूलदेहः ॥ आत्मनो मम भगवत्स्याद् इ॰ दे॰ भो॰ ॥ विराडात्माना म॰ स्थूलप्रपञ्चाभिमानी स र्व ब्रह्माण्डात्मक समष्टिदेहस्य ब्रह्मांगीलक्षणयानुग्राहको हिरण्यगर्भः च ब्रह्माण्डस्यामर्थान्तरमिति व्याख्यातारः ॥ विशेषेण राजते । राज् दीप्तौ । विविध राजते वा । सत्सूद्विषेति क्विप् ॥ चर्विये ॥ स्त्री॰ इत्याचरायाश्वी ॥

विराज । पुं॰ विराजि ॥

विराजमान : । त्रि॰ दीप्तिविशिष्टे । शोभमाने ॥

विराजित । त्रि॰ शोभिते । दीप्ते ॥

विराट । पुं॰ मत्स्यदेशे ॥ वैदर्भदेशाद्रूर्ध्वं स्वइन्द्रप्रस्थाच्चदक्षिणे । मरुद्देशात्पूर्व्वभागे विराटः परिकीर्त्तितः ॥ मत्स्यदेशाधिपे ॥ नगरविशेषे ॥

विराटक । पुं॰ राजपट्टे ॥ इति हेमचन्द्रः ।

विराटज : । पुं॰ विराटदेशोद्भवहीरके । राजपट्टे । राजावर्त्ते ॥ त्रि॰ विराटराजजाते ॥

विरावी । पुं॰ हस्तिनि ॥ इति शब्दमाला ॥

विराव : । त्रि॰ विप्रकृते ॥ रामेरनिट कर्मणिक्त : ॥

विराध : । पुं॰ रामायणप्रसिद्धराक्षसविशेषे ॥

विराधनम् । न॰ पीडायां ॥

विराध्यन् । त्रि॰ अपकुर्वाणे ॥

विराम : । पुं॰ अवसाने ॥ वितर्कविचारानन्दास्मितादिरूपचिन्ताख्यागे । हस्वपरमे ॥ विपूर्वाद्रमेर्भावे घञ् ॥ विरमन्ते निवर्त्तन्तेऽस्मिन्निति वा ॥

विराव : । पुं॰ शब्दे । स्वाने । आरावे ॥ विरवणम् । रु॰ उपसर्गे रु वइति भावे घञ् ॥

विरिक्त । त्रि॰ सञ्जातविरेके ॥

विरिञ्च । पुं॰ वैकुण्ठे । विष्णौ ॥ परमेष्ठिनि ॥ शिवे ॥ इ॰ श॰ रत्नावली ॥

विरिञ्चन : । पुं॰ विरञ्चने । द्रुहिणे ॥ इ॰ हे॰ चन्द्र ॥

विरिञ्चि : । पुं॰ शिवे । विष्णौ ॥ विधातरि । परमेष्ठिनि । सुरज्येष्ठे ॥ भूतानि विरचयति । रचप्रतियत्ने । स्वार्थण्यन्तादिच् : । पृषोदरादित्वादकारस्येत्वं नुमागमश्च ॥

विरिव्य : । पु॰ स्वरे ॥ रेभ्शब्दे सौत्र । क्त । न्व्यसाम्लध्वान्ते त्यादिना निपातितः ॥

विरिष्ट : । त्रि॰ विच्छिन्ने ॥

विरुद्ध : । पुं॰ हेत्वाभासान्तरे । साध्याभावव्याप्ते हेतौ ॥ यथा शब्दोनि

त्य ' कृतकत्वादिति । कृतकत्वं हि नित्यत्वाभावेनानित्यत्वे नव्याप्तम् ॥ न्यायसूत्रञ्च ' सिद्धान्तमभ्युपेत्यतद्विरोधीविरुद्ध : । अत्र च सिद्धान्त साध्यम ॰प्रतिज्ञार्थाद्विपक्षसिद्धस्यान्तेसाध्यमभिधीयते॰ तथाचसाध्यमभ्युपेत्यउद्दिश्यप्रयुक्तस्तद्विरोधीसाध्याभावव्याप्तइतिफलितार्थं । यथाशब्दोनित्य: कृतकत्वादिति । एतस्यसाध्याभावानुमितिसामग्रीत्वेनसाध्यानुमितिप्रतिबन्धोदूषकताबीजम् । नच सत्प्रतिपक्षाविशेष ' । तत्रहित्वन्तरं साध्याऽभावसाधकम्॰इहतु हेतुरे साध्याभावसाधक . साध्यसाधकत्वेनत्वयोपन्यस्तस्यशक्तिविशेषोज्ञापकत्तु नविशेषात् ॥ १ । ४६ स्॰ ॥ विपरीतधर्माक्रान्ते ॥ विरोधविशिष्टे ॥

विरूढ : । त्रि॰ अङ्कुरिते । विरुहा॰ इतिख्याते ॥ विपूर्वाद्रुहेर्गत्यर्थेतिक्त . । ढत्वधत्वष्टुत्वढलोपदीर्घा ' ॥ आरोहणविशिष्टे ॥

विरूपम् । न॰ पिप्पलीमूले ॥ त्रि॰ कुरूपे ॥ विरुद्धरूपयस्यस : ॥

विरूपा । स्त्री॰ अतिविषायाम् ॥ दुरालभायाम् ॥ कुरूपायाम् ॥

विरूपाक्ष : । पुं॰ त्रिलोचने । शम्भौ । ईशे । शिवे ॥ रुद्रविशेषे ॥ विविधानिरविचन्द्राग्निरूपाण्यक्षीणियस्य । बहुव्रीहौसक्थ्यक्ष्णो स्वाङ्गात्षच ॥ विरूपेष्वपि॰ अचिन्त्यरूपाद्दष्टिर्यस्येतिवा ॥ विविधरूपाणि॰ विविधरूपेषु॰ अक्षाणीन्द्रियाण्यस्येतिवा ॥ असुर विशेषे ॥

विरूपिका । स्त्री॰ कुरूपायाम् ॥

विरूपी । पुं॰ जाहके ॥ त्रि॰ कुरूपविशिष्टे ॥

विरेक . । पुं॰ मलभेदे । रेचने । रेके । रेचनायाम् । विरेचने ॥ पृथक्त्वे ॥ यथा । यञ्चयद्ध्यासस्तद्विवेकाग्रहणनिबन्धनोभ्रमइतिभाष्यम् ॥

विरेचक : । त्रि॰ विरेककारके ॥ यथा । चूर्णमध्येत्रिवृच्चूर्णैस्तरसेकारवेल्लकम् । स्नेहैर्वेरण्डजैतैलंफलैश्चवहरीतकीतिवाग्भट :

विरेचनम् । न॰ विरेके ॥ तत्कारकौषधयथा । हरीतकीसमगुडामधुनासहपेषिता । विरेचनकरीहृद्या भवतीतिनसंशय : ॥ त्रिफलाचिरकंचिचतथाकटुकरोहिणी । जलस्तम्भहरोह्येषउत्तमन्तुविरेचनम् ॥ अपिच । त्रिफलाभद्रदारुश्चपिप्पलीचविरेचकृत् । हरीतकीसोष्णनीरात्सैन्धवस्वविरेचकृत् । इतिगरुडपुराणे ॥ प॰ पीलुवृक्षे ॥

विरेफ : । पुं॰ नदमात्रे ॥ त्रि॰ रेफशून्ये ॥

विरेभित । त्रि॰ शब्दिते ॥

विरोक : । पुं॰ सूर्यकिरणे ॥ न॰ छिद्रे रन्ध्रे ॥ विरोचतेऽनेन । रुच॰ । घञ् । घञि कुत्विय्यतेरितिकुत्वम् । लिङ्गमशिष्य लोकाश्रयत्वाल्लिङ्गस्येतिनपुंसकत्वा- विरोध : ॥

विरोचनम् । न॰ स्फुरणे ॥

विरोचन । पुं॰ प्रह्लादतनये ॥ अर्के । सूर्ये ॥ अग्नौ ॥ चन्द्रे ॥ अर्कवृक्षे ॥ रोहितकवृक्षे ॥ श्योनाकप्रभेदे । पूतकरञ्जे ॥ विशेषेण रोचते । रुचदीप्तौ ॥ अनुदात्तेतश्चहलादेरितियुच् ॥ त्रि॰ रोचके ।

विरोचनसुत : । पुं॰ बलिराजाख्ये दैत्ये ॥ विरोचनस्यसुत : ॥

विरोध । पुं॰ वैरे । विद्वेषे ॥ यथा । प्रधानस्यप्रधानेनसहविरोधोनतुदुर्बलेनेति ॥ विरोधकरणे दोषोयथा । अथपुनरेषा काराक्रान्ताप्तत्वमसि, उपाचकिञ्चिद्वचनपरिणामसुखावहम् ॥ अविरोधोभवाब्धौइसर्वमङ्गलमङ्गलम् । विरोधोनामबीजस्यसर्वोपद्रवकारणम् ॥ अकस्माच्चोविरोधश्चदाकणी. स तियै : सह । प्रतिज्ञाचैवाकर्त्तव्या मदीयवचनशृणु ॥ इति ॥ अपि च । नकुर्यादुत्तुभि . सार्द्धं विरोधंबधुभिस्तथा । आत्मन . प्रतिकूलानिपरेषानसमाचरेदिति ।' विरोधनोसमेगर्च्छन्नाधर्मेसुसदाबुधकृतिच ॥ विरोधनम् । रुधिरआवरणे । घञ् ॥ अलङ्कारविशेषे । यथा । विरोध : सोऽविरोधेपिविरुद्धत्वेनयद्वच । वस्तुनस्तेरविरुद्धेपिविरुद्धयोरिवयद्भिधानंसविरोध : । जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धास्याद्गुणस्त्रिभि : । क्रियाद्वाभ्यामपिद्रव्यंद्रव्येणैवेति तेदश ॥ अभिनवनलिनीकिसलयमृणालवलयादिदवदहनराशि . । सुभगकुरङ्गदृशोस्याविधिवशतस्त्वद्वियोगपविपाते ॥ गिरयोप्यनुन्नतियुजोमरुदप्यचलोऽब्धयोप्यगम्भीरा । विश्वम्भराप्यतिलघुर्नरनाथतवान्तिकेतिनियतम् ॥ ( * ) येषांकण्ठपरिग्रहप्रणयितांसम्प्राप्य धाराधरस्तीक्ष्णा सोप्यनुरज्यतेचकमपिकञ्चपरांप्रोतिच । तेषासङ्गरसङ्गसक्तमनसाराज्ञांत्वयाभूपतेपांशूनापटले . प्रसाधनविधिर्निर्वर्त्यतेकौतुकम् ॥ सृजतिचजगदिदमवतिचसंहरतिचहेलयैवयोनियतम् । अवसरवशत शफरोजनार्दन सोपिचित्रमिदम् ॥ सततमुसलासक्ता ब

त्तरगृहकर्मघटनयान्नृपते । हिज पत्नीनाकठिना . सलिभवतिकरा सरोजकुसुमारा ॥ पेशलमपिख लवचन दहतितरांमानससुतत्त्ववि दाम् । परुषमपिसुजनवाक्यमलय जरसवत्प्रमोदयति ॥ क्रौञ्चाद्रिरुद्दा मद्दषदढोयधम्मार्गोयानर्गलश्रातपा ते । अभूत्नवाभोजदलाभिजात स भार्गव सत्यमपूर्वसर्ग । ॥ परिच्छे दातीत सकलवचनानामविषयः पुनर्जन्मन्यस्मिन्ननुभवपथ योनगत वान् । विवेकप्रध्वंसादुपचितमहा मोहगहनोविकारः कोप्यन्तर्जडय तिचतापञ्चकुरुते । अयवारामेकोनि लयद्रुतिरत्नाकरद्रुतिरश्रितोऽस्माभि स्तृष्णातरलितमनोनिर्जलनिधि । कएवजानीतेनिजकरपुटीकोटरग तलयादेनताम्यत्तिमिमकरमापास्य तिमुनि .॥ समदमतङ्गजमदजलनि स्यन्दतरङ्गिणीपरिष्वङ्गात् । चिति तिलकत्वयितटजुषिशङ्करचूडापगा पिकालिन्दी ॥ इति ॥ अनर्थे । विपरीतार्थे ॥ यथा । श्रुतिस्मृति विरोधेतुश्रुतिरेवगरीयसी । अवि रोधेसदाकार्यंस्मार्त्तंवैदिकवत्सता ॥ असामानाधिकरण्ये ॥ न्यायमते •साध्यव्यापकाभावप्रतियोगित्त्वमि तिचिन्तामणिः । साध्यासमानाधि करण्यमितिदीधितिः । अच्छिनकु लादेरन्यतरेणापरस्मरणे ॥ विरोध नान्नवस्तुनि ॥

विरोधकृत् । पु॰ वत्सरविशेषे ॥ तत्फ लयथा । वासवोवर्षतेदेविदेशेचा खण्डमण्डले । अच्छिन्नत्वेकान्यकु र्लेविरोधीक्षपिनाशकृत् ॥ ४५ ॥ त्रि॰ विरोधकर्त्तरि ॥

विरोधनः । पु॰ विरोधे ॥ न॰ पर्य्य स्यायाम् । विरोधे ॥ रुधिर॰ । ल्यु ल्युट्वा ॥

विरोधी । पुं॰ शत्रौ ॥ विरोधोस्यास्य स्मिन्वा । इनिः ॥ वत्सरविशेषे ॥ यथा । अनग्निप्रबलोलोकाधान्यौष धिप्रपीडनम् । जायतेमानुषिकष्टं विरोधिनिनसंशय ॥ त्रि॰ विवा दिनि ॥ विरोधविशिष्टे ॥

विरोधिनी । स्त्री॰ विरोधकारिकाया म् ॥ विरोधविशिष्टायाम् ॥

विरोधोक्ति । स्त्री॰ विप्रलापे । पर वचनविरोधिवचने ॥ विरोधस्यउ क्ति ॥

विल । पुं॰ उच्चैःश्रवसि । इन्द्रस्य हये ॥ वेतसे ॥ न॰ छिद्रे । रन्ध्रे ॥ गुहायाम् ॥ विलतिभिनत्ति । वि लभेदने॰ घोष्टादिः । इगुपधेति कः ॥ विल्यतेवा । कर्म्मण्युटीव कुलमिति॰ इगुपधेतिकः । घञर्थे कोवा । खनोघचेतिघि॰ सञ्ज्ञापूर्वं कत्वान्नगुणाभावोवा ॥

विलकारक । पुं॰ मूषके ॥

विलकारी । पु॰ मूषिके ॥ गर्त्त कारके ॥

विलक्ष । त्रि॰ विस्मयान्विते । परकीयधर्मं शीलादौप्राप्तास्वर्यं ॥ विशेषेणलक्षयति । लक्षआलोचने । पचाद्यच् ॥ लक्षाद्भ्रष्टे ॥ लज्जिते ॥ निलक्षणे ॥

विलक्षणम् । न॰ हेतुशून्यायांस्थितौ । निष्प्रयोजनस्थितौ ॥ यथा । विलक्षण मत स्यान यद्भवेन्निष्प्रयोजनमितिभागुरि. ॥ त्रि॰भिन्ने । अन्यलक्षणे ॥ विशेषलक्षणयुक्ते ॥ विगत लक्षणमालोचनं यत्र ॥

विलक्षणा । स्त्री॰ शय्याविशेषे ॥

विलक्षित । त्रि॰ चिह्निते ॥ विशेषेणलक्षितः ॥

विलग्न । पुं॰ न॰ मध्ये ॥ न॰जन्मलग्ने ॥ मेषादिलग्नमात्रे ॥ त्रि॰ लग्ने । ससक्ते ॥ विशेषेणलग्न ॥ वियुक्ते ॥

विलङ्घनम् । न॰ अतिक्रमणे ॥

विलङ्घित । त्रि॰ अतिक्रान्ते ॥

विलङ्घ्य । त्रि॰ अतिक्रमणीये ॥

विलज्ज । त्रि॰ लज्जयाहीने ॥ विगतालज्जायस्मात् ॥

विलपनम् । न॰ विलापे ॥ भाषणे ॥

विलम्ब । पुं॰ उचितकालाधिककाले ॥ लम्बने ॥ गौणे ॥ वत्सरविशेषे ॥ तत्फलं यथा । तस्करैः पार्थिवैश्चैवअभिभूतमिदं जगत् । अर्घोंभवतिसामान्योविलम्बे तुभयमहत् ॥ ३२ ॥

विलम्बनम् । न॰ अशीघ्रे ॥

विलम्बितम् । न॰ तत्त्वाद्यन्त्यादौ ॥ विशेषेणलम्बन्तेअवतरणादय. प्रत्यक मतिविशेषप्रदर्शनायात्र । लविअवस्रंसने॰ओष्ठोपध ' क्तोधिकरणचेतिक्त ' ॥ त्रि॰ आश्रिते । विलम्बमाने ॥

विलम्बी । त्रि॰ लम्बमाने ॥ विशेषेणलम्बमाने ॥

विलम्भ । पुं॰ अतिसर्ज्जने । दाने ॥ विलभ्यते । डुलभष् प्राप्तौ । घञ् । उपसर्गात्खलघञोरितिनुम् ॥

विलय । पु॰ प्रलये ॥ विशेषेणलीयन्तेपदार्थाअस्मिन् । लीङ् श्लेषणे । एरच् ॥ यथालयणस्तोये ॥

विलसा । स्त्री॰ श्वेतवचायाम् ॥ इ॰राजनि॰ ॥

विलवास । पुं॰ आखुकजन्तौ ॥

विलवासी । पु॰ सर्पे ॥ विलेवसति । णिनि ॥

विलशय । पु॰ विलेशये ॥

विलसन् । त्रि॰ विलासयुक्ते ॥

विलसितम् । न॰ चेष्टिते ॥ भावे क्त ॥ उद्भूते ॥

विलाप. । पुं॰ परिदेवने । अनुशोचने । शोके ॥ विलपनम् । लपेर्भावे घञ् ॥ डु. खजी वचसि ॥

विलापित : । त्रि॰ घृतवद्द्रवीकृते । विलीनतापादिते ॥

विलाल । पुं॰ यन्त्रे ॥

विलास । पुं॰ लीलायाम् ॥ हावभेदे । स्वयथा । प्रियसमीपगमने य : स्थानासनगमनविलोकनेषु विकारोऽकस्माच्च क्रोधस्मितचमत्कार मुखविधूननं सविलास : । तथाहि । योवक्षभांवानुगतोविकारोगत्यासनस्थानविलोकनेषु । तथा स्मित क्रोधचमत्कृतौ च विधूननस्यास्वगत विलास. ॥ अपिच । विलासोङ्गविशेषोय : प्रियाप्तावासनादिषु । इति । विलसनम् । लसश्लेषणे । घञ् । प्रकाशे ॥ शारीरिकसुखानुभवे ॥

विलासकाननम् । न॰ क्रीडावने ॥

विलासायुध । पु॰ कामदेवे ॥

विलासी । पु॰ भोगिनि ॥ व्यालेसर्पे ॥ विष्वक्सेने । हरौ ॥ अग्नौ ॥ चन्द्रे विलसनशील । विपूर्वाल्लसेर्भावजसैर्तावनुप् ॥

विलासिनी । स्त्री॰ नार्याम् ॥ वेश्यायाम् ॥

विलिप्त । त्रि॰ श्लिष्टे ॥ विशेषेण लिप्त. ॥

विलिम्पन् । त्रि॰ उपदिहाने ॥ विलिम्पति । लिप॰ । शतृ ॥

विलीन : । त्रि॰ खग' प्राप्तद्रवीभावेघृतादौ । विद्रुते । द्रुते । श्लिष्टे । संसक्ते ॥ विलीयते स्म । लीङ् श्लेषणे । गत्यर्थेति क्त : । स्वादय ओदित इति नत्वम् ॥ विशेषेण लीनो वा ॥ विशेषेण लयङ्गते ॥ यथा । विलीनो वैवैनस्वतनगरकोलाहलभरोगतादूरादूरक्वचिदपि परेतान्मृगयितुम् । विमानानां व्राता विदलयति वीथीर्दिविषदां कथातिकल्याणीयदवधि मही-मण्डलमगात् ॥ विश्लिष्टे ॥

विलुप्त. । त्रि॰ संहृते ॥ चोरिते ॥

विलुप्ताब्द : । पु॰ लुप्तसंवत्सरे ॥ यथा । गोजान्त्यकुम्भ तरभेऽलिचारगौनैपूर्वेऽश्विगुरौ तिचक्रित तदा विलुप्ताब्द इति निन्दित : शुभेषु देवासुरनिम्नगान्तरे ॥

विलुम्पक. । त्रि॰ अपहर्त्तरि ॥

विलुलित : । त्रि॰ आकुलिते । आकम्प आकुलिते ॥ विधुते ॥

विलेखनम् । न॰ छेदने ॥ आकर्षे ॥ सीरणे ॥

विलेप । पुं॰ लेपे ॥ लिपेर्भावेघञ् ॥

विलेपनम् । न॰ कुङ्कुमाद्यनुलेपने । समालम्भे ॥ गात्रानुलेपनयोग्ये पिष्टे घृष्टे वा सुगन्धिद्रव्ये । गात्रानुलेपन्याम ॥ घृष्टचन्दनादिलेपमात्रे । विलिप्यतेऽनेन । लिप उपदेहे । ल्युट् ॥

विलेपनी । स्त्री॰ यवाग्वाम् ॥ सुवेशस्त्रियाम् ॥

विलेपी । त्रि॰ विलेपनकर्त्तरि ॥

विलेपी । स्त्री॰ यवाग्वाम् । उष्णिकायाम् ॥ अस्याविधिर्गुणाश्च । चतुर्गुणाम्बुसंसिद्धा विलेपी घनसिक्थका । पृथग्द्रवैर्वारहिता ख्याता शिथिलभक्तिका ॥ स सिद्धा॰ जलीवसिद्धा । विलेपीगिलहयी॰ तृप्तिलोक्ति । विलेपीदीपनी बल्याहृद्यासङ्ग्राहिणीलघु । ब्रणाक्षिरोगिणां पथ्या तर्पणी लङ्घनज्वरापहा ॥ विलिम्पति । लिप॰ । पचाद्यच् । गौरादि ॥

विलेवासी । पुं॰ सर्पे ॥

विलेशय । पुं॰ सर्पे ॥ मूषिके ॥ गोधादिषु ॥ यथा । गोधाशशभुजङ्गाखुशल्लक्याद्या विलेशयाः । विलेशया वातहरा मधुरा रसपाकयोः । वृंहणा बद्धविण्मूत्रा वीर्योष्णाश्च पिकीर्त्तिता ॥ विलेशेते । अधिकरणेशीङ॰ कृत्यच्

। शयवासित्यलुक् ॥

विलोकनम् । न॰ दर्शने ॥ लोक दर्शने । ल्युट् ॥

विलोकित । त्रि॰ दृष्टे ॥ लोक॰ । क्त : ॥

विलोचनम् । न॰ चक्षुषि । विलोच्यतेऽनेन । लोच् । ल्युट् ॥ दर्शने ॥

विलोटक । पुं॰ नलमीने । बालियामाच॰ इ॰ गौ॰ भा॰ प्रसिद्धे ॥

विलोडनम् । न॰ मथने ॥ आलोडने । बिलावना॰ इ॰ भा॰ प्र॰ ॥

विलोडित । त्रि॰ आलोडिते । मथिते । बिलोया॰ इ॰ भा॰ न॰ तक्रे ॥

विलोप । पुं॰ विश्लिष्टलोपे ॥

विलोभ । पुं॰ विलोभने ॥ विलुभेर्घञ् ॥

विलोम । पुं॰ सर्पे ॥ वरुणे ॥ शुनि ॥ न॰ अरघट्टके ॥ पिषणयन्त्रे । त्रि॰ प्रतीपे । विपरीते ॥

विलोमक । पुं॰ प्रतिकूले । विपरीते ॥

विलोमजिह्व : । पुं॰ मत्त खेदे । महामृगे । हस्तिनि विलोमा जिह्वायस्यस ॥

विलोमजिह्वक । पुं॰ पीलौ । सि

विल्वमूला । स्त्री० वाराहीकन्दे ॥

विल्वशुण्ठी । स्त्री० विल्वपत्र्याम् । वि ल्वशूठा०इ०गौ०दे०भा०प्र० ॥

विल्वसू । स्त्री० दशपुत्रायाम् ॥

विल्वा । स्त्री० हिङ्गुपत्र्याम् ॥

विव । त्रि० पक्षिवाहने ॥ विनापक्षि णा वातिगच्छति । वा० । आतइति क. ॥

विवक्षा । स्त्री० कथनेच्छायाम् ॥ श क्तौ ॥

विवक्षित । त्रि० कथनेच्छाविषये । व क्तुमिष्टे ॥ प्रयस्यार्थे ॥

विवक्षु । त्रि० वक्तुमिच्छौ ॥

विवत्सा । स्त्री० नष्टापत्यायाम् ॥

विवदमान । त्रि० विवादकर्त्तरि ॥

विवध । पुं० पर्याहारे । वीवधे । प थिनि । भारे । विविधोवधोहनन गमनंवा यानेनवा । प्रादिभ्योधातु जस्येति समासेउत्तरपदलोपो ॥

विवन्ध । पुं० मलाग्रहणे ॥

विवरम् । न० दूषणे । गर्त्ते । छिद्रे ॥ अत्यन्तस्थाने ॥ विव्रणोति । वृञ् व रणे । पचाद्यच् ॥ यद्वा । विव्रिय ते । ग्रहवृदृनिश्चिगमश्च इत्यप् ॥ वि गतोवरोऽस्मात् ॥ लोकान्तपक्षियांव रंवा ॥ पुं० अतलादिविलेषु । यथा । अतलं प्रथमप्रोक्तं द्वितीयंवितलंत था । तृतीयंसुतलंप्रोक्तं चतुर्थंवैत लातलम् । महातलंपञ्चमंस्यात् षष्ठंप्रो क्तंरसातलम् । सप्तमंचपातालं सप्तैतेविवराः स्मृताः । एतेषुबिल स्वर्गेषुदिवोऽप्यधिकमेवच । कामभो गैश्वर्यसुखसमृद्धभवनेषुइतिदेवीभा गवतम् ॥

विवरणम् । न० व्याख्यायाम् । अर्थ स्फुटीकरणे ॥ कथने ॥

विवरनालिका । स्त्री० वंश्याम् । वेणौ ।

विवरेसद् । त्रि० मध्यवर्त्तिनि ॥ वि वरेसीदति । षद्लृ० । सत्सूद्विषे त्यादिना क्विप् । सत्पुरुषेक्लतोऽस्त्वा दिनाऽलुक् ॥

विवर्ण । त्रि० पामरे । नीचे । ख क्षरे ॥ विगतोवर्णोयस्य ॥ [illegible] ॥ मलिने ॥

विवर्णभासा । त्रि० काषायवाससि ॥

विवर्त्त । पुं० समुदाये । सङ्घे ॥ अपावृत्तौ । अपवर्त्तने ॥ नर्त्तने । नृत्ये ॥ स्वरूपानुपमर्द्देनकार्यान्तरा पत्तौ । अप्रच्युतपूर्वस्वरूपस्यासत्य नानाऽऽकाराभासे ॥ यथा । सत त्त्वतोऽन्यथाप्रथाविकारइत्युदीरि तः । अतत्त्वतोऽन्यथाप्रथा । विवर्त्त इत्युदाहृतइति ॥ विवर्त्तनम् । घ तु० । घञ् ॥

विवर्त्तनम् । न० परिभ्रमणे ॥ प्रत्या वृत्तौ ॥ पराङ्मुखविलुण्ठने ॥

विवर्त्तवाद । पुं० वादविशेषे । असीता ज्ञाद्यनिर्वचनीयाविद्यावशान्नामाक

पीयविवर्त्तते॰मुखमिवतत्त्वजाद्या
सम्बनभेदादित्येवनिर्द्धारिते ॥ त
थाह । ततोनिरंशचानन्देविवर्त्तो
जगदिष्यताम् । अवस्थान्तरभानन्तु
विवर्त्तोरज्जुसर्पवत् ॥ मायाशक्ति
कल्पिकास्यादिन्द्रजालिकशक्तिवत्
। शक्ति . शक्तात्पृथङ्नास्तितद्वद्
दृष्टेनचाभिदा ॥ प्रतिबन्धस्यदृष्टत्वा
च्छक्त्यभावेतुकस्यस . । शक्ते
कार्यानुमेयायाश्चनिर्वाच्यत्वमिष्य
ते ॥

विवर्त्तितः । त्रि॰ परिमण्डलिते ॥

विवर्द्धन । पुं॰ विशेषेणवृद्धिहेतौ ॥

विवश । त्रि॰ अस्वतन्त्रे । अवश्यात्म
नि । अरिष्टदुष्टधीवि । आसन्नमर
णसूचकलक्षणेनदुष्टमतौ ॥ विरुद्धं
वष्टि॰कामयते । वश॰ । अच् ॥
कातरे ॥

विवसनः । पुं॰ अर्हति । जिने ॥ बौ
द्धे ॥ त्रि॰दिगम्बरे ॥ विगतवसन
यस्यस ॥

विवस्त्र । त्रि॰ नग्ने ॥

विवस्वान् । पुं॰ सर्वज्ञपियवंशबीजभू
ते॰आदित्ये । सूर्ये ॥ विविधवस्तं
॰आच्छादयति । वस॰ । क्विप् ।
विवोरश्मिरस्यास्ति । मतुप् । तस्यो
मत्वर्थेइतिभत्वाद्रुत्वाभावः ॥ वि
वस्वानोऽस्यास्तीतिश्च ॥ अर्कवृक्षे ॥
विबुधे । सुरे ॥ अरुणे ॥ वैवस्वत

मनौ ॥

विवस्वती । स्त्री॰ सूर्यनगर्याम् ॥

विवह । पुं॰ दारपरिग्रहे । वायोः
पञ्चमेस्कन्धे । सयथा । तु स्वाह
गोऽद्दगन्यासुदृकप्रतिष्ठितसम्मतौ
सम्भवश्चाग्रहेभ्य पञ्चमोविवहो
गण . । ५ ॥

विवाक । त्रि॰ विवेचनकर्त्तरि ॥ य
था । अर्थप्रत्यर्थिनोर्वचनविरुद्धावि
रुद्धमध्ये सद्विविनक्तिविवेचयति
वा॰विवाकइतिमिताक्षरा ॥

विवादः । पुं॰ व्यवहारे । ऋणादि
न्याये । सचधनविभागादिविषय
न्यायादिः ॥ यथा । ऋणादिदाय
कलहद्वयोर्बहुतरस्यवा । विवादोव्य
वहारश्चद्वयमेतन्निगद्यते ॥ अष्टादश
विवादस्थानानियथा । तेषामाद्य
मृणादानन्नि क्षेपोऽस्वामिविक्र
यः । सम्भूयचसमुत्थानदत्तस्यान
पकर्मच ॥ वेतनस्यैवचादानसंविद
श्चव्यतिक्रमः । क्रयविक्रयानुशयो
विवादः स्वामिपालयोः ॥ सीमा
विवादधर्मश्चपारुष्ये दण्डवाचिके ।
स्तेयञ्चसाहसञ्चैवस्त्रीसङ्ग्रहणमेवच
॥ स्त्रीपुन्धर्मोविभागश्चद्यूतमाह्वयमे
वच । पदान्यष्टादशैतानिव्यवहार
स्थिताविहेतिमनुः ॥ मिथोविरुद्ध
वादे । पक्षप्रतिपक्षपरिग्रहेणविरुद्ध
वदने ॥ विरुद्धोवादोविवादः ॥

विवादानुगत । त्रि० विवादकर्त्तरि
विवादी त्रि० विवादयति मत्त्वर्थी
यइनि । विवादकर्त्तरि ॥
विवाधनम् । न० शाठ्ये । पीडाया
म् ॥
विवाधा । स्त्री० पीडायाम् ॥
विवार । पु० वर्णोच्चारणप्रयत्नवि
शेषे ॥ विवारयतिविकासयत्यास्य
मितिविवारइतिकैयट . ॥
विवास । पुं० समाप्तौ ॥
विवाह । पु० भार्याप्राप्तिहेतौ । दार
परिग्रहे । उपयमे । परिणये । उद्वाहे
। उपयामे । पाणिपीडने ॥ धर्मप्र
जार्थमर्थौहि विवाह ॥ विवाहो
ऽष्टविध प्रोक्त स्मृतिशास्त्रेषुसू
रिभि । ब्राह्मणैवर्विभेदेनक्तो
सहितविधोमत । परिणीतास्तुया
नार्यौत्र स्वैर्वर्णैर्ववत्सभि : । ता
एवदारा विज्ञेयाअन्या सर्वा परस्त्रि
य० इतिमहानिर्वाणतन्त्रम् ॥ विवा
हानन्तरकन्याया भर्तृगृहगमनका ले
पितादीनांरोदनपुराणसिद्धम् । यथा
दुर्वाससासहयौवनकन्याया क्रन्द
न्त्या विवाहे । कन्यासमर्पणं कृत्वा
मोहाद्दुःखेर्दरोदच । मूर्च्छामवापस
मुनि स्वकन्याविरहातुर ॥ च
न्यत्र भेदृशे क्वाचि स्त्रोतमारामंनमु
च्छति । यच्चेतनांप्राप्यबोधया
मासकन्यकाम् ॥ मूर्च्छितातात

विच्छेदाद्दुःखशोकसंयुताम् ॥
इतिब्रह्मवैवर्त्तपुराणम् ॥ विशिष्ट
वहनम् । वहप्रापणे । घञ् ॥
विवाहक । पुं० विवाहे । स्वार्थेक ॥
विवाहित । पु० स्त्री० कृतविवाहे ॥
विवाह्य : । त्रि० विवाहयोग्ये ॥
विविक्त । पुं० वसुनन्दने ॥ त्रि० अ
सम्पृक्ते ॥ एकान्ते । रहसि ॥ ज
नसम्मर्दराहतदेशे ॥ पूते ॥ विवे
किनि ॥ विविच्यतेजनाचच । वि
विर० । श्रौव्यार्थत्वाद्वत्वर्थत्वाद्वा
०क्तोधिकरणे चे ति क्त ॥ विविच्य
ते०विविच्यतेस्मा । विचिरपृथगभा
वे०विचिर्विरेचनेवा । क्त ॥ ए
कार्थे ॥
विविक्तदेश: । पुं० जनसम्मर्दविवर्जि
तदेशे । स्वभावत : संस्कारतोवा
०शुद्ध०ऽशुचिभि सर्पव्याघ्रादि
भिसरहिते०सुरधुनिपुलिनादौ०चि
त्तप्रसादकरेदेशे ॥ विविक्तवासौदे
शश्च ॥
विविक्तसेवी । त्रि० एकान्तवासस्वभावे
विवेकिनि ॥ विविक्त जनसम्मर्द
रहित०पूतम्च०यदरण्यगिरिगुहादि
०तत्सेवितु शीलयस्य ॥
विविक्ता । स्त्री० दुर्भगायाम् ॥
विविग्न । त्रि० भीते ॥
विवित्सा । स्त्री० वेदितुमिच्छायाम् ॥
विविक्षित । त्रि० ज्ञातुमिष्टे ॥ स

अनुसिष्टे ॥

विविदिषा । स्त्री॰ वेदितुमिच्छायाम् ॥

विविदिषासंन्यास । पु॰ इहजन्मनि जन्मान्तरे वा सम्यगनुष्ठितैर्वेदानुवचनादिभिरुत्पन्नया॰ विविदिषया॰ सम्पादितो ज्ञानसाधनभूतत्यागो ॥ अयञ्च द्विविध । जन्मापादककर्मादित्यागमात्रात्मक : प्रैषोच्चारणपूर्वकदण्डधारणाद्याश्रमरूपश्चेति । तत्राद्यो॰ स्त्रियोऽप्यधिक्रियन्ते । अतएव॰ वेदे॰ येनाहन्नामृतास्यां किमहन्तेनकुर्यामित्यादिभिर्मैत्रेयीवाक्यमाम्नायते । ब्रह्मचारिगृहस्थवानप्रस्थानां॰ केनचिन्निमित्तेन॰ संन्यासाश्रमस्वीकारेऽप्रतिबद्धे॰ स्वाश्रमधर्मेष्वनुष्ठीयमानेष्वपि॰ वेदनार्थमानसकर्मादित्यागो न विरुध्यते॰ श्रुतिस्मृतीतिहासपुराणेषु॰ लोके च॰ तादृशतत्त्वविदां बहूनामुपलम्भात् । यस्तु दण्डधारणादिरूपो वेदनहेतु : परमहंसाश्रम . सपूर्वाचार्यैर्बहुधाप्रपञ्चितस्तत्तद्ग्रन्थेष्ववधेय ॥

विविदिषु । त्रि॰ विविदिषासंन्यासवति ॥ यथा । कश्चिद्विविदिषु . पुत्रवित्तलोकैषणाभ्यथ । अनुतिष्ठति विद्यार्थं श्रवणादीन्यहर्निशम् ॥

विविध :। त्रि॰ बहुविधे । नानाप्रकारे । विविधाविधायस्यस : ।

विविधप्रकरणनामा । पु॰ पञ्च- क्ली॰ ॥ १० ॥

विवीत । पु॰ भूमिविशेषे । यथा । सममेषां विवीतेपि खरोष्ट्रमहिषीसमम् । विवीत : ॰ प्रचुरतृणकाष्ठो रक्ष्यमाण . परिगृहीतो भूप्रदेशस्तदुपघाते पीतरवेश्च समदण्डमेषां महिष्यादीनां विद्यात्॰ इति स्वामिपालविवादे मिताक्षरा ॥

विवीतभर्त्ता । पु॰ विवीतभूस्वामिनि ॥

विवृक्ण :। त्रि॰ छिन्ने ॥

विवृत । त्रि॰ विस्तृते ॥ उद्घाटिते । व्याप्ते । वा॰ वि॰ दू॰ भा॰ । प्रकाशीकृते ॥

विवृता । स्त्री॰ क्षुद्ररोगभेदे ॥

विवृताक्ष । पुं॰ ताम्रचूडे ॥ त्रि॰ व्यादितास्ये ॥

विवृति । स्त्री॰ व्याख्यायाम् । विवरणम् । हृञ् । क्तिन् ॥

विवृत्त :। त्रि॰ लुठिते ॥ तिर्यक्चलिते । परावृत्ते ॥

विवृत्ता । स्त्री॰ क्षुद्ररोगभेदे ।

विवृत्ति । स्त्री॰ स्फुरिते ॥ घूर्णने । चक्रवद्भ्रमणे । विवर्त्तनम् । वृतु॰ । क्तिन् ॥

विवेक । पुं॰ विचारे । मिथ्याव्यावृत्त्या वस्तुस्वरूपनिश्चये । इदं हेयमिदमुपादेयमिति विवेचनायाम् ॥ यथा नित्यानित्यवस्तुनो: ॥ तत्त्वज्ञानस्य श्रवणादिकसाधनभ॰ मनीना

शस्ययोग. । वासनत्रयस्यप्रतिकूलत्वात्समीत्याद्दनमध्येव विविच्य निश्चये ॥ पृथगात्मतायाम् । पृथग्भावे । प्रकृतिपुरुषादिभेदज्ञाने । व्यक्ताव्यक्तज्ञविज्ञाने विवेचनम् । विचिर्पृथगभावे । घञ् ॥ तत्त्वावधारणे । विद्यामदधनमदकुलाचारमदादिमदानांविरोधिनि ॥ सच दुर्लभो जनकेन । यद्यपिमहतां मूर्द्धि तेदिने निपतन्त्यध । हन्त चित्तमहत्तायाःकैषाविश्वस्ततातव ॥ वाधनानिमहीपालाब्राह्मणा वाजगन्तिवा । प्राकृतानिप्रयातानिकैय विश्वस्ततातव ॥ कोटयोब्रह्मणांयातागतासर्गपरम्परा: । प्रयातापांशुवद्भूपा: काधृतिर्मममजीविते ॥ येषानिमेषणोन्मेषौजगत: प्रलयोदयौ तादृशा: पुरुषायातामादृशागणनैवका ॥ इति ॥ जलद्रोण्याम् ॥ पृथग्भावविचारे ॥ विभागे ॥ एकान्ते ॥

विवेकिता । स्त्री० विवेकित्वे । कार्याकार्यविचारतायाम् ॥ मदमूढबुद्धिषुविवेकिताकुत: ॥

विवेकी । त्रि० मनीषिणि । गुरुशास्त्राद्युपदेशयुक्ते ॥ विवेकोस्यास्ति । अतइनि: ॥ शाकटायनविवेकिनाम् ॥ विचारकर्त्तरि ॥ पुं० देवसेनराजपुत्रे ॥

विवेचक: । पुं० विवेचनस्यकर्त्तरि ॥ विवेचयति । विचिर्० । ण्वुल् ॥

विवेचनम् । न० विवेके ॥

विवेचनीय: । त्रि० विवेच्ये । विवेचितव्ये ॥

विवोढा । पुं० परिणेतरि । वरे । पत्यौ ॥

विव्रुवन् । त्रि० विरुद्धवक्तरि ॥

विव्वोक । पु० हावविभेदे । स्त्रीणां शृङ्गारभावजायांक्रियायाम् ॥ यथाक्तम् । विव्वोकोऽभिमतप्राप्तावपिगर्वादनादरइति ॥ विवानम् वागतौ । विगुणतिविशेष: । स्वगत्वादिखात्कुप्रत्यय. । उच्यतेसमवैत्यत्र । उचसमवाये । हलश्चेति घञ् । घञर्थेकोवा । ओकउच: के० इतिनिपातित. । विवोरोक: स्थानम् ॥

विट । पु० मनुजे ॥ वैश्ये ॥ प्रवेशे ॥ विशन्ति । विशप्रवेशने । क्विप् । व्रश्चेतिषत्वम् । जश्त्वचर्त्वे ॥

विशम् । न० विसे । मृणाले ॥

विशकण्ठी । स्त्री० बलाकायाम् ॥

विशङ्क: । त्रि० निश्शङ्के । शङ्कारहिते ॥

विशङ्कट । त्रि० पृथौ । विशाले ॥ विस्तृतार्थवृत्ते वि शब्दात् वे: शालच्छङ्कटचौ ॥ स्त्री० विशङ्कटी । बह्वादिभ्यश्चेतिङीष् ॥

विशदः । पुं॰ शुक्ले । शुभ्रे । श्वेते । पाण्डरे । धवले ॥ त्रि॰धवलवर्णयुक्ते ॥ प्रसन्ने ॥ विमले । व्यक्ते ॥ विविक्तावयवे । यथा॰खरविशदमभ्यवहार्यंभक्ष्यमिति ॥ विशीयते॰शद्लृशातने । अच् ॥

विशदप्रभ. । त्रि॰ निर्मलकान्तौ ॥

विशब्दनम् । न॰ प्रतिज्ञाने ॥ शब्देनप्रकटीकृताभिप्राये ॥

विशम्बरा । स्त्री॰ पत्रराम् ॥ इतिराजनिर्घण्टः ॥

विशय: पुं॰ संशयेश्वायमर्थोनवेतिसन्देहे ॥ विशिष्टंशयनम् । शीङ्स्वप्ने । एरच् ॥

विशयी । त्रि॰ संशयिनि ॥

विशरः । पुं॰ वधे । मारणे ॥ विशरणम् । शृहिंसायाम् । ऋदोरप् ॥

विशरणम् । न॰ अवयवानांविश्लेषे ॥ मारणे ॥ भेदने ॥

विशल्यः । त्रि॰ शल्यरहिते ॥

विशल्यकरणी । स्त्री॰ ओषधिविशेषे॥

विशल्यकृत् । पुं॰ अक्षोटके । भूपलाशे । डापरमालोति॰गौ॰दे॰भा॰प्र॰वृक्षे ॥ त्रि॰विशल्यकारिणि ॥ विशल्यंकरोति । डुकृञ्॰ । क्विप् ॥

विशल्या । स्त्री॰ अग्निशिखायाम् लाङ्गलिक्याम् ॥ लघुदन्त्याम् ॥ गुडूच्याम् ॥ त्रिपुटायाम् । शल्यनरहितायाम् । लक्ष्मणाख्यौषधौ ॥ अजमोदायाम् ॥ कलिकार्याम् ॥ विगताशल्यात् । विगतशल्यमनया॰यस्यावा । तीर्थविशेषे ॥

विशल्यानदी । स्त्री॰ तीर्थविशेषे ॥

विशसन. । पुं॰ तरवारौ ॥ खड्गे । नरकान्तरे ॥ न॰मारणे ॥ शसुहिंसायाम् । ल्युट् ॥

विशसित. । त्रि॰ मारिते ॥ विपूर्वाच्छसेः क्त ॥

विशसिता । त्रि॰ पशोरङ्गानांकर्त्र्यादिनापृथक्पृथक्कारके ॥

विशस्तः । त्रि॰ अविनीते ॥ शसु॰ । क्तः । धृषिशसीवैयात्ये । एतौनिष्ठायामनिटावेवानिटौस्तः ॥

विशस्ता । पुं॰ चाण्डाले ॥

विशाकरः । पुं॰ भद्रचूडे ॥

विशाख. । पुं॰ शिखिवाहने । कार्त्तिकेये । षडानने ॥ विशाखाति । शाखृव्याप्तौ । पचाद्यच् ॥ विशाखायाजातइतिवा । सन्धिवेलादौश्यण् । श्रविष्ठाफल्गुनीत्यादिनातस्यलुक् । लुक्तद्धितलुकि ॥ धन्विनासमरकाले॰वितस्त्यन्तरेणस्थितेपादद्वयेसतिविशाखाख्यस्थानभवति॰तस्मिन् ॥ याचके । तर्कौ ॥ पुनर्नवायाम् ॥

विशाखलम् । न॰ योधानांपादविन्यासभेदे ॥

विशाखा । स्त्री० षोडशेनक्षत्रे । राधायाम् ॥ यस्यांजातश्चफलयथा । सदानुरक्तोविविधक्रियायासुवर्णकारैरपिसख्यमेति । यस्यप्रसूतचौभवेद्विशाखासखानकस्यापिभयेत्प्रसूत ॥ पाक्षिकमेकवचनम ॥ चन्नात्टाप् ॥ कठिल्लके ॥

विशाय : । पुं० उपशाये । यामिनांक्रमाच्छयने ॥ यथा । उपशायोविशाययस्यपर्यायशयनार्थकौ ॥ विशयनम् । शीङ्स्वप्ने । व्युपयो : शेते । पर्यायइतिघञ् ॥

विशारणम् । न० मारणे ॥ इतिहेमचन्द्र ॥

विशारद । पुं० सर्वज्ञे । ईश्वरे ॥ वकुले ॥ मधुगन्धे ॥ त्रि०पण्डिते ॥ धृष्टे ॥ प्रगल्भे ॥ प्रसिद्धे ॥ श्रेष्ठे ॥ विशिष्टोविपरीतोवाशारद ' । प्रादयोगतेतिसमासः ॥ ।वशुद्धे ॥

विशारदा । स्त्री० चुद्रदुरालभायाम् ॥

विशाल । पुं० मृगप्रभेदे ॥ पक्षिविशेषे ॥ नृपान्तरे ॥ वृक्षविशेषे ॥ त्रि० पृथुले ॥ विस्तृतार्थस्तेर्विशब्दात् । वे . शालच्छङ्कटचाविति० शालच् ॥ यद्वा । विशति । विशप्रवेशने । तमिवविशिविडौत्यादिनाकालन् ॥ विस्तीर्णे ॥

विशालता । स्त्री० पार्श्वविस्तारे । परिणाहे । पनहा० इ० भा० ॥

विशालस्वभाव । तस्यभावस्त्वतलाविततल् ॥

विशालतैलगर्भ । पुं० अङ्कोठवृक्षे ॥

विशालत्वम । न० विशालतायाम ॥

विशालत्वक् । पुं० सप्तपर्णवृक्षे ॥ विशालात्वगस्य । बृहत्त्वचि ॥

विशालपत्र पुं० कासालौ । कोकणदेशप्रसिद्धोयम् । स्ट्दुताले । शीताले विशालानिपत्राणियस्य ॥

विशालफलिका । स्त्री० निष्पाव्याम् ॥

विशाला । स्त्री० इन्द्रवारुण्याम् ॥ अन्ये न्द्रवारुणीप्रोक्ताविशालातुमहाफला । विशालाकफवातघ्नो मेहकुष्ठहरासरा । उज्जयिन्याम ॥ विशलति । शलचलने । ज्वलितीतिण ' ॥ यद्वा । विशति । विश० । तमिविशिविडौतिकालन् । विशालशब्दात्स्त्रियामजाद्यतष्टाबितिटाप् ॥ उपोदक्याम् ॥ वदरिकाश्रमे ॥

विशालाक्ष : । पुं० हरे । महेश्वरे ॥ तार्क्ष्ये । गरुडे ॥ त्रि० विशालनयने । सुनेत्रे ॥ विशालेअक्षिणीयस्य । बहुव्रीहौसक्थ्यक्ष्णो स्वाङ्गात्षच् ॥

विशालाक्षी । स्त्री० वरस्त्रियाम् ॥ नागदन्त्याम् ॥ देवताविशेषे ॥ वाराणस्याम् विशालाक्षीविशाला-

याम पिस्थिता ॥ योगिनीविशेषे ॥ षित्वान्ङीष् ॥

विशालाया । स्त्री॰ पाटलायाम् ॥

विशाली । स्त्री॰ अजमोदायाम् । वनयवान्याम् । वस्तगन्धायाम् ॥ बह्वादिभ्यश्चेतिङीष् ॥

विशिख॰ । पु॰ शरे । बाणे ॥ तोमरे ॥ शरकाण्डे ॥ विशिष्टा शिखाऽग्रमस्य ॥ त्रि॰ शिखारहिते । यथा । विशिखोप्युपवीतोऽपि यत्करोतिनतत्कृतमितिस्मृति ॥

विशिखा । स्त्री॰ खनित्र्याम् ॥ रथ्यायाम् ॥ नालिकायाम् ॥ विशेते ॥ शीङ्॰ । शीङः किद्‌ध्रस्वश्चेतिख । टाप् ॥

विशिपम् । न॰ गृहे । मन्दिरे । विशन्त्यत्र । विश॰ विटपविष्टप विशिपोलपाइति॰ विशे. कपन्॰ प्रत्ययोदेरित्वञ्च ॥

विशिष्ट । पु॰ विष्णौ ॥ त्रि॰ प्रकृष्टज्ञानवति ॥ अधिके ॥ युक्ते ॥ विशेषेणशिष्ट. ॥ यद्वा । विशिष्यतेसर्वज्ञत्वादिभि॰ सर्वेभ्योऽतिरिच्यते । विपूर्वात्॰ शिषल्ट विशेषणाद्भ्यत कर्मणिक्त॰ ॥

विशिष्टाद्वैतवादी । त्रि॰ प्रकृतिपुरुषयोर्भिन्नत्वेपिमितयोस्तयोर्ब्रह्मत्ववादिनि ॥ तस्यमतयथा । पुरुषस्तदतिरिक्ताप्रकृति॰ किन्तु भयमितब्रह्म । चणकद्विदलवत् । इत्थंब्रह्मणएकत्वव्यवस्थितम् । चित्परमाणुस्वरूपोजीव॰ समस्तविश्वब्रह्मांश. । इतिमाधवभाष्यादि॰ ॥

विशीर्ण । त्रि॰ विध्वस्ते ॥ गलिते ॥ विशीर्यतेस्म । शृहिंसायाम् । क्त ऋतइद्धातो: । रदाभ्यामितिन॰ । णत्वम् ॥ विशीर्ण. प्रारब्धोवपुरपिजराव्याधिविधुरगतदूरेविप्रस्थानभरणवाऽञ्छितमपि । इदानींव्यामोहादहहविपरीतेहतविधौविधेयंयत्तत्वस्फुरतिममनाद्यापिहृदये । इतिशङ्कराभिधः ॥

विशीर्णपर्ण: । पुं॰ निम्बवृक्षे ॥

विशीर्णवाक् । त्रि॰ स्खलितवचने ॥

विशुद्धम् न॰ । अज्ञानतत्कार्यमलरहितत्वान्निष्प्रपञ्चवेदान्तप्रसिद्धेब्रह्मणिषट्चक्रान्तर्गतपञ्चमचक्रे कण्ठस्थे । विशुद्धि तनुतेयस्माज्जीवस्यहंसलोकनात् । विशुद्धपद्ममाख्यातमाकाशाख्य महाद्भुतम ॥ जीवस्यहंसस्यपरमात्मनोवलोकनाज्जीवयस्माद्विशुद्धं तनुते॰ ततोविशुद्धमित्यन्वय ॥ त्रि॰ उज्ज्वले । विमले । शुद्धे ॥ केवले ॥ निभृते ॥ सत्ये ॥

विशेषेणाशुद्धे ॥ विषयोपराग शून्ये ॥

विशुद्धविज्ञानम् । न० कार्यकारणोपाधिविनिर्मुक्ते ब्रह्मणि ॥

विशुद्धात्मा । त्रि० निर्मलाऽन्तःकरणे ॥ विशुद्धो रजस्तमोभ्यामकलुषितआत्माऽन्तःकरणरूपसत्त्वं यस्य सः ॥

विशुद्धिः । स्त्री० समे । शोधने ॥ सर्वकर्मक्षयादेयाविशुद्धिस्सन्दतारथाः ॥

विशृङ्खलः । त्रि० शृङ्खलारहिते । अबद्धे ॥ अप्रतिहते ॥ विगताशृङ्खलायस्य ॥

विशेष. । पु० तिलके ॥ प्रभेदे ॥ अतिशये ॥ प्रकर्षे । इतरव्यावर्त्तके असाधारणधर्मे ॥ सप्तपदार्थान्तर्गतपदार्थभेदे ॥ विशेष निरूपयति । अन्त्योनित्यद्रव्यवृत्तिर्विशेषः परिकीर्त्तितइति । अन्तेअवसानेवर्त्तते० इतिअन्त्य । यदपेक्षयाविशेषोनास्तीत्यर्थ. । घटपटादीनांत्र्यणुकपर्यन्तानांतत्तदवयवभेदात्परस्परभेदः । परमाणूनाभेदकोविशेषएव० सतुस्वतएवव्यावृत्तः तेनतत्रविशेषान्तरापेक्षानास्तीत्यर्थः ॥ इतिमुक्तावली ॥ पञ्चतन्मात्रेभ्योयथासङ्ख्यमाकाशादीनि यानिपञ्चभूतानि । एतेस्मृताविशेषाः कुतः शान्ताघोरास्चमूढाश्चेतिसाङ्ख्याः ॥ अलङ्कारप्रभेदे ॥ यथा । विशेषः ख्यातमाधार विनाप्याधेयवर्णनम् । गतेसूर्य्येपिदीपस्थास्तमश्छिन्दन्तितत्कराः ॥ १ ॥ विशेषः सोपियद्येकं वस्त्वनेकत्र वर्त्तते । अन्तर्बहिः पुरः पश्चात् सर्वदिक्ष्वपिसैवमे २ ॥ किञ्चिदारभमाणोऽशक्यवस्त्वन्तरकृतिश्चसः । त्वांपश्यतामयालब्धं कल्पवृक्षनिरीक्षणम ॥ ३ ॥ विशिष्यते । शि० कर्म्मविशेषणे । घञ् ॥ त्रि० शेषशून्ये ॥

विशेषकम् । न० तमालपत्रे । ललाटकृततिलके । अयाणांस्त्रीकानामन्वये ॥ पुं० तिलकवृक्षे ॥ पुं० न० तिलकविशेषे ॥ त्रि० विशेषयितरि । विशेषाधायके० प्रभेदे ॥ विशिनष्टि । शिष्ऌ० । ण्वुल् ॥

विशेषकच्छेद्यम् । न० चतुःषष्टिकलान्तर्गतपष्ठकलायाम् ॥ सातुतिलकपुनामाविच्छेदरचनेतिशैवतन्त्रम ॥

विशेषगुणः । पुं० बुद्ध्यादिषट्के ॥ रूपादिचतुष्टये ॥ स्नेहे ॥ स्वाभाविकद्रवत्त्वे ॥ अदृष्टे ॥ भावनायाम् ॥ शब्दे ॥ इतिभाषापरिच्छेद ॥

विशेषज्ञः । त्रि० सारविदि ॥

विश्रुत. । त्रि० ख्याते । प्रसिद्धे ॥ व्यश्राबि । श्रु० । क्त ॥ ज्ञाते ॥ हृष्टे ॥ विश्रिषिणश्रुत ॥

विश्रुतात्मा । पु० विष्णौ ॥ अनाद्यविद्यावशान्मनुष्योऽहमास्मयोऽहकर्ताऽहमित्यन्नतात्मनाप्रतीयमानोऽप्यन्नतजवत्. स्वात्मक्रियोदेशादिषु । विशिष्टवेलक्षण्ये नवेदान्तवाक्यैः सत्यज्ञानादिलक्षणः सन् श्रुत श्रवणादिनाऽवगतयात्मा यतो विशेषेणश्रुतत्वाद्विश्रुतात्मा । सचचेतस्त्वं चत्रज्ञापिमाविद्धीतिभगवद्वचनात् ॥ ब्रह्मविद्रिः । विशेषेणश्रुतमात्मायेन । ज्ञानीत्वात्मैवमेमतमितिभगवद्वचनादस्यविष्णुरूपत्व सुप्रसिद्धमेव ॥

विश्रुति । स्त्री० कीर्त्तौ ॥ विख्यातौ ॥

विश्लथ: । त्रि० शिथिले ॥

विश्लिष्ट: । त्रि० शिथिले ॥

विश्लेष' । पु० विधुरे ॥ वियोगे विभागे ॥

विश्व' । पु० विश्वरूपभगवति ॥ व्यष्टयुपहितचैतन्ये व्यष्टिस्थूलशरीरोपहितस्य० विश्वशब्दवाच्यत्वेहेतु. सूक्ष्मशरीरमपरित्यज्यस्थूलशरीरादिप्रविष्टत्वादिति । सूक्ष्मशरीरंकारणशरीरम् ० तदपरित्यज्य० स्थूलशरीरादौ० तदपेक्षयास्थूलशरीरलिङ्गशरीरतदादियं स्वपरमस्थूलशरीरस्य तितद्गुणसविद्यानीवहुयोहि । तस्मिन् प्रविष्टत्वात् । तथाहि । जीवस्यचयउपाधय सुषुप्त्यादौ बुद्ध्यादिसंस्कारोपरञ्जितमज्ञानमात्रमुपाधि । स्वप्ने जाग्रद्वासनामयलिङ्गशरीरमुपाधि । जाग्रदवस्थायान्तु सूक्ष्मशरीरसहिष्टस्थूलशरीरमुपाधि । तथाचपूर्वं पूर्वोपाधिविशिष्टस्यैवोत्तरोपाधिप्रवेशात्सर्वशरीरप्रविष्टत्वेनैवस्थूलभोगायतनाभिमानिनोविश्वइतिसंज्ञा ॥ यद्वा । सूक्ष्मशरीरलिङ्गशरीरतदपरित्यज्य० स्थूलशरीरंविराट व्यष्टितदादियोसांचत्तुरादिस्तोना० तत्तद्विषयाकारोवाक्षतत् प्रविष्टत्वादितिहेतुयोजमाविश्वशरीरवत्तित्वाद्विश्व. ॥ गणदेवताविशेषे ॥ तेयथा ॥ क्रतुर्दक्षोवसुसत्यः काल कामोधृति' कुरु: । पुरूरवामाद्रवाश्चविश्वेदेवादशस्मृता: ॥ वृष्टिश्राद्धे क्रतुर्दक्ष: स सत्योनान्दीमुखेवसु: । नैमित्तिकेकालकामौकाम्ये चधुरिलोचनौ ॥ पुरूरवोमाद्रवाश्चपार्वणेसमुदाहृतौ ॥ तेतु० धर्मादृक्षकन्याविश्वायांजाता' ॥ विशति० कर्म क्विति विश्व. । विशप्रवेशने । अशूप्रुषिलटिकणिखटिविशिभ्य :

क्षितिक्षन् । ब्रह्मणि । विशन्ति सर्वाणिभूतान्यस्मिन ॰तत् । चनुप्र वेशश्रुत्या॰विशतिसर्वमितिवा ॥ पञ्चीकृतपञ्चमहाभूततत्कार्यात्म कवैराजशरीरे । भुवने । जगति । सर्वस्मिन्प्रपञ्चजाले । विशतिस्वका रणमितिनिरुक्तेः । अस्यकारणस्य रूपादिविषयेतर्कजालनकर्त्तव्यमा यामयत्वादित्यत्रकिमिदंकिमस्यरू पकथमिदमभूदमुष्यकोहेतु । इति नकदापिविचिन्त्यचिन्त्य मायेतिधी मताविश्वम् ॥ दन्तिनिदारुविकारे दारुतिरोभवतिसोपितत्रैव । जग तितथापरमात्मापरमात्मन्यपिजग त्तिरोधत्ते ॥ ८४ ॥ इति । अपि च । मूलोच्छेदविनाक्वापिप्ररोह न्तिपुन पुन. । यथालतास्तथावि श्वमज्ञानप्रशमंविना । अपिचाहुः । विश्वदर्पणदृश्यमाननगरीतुल्य निजान्तर्गतपश्यन्नात्मनिमाययाबहि रिवोद्भूतंयथानिद्रया । यः साक्षा त्कुरुतेप्रबोधसमयेस्वात्मानमेवाद्व यतस्मैश्रीगुरुमूर्त्तयेनमइदंश्रीदक्षि णामूर्त्तये ॥ इति ॥ अपिचाहुर्गौड पादाचार्या । स्वप्नमायेयथादृष्टे ग न्धर्वनगरयथा । तथाविश्वमिदंदृष्ट वेदान्तेषुविचक्षणैरिति ॥ नागरे। शुण्ठ्याम् । बोले ॥ त्रयोदशाङ्के ॥ वि॰अखिले । कृत्स्ने ॥ विशतिस्व

कारणम् ॥ विश॰। वाः। रिक्वन् । अनन्ते ॥ विश्वशत सप्तसप्तसर्वमथ यथाचक्रमितिभारतम् ॥ सर्वनाम सञ्ज्ञोयम् ॥ आधुनिकसञ्ज्ञाखेनसर्व नामत्वपर्युदासात् ॥

विश्वकद्रु । पुं॰ आखेटशुनि । मृगा याकुशलकुक्कुरे ॥ ध्वनौ । ध्वाणे ॥ वि॰खले । पिशुने ॥ विश्वकसर्वंद्र वति । द्रुगतौ । मितद्रुवदित्वात् डु. ॥ यद्वा । विश्व कन्दते । कदि आह्वानादौ । अचादि ॥

विश्वकर्मजा । स्त्री॰ विश्वकर्मसुतायाम् ॥

विश्वकर्मा । पुं॰ सहस्रांशौ । सूर्ये ॥ मुनिविशेषे ॥ देवशिल्पिनि । त्वष्ट रि । देववर्द्धकौ ॥ हौप्रोक्तौविश्वक र्माणोमयस्त्वष्टाचयोगवित् ॥ विश्व कर्माऽस्माष्टकवेति ॥

विश्वकर्मसुता । स्त्री॰ सूर्यभार्य्याया- म् । सञ्ज्ञायाम् ॥

विश्वका । स्त्री॰ गङ्गाचिल्लाम् ॥

विश्वकृत् । पुं॰ देवशिल्पिनि । विश्व कर्मणि ॥ ब्रह्मणि । परमेष्ठिनि ॥ विश्वकरोति । डुकृञ्॰ । क्विप् । तुक् ॥

विश्वकेतु । पुं॰ कामे । मदने । वि श्वस्मिन्॰विश्वव्यापीकेतुर्ध्वजोति रस्य ॥ अनिरुद्धे ।

विश्वग : । पुं॰ ब्रह्मणि ॥

विश्वगन्ध । पुं॰ पलाण्डौ । न॰बो

लि ॥

विश्वगन्धा । स्त्री० भूमौ ॥ क्षितौ ॥ विश्वस्मिन्गन्धोऽस्याः ॥

विश्वग्रन्थिः । स्त्री० हंसपद्याम् ।

विश्वचक्रम् । न० महादानविशेषे ॥

विश्वचक्रात्मा । पुं० विष्णौ ॥

विश्वजन्य । पुं० सर्वसाधारणेवेश्यादौ । रामजनी०इ०भा०प्र० ॥

विश्वजनीन । त्रि० सर्वजनहिते ॥ विश्वस्मासौजनश्च०तस्मै हितम् । पात्मविश्वजनभोगोत्तरपदात् ख ॥

विश्वजनीयः । त्रि० विश्वजनहिते ॥ विश्वस्यजनः सर्वसाधारणोवेश्यादि । विश्वोजनोऽस्येति विग्रहेपि० सएवाश्यपदार्थः । तस्मै हितम् । कर्मधारयादेवेष्यतइतीष्टेरवनख : किन्तु छएव ॥ विश्वांजनायहितोवा ॥

विश्वजित् । पुं० सर्वस्वदक्षिणे यज्ञविशेषे । सर्वमेधे ॥ त्रि० सर्वजेतरि ॥ विश्वंजयति । जि० क्विप् । क्विपि तुक् ॥

विश्वत । अ० सर्वतइत्यर्थे । विश्वस्मात् । पञ्चम्यास्तसिल् ॥

विश्वतोमुख : । त्रि० सर्वतोमुखे ॥ विश्वतोमुखान्यस्य ॥

विश्वदेव : । पुं० गणदेवताविशेषे ॥ यथा । विश्वदेवौक्रतुदक्षौसर्वास्विष्टिषुकीर्तितौ । नित्यनान्दीमुखश्राद्धे वसुसत्यौचपैतृके ॥ नवान्नालम्भनेदेवौकामकालौसदैवहि । अपि कन्यागतेसूर्यश्राद्धेचध्वनिरोचकौ ॥ पुरूरवामाद्रवाश्चविश्वदेवौचपार्वणिकौ० वह्निपु० ॥ चक्षुरादिषुप्राणेषु ॥ देवसङ्घे ॥ कृष्णगवेधुकायाम ॥

विश्वदेवा । स्त्री० कृष्णगवेधुकायाम् ॥ गोरक्षचाकुलिया०इ०गो०दे०भा०प्र० ॥ नागबलायाम् ॥ रक्तपुष्पदण्डोत्पले ॥

विश्वधायी : । त्रि० विश्वस्यधारके ॥ विश्वदधाति । दुधाञ्० । वहिहाधाञ्भ्यश्छन्दसीत्यसुन्०णित् । आतोयुक् ॥ वैदिकोयम् ॥

विश्वधृक् । पुं० श्रीपतौ ॥ विश्वधृष्णोतिमानेश्वर्यादिभिर्ब्रह्मादीन् वाऽभिभवति । ञिधृषा० । क्विप् । कुत्वात्पूर्वं जश्त्वेनडः । गः । कः ॥

विश्वनाथ : । पुं० विश्वेश्वरे । शिवे ॥ विश्वेषांनाथः ॥

विश्वनाथनगरी । स्त्री० काश्याम् ॥ यत्रदेहपतनेनदेहिनांमुक्तिरेवभवतीतिनिश्चितम् । पूर्वपुण्यनिचयेन लभ्यतेविश्वनाथनगरीगरीयसी ॥

विश्वप । पुं० अग्नौ ॥ विश्वपाति । पा० । आतोनुपसर्गेकः ॥

विश्वपा : । पुं० अग्नौ ॥ विधौ ॥ रवौ ॥ प्रजापतौ ॥ विश्वंपा-

ति । पा० । आतोनुपसर्गइतिके प्राप्ते०बाहुलकादन्यत्रापीतिवा०आतोमनिन्क्वनिप्वनिपश्चेतिचेनविच् ॥ देवे ॥

विश्वपा । पुं० वह्नौ ॥ चन्द्रे ॥ सूर्ये ॥ समीरणे ॥ इत्यादौ ॥ विश्वंपाति । पारक्षणे । ग्रुभ्रुघन्निति साधुः ॥

विश्ववोध: । पुं० धर्मकाये । बुद्धे ॥

विश्वभुक् । पुं० विष्णौ ॥ विश्वं कृत्स्नं जगत् भुङ्क्ते स हरतिप्रलयकालेइति०भुनक्तिपालयतिस्थितिकालेइतिवाभुजे परिपालनाभ्यवहारणयो: . क्विप् ॥

विश्वभू । पुं० बुद्धप्रभेदे ॥

विश्वभेषजम् । न० शुण्ठ्याम् ॥ विश्वस्यदोषस्यभेषजम् ॥

विश्वभोजा: । पुं० इन्द्रे ॥ विश्वं भुङ्क्तेभुनक्तिवा । भुज० । विदिभुजिभ्यांविश्वे०इत्यसिप्रत्यय: ॥

विश्वमदा । स्त्री० अग्नेर्जिह्वाविशेषे ॥

विश्वम्भर: । पुं० अच्युते । विष्णौ ॥ विडौजसि । शक्रे ॥ विश्वं बिभर्ति । डुभृञ् । सं ज्ञायाभृतॄवृजिधारिसहितपिदमइतिखच् । अरुर्द्विषदिति मुम् ॥ अग्नौ ॥ विश्वस्यभरणाद्विश्वम्भरो

ऽग्निरितिभाष्यकारा: ॥ विश्वम्भरा०ह०भा०प्राणिविशेषे ॥

विश्वम्भरा । स्त्री० धरायाम् । स्थिरायाम् । पृथिव्याम् ॥ विश्वम्भरातद्धरणाच्चानन्तानन्तरूपत । इतिपुराणम् ॥ विश्वंबिभर्ति० डुभृञ्धारणपोषणयो: ।सञ्ज्ञायामित्यादिनाखच् । मुम् । टाप् ।

विश्वयोनि । पुं० भगवति ॥ विश्वस्ययोनि: कारणम्०निमित्तोपादानात्मकम् ॥

विश्वरूप: । पुं० विराजि । विष्णौ ॥ आदित्ये । सूर्ये ॥ विश्वानिबहूनिरूपाण्यस्य ॥विश्वानिनानाविधानि० रूपाणिश्वेतपीतादिगुणात्मकानियस्य ॥ मणिविशेषे ॥ सवर्णनानारूपोऽवभासते० उपाधिसन्निधानात्०नश्वरोनैकरूप.॥ न० अगुरुणि ॥

विश्वरूपकम् । न० अगुरुणि ॥

विश्वरेता: । पुं० ब्रह्मणिविधातरि ॥ विश्वस्यरेत: कारणम् ॥ विश्वं सर्वंकार्यंत्वेनाभिमतरेता कार्यंयस्यसविश्वरेता . परमेश्वर ॥

विश्वरोचन . । पुं० नाडीचशाके ।

विश्ववेदा: । पुं० अग्नौ ॥ सर्वज्ञे ॥ विश्वं वेत्ति० विदन्तिवा । विद० । विदिभुजिभ्यांविश्वइति० असिप्रत्यय . ॥

विश्वसनम् । न॰ मुनिविश्रामदेशे ॥ मुनिविश्रामदेशोयस्तत्तु विश्वसनस्मृतमितिवचनात् ।

विश्वसहा । स्त्री॰ वह्निजिह्वाविशेषे ।

विश्वसारम् । न॰ तन्त्रविशेषे ॥

विश्वसारकम् । न॰ विटरवत्त्वे । फणिमनसा॰ ष्ट॰ गौ॰ भा॰ । नागयूहर॰ ष्ट॰ भा॰ प्र॰ ॥

विश्वसितः । त्रि॰ विश्वस्ते । कृतविश्वासे ॥

विश्वसृट्॰ड् । पुं॰ विधौ । ब्रह्मणि ॥ विश्वं सृजति । सृज॰ । क्विप् । क्विन्प्रत्ययस्येतिकुत्व न॰ रज्जुसृड्भ्यामितिभाष्यप्रयोगात् । यद्यासृजियज्यो . पदान्ते षत्वविधेः कुत्वापवादत्वात् ॥

विश्वस्त । त्रि॰ जातविश्वासे । अशङ्किते ॥

विश्वस्ता । स्त्री॰ विधवायाम् ॥ विश्वसिति । श्वसप्राणने । गत्यर्थेतिक्त । आगमशास्त्रस्यानित्यत्वान्नेट् ॥

विश्वस्या । स्त्री॰ शतावर्याम् ॥

विश्वा । स्त्री॰ अतिविषायाम् ॥ शुण्ठ्याम् । शतावर्याम् ॥ विशति । विश॰ । अशूप्रुषीतिक्वन् । टाप् ॥ पिप्पल्याम् ॥

विश्वाकषाय । पु॰ शुण्ठीक्वाथे ॥

विश्वाची । स्त्री॰ अप्सरोविशेषे ॥

विश्वात्मा । पुं॰ परमेश्वरे । विश्व आत्मनियस्य ॥ प्रतीचि ॥ विश्वस्मिन्पञ्चीकृतपञ्चमहाभूततत्कार्यात्मकेस्थूलजगतिवैराजशरीरे॰ आगरितेच॰ आत्मा अहंममेत्यभिमानोऽस्य । विश्वस्यस्थावरजङ्गमात्मकस्यप्रोणिजातस्यात्माप्रत्यगूपो वा ॥

विश्वामित्र । पुं॰ ब्रह्मर्षिविशेषे । गाधिजे । विश्वकुयाजिनि । कौशिके ॥ विश्वेषांमित्रः । विश्वत्रयेणायोमैत्रीकर्तुमिच्छतिधर्मतः । विश्वामित्रः सद्गतिभागवतेऽर्थः ॥ आत्मनि ॥ विश्वस्यमित्रंनिरुपाधिप्रेमगोचरतयाप्रेयान् । आत्मानमेवप्रियमुपासीतेतिश्रुतेः ॥ मित्रे चर्षाविति विश्वशब्दस्यदीर्घः ॥ त्रि॰ सकलशात्रवे ॥ विश्वेषाम मित्रः ॥

विश्वामित्रतीर्थम् । न॰ तीर्थविशेषे ।

विश्वामित्रप्रिय । पुं॰ नारिकेले ॥

विश्वा र ट् । पु॰ विश्वस्मिन्राजमाने ॥

विश्वावसुः । पुं॰ गन्धर्वविशेषे ॥ विश्वं वसु यस्य स । विश्वस्यवसुराटोरितिपूर्वपदान्तस्यदीर्घः ॥ वत्सरविशेषे ॥ तत्फलं यथा । सर्वत्रजायतेचात्रमसवं शस्यमहार्घता । विश्वावसौवरारोहेकार्पासस्यमहार्घता ॥ स्त्री॰ रात्रौ ॥

विश्वास । पुं॰ विश्रम्भे । दृढमित्थमेवनान्यथेतिनिश्चये ॥ विश्वसनम् । श्वस॰ । घञ् ॥ लोभप्रमादविश्वासे पुरुषोनश्यतित्रिभि । तस्माल्लोभोनकर्त्तव्य . प्रमादोनचविश्वसेत् ॥ साश्रीयानमदकुर्यात्समुखोदृष्ट्वायोग्निमत । तन्निमयस्य विश्वास ' पुरुष सजितेन्द्रिय . ॥ अपिच। सौहार्द्दव्यवहाराद्यप्रवृत्तिप्रकृतिस्थाम् । सहवासेनतत्त्वश्चिद्दित्वाविश्वसितुंनर . ॥

विश्वास्य । त्रि॰ श्रद्धेयवचने ॥

विश्वेदेवा . । पुं॰ अग्नौ ॥ श्राद्धदेवे ॥ क्रतुर्दक्षोवसु सत्य काम काल स्तथाध्वनि । रोचकश्चाद्रवाश्चैव तथाचान्य : पुरूरवा ' ॥ विश्वेदेवाभवन्त्येतेदशसर्वत्रपूजिता . ॥

विश्वेश । पुं॰ परमेश्वरे ॥ विश्वेषां सर्वेषामीशोनियन्ता ॥

विश्वेशा । स्त्री॰ विमलेश्वरेवसन्मातादेव्याम् ॥

विश्वेश्वर । पुं॰ काशिस्थेशिवे। काशीनाथेलिङ्गविशेषे ॥ विश्वेषामीश्वर ॥ इष्टोविश्वेश्वरोदेवीत्वातव्यामणिकर्णिका ॥

विश्वौषधम् । न॰ शुण्ठ्याम् ॥ विश्वेषामौषधम् । विश्वस्यतदौषधञ्चेतिवा ॥

विट् । स्त्री॰ विष्ठायाम् ॥ वेवेष्टि । विषलृव्याप्तौ । क्विप् । नश्त्वंषत्वं ॥ दुहितरि ॥ विट्पतिशब्दनिर्द्देशात् ॥ व्यापने ॥

विषम् । न॰ जले । तोये ॥ वत्सनाभाभिधे ॥ बोले ॥ सामान्यविषे ॥ पुं॰ न॰ क्ष्वेडे । गरले ॥ तद्भेदायथा । पुंसिक्लीवेचकाकोलकालकूटहलाहला : । सौराष्ट्रिक : शौक्लिकेयोब्रह्मपुत्र ' प्रदीपन ॥ हारदोवत्सनाभश्चविषभेदाअमीनव ॥ अपिच । विषतुगरलन्त्वेकस्तस्यभेदाननुदाहरेत् । वत्सनाभ ' सहारिद्र सक्तुकश्चप्रदीपन ॥ सौराष्ट्रिक शृङ्गकश्चकालकूटस्तथैवच । हालाहलोब्रह्मपुत्रोविषभेदाअमीनव ॥ ब्राह्मण पाण्डरस्तेषुक्षत्रियोलोहितप्रभ । वैश्य . पीतोऽसित . शूद्रोविषउक्तश्चतुर्विध ॥ रसायनेविषविप्रं क्षत्रियदेहपुष्टये । वैश्यकुष्ठविनाशायशूद्र दद्यात्वधायहि ॥ अथास्यगुणा । विष प्राणहरप्रोक्त व्यवायिचविकासिच । आग्नेयवातकफहृद्योगवाहिमदावहम् ॥ व्यवायि॰सकलकायगुणव्यापनपूर्वकपाकागमनशीलम् । विकासि॰ओज . शोषणपूर्वकसन्धिबन्धशिथिलीकरणशीलम् । आग्नेयम्॰अधिकाग्न्यंशम् । योगवाहि ॰स सर्गगुणग्राहकम् । मदावहम्॰ तमोगुणाधिक्येनबुद्धिविध्वंसकम् ॥

तदेवयुक्तियुक्तन्तुप्राणदायिरसाय नम् । योगवाहिपरवातश्लेष्मजित् सन्निपातहृत् ॥ योगवाहित्रिदोषघ्न बृंहण वीर्यवर्द्धनम् । येदुर्गुणाविषेऽशुद्धेतेस्युर्हीनाविशोधनात् ॥ तस्माद्विषप्रयोगेषुशोधयित्वाप्रयोजयेत् । अथशोधनविधि । गोमूत्रे त्रिदिनस्थाप्यविषतेनविशुद्धयति । रक्तसर्षपतैलाक्तंतथाधार्यंस्ववाससि ॥ येगुणागरलेप्रोक्तातेस्युर्हीनाविशोधनात । तस्माद्विषप्रयोगेषुशोधयित्वाप्रयोजयेत् ॥ स्थावरजङ्गमञ्चैव द्विविध विषमुच्यते । दृशाधिष्ठानमाद्यन्तु॰द्वितीयषोडशाश्रयम् ॥ विशेषोभावप्रकाशेद्रष्टव्य ॥ वैवेष्टिकायम् । त्रिष्लृ॰विषविप्रयोगेशा । छृगुपधेतिक . ॥ ह्राजाह्वोनेव विष विष रमापरजनाव्यश्ययमेभमन्वते । योगेनजागर्त्तिनिपीयतद्विष ' स्मरन्रमांमुह्यतिनिद्रयाहरि . ॥

विषकण्टकिनी । स्त्री॰ वन्ध्याकर्कोटक्याम् ॥

विषकन्द : । प ॰ नीलकन्दे ॥

विषक्त . । त्रि॰ अतिश्लिष्टे । लग्ने ॥ आश्रिते ॥

विषघा । स्त्री॰ गुडूच्याम् ॥

विषघाती । प ॰ शिरीषवृक्षे ॥ विषनाशके ॥ त्रि॰ ॥

विषघ्न ' । पुं॰ शिरीषद्रुमे ॥ यवासे ॥ विभीतके ॥ चम्पकवृक्षे ॥ त्रि॰ विषनाशके ॥ विषहन्ति । हन॰ । हन्तेरमनुष्यकर्तृकेपुचेतिठक् ॥ विषघ्नौषधानिमात्स्ये १८२ ऽध्यायेद्रष्टव्यानि ॥

विषघ्नधूप ' । पुं॰ धूपविशेषे ॥ तथा । सक्तु सर्जरसोपेत ' सर्षपाएलवालुकै । सुवर्णास्फरतरो : कुसुमैरर्जुनस्यतु ॥ धूपोवासगृहेहन्तिविषस्थावरजङ्गमम् । नतत्रकीटा : सविषानदर्दुरसरीसृपा : । नकृत्याकर्मणस्तत्रधूपोययचदह्यते ॥

विषघ्ना । स्त्री॰ चिर्भटायाम् ॥ गुडूच्याम् ॥

विषघ्नी । स्त्री॰ हिलमोचिकायाम् ॥ इन्द्रवारुण्याम् ॥ वनबर्बरिकायाम् ॥ स्वल्पफलायाम् ॥ भूम्यामलक्याम् ॥ रक्तपुनर्नवायाम् ॥ हरिद्रायाम् ॥ वृश्चिकाल्याम् ॥ महावारुणे ॥ हलुषायाम् ॥

विषक्ती । त्रि॰ मिथ श्लिष्टे ॥

विषजिह्व . । पुं॰ देवताडवृक्षे ॥

विषज्वर : । पु॰ महिषे ॥ विषजज्वरे ॥

विषतुण्डम । न॰ मृणाले ॥

विषण्ण : । त्रि॰ विषादप्राप्ते ॥ भग्नोत्साहे ॥ दु : खिते ॥ विषीदतिस्म । षद्लृ॰ । गत्यर्थेतिक्त : । रदा

ष्यामितिनत्वम् ॥
विषलता । स्त्री॰ जडतायाम् ॥
विषतिन्दुः । पुं॰ कुपीलौ ॥ कारस्क रहक्षे ॥
विषदम् । न॰ पुष्पकासीसे ॥ त्रि॰ वि षदातरि ॥ यथा । विषद . ष्याव शुष्काखोविलद्योवीक्ष्यतेद्दिश । खेदवेपथुर्मांसक्षोभीत स्खलति जृम्भते ॥ विषद्दाति । कुदाज॰। षातद्भतिकः ॥
विषदंष्ट्रा । स्त्री॰ सर्पकङ्काल्याम् ॥
विषदन्तक । पुं॰ सर्पे ॥
विषदर्शनमृत्युक । पुं॰ चकोरपक्षि णि ॥ जीवञ्जीवस्तुगुन्द्रालीविषदर्श नमृत्युकइतिहेमचन्द्रः ॥
विषद्रुम : । पुं॰ कारस्करहक्षे ॥
विषधरः । पुं॰ आशीविषे । सर्पे ॥ विषस्यधर : ॥
विषधर्मा । पुं॰ कुलक्षयायाम् । शू काशिम्ब्याम् ॥
विषधाची । स्त्री॰ विषघ्न्याम् ॥
विषनाशन . । पुं॰ शिरीषहक्षे ॥ त्रि॰ विषनाशके ॥
विषनाशिनी । स्त्री॰ सर्पकङ्काल्या म् ॥ नाकुल्याम् ॥
विषनुत् । पुं॰ श्योनाकहक्षे ॥
विषपुष्प : । पुं॰ मदनद्रुमे । मयनफलद्रु॰ प्र॰ ॥ न॰ नीलपद्मे विषयुक्तपुष्पे ॥
विषपुष्पक . । पुं॰ मदनहक्षे ॥ ज्वरे ॥ विषपुष्पभक्षणजन्यरोगे ॥ विषपु ष्पैर्जनित : । कालप्रयोजनाद्रोगद्भ तिकन् ॥
विषभक्षणम् । न॰ विषखादने ॥ च चमुहूर्त्तमाह । चराचरेन्द्रद्भुलघूडु षिष्वाविषःमनिभानुकवीन्दुभौमान् । यईदृतेऽनेकविधानिताबत्सका लकूटानिसदेतिविज्ञा ॥
विषभिषक् । पुं॰ विषवैद्ये ॥
विषम . । पुं॰ अलङ्कारविशेषे ॥ यथा । क्वचिद्यदतिवैधर्म्यान्नश्लेषोघटना मियात् । कर्त्तुः क्रियाफलावाप्ति र्नैवानर्थश्चयद्भवेत् ॥ गुणक्रियाभ्यां कार्यस्यकारणस्यगुणक्रिये । क्रमेण चविरुद्धेयत्सएषविषमोमत ॥ द्व योरत्यन्तविलक्षणतयो॰ यदनुपपद्य मानत्वमेवयोग : प्रतीयते॰ यञ्च कि ञ्चिदारभमाण : कर्त्ता॰ क्रियाया प्रणाशान्नकेवलमभीष्टं त फलनल भेत॰ यावदप्रार्थितमप्यनर्थं विषयमा सादयेत्॰ तथासत्यपिकार्यस्यकारण रूपाऽनुकारेयत्तयोर्गुणौक्रियेचप रस्परविरुद्धतांव्रजत : ॰ससमविष यंयात्मा॰ चतूरूपोविषम : । क्रमेणो दाहरणम् । शिरीषादपिमृद्वङ्गीके यमायतलोचना । अयक्वचकुकूला ग्निकर्कशोमदनानल : ॥ सिद्धिका मुतसन्नस्त शश : शीतांशुमाश्रि त : । अयसेसाश्रयत्पतमन्य . सि

विषमस्थः । त्रि० दरिद्रे ॥ विषमेतिष्ठति । छो० । सुपिस्थइतिकः ॥ उपप्लवदेशस्थे ॥

विषमाक्षः । पुं० शिवे ॥ विषमाण्यक्षीणियस्यस ॥

विषमायुध । पुं० कामे । पञ्चशरे ॥ विषमाण्यायुधानियस्य ॥

विषमाशनम् । न० अकालेबहुवाल्पं वाभुक्तन्तुविषमाशनमितिलक्षिते ॥ बहुस्तोकमकालेवाभुक्त तद्विषमाशनम् ॥

विषमित । त्रि० विषमीकृते

विषमीयम् । त्रि० विषमदेशभवे ॥ गहादिभ्यश्छेतिछ ॥

विषमुष्टि । पुं० महानिम्बे ॥ क्षुपविशेषे । सुमुष्ट्याम् । रणमुष्टिके ॥ विषमुष्णाति । मुष० । क्विप् ॥

विषमृत्यु । पुं० चकोरे ॥

विषमेषु । कामे ॥ विषमाइषवोयस्यस ॥

विषमोन्नत । त्रि० स्थपुटे ॥

विषय : । पुं० चक्षुरादिग्राह्ये रूपादीन्द्रियार्थे । गोचरे ॥ न्यायमतेक्षित्यप्तेजोवायूनांविषया यथा । तत्र क्षितिर्गन्धहेतुर्नानारूपवतीमता । षड्विधस्तुरसस्तत्रगन्धोपिद्विविधोमत ॥ स्पर्शस्तस्यास्तुविज्ञेयोह्यनुष्णाशीतपाकज:। नित्यानित्याचसा द्वेधा नित्यास्यादणुलक्षणा ॥ अनित्यातुतदन्यास्यात्सैवावयवयोगिनी साचत्रिधाभवेद्देहइन्द्रियविषयस्तथा ॥ योनिजादिर्भवेद्देहइन्द्रियघ्राणलक्षणम् । विषयोद्व्यणुकादिश्च ब्रह्माण्डान्तउदाहृत : ॥ वर्णः शुक्लोरसस्पर्शौजलेमधुरशीतलौ । स्नेहस्तत्रद्रवत्वन्तु सांसिद्धिकमुदाहृतम् ॥ नित्यतादिप्रथमवत्किन्तुदेहमयोनिजम् । इन्द्रियरसनसिन्धुर्हिमादिर्विषयोमत ॥ स्पर्शउष्णस्तेजसस्तुस्याद्रूपशुक्लभास्वरम् । नैमित्तिकद्रवत्वन्तुनित्यतादिचपूर्ववत् ॥ इन्द्रियनयनवह्निस्वर्णादिर्विषयोमत ॥ अपाकजोऽनुष्णाशीत . स्पर्शस्तुपवनेमत । तिर्यग्गमनवानेषज्ञेय : स्पर्शादिलिङ्गक . ॥ पूर्ववन्नित्यताद्युक्त देहव्यापित्वगिन्द्रियम् । प्राणादिस्तुमहावायुपर्यन्तोविषयोमत :॥ विषिण्वन्तिविषयिणमनवधून्ति स्वेनरूपेणनिरूपणीयकुर्वन्ति॰ इतिविषया : । षिञ् बन्धने । पचाद्यच् । परिनिर्वीतिषत्वम् । विषयणमनवा॰ विषिणोतिवा । षिञएरच्॰ पुंसीतिघोवा॰ पचाद्यज्वा ॥ विषस्यविषयाणाञ्च दूरमत्यन्तमन्तरम् । उपभुक्तविषघ्नन्तिविषया स्मरणादपीतिविषयानुसन्धानस्यनिन्दितत्वादिन्द्रियार्थेषु

यदि विधेयेतिसतांमतम् ॥ यथोक्तम् । दोषितोविषय' कृष्णासर्पविषादपि । विषमिहन्तिभोक्तारद्रष्टारश्चक्षुषाप्ययम् ॥ अपिच । विषयविषधराणांदोषदष्ट्रोत्कटानांविषाविषमविसर्पव्यक्तदुष्टेष्टितानाम् । विरमविरमचेतः सन्निधानादमीषाम्सुखकणमपिचेतोः साहसमासमकार्षीः ॥ इति ॥ नियामके यथा । विशब्दोहिविशेषार्थ. सिनोतिर्बन्धउच्यते । विशेषेणसिनोतीतिविषयोऽतोनियामकः ॥ इति ॥ प्रबन्धाद्यनुबन्धचतुष्टयान्तर्गतस्तत्र ॥ यथाजीवब्रह्मैक्यशुद्धचैतन्य'प्रमेयवेदान्तानां विषय ॥ कुरुपञ्चालादिदेशे ॥ जनपदे ॥ अन्यत्ते ॥ शुक्रे ॥ आश्रये । आश्रये ॥ रागसाधने ॥ सर्वमेवहिकार्यमदृष्टाधीनम् यत्कार्ययदृष्टाधीनेतत्तदुपभोगसाक्षात्परम्परयाजनयत्येव॰नहिबीजयोजनाभ्याविनाकश्चिदुत्पत्तिरस्ति॰तेनमशकादिब्रह्माण्डान्तसर्वमेवविषयोभवतीत्यर्थ. । इतिसिद्धान्तमुक्तावली ॥

विषयवित् । पुं॰ वात्स्यायनादिमुनिषु॰ तेचेत्यंकल्पयन्ति॰शब्दादयोविषया भूयोभूयोभुज्यमानास्तत्त्वमिति तदेतत्कल्पनतेषांविभ्रममात्रम् । विषस्यविषयाणाञ्चेतिविष यानुसन्धानस्यनिन्दितत्वात् ॥

विषयाज्ञानम् । न॰ तन्द्रायाम् ॥

विषयायी । पुं॰ राज्ञि ॥ वैषयिकजने ॥ इन्द्रिये ॥ कामदेवे ॥ विषयासक्तपुरुषे ॥

विषयी । पुं॰ नृपतौ ॥ कामदेवे ॥ वैषयिके ॥ ध्वनौ विषयोऽस्यास्ति । अतइनि ॥ देशे ॥ यथ्यादित्वात्निर्वृद्ध्यभाव'षत्वञ्चनिपात्यते ॥ न॰इन्द्रिये ॥ त्रि॰विषयासक्ते ॥ आरोप्यमाणे ॥

विषयोग । पुं॰ तिथिवारयोर्योगविशेषे ॥ यथा । षष्ठीशशाङ्केनवमीचशुक्रेबुधेद्वितीयातपनेचतुर्थी । जीवेष्टमी॰सौरिकुजेक्षिसप्तमीयोगाविषाख्या. कुलनाशकास्यु ॥ बुधवारेभद्रारूपेणसिद्धियोगस्तुसप्तमीवादश्योक्तरितार्थो॰नतुद्वितीयायामिति । अन्यथातक्षस्थ्यादिवाक्यविरोध. स्यादिति ॥

विषरूपा । स्त्री॰ अतिविषायाम् ॥

विषलम् । न॰ विषे ॥

विषलता । स्त्री॰ इन्द्रवारुण्याम् ॥

विषविद्या । स्त्री॰ विषघ्नमन्त्रे ॥

विषवैद्य' । पु॰ अथाप्रसङ्गेगारुडिके । जाङ्गुलिके ॥ विद्यामधीते॰वेत्तिवा । तदधीतेतद्वेदेत्यण् । विषवैद्य' ॥

विषवैरिणी । स्त्री॰ निर्विषायाम् ॥

विषशालूक । पुं० पद्मकन्दे ॥

विषशूक । ) पुं० भङ्गरोलि ॥
विषशृङ्गी । )

विषसूचक : । पुं० चकोरे ॥

विषसृक्का । स्त्री० भृङ्गरोलि ।

विषहन्त्री । स्त्री० अपराजिताया म् ॥ निर्विषायाम् ।

विषहर. । पुं० गरलनाशकौषधादौ ।

विषहरा । ) स्त्री० मनसादेव्याम् ॥
विषहरी )

विषहा । स्त्री० देवदालीलतायाम् ॥

विषा । अ० बुद्धौ ॥ विपूर्वात् स्यतेर्विं षाविहेत्याप्रत्यय . ॥

विषा । स्त्री० अतिविषायाम् ॥ विषा सोष्णाकटुस्तिक्तापाचनीदीपनीह रेत् । कफपित्तातिसारामविषकास वमिक्रमीन् ॥ बुधौ ॥ वेवेष्टि । वि ष ल० । विषप्रयोगोवा । इगुपधेति क . ॥

विषाङ्कुर । पुं० शल्यास्त्रे ॥

विषाणम् । न० पशुशृङ्गे ॥ इभदन्ते ॥ कुष्ठनामौषधे ॥ क्रोडे ॥ व्यक्ति । असभुवि । वानश् असोरलोप. । उपसर्गप्रादुर्भ्यामितिषत्वम् ॥

विषाणिका । स्त्री० मेषशृङ्ग्याम् ॥ सातलायाम् ॥ कर्कटशृङ्ग्या म् । आवर्तक्याम् ॥

विषाणी । पुं० हस्तिनि ॥ शृङ्गि णि । ऋषभनामौषधे ॥ शृङ्गा टके ॥

विषाणी । स्त्री० क्षीरकाकोल्याम् ॥ अजशृङ्ग्याम् ॥ फलस्याजशृङ्गस दृशत्वात् । विषाणमस्त्यस्या । अर्शआद्यच् । गौरादि ॥ ति न्तिड्याम् ॥ ऋषभौषधे ॥ वृश्चि काल्याम् ॥

विषाद । पुं० अवसादे । उपता पे । इष्टविषयोभूतस्वजनविच्छे दाशङ्कानिमित्ते शोकापरपर्यायेचि त्तव्याकुलीभावे ॥ इष्टनाशकृतेम नोभङ्गे ॥ तदुक्तम् । विषादश्चेत तसोभङ्गउपायाभावनाशयोरिति विषदनम् । षद्लृ० । घञ् । मो हे ॥ विषादात्मकस्तमोगुण ॥

विषादनी । स्त्री० पलाशीलतायाम् ।

विषादी । त्रि० सततमसन्तुष्टस्वभा वश्चित्तेनानुशोचनशीले ॥

विषानन । पुं० सर्पे ॥

विषान्तक । पुं० शिवे ॥ त्रि० विषनाशके ।

विषापह । पुं० पाटलौ । मुष्कके ॥

विषापहा । स्त्री० इन्द्रवारुण्याम् ॥ निर्विषायाम् ॥ नागदमन्याम् ॥ अर्कमूलायाम् ॥ सर्पकङ्का लिकायाम् ॥

विषाभावा । स्त्री० निर्विषायाम् ॥

विषायुध । पुं० सर्पे । न० विष युक्तास्त्रे ॥

विषार: । पुं० सर्पे ॥

विषाराति । पुं० कृष्णधत्तूरके ॥

विषारि । पुं० घृतकरञ्जे ॥ महा चञ्चुशाके ॥

विषास्य । पुं० भल्ली ॥ चि० विषयुक्तमुखे ॥

विषास्या । स्त्री० भल्लातकी ॥

विषीदन् । चि० विषादङ्कुर्वति । चतिदुःखिते ॥

विषु । च० नानार्थे ॥ साम्ये ॥ सर्वतोर्थे ॥

विषुण । पुं० विषुवदाख्ये काले । विषुवे ॥ विषुनानाचमस्मिन्निति विष्वग्वि । तान्यस्यसन्ति पामादिषु० विष्वगित्युत्तरलोपश्चाकृतस्येतिगणसूत्रान्नप्रत्ययउत्तरपदलोपश्च । विषुवदाख्यकालस्यहिनानागतानिदिनानिसन्ति० दिनान्तरायान्यूनाधिकभावस्यतन्मूलकत्वात् ॥

विषुवम् । न० समराचिन्दिवेकाले । तुलामेषयोरर्कस्यसङ्क्रमे ॥ विषुसाम्यमस्यास्ति० तुलयामेषेषस इत्येर्थे० वप्रकरणेऽन्येभ्योपीत्युक्तेर्वः ॥

विषुवत् । न० विषुवे ॥ प्रथमेकृत्तिकाभागेयदाभास्वांस्तदाशशी । विशाखानांचतुर्थेंऽशेमुनेतिष्ठत्यसंशयम् ॥ विशाखायांयदासूर्यश्चरत्यंशंतृतीयकम् । तदाचन्द्रं विजानीयात्कृत्तिकाशिरसिस्थितम् ॥ तदैव विषुवाख्योऽयंकालः पुण्योऽभिधीयते । तदादानानिदेयानिदेवेभ्यः प्रयतात्मभिः ॥ इतिविष्णुपुराणम् ॥ विषुसाम्यमस्यास्ति० तुलयामेषेषसत्त्वेत्यर्थेमतुप्प्रत्ययः ॥

विषूचि । स्त्री० नानागतौ ॥ पृथक्फले ॥

विषूचिका । स्त्री० प्रवाहिकायाम् ॥

विषूचीन । चि० सर्वतःप्रसृते ॥

विषौषधी । स्त्री० नागदन्त्याम् ॥

विष्क । पुं० विंशतिवर्षीयेगजे ॥

विष्कम्भ: । पुं० योगविशेषे ॥ तज्जातस्यफलंयथा । विष्कम्भयोगेयदिजन्मकालेकार्येस्वतन्त्रोमनुजस्तदानीम् । सुहृत्कलत्रात्मजसौख्ययुक्तःश्रेष्ठस्वनिर्माणविधौसमर्थः । विस्तारे ॥ प्रतिबन्धे । अर्गलायाम् । आगल० इतिभाषा ॥ योगिनाबन्धभेदे ॥ विष्कभ्नाति । स्कम्भुःसौत्रोरोधनार्थः । कर्मण्यण् । वेःस्कभ्नातेरितिषत्वम् वृत्ते ॥

विष्कम्भक । पुं० पूर्वनटसङ्क्षेपः पूर्वकृततत्प्रतिपक्षोक्तः एनटप्रवेशे ॥ यथा । वृत्तवर्तिष्यमाणानांकथांशानांनिदर्शकः । संक्षेपार्थस्तुविष्कम्भोमध्यपात्रप्रयोजकः । इति ॥ विष्कम्भकइतिख्यातोहीनपात्रप्रयोजकइति ॥

विष्कम्भशैल '। पुं० मेरोर्दाढ्यार्थं स्थितेषुचतुर्षुपर्वतविशेषेषु ॥ यथा । विष्कम्भशैलाश्चत्वारोमेरोः स्थैर्यायवेधसा । कृताःशैलेन्द्रतय . कृ प्रास्तेषांपूर्वेणमन्दर ' ॥ दक्षिणतोहरिद्राचूर्णाभोयाम्यतोगन्धमादन । प्रतीच्याविपुलोनील सुपार्श्व . सौम्यतोऽरुण : ॥ सहस्रयोजनोच्छ्रायास्तेषुकल्पद्रुमा स्थिता । कदम्बजम्बूअश्वत्थन्यग्रोधौयोत्तरान्तिका ॥

विष्कम्भि । न० अर्गलायाम् ॥ विष्कभ्नाति० कृयाद्वि । स्कम्भु० । पा। वश्यकेणिनि ॥

विष्कल । पुं० ग्राम्यशूकरे ॥ वृ० रा० नि० ॥

विष्किर । पुं० खगे । पक्षिणि ॥ पक्षिविशेषाणांगणे ॥ यथा । वर्तकालावविष्किरकपिञ्जलकतित्तिरा' । कुलिङ्गकुक्कुटाद्याश्चविष्किरा समुदाहृता. ॥ विकीर्य्यभक्षयन्त्येते यस्मात्तस्माद्धिविष्किरा ' ॥ विष्किरामधुरा ' शीता ' कषाया ' कटुपाकिन : । बल्यावृष्यास्त्रिदोषघ्ना' पथ्यास्तेलघव ' स्मृता ' ॥ विकिरति । कृ० । इगुपधेतिक '। विष्किर . शकुनिर्विकिरोवेतिपक्षेसुट् । परिनिविभ्यइतिषत्वम् ॥

विष्ट : । त्रि० प्रविष्टे ॥ सवडे ॥ विशति । विश० । क्त ' ॥

विष्टपम् । न० पुं० विष्टपे । भुवने ॥ विशन्त्यस्मिन्सुकृतिन . । विशप्रवेशने । विटपविष्टपविशिपोलपाइतिविशेरौणादिक . कपन्प्रत्यय । प्रत्ययस्यतुट् । अस्येतिषत्वम् । सूत्रेविष्टपस्थानेपिष्टपइतिपकारादिपाठस्तूज्ज्वलदत्तरीत्योक्तइतिबोध्यम् । नाययुक्त. यत्रब्रध्नस्यविष्टपमित्यादौ० दन्तोष्ठ्यादिपाठस्यदर्शनात्

विष्टब्ध : । त्रि० विधृते ॥

विष्टम्भ . । पुं० प्रतिबन्धे ॥ आमयस्य प्रभेदे । आनाहरोगे ॥ तल्लक्षणन्तु । आमसकृद्वानिचितक्रमेणभूयोविबद्धन्त्रिगुणानिलेन । प्रवर्त्तमानन्यथास्वमेनविकारमानाहमुदाहरन्ति ॥ आममपक्वमाहारसारम्० शकृत्पुरीषवाक्रमेणनिचितसञ्चितम्० भूयोविगुणानिलेनदुष्टवायुनाविबद्धं व्याप्तवेष्टितम्वाययास्वपूर्ववत्प्रवर्तमानम्० एवंविकारमानाहमाहु : ॥ उत्तरदेशगतिप्रतिबन्धे ॥ आक्रमे ॥

विष्टम्भी । त्रि० विष्टम्भरोगजनके ॥ विष्टम्भरोगवति ॥

विष्टर । पुं० विटपिनि । महीरुहे ॥ दर्भमुष्टौ ॥ पीठाद्यासने ॥ आदिनाकुशासनादिग्रह . ॥ समध्ययन्थिदर्भासने ॥ विष्टरलक्षणम् यथा । विष्टरस्तु०सार्द्धहितयवामावर्तवलि

ताघोमुखायाचसद्ध्यातदर्भाः ।
तथाचगृह्यसङ्ग्रह. । ऊर्द्ध्वकेशोभवेद्
ब्रह्मालम्बकेशस्तुविष्टर । दक्षिणा
वर्तकोब्रह्मावामावर्तस्तुविष्टरः ॥
इति ॥ दर्भसङ्ख्यानविहिताविष्टरास्तरणेष्वपीतिच ॥ विस्तीर्यते । स्तृञआच्छादने । वृक्षासनयोर्विष्टरइतिसाधु । विपूर्वात्स्तृञ्
इत्येतस्मात्० ऋदोरप्० इत्यपि०
षत्व निपातनादित्यर्थं ॥

विष्टरश्रवा' । पु० विष्णौ ॥ विष्टरेवृक्षेश्रूयते । असुन् । वृक्षस्याश्वत्थो
भिमत:० अश्वत्थ. सर्ववृक्षाणा
मित्युक्तेः ॥ विष्टरोदर्भमुष्टिर्विश्व
वसोश्रवणावस्थेतिवा ॥

विष्टरा । स्त्री० गुडासिन्याम् ॥

विष्टरुहा । स्त्री० स्वर्णकेतक्याम ॥

विष्टि: । स्त्री० वेतनविनाहठाद्कारी
ह्वनादिक्लेशे । आज्ञाम् । वेठी०
वेठ्० वेगारी० इतिभाषा ॥ ह
ठाद्भृतिक क्लेशोविष्टिराजूक्यी
त्यते ॥ वेतके ॥ कर्मणि ॥ प्रे
षणे ॥ करणान्तरे । भद्रायाम्
॥ अस्याउत्पत्तिमाह । भद्रापुरा
सुरगणैश्वविग्रहोदभूदवामीवदना-
मरासुरे । लाङ्गूलिनीसप्तभुजा चि-
पदतीवराटकाहग्वनघोष्माक्ष्मना
॥ वामीरासभीतद्वदनमुखयस्याः ।
अनोलिविङ्गः० कुत्सितौघोषोघोष
क० कुत्सितकांस्यंतद्वत्स्वन: श
ब्दोयस्याः ॥ जालिप्रविष्टाकुणपांशुकाम्बराऽमरद्विषामग्नजकाननेल
दा । परेतगाधूमनिभावलोस्ततो
वाप्येवसाभूदतिदीर्घविग्रहा ॥ जा
लिसमूहे । अग्नजकानने० पिद्दव
ने । परेतगा० शववाहना ॥ त
स्यास्तदाचानमिरेऽमरारय: कलि
न्दजासीदरधामपद्धतिम् । अवाप
सावर्णपदर्कपद्दिगोवज्रयायुधाम-
न्दवतीमकद्रया ॥ आनमिरे० ज
ग्मु. । वज्रयायुधा० अग्निश
स्त्रा । आनन्दवत० परमसुखयुक्त
स्य ॥ विधेयमेवाऽग्निशिखाग्रता
लुका० फालनसाश्रितवराऽस्तिमङ्गलम् । नरेरत. स्वात्महितोपलब्धिभिस्तदाश्रितस्याश्रितकर्मसिद्धिजम् ॥
श्रितवरा० शाटीशातृकृत: प्राप्ता
वरोयया । अग्निशिखाग्रत:लुका०
वह्निज्वालाग्रवत्तालुकयस्याः ।
स्वाश्रितकर्मसिद्धिजम्० स्वयावि
ष्ट्याश्रितविहितकर्मतस्यसिद्धि-
स्तस्याजातम्० भद्रायाकृतकार्य-
निष्पत्तिजातम् । तदाश्रितम्०
विष्टिवेलाप्राप्तम्० मङ्गलसुखाद्या
दिकनविधेयम् । स्वात्महितोप
लब्धिभि०: स्वात्मनेनिजजीवाय०
हिता० हितकारिणी० उपलब्धि
र्बुद्धि: प्राप्तिर्ज्ञानंवायेषांते: ।

विष्टियोग्यकालमाह । शुक्ले ऽष्टमी पौर्णमास्योः पूर्वार्द्धे विष्टिसम्भवः । एकादशीचतुर्थ्योश्चपरार्द्धे विष्टिरीरिता ॥ दशम्याश्चतृतीयायाः परार्द्धेकृष्णपक्षके । चतुर्दश्याश्चसप्तम्याः पूर्वार्द्धेविष्टिरेवहि ॥ विष्टिस्तुसर्पाकृतिरेव । आननेपञ्चदण्डाः स्युर्वक्त्र स्थानेचतुर्दश । मध्येचाष्टौविजानीयाद्विष्टिपुच्छेत्रयस्मृताः ॥ फलन्तु । आननेदिह नाश' स्वाहच' स्थानेमहद्भयम् । मध्येचमध्यम विद्याद्विष्टिपुच्छेध्रुवं जयः ॥ प्रकारान्तरञ्चापि । मुखेपञ्चगलेत्वेकावक्षस्येकादशस्मृता । नाभौचतस्रः षट् कट्यांतिस्रपुच्छेतुनाडिकाः ॥ फलन्तु । मुखेकार्य्यध्वंस्तिर्भवति॰ मरणंचाथगलके॰ धनंत्वानिर्वक्षस्यथकटितटेबुद्धिविलयः । कलिर्नाडीदेशेविजयमथपुच्छेचजगदु' शरीरभद्राया पृथगितिफलपूर्वमुनयः ॥ मनुवसुमुनितिथियुगदशशिवगुणसङ्ख्यासुतिथिषुपूर्वाद्योः १४ । ८ । ७ । १५ । ४ । १० । ११ । ० ३ । यायातिविष्टिरेषापृष्ठेशुभदापुरस्त्वशुभदा ॥ पूर्वाद्यो॰ पूर्वाद्यादिदिङ्मुखीभवतीत्यर्थः ॥ दिवाद्यविपरीताद्राद्यांविष्टि सर्वंचवर्जयेत् । विष्टिपुच्छेचिदण्डेऽपि शेषेकार्य्येशुभावहम् ॥ वि॰ कर्मकरे ॥

विशतिक्रेशम् । विश॰ क्तिच ॥ यद्वा । विष्णाति । विषविप्रयोगे । क्तिच् ॥ यद्वा । विष्यतेकर्म्मणि । क्तिन् ॥

विष्टुति । स्त्री॰ सामगानांस्तुतिप्रकारविशेषे ॥ तस्याविष्टुतेरुद्यतीतिनाम । एवंपरिवर्त्तिनीकुलायिनीतिहविष्टुती ॥

विष्ठा । स्त्री॰ उच्चारे । शमले गूथे । विषिपुरीषे ॥ विविधप्रकारेणतिष्ठतिउदरे॰ घनयावा॰ पुरुष । ष्ठा॰ । आतश्चोपसर्गेइतिक ॥

विष्ठारुहा । स्त्री॰ स्वर्णकेतक्याम् ॥

विष्णु । पु॰ नारायणे । देशकालवस्तुपरिच्छेदशून्येव्यापनशीलेपरमात्मनिवासुदेवे ॥ यथाविष्णुपुराणे । ज्योतींषिविष्णुर्भुवनानिविष्णुर्वनानिविष्णुर्गिरयोदिशश्चनद्यः समुद्राश्चसएवसर्वयदस्तियन्नास्तिचविप्रवर्येति ॥ यथावा तत्त्वादिनीचैसुकृतानसत्यान्पापान्महाक्रमयादिदेवान् । भजन्तियेमाधवनिन्दकास्तेपूर्णः. सदानन्दमयोहिविष्णुरिति ॥ अपिच । वेदेरामायणेचैवपुराणेभारतेतथा । आदावन्तेचमध्येचविष्णुः सर्वत्रगीयतइति । अजातावेकवचनंबोध्यम् ॥ द्वादशादित्यानांमध्येभगवतोवासुदेवस्यविभूतौ । आदित्यानामहंविष्णुरित्यु

न्ते ॥ वेवेष्टिव्याप्नोतिविश्वम् । विष्लृव्याप्तौ । विषि किच्चेति०नुः । रथाभ्यामितिणत्वम् ॥ वेषति० सिञ्चति०आप्यायतेविश्वम्०इति वा । विष्णाति०वियुङ्क्तेभक्तान्० मायापसारणेनससारादितिवा । पूर्वेनक्नु । ॥ विशति०भूतेन्द्रियम नोजीवभावेनसर्वप्राणिन ०विश न्तिसर्वभूतान्यत्रे तिवा । यस्माद्वि ष्टमिदंसर्वंतस्यशक्त्यामहात्मनः । तस्मादेवोच्यतेविष्णुर्विशधातोः प्र वेशनात् ॥ यद्वा । रोदसीव्याप्यका न्तिरभ्यधिकास्थितास्येतितथा। व्या प्तं मेरोदसीपार्थकान्तिरभ्यधिकास्थि ता । विशिविषक्रामति । क्रमु०वि पूर्वं । अस्मात्णुप्रत्ययोधातुलो पश्चपृषोदरादित्वात क्रमणाद्वाप्यह पार्थविष्णुरित्यभिधीयते । यज्ञो वामने ॥ वेवेष्टिविभिर्विक्रमैरेवलो कत्रयमितितथा ॥ शुभे ॥ वसुदेव तायाम् ॥ वह्नौ ॥ धर्मशास्त्रकर्तृमु निविशेषे ॥

विष्णुकथम् । न० अश्वपर्णे ॥

विष्णुकन्द । पु० मूलविशेषे ॥ वि ष्णुगुप्ते । जलवासे । वृहत्कन्दे । दीर्घपत्रे ॥

विष्णुक्रान्ता । स्त्री० अपराजितायाम् ॥ अपराजितायाअन्यान्नुपजा तिरपिविष्णुक्रान्ता । तत्पर्याया । हरिक्रान्ता०नीलपुष्पा०अपराजि ता०नीलक्रान्ता०सुनीला०विक्रान्ता ०इदिकेतिराजनिर्घण्टः ॥

विष्णुगुप्त । पु० कौण्डिन्यमुनौ ॥

विष्णुगुप्तकम् । न० चाणक्यमूलके ॥

विष्णुगृहम् । न० विष्णुमन्दिरे । स्त म्बपुरे ॥

विष्णुचक्रम् । न० सुदर्शनचक्रे ॥ क रस्थरेखामयचक्रे ॥ विष्णुचक्रं करे चिह्नं सर्वेषाचक्रवर्तिनाम् । भव त्यव्याहतोयस्यप्रभावस्त्रिदशैरपि ॥

विष्णुतैलम् । न० भैषज्यरत्नावल्या द्युक्ते लघुवृहद्भेदभिन्नेतैलविशेषे ॥

विष्णुदत्त । पु० परिक्षित्पतौ ॥

विष्णुदैवतम् । ) त्रि० विष्णुधिष्ठातृ
विष्णुदैवत्यम् । )

देवताके ॥ श्रवणे ॥

विष्णुदैवत्या । स्त्री० एकादश्याम् ॥ द्वादश्याम् ॥ एकादशीद्वादशीचप्रो क्ताश्रीचक्रपाणिनः ॥

विष्णुधर्म्मः । पु० श्राद्धविशेषे ॥ वि द्याविशेषे ॥

विष्णुधर्मोत्तरम् । न० संहिताविशे षे ॥ तत्रप्रश्नकर्त्ताजनमेजयसुत : ०वक्तारः शौनकादयः ॥

विष्णुपञ्जरम् । न० विष्णुकवचविशे षे ॥

विष्णुपदम् । न० वियति । आकाशे ॥ विष्णो . पदम् ०आश्रयदस्थकृपया ॥

च्छे । विष्णो . स्थाने ॥ यथा ।
अपुण्यपुण्योपरमेक्षीणाशेषार्तिहे
तव : । यद्गत्वानशोचन्तितद्वि
ष्णो परमंपदम् ॥ पुं॰ क्षीरोदे ॥
विष्णुपदी । स्त्री॰ गङ्गायाम ॥ विष्णु
पदस्थानंयस्या . सा । गौरादित्वा
न्ङीष ॥ द्वारिकायाम् ॥ रवे : स
ङ्क्रान्तिविशेषे । वृषालिघटसिंहेषु
विष्णुपद्यर्कसङ्क्रमे ॥
विष्णुपुरम् । न॰ वैकुंठे ॥ विष्णो :
पू : । ऋक्पूरित्यप्रत्यय . ॥
विष्णुभक्त : । त्रि॰ वैष्णवे । विष्णु
भक्तिविशिष्टे ॥ तल्लक्षण यथा । म
त्कर्मकृत्मत्परमोमद्भक्त . सङ्गव-
र्जित । निर्वैर : सर्वभूतेषुय : स
मामेतिपाण्डव ॥ नचलतिनिजवर्ण
धर्मतोय सममतिरात्मसुहृद्विपक्ष
पक्षे नहरतिनचहन्तिकिञ्चिदुच्चै
सितमनसतमवेहिविष्णुभक्तम् ॥
विमलमतिरमत्सर प्रशान्त शुचि
चरितोऽखिलसत्त्वमित्रभूत . । प्रिय
हितवचनोऽस्तमानमायोवसतिसदा
हृदितस्यवासुदेव ॥ सकलमिदमह
ञ्चवासुदेव परमपुमान्परमेश्वर :
सएक : । इतिमतिरचलाभवत्यन
न्तेहृदयगतेव्रजतान्विहायदूरात् ॥
यमनियमविधूतकल्मषाणामनुदि
नमच्युतसक्तमानसानाम् । अपगत
मदमानमत्सराणांव्रजभटदूरतरेण

मानवानामिति ॥
विष्णुभक्ति : । स्त्री॰ भगवत्सेवाया
म् ॥
विष्णुमाया । स्त्री॰ दुर्गायाम् ॥ चि
च्छक्ति : अव्यक्तंव्यक्तरूपेणरज स
त्त्वतमोगुणै : । विभज्ययार्थं कुरुते
विष्णुमायेतिसोच्यते ॥ विष्णोरेव
माया । एकैवशक्ति परमेश्वरस्य
भिन्नाचतुर्धाव्यवहारकाले । भोगेभ
वानीपुरुषेषुविष्णु : कोपेषुकाली
समरेषुदुर्गा ॥ इत्यनेनविष्णुकालि
कयोरेकमूर्तित्वप्रतिपादनात् ॥
विष्णुयशा । पुं॰ ब्रह्मयश . पुत्रे ।
कल्किपितरि ।
विष्णुरथ . । पुं॰ नागान्तके । गरुडे
॥ विष्णोरथइव ॥ यद्वा । रथ :
पौरुषदेहयोरितित्रिकाण्डशेष : ।
विष्णोरथ पौरुषदेहोवा ॥ विष्
णो स्पन्दने ॥
विष्णुरात . । पुं॰ अभिमन्युसुते ।
परीक्षिन्नृपतौ ॥ विष्णुनारात : ॥
विष्णुलिङ्गी । स्त्री॰ वर्तिकापक्षिणि ॥
विष्णुवल्लभा । स्त्री॰ तुलस्याम् ॥ लक्ष
्म्याम् ॥ अग्निशिखायाम् ॥
विष्णुवाहनम् । न॰ अरुणावरजे ।
गरुडे ॥ विष्णोर्वाहनम् ॥ गरुड .
शाल्मल्यरुणावरजोविष्णुवाहन
इतिहेमचन्द्र : ॥
विष्णुवाह्य . । पु॰ गरुडे

विष्णुस्थानम् । न० तीर्थविशेषे ॥

विष्यन्दन । पुं० रोचकरसलक्षरे । विष्यदे ॥ यथोक्तं सूदशास्त्रे । दधि क्षीरेसमेपक्त्वात्वर्द्धभागावशेषिते । अष्टमांशक्षिपेत्तत्र तण्डुलान्निस्तुष लितान् ॥ प्रियालपनसाम्राणाम त्यामाच समक्षिपेत् । क्षीरादर्द्धं च तस्मै वधर्वां रास्त्रतथान्यसेत् ॥ सिद्ध क्षिकट्वेपित कर्पूरेणाधिवासि त ॥ एष विष्यन्दनोनामदेवलोको पिदुर्लभ ॥ यस्मिन्पक्के विप्लुतस्य न्दतेसर्वतोमुखम् । तस्मात सूपवि धानज्ञैर्विष्यन्दनइतिस्मृत ॥ वि ष्यन्दोबृंहणोहृद्य पित्तानिलहरो गुरु । कफोवहुतरं स्वादुर्बलशुक्र करोहिसः ॥ इति ॥

विष्य । त्रि० विषवधोचिते ॥ विषेण वध्यः । नौवयोधर्मविषेत्यादिना यत ॥ विषायहितोवा । उगवा दिभ्योयत् ॥

विष्व । त्रि० हिंस्रे ॥

विष्वक्पर्णी । स्त्री० भूम्यामलक्याम् ॥ विष्वक्षिपर्णान्यस्य ॥

विष्वक्सेन । पुं० जनार्द्दने । वि ष्णौ ॥ विषुनानाचञ्चतिगच्छतीति । ऋत्विगादिनाक्विन् । उगितश्चेति ङीप् । विष्वचीसेनायस्य । गकार परत्वादितिस न्तावामगादितिणत्व म् ॥ विष्वगञ्चतिपलायन्तेदैत्य सेनायद्दर्शनयोगमात्रेणेतिवा ॥ वि ष्णोर्निर्माल्यधारिणि ॥ यथोद्दिष्ट मो ॥

विष्वक्सेनप्रिया । स्त्री० वाराह्यामोष धौ । वामारवालू० इ० गौ० दे० भा० । लक्ष्म्याम् ॥ विष्वक्सेनस्यप्रिया ॥

विष्वक्सेना । स्त्री० प्रियङ्गौ । फलि न्याम् ॥ विष्वक्सेनेति । विष्व् वक्ने । क्सेनश्चेत्यादिनाम ः ॥

विष्वक् । अ० परितः । समन्तादर्थे ॥ नानाविधगतौ ॥ तुल्यार्थेराच क्षणे ॥ विषुञ्चति । अञ्चु० । क्वि न् ॥

विष्वङ् । पुं० पुरुषे । आत्मनि । स र्वज्ञे ॥ विविधंसृष्ट्वञ्चति । अञ्चु ० । क्विन् ॥

विष्वाणम् । न० भोजने ॥ शब्दकर णे ॥

विष्वद्र्यञ्च् । त्रि० सर्वतोगच्छति । वि ष्वग्गतिके ॥ विष्वगञ्चति । ऋत्वि गादिनाक्विन् । विष्वग्देवयो रित्यदर्यादेश । स्त्रियांविष्वद्रीची ॥

विष्वाण । पुं० भक्षणे ॥

विसंवाद ः । पुं० विप्रलम्भे । अङ्गीकृ तासम्पादने ॥ विरुद्ध सम्यग्वदन म् । वदेर्भावेघञ् ॥

विसंवादि । त्रि० विलक्षणे ॥

विसम् । न० मृणाले । अब्जादीनाम् ले ॥ विसति । विसप्रेरणे । इगु

पधेतिक ः ॥

विसकण्ठिका । स्त्री० बलाकायाम् ॥

विसकुसुमम् । न० कमले ॥

विसकूटः । पु० सिंहे । मृगेन्द्रे ॥ इङ्गुदीवृक्षे ॥

विसतन्तुः । पु० मृणालसूत्रे

विसनाभिः । पुं० पद्मिन्याम् ॥

विसपुष्पम् । न० नलिने ॥ विसप्रपुष्पम् ॥

विसप्रसूनम् । न० अम्भोरुहे । नलिने । पद्मे ॥ विसप्रसूनम् ॥

विसम्वादः । पुं० विप्रलम्भे । मिथ्याख्यानेनवञ्चने । अङ्गीकृतासम्प्रदाने ॥

विसरः । पुं० सन्दोहे । व्रजे । समूहे । विसरति । सृगतौ । पचाद्यच् । प्रसरे ॥

विसर्गः । पु० दाने ॥ त्यागे ॥ मलनिर्गमे । पायूपस्थयोर्व्यापारे ॥ विभासेरयनभेदे ॥ विसर्ज्जनीये ॥ यथा । शृङ्गवद्बालवत्सस्यबालिकाकुचयुग्मवत् । नेत्रवत्कृष्णसर्पस्य सविसर्गइतिस्मृतः ॥ विशेषसृष्टौ ॥ यथा । पुरुषानुगृहीतानामेतेषांवासनामयः । विसर्गोयंसमाहारोवीजाद्वीजचराचरम् ॥ विसर्ज्जनम् । सृज० । घञ् ॥ विविधसृज्यतेक्षिप्यतेवा० घञ् ।

विसर्ज्जनम् । न० दाने ॥ परित्यागे ॥ सम्प्रेषणे ॥ सृजेर्विपूर्व्वाद्भावे ल्युट् ॥

विसर्ज्जनीयः । पुं० विसर्गे । द्विबिन्दुके ॥

विसर्पः । पुं० रोगविशेषे । सचिवामये ॥ अस्यविप्रकृष्टनिदानंसङ्ख्यांनिरुक्तिञ्चाह । लवणाम्लकटूष्णादिसेवनाद्दोषकोपतः । विसर्पं सप्तधाज्ञेयं सर्वतः परिसर्पणात् ॥ आदिशब्दाद्दधिशाकशिण्डाकीप्रभृतीनांग्रहणम् ॥ सप्तधात्वंविवृणोति । पृथक्त्रयस्त्रिभिश्चैकोविसर्पाद्वन्द्वजास्त्रयः । वातिकः पैत्तिकश्चैव कफजः सान्निपातिकः । चत्वारएतेवीसर्पावक्ष्यन्तेद्वन्द्वजास्त्रयः ॥ आग्नेयोवातपित्ताभ्यांग्रन्थ्याख्यः कफवातजः । यस्तुकर्द्दमकोघोरः सपित्तकफसम्भवः ॥ एषांलक्षणादिकग्रन्थान्तराद्वबोध्यम् ॥

विसर्पणम् । न० प्रसरे । तन्तुव्रातादेर्विसर्पणं ॥ सृप्लृगतौ । ल्युट् ॥

विसर्पि । पु० विसर्पे ॥

विसलम् । न० किसलये । पल्लवे ॥

विसारः । पुं० मत्स्ये ॥ विशेषेणसरति । सृगतौ । व्याधिमत्स्यबलेषुचेतिवाच्यमितिघञ् ॥

विसारिणी । स्त्री० माषपर्ण्याम् ॥

विसारित । त्रि० प्रसारिते ॥ विपूर्वात्सर्त्तेः क्तः ॥

विसारी । त्रि० प्रसरणशीले । प्रसारिणि ॥ विसरणम् । सृ० । घञ् विसारोऽस्यास्ति । अतइनिः ॥ अभीक्ष्णं विसरतिवा । बहुलमाभीक्ष्ण्ये० इतिणिनिः ॥

विसिनी । स्त्री० पद्मिन्याम् ॥ मृणाले ॥ विसमस्त्यस्याः । पुष्करादिभ्यइतिइनिः ॥

विसूचिका । स्त्री० अजीर्णहेतुकेरोगविशेषे । विसूच्याम् ॥

विसूची । स्त्री० विसूचिकायाम् ॥ अस्यालक्षणन्तु । मूर्च्छातिसारोवमथुः पिपासाशूलभ्रमोद्वेष्टनजृम्भदाहा वैवर्ण्यकम्पौहृदयेरुजश्चभवन्तितस्यांशिरसश्चभेदः ॥ अस्याउपद्रवायथा । निद्रानाशोऽरतिः कम्पोमूत्राघातोविसञ्ज्ञता । अमीउपद्रवाघोरा विसूच्याः पञ्चदारुणाइति ॥ निरुक्तिर्यथाहु । सूचीभिरिवगात्राणितुदन्सन्तिष्ठतेऽनिलः । यत्राजीर्णेनसावैद्यैर्विसूचीतिनिगद्यते ॥ नतांपरिमिताहारालभन्तेविदितागमाः । मूढास्तामजितात्मानोलभन्तेऽशनलोलुपाः ॥ अस्याश्चिकित्सायथा । लशुनजीरकसैन्धवगन्धकत्रिकटुरामठचूर्णमिदंसमम् । सपदिनिम्बुरसेनविसूचिकाहरतिभोरतिभोगविचक्षणे इतिलोलिम्बराजः ॥

विसूरितम् । न० अनुतापे ॥ सू० न० ध० ॥

विसृत । त्रि० विस्तृते ॥ विसरतिस्म । सृ० । गत्यर्थेतिक्तः ॥

विसृत्वरः । त्रि० विसृते ॥

विसृत्वर । त्रि० प्रसारिणि प्रसरणशीले ॥ विसरतितच्छील । सृ० । इण्नश्जीतिक्वरप् । ह्रस्वस्येतितुक् ॥

विसृमत्वम् । न० विस्तृते ॥

विसृमर । त्रि० विसृत्वरे ॥ विसरतितच्छील । सृ० । घस्यदः क्मरच् ॥

विसृष्ट । त्रि० निक्षिप्ते । उत्पादिते ॥ विपूर्वात्सृजेः क्तः ॥ मुक्ते ॥ दत्ते ॥ विशेषेणसृष्ट ॥

विस्त । पुं० हेमोर्ध्वे । सुवर्णे । हेम्नि षोडशसुमाषेषु । अशीतिरक्तिकापरिमिते । स्वर्णे ॥ विसति । विसउत्सर्गे । क्तः । आगमशास्त्रस्यानित्यत्वान्नेट् ॥

विस्तर । पुं० शब्दस्यविस्तारे । वाक्प्रपञ्चे ॥ विस्तारे ॥ प्रणये ॥ विस्तरणम् । स्तृञ् आच्छादने । ऋदोरप् ॥ पीठे ॥ समूहे ॥

विस्तारः । पुं० तिर्यगायती ।

विस्तृते । प्रसृतावयवैसमूहे ॥ विटपे ॥ शाखापल्लवादिसमुच्चये ॥ स्तम्बे ॥ विस्तीर्णतायाम् । विग्रहे । व्याप्तौ ॥ विस्तरणम् । स्तृञ् । प्रथमैवावयवव्दृतिघञ् ॥ विभूतौ ॥ यथा । विस्तारः सर्वभूतस्य विष्णोः सर्वमिदंजगत् । द्रष्टव्यमात्मवत्तस्मादभेदेनविचक्षणैरिति । सर्वभूतस्यसर्वात्मकस्य ॥

विस्तारित । वि॰ विस्तृते ॥ प्राप्तविस्तारे ॥

विस्तीर्ण : । वि॰ विपुले । विशाले ॥ विस्तीर्यतेस्म । स्तृञ् । क्तः । रदाभ्यामितिनः ॥

विस्तीर्णपर्ण : । पुं॰ न॰मानकद्रुमे । महापर्णे ॥

विस्तृत । वि॰ विसृते । तते । विस्तारिते । लब्धविस्तारे ॥ विस्तर्यतेस्म । स्तृञ् । गत्यर्थेतिक्तः ॥

विस्तृति : । स्त्री॰ विस्तारे । विस्तरणम् । क्तिन् ॥

विस्पष्ट । वि॰ सुव्यक्ते । सुस्पष्टे ॥ न॰प्रकटोदिते । प्रकटोक्ते ॥

विस्फार । पुं॰ धनुषः स्वाने । योधानाधनुर्गुणशब्दे ॥ विस्फुरणम् । स्फुरस्फुरणे । घञ् । स्फुरतिस्फुलत्योर्घञीत्यात्वम् ॥ स्फारस्फुरणेवा ॥

विस्फारित : । वि॰ निर्वीषिते ॥ विघर्षिते ॥ प्रकाशिते ॥ विपूर्वात्व्यन्तस्फुरतेः क्तः ॥

विस्फुरणम् । न॰ सर्वतप्रसरणे ॥

विस्फुरित : । वि॰ स्फूर्त्तिविशिष्टे ॥

विस्फुलिङ्ग : । पुं॰ विषप्रभेदे ॥ अग्निकणे ॥

विस्फूर्जथु । पुं॰ उद्रेके ॥ ट्वितोथुच् ॥

विस्फूर्जित । वि॰ सङ्क्षुभिते ॥

विस्फोट । पुं॰ विरुद्धस्फोटके । पिटके । पिटकायाम् । पिडिया॰फोड़ा॰इ॰भा॰ ॥ विस्फोटति । स्फुटिर्विशरणे । अच् ॥ कारणेघञ् वा ॥

विस्फोटक । पुं॰ व्रणविशेषे । विस्फोटे ॥ विस्फोटति । स्फुटिर्॰ण्वुल् ॥

विस्मय : । पुं॰ अद्भुते । आश्चर्ये । अलौकिकचमत्कारविशेषे ॥ यथा । विविधेषुपदार्थेषुलोकसीमातिवर्त्तिषु । विस्फारश्चेतसोयस्तुसविस्मयउदाहृत ॥ गर्वे । दर्पे ॥ विस्मयनम् । ष्मिङ्ईषद्धसने । एरच् ॥ सन्देहे ॥

विस्मयान्वित । वि॰ विलक्षे ॥ विस्मयेनआश्चर्येणान्वितः ॥

विस्मयाविष्ट । वि॰ अद्भुतदर्शनजन्याश्चर्येणव्याप्ते । विस्मयेनआश्चर्येणआविष्टःव्याप्त ॥

विस्मरणम् । न० विस्मृतौ ॥ स्मृ आध्याने । ल्युट् ॥

विस्मापन. पुं० कुहके । इन्द्रजाले ॥ गन्धर्व्वनगरे ॥ स्मरे । कामदेवे ॥

विस्मित । त्रि० विस्मयमाश्चर्य्यङ्गते । विस्मयान्विते ॥ ष्मिङ्० । कर्त्तरि क्त. ॥

विस्मृत । त्रि० अस्तङ्गते । स्मरणाविषये ॥ विस्मर्य्यतेस्म । स्मृ० । क्तः ॥

विस्मृति । स्त्री० विस्मरणे ॥ विस्मरणम् । स्मृ० । क्तिन् ॥

विस्मेर । त्रि० विस्मयशीले । विस्मयतेतच्छील : । नमिकम्पीत्यादिना र. ॥

विस्रम् । न० आमगन्धिनि ॥

विस्रंसनम् । न० अवस्रंसने । अध : पतने ॥

विस्रसमान : । त्रि० ध्वंसमाने ॥

विस्रगन्ध । पुं० हरिताले ॥ त्रि० दुर्गन्धिनि । विस्रगन्धोस्य ॥

विस्रगन्धा । स्त्री० हबुषायाम् ॥

विस्रगन्धि : । पुं० हरिताले ॥

विस्रब्ध : । त्रि० अनुद्धटे ॥ गाढे ॥ विश्वस्ते ॥

विस्रम्भ : । पुं० केलिकलहे । विश्वासे ॥ प्रणये ॥ प्रणय : परिचय : शृङ्गारप्रार्थनावेत्यमरमाला । क्रीडापारतन्त्र्यमितिकश्चित् ॥ बधे ॥ परिचये ॥ विप्रलम्भे ॥ विस्रम्भणम् । विस्रभ्यतेऽनेनवा । स्रम्भु विश्वासे । घञ् ॥

विस्रम्भित : । त्रि० विश्वासप्राप्ते ॥

विस्रम्भी । त्रि० प्रणयिनि ॥ विश्वासिनि ॥ अस्त्यर्थे इनि ॥

विस्रसा । स्त्री० जरायाम् । विस्रस्यतेऽनया । स्रंसु अध. पतने । भिदादयङ् ॥

विस्रस्त । त्रि० विच्युते ॥

विस्रा । स्त्री० हबुषायाम् ॥

विहग । त्रि० पक्षिणि ॥ आशुगे बाणे ॥ खे ॥ विहायसा० विहायसिवा गच्छति । गम्लृ० । अन्यत्रापिदृश्यतइतिड. । डे च विहायसो विहादेशोवाच्य : ॥

विहङ्ग । त्रि० पक्षिणि ॥ आशुगे । बाणे ॥ पु० चन्द्रे । सूर्य्ये ॥ मेघे ॥ विहायसा० विहायसिवागच्छति । विहायसोविहङ्गमे . सुपीतिखच् । खच्चडिद्वा ॥

विहङ्गम : । पुं० विहङ्गे । खगे ॥ विहायसागच्छति । गम्लृ० । विहायसोविह च० गमे सुपीतिखच् ॥

विहङ्गमा । स्त्री० भारयष्ट्याम् ॥

विहङ्गराज. । पुं० गरुडे ॥ विहङ्गानांराजा । टच् ॥

विहङ्गिका । स्त्री० भारयष्ट्याम् । बहँगी० हि० भा० । विहङ्गप्रतिकृति :

। हुवेप्रतिक्रतावितिकन् ॥ विहा
यसागच्छतिवा । गमस्येतिखच् ।
विहायसोविहच । खत्ववाडिदाच्य
। यावादित्वात्कन् । टाप् ॥

विहत । चि० विनष्टे । विशेषेणाहत ॥

विहननम् । न० विघ्ने ॥ हिंसायाम्
॥ तूलपिञ्जले । तूलधनुषि ॥

विहर : । पुं० वियोगे ॥

विहरणम् । न० विहारे ॥ विपूर्वाद्
ज्ञोल्युट् ॥

विहरन् । चि० क्रीडति ॥

विहर्तुम् । अ० क्रीडितुमित्यर्थे ॥

विहसितम् । न० महत्त्वाल्पत्वहीने०
मध्यहास्ये । यथाहु : । आकुञ्चित
कपोलाच्च सस्वन निस्वनतथा । प्र
स्तावोत्थसानुरागमाहुर्विहसितंबु
धा : ॥ हसिहसने । भावेक्त : ॥

विहस्त : । चि० पण्डिते ॥ विह्वले ।
व्याकुले ॥ करशून्ये ॥ विगतोवि
च्छिन्नोवाहस्तोस्य ॥

विहा । अ० स्वर्गे । विशेषेणजहाति
। ओहाक्त्यागे । विषाविहेत्याप्रत्य
य ॥ न्यायेनोपार्जितस्यधनादे :
सत्पात्रे विनियोगे ॥

विहापितम् । न० दाने ॥ विहापन
म् । ओहाक० । ण्यन्तात्क्त : ॥

विहाया : । पुं० खगे । शकुने ॥ पुं०
न०गगने । आकाशे ॥ विशेषेणहा
ययति०गमयति०विमानादीन् ।
हयगतौ । ण्यन्तादसुन् ॥ विजहा
तिभुववा । ओहाक० । अविहाधा
ञ्भ्यश्छन्दसीत्यसुन् । णिदित्यस्या
नुवर्त्तेर्युक् । क्वचिच्छान्दसाअपि
भाषायांप्रयुज्यन्तेतेनलोकेपि ॥

विहायसम् । न० व्योम्नि ॥

विहायसा । अ० नभसि ॥

विहार . । पु० क्रीडार्थपद्भ्यांसञ्चरणे
। परिक्रमे । भ्रमणे ॥ स्कन्धे । ली
लायाम् ॥ सुगतालये ॥ विहरण
म् । हृञ० । घञ् ॥ यानादौ ॥
विहरन्त्यनेन । करणे घञ् ॥ क्रीडा
स्थाने ॥ विहरन्त्यत्र . अधिकरणे
घञ् ॥ बिन्दुरेखखगे ॥ चि०हार
वर्ज्जिते ॥ विगतोहारोस्य ॥

विहारगृहम् । क्रीडागारे ॥

विहारवित् । पुं० श्रीकृष्णे । चि०वि
हारज्ञे ॥

विहारवेदिका । स्त्री० वितर्द्दिम् ॥

विहारस्थानम् । न० क्रीडाप्रदेशे ॥

विहारी । चि० परिक्रमिणि । विहार
कर्त्तरि ॥ मत्वर्थीयइनि . ॥

विहित . । चि० सृष्टे । निर्मिते ॥ वि
धेये । विध्यागतोचितकृत्ये ॥ वि
धीयतेस्म । डुधाञ० । क्त । द
धातेर्हि . ॥ अभिहिते । विपूर्वस्य
दधाते 'क्रियासामान्यवाचित्वात्

विहिति । स्त्री० विधाने ॥

विहीन । चि० विगते । विशेषेणहो

ने । त्यक्ते । वञ्चिते । वेधविद्धी मेश्रोतरिवक्त्रं वाक्यं प्रयातिवैफल्यम् । नयनविहीनेभर्त्तरिलावण्यमिव खञ्जनाक्षीणाम् ॥

विहृतम् । न० स्त्रीणांस्वाभाविकदशा लङ्कारान्तर्गतालंकारविशेषे ॥ यथा । लीलाविलासोविच्छित्तिर्विब्वोकः किलकिञ्चितम् । मोट्टायितकुट्टमित ललित विहृतं तथा ॥ विभ्रमश्चे त्यलङ्कारा ' ,स्त्रीणांस्वाभाविकाद् शेतिहेमचन्द्र . ॥ तल्लक्षणं यथा । वक्तव्याभावव्याजाद्विहृतदर्शितेङ्गि तम् ॥ विहरणम् । हृञ् । भावेक्त ॥

विहृति : । स्त्री० सञ्चारे ॥ विहरणम् । हृञ् । क्तिन् ॥ विशेषेणाहरणे ॥

विहेठ . । पुं० विहेठने ॥

विहेठनम् । न० हिंसायाम् ॥ मर्द्दने ॥ विडम्बने । हेठविबाधायाम् । ल्युट् ॥ दु : खे ॥

विहेडनम् । न० विहेठनार्थे ॥ हेड़० । ल्युट् ॥

विह्वल : । त्रि० भीत्याद्यभिभूते । स्वा त्मान्यवधारयितुमशक्ते । विक्लवे ॥ विह्वलति । ह्वलचलने । अच् । मूर्च्छिते । विलीने ॥ विवशे ॥

वी : । पु ० गमने । वेति । वीगत्या दौ । क्विप् ॥

वीक : । पुं० वायौ । वाते । पक्षिणि । खगे ॥ अजति । अज० । पक्षिपु

धूलीभ्योदीर्घश्चेतिकन् ॥ मनसि ।

वीकाश : । पुं० रहसि । विजने ॥ विकाशे । प्रकाशे ॥ विकाशनम् । अभिव्यक्तौ । काशृदीप्तौ । भावे० घञ् अच्यधिकरणे बाधकः । इकः काशइतिदीर्घ : ॥ यद्वा । विकाश नमथवा । काशशब्दे । पूर्ववत् । घञ् दीर्घौ ॥

वीक्षणम् । न० विलोकने ॥ विशिष्ट मीक्षणम् ॥

वीक्षणीय : । त्रि० गुरुमुखादवगत्य विचारणीये ॥ वीक्षितुं योग्ये ॥ ईक्ष० । अनीयर् ॥

वीक्षापन्न : । त्रि० विस्मयान्विते । वी क्षणम् । वीक्षातामापन्न : ॥

वीक्षित . । त्रि० अवलोकिते । दृष्टे ॥ विशेषेणईक्षित : ॥

वीक्ष्य : । पुं० लासके ॥ वाजिनि । घोटके । न० विस्मये । दृश्ये । त्रि० ग्रंणीये ॥

वीङ्खा । स्त्री० शूकशिम्बायाम् ॥ ग तिभेदे ॥ नर्त्तने ॥ अश्वगतिभेदे । सन्धौ ॥

वीचि : । पुं० स्त्री० स्वल्पतरङ्गे । अ ल्पाम् । अवकाशे । वीच० इ० मा० ॥ सुखे ॥ वयति० जयतिवा । वेञ् तन्तुसन्ताने । वेञोडिच्चेति० इंचि . ॥ अल्पे ॥ आल्याम् ॥

वीचिमाली । पुं० समुद्रे ॥ वीचीनां

माला॰सापस्तिपक्ष। श्रीघ्रादिस्था
दिनि:॥
बीची। स्त्री॰ बीचिशब्दार्थे॥
बीचीतरङ्गः। पुं॰ न्यायविशेषे॥ स
तुशोचेशब्दस्योत्पत्तिकारणरूपः।
यथा। बीचीतरङ्गन्यायेनतदुत्पत्ति
स्तुकीर्त्तिता। कदम्बगोलकन्याया
दुत्पत्तिः कस्यचिन्मते॥ वृ॰भा॰
प॰॥ ननुमृदङ्गाद्यवच्छेदेनोत्पन्ने
शब्दे॰श्रोत्रेकथमुत्पत्तिरित्यतआह
। बीचीति। आद्यशब्दस्य॰बहिर्दं
शदिगवच्छिन्नोऽन्यःशब्दस्तेनैवशब्दे
नजन्यते॰तेनचापरस्तद्व्यापकएवंक्र
मेणश्रोत्रेचोत्पन्नोग्टह्यतइति। कदम्ब
इति। आद्यशब्दाद्दशदिक्षुदशश
ब्दाउत्पद्यन्ते॰तैस्तान्येदशशब्दाउत्प
द्यन्तइतिभावः। अस्मिन्कल्पेगौ
रवादुक्तं कस्यचिन्मतइति॥
बीजम्। न॰ चक्षुरकारणे॥ क्षेत्रे।
तत्त्वे॥ आधाने॥ शुक्रे। रेतसि
। सर्वभूतानाप्ररोहकारणंबीजं त
न्मायोपाधिकचैतन्यभगवद्विभूतिः
॥ विशेषेणजायतेऽनेन। उपसर्गे
चसञ्ज्ञायामितिड। अन्येषामपी
तिदीर्घः॥ यद्वा। विशेषेण॰ईजते।
ईजगतिकुत्सनयो। अच्। बीज्य
तेवा। घञ्। कुत्त्वन्तुनभवति॰च
जोरित्यत्रनिष्ठायामनिटइतिकर्त्ति
व्यत्वात्पूरितत्वात्। अस्यचनिष्ठा
यांसेट्त्वात्॥ यद्वा। बीजयति॰
बीज्यतेऽनेनवा। बीजव्यजने। अ
च्॰घञ्वा॥ मञ्जनि॥ गणित
विशेषे॰अव्यक्तगणिते॥ मज्जे॥
बीजकः। पुं॰ मातुलुङ्गे॥ असनवृ
क्षे। पीतसारके। विजयसार॰बृ॰
भा॰॥ बीजकः कुष्ठवीसर्पश्वित्र
मेहगुदक्रमीन्। हन्तिश्लेष्मास्त्रपि
त्तघ्नस्त्वच्यः केश्योरसायनः॥
बीजकृत्। न॰ बाजीकरणे॥
बीजकोशः। पुं॰ बीजकोषे॥
बीजकोशी। स्त्री॰ शिम्बायाम्॥
बीजकोषः। पुं॰ वराटके। कर्णिका
याम्॥ बीजस्यकोषः पात्रमाधार
इतियावत्॥ बीजाभिधाने॥
बीजगर्भः। पुं॰ पटोले॥
बीजगुप्तिः। स्त्री॰ शिम्व्याम्॥
बीजधर्म्मिणी। स्त्री॰ सर्वेषांमहदादी
नांविकाराणांबीजत्वेनावस्थितायां॰
प्रकृतौ॥
बीजधान्यम्। न॰ धान्याके॥
बीजनम्। व्यजने॥ बीके। चक्रवा
के॥ चकोरे। वस्तुनि॥ विधूनने
॥ बीजव्यजने। चुरादि ल्युट्॥
बीजपादपः। पुं॰ भल्लातके॥
बीजपुष्पम्। न॰ मरुबके॥ मदनद्रौ।
बीजपूरः। पुं॰ फलपूरे। मातुलु
ङ्गे। टावालेबू॰इ॰बगो॰दे॰भा॰बङ्ग
भाषाच॥ गुणास्तु। बीजपूरफलं

स्वादुरसेऽम्लं दीपनं लघु । रक्तपित्तहृत्कण्ठजिह्वाहृदयशोधनम् ॥ श्वासकासारुचिहरं हृद्यं तृष्णाहरं स्मृतम् ॥ सैन्धवार्द्रकसंयुक्तं बीजपूरकमत्तिय । आकिमीभिरिवाकृष्टं विशल्यं द्रमोदनम् ॥ केशरं मातुलुङ्गस्य लघु शीतानिलापहम् । रोचनं दीपनं हृद्यं गुल्मशूलार्शसां जयेत्तदिति ॥ क्वाथिस्थमूलग्राह्यमिल्याहु: ॥ बीजैनपूर्यते । पूरीआप्यायने । इगुपधेतिक '। कर्मणिघञ् वा ॥ देशभाषया विजोरा० इति प्रसिद्धोयम् ॥

बीजपूर्णः । पु० बीजपूरे ॥ कोलके ॥

बीजपेशिका । स्त्री० अण्डकोषे ॥

बीजप्रदः । पुं० पितरि । गर्भाधानस्यकर्त्तरि ॥

बीजफलकः । पुं० बीजपूरे ॥

बीजसू '। स्त्री० क्षितौ ।

बीजमातृका । स्त्री० पद्मबीजे । पद्माक्षे ॥

बीजरत्नः । पुं० माषकलाये ॥

बीजरुहः । पुं० शाल्यादौ ॥ यथा । कुरण्टाद्याश्च बीजामूलजास्तूत्पलादय '। पर्वयोनय इक्ष्वाद्याः स्कन्धजाः ॥ शल्लकीमुखाः ॥ शाल्यादयो बीजरुहाः सम्मूर्च्छजास्तृणादय । स्युर्वनस्पतिकायस्य षड्भेदा मूलजातयः इ० हे

मचन्द्र ' ॥

बीजरेचनम् । न० जयपाले ॥

बीजवपनम् । न० क्षेत्रे बीजक्षेपणे ॥

बीजवृक्ष । पुं० असनवृक्षे ॥

बीजसञ्चयः । पुं० बीजसङ्ग्रहे ॥

बीजसन्तानः । पुं० वपने । क्षेत्रे बीजानां विकिरणे । गर्भाधाने ॥

बीजसू । स्त्री० भूमौ । पृथ्व्याम् ॥

बीजाकृतम् । न० उप्तकृष्टे । सबीजकृष्टक्षेत्रे । बीजैनसहकृतकृष्टम् । कृञोद्वितीयेतिडाच् ॥

बीजाम्लम् । न० वृक्षाम्ले ।

बीजी । पु० पितरि ॥ त्रि० बीजविशिष्टे ॥

बीजोदकम् । न० करकायाम् ॥ बीजाकृत्युदकम् । शाकपार्थिवादि ॥

बीजोप्तिचक्रम् । न० बीजवपनजन्यशुभाशुभज्ञानार्थं सर्पाकारचक्रे ॥

बीज्यः । त्रि० कुलसम्भवे ॥ बीज्यते । बीजव्यजनेऽदन्त '। अचोयत् ॥ यद्वा । बीजमस्यास्ति । अन्येभ्योपिदृश्यत इति यप् । बीजेभवः साधुर्वा ॥

बीटिका । स्त्री० सुसज्जीकृतताम्बूले ॥ इति केचित् ॥

बीणा । स्त्री० तडिति । विद्युति '। वल्लक्याम् । विपञ्च्याम ॥ वेति गायते स्वरोऽस्याम । बीणत्यादिषु । राज्ञासाज्ञास्यूणाबीणा इति

नञ्त्वयोणत्वं गुणाभावश्च निपातितः ॥ अस्याः प्रभेदा यथा । विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती । महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी ॥ अपि च । विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती । महती नारदस्य स्याद् गणानां तु प्रभावती ॥ विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती । चण्डालानां च कण्डोलवीणा चाण्डालिकापि च ॥ तस्याश्चाङ्गानां नामानि यथा । काय : कोलम्बकस्तस्या उपनाहो निबन्धनम् । दण्ड पुन प्रवाल : स्यात्ककुभस्तु प्रसेवक : ॥ मूले वंशशलाका स्यात् कलिका कूणिकापि चेति ॥ रत्नमा० ५ । ५० ॥

वीणादण्ड । मुं० वीणास्थिताला बूपरिकाष्ठे । प्रवाले ॥ वीणाया दण्ड : ॥

वीणानुबन्ध' । पुं० उपनाहे ॥

वीणाल । त्रि० वीणावति ॥ पुं० नारदे ॥ वीणाऽस्तिचस्य । सिध्मादित्वाल्लच ॥

वीणावाद : । त्रि० वैणिके ॥ वीणां वादयति । वदेर्ण्यन्तात्० कर्मण्यण् ॥

वीणावादक' । पुं० वैणिके ।

वीणास्य' । पुं० नारदे ॥ वीणा आस्यमिव प्रधानं यस्य ॥

वीतम् । न० असारगजे । युद्धाक्षमे हस्तिनि ॥ असारतुरगे । युद्धाक्षमे घोटके ॥ अङ्कुशकर्म्मणि । वारिषु . पादाघातं तु अङ्कुशवारके ॥ पादकर्म यत्प्रोक्तं यातमङ्कुशवारणम् । उभयं वीतमाख्यातमिति हलायुध ॥ वेति० अजति स्म वा० युद्धादिकर्मण्य वीगत्यादौ० अजगतौ वा । गत्यर्थेति क्त . ॥ अनुमानप्रभेदे । अन्वयमुखेन प्रवर्त्तमानो विधायकोऽनुमानविशेषः ॥ वीतानुमानञ्च द्वेधा । पूर्ववत्० सामान्यतो दृष्टञ्च । दृष्टस्वलक्षणसामान्यविषयं यत्तत्पूर्ववत् । पूर्वं प्रसिद्धम्० दृष्टस्वलक्षणसामान्यमिति यावत् । तदस्य विषयत्वेनास्त्यनुमानज्ञानस्येति पूर्ववत् । यथा धूमाद्वह्नित्वसामान्यविशेष पर्वतेऽनुमीयते । तस्य वह्नित्वसामान्यस्य स्वलक्षणं वह्निविशेषो दृष्टो रसवत्याम् । अपरश्च वीतसामान्यतो दृष्टम्० अदृष्टस्वलक्षणसामान्यविषयम् । यथेन्द्रियविषयमनुमानम्० अत्र हि रूपादिज्ञानानां क्रियात्वेन करणत्वमनुमीयते यद्यपि च करणत्वसामान्यस्य छिदादौ वास्यादि स्वलक्षणमुपलब्धम्० तथापि यज्जातीयं रूपादिज्ञाने करणमनुमीयते तज्जातीयस्य करणस्य न दृष्ट स्वलक्षणं प्रत्यक्षेण

इन्द्रियजातीयं हितत्करणम् । नचेन्द्रियत्वस्य सामान्यस्य लक्षणमिन्द्रिय विशेष . प्रत्यक्षगोचरोवाष्टिमाम् । यथा वह्नित्वस्य सामान्यस्य लक्षण वह्निः सोयपूर्ववत. सामान्यतोदृष्टस्य स्पष्टपि वीतत्वे नतुस्थत्वे विशेष । अत्रचदृष्ट दर्शनम् । सामान्यस्य सार्वविभक्तिकस्तसिल् । अदृष्टस्वलक्षणसामान्यस्य । दर्शनमनुमानमित्यर्थं . ॥ वि० प्रान्ते ॥ निवृत्ते ॥ आच्छादिते ॥ विरहिते ॥ विशेषणकृत . ॥

वीतंस । पुं० मृगाणापक्षिणामपि बन्धनोपाये ॥ मृगाणापक्षिणास्ववि ष्वासहेतोः प्रावरणे ॥ वितङ्गते । तसिअलङ्कारे । घञ् । उपसर्गस्येतिदीर्घ . ॥

वीतदम्भ । त्रि० त्यक्तदम्भे ॥

वीतन . । पुं० कृकपार्श्वद्वये ॥ यथा । कृकस्तुकन्धरामध्यं कृकपार्श्वौतु वीतनौ । इतिहेमचन्द्रः ॥

वीतभय । त्रि० निर्भये ॥ वीतविगतभयंयस्य ॥

वीतमन्यु . । त्रि० विगतरोषे ॥

वीतराग. । पुं० बुद्धे ॥ त्रि० निस्पृहे ॥ रागशून्ये ॥ विशेषेणकृत : गत. । रागः प्रीतिर्मात्सर्यंवा । यस्य । यस्माद्वा ॥

वीतरागभयक्रोध । त्रि० मुक्तसङ्गे ॥ रागभयक्रोधाः । वीताः विवेकेन विगतायस्मात् ॥

वीतरागी । त्रि० इहामुत्रार्थफलभोगरहिते ॥

वीतशोक. । पुं० अशोकद्रुमे ॥ त्रि० आत्मज्ञे ॥ आत्मज्ञएववीतशोको भवतिनानात्मज्ञः ॥ शोकहीने ॥ वीतः विशेषेणगतः शोकोयस्य यस्माद्वा ॥

वीतस्पृहः । विरक्ते ॥

वीति . । पुं० अश्वे ॥ स्त्री० गतौ दीप्तौ ॥ प्रजने ॥ अशने ॥ धावने ॥ वेति । वीगत्यादौ । क्तिच् । भावेस्त्रियांक्तिनवा ॥ निष्ठ तौ ॥

वीतिहोत्रः । पुं० धनञ्जये । अग्नौ ॥ वीयते । वीगतिप्रजनकान्त्यसनखादनेषु । कर्मणिक्तिन् । वीति भंक्ष्य पुरोडाशादि । हूयतेऽस्मिन् । हुदानादनयोः । हुयामाश्रुभसिभ्यस्त्रन् । हूतिचन् ॥ वीतिरश्वो होत्रवहनमस्येतिवा ॥ अर्के । सूर्य्ये ॥

वीत्त : । त्रि० विशेषेणदत्ते ॥ विदीयतेस्म । डुदाञ् । क्तः । अच उपसर्गात्तइतितादेशः दस्तीति दीर्घः ॥

वीथिः । स्त्री० वीथ्याम् । अश्वसञ्चारस्थाने ॥ ताण्डव । यथा । सि

इमु खेनवसुवीथिषु कश्चिद्भ्रववक्ता विभागकृ शलोगमयाम्बभूवेतिमाघ व्याख्यानावसरेमल्लिनाथ : । नव सुवीथिषुसञ्चारस्थानेषु गमयाम्बभू व० वीथयोनवाश्वानांसर्वंवधारादा व्यार्था . परिमिता : प्रचारदेशा : । तास्वतिसङ्क्लये वी० नवेत्यन्ये० तथोत्तरपद्यमाश्रित्योक्तं कविनान वस्थिति । यथाहभोज । वीथ्य स्तिस्रो ऽयधाराणांसव्योमध्योत्तमा' क्रमात् । तासांसाचतुर्णांमानम गीतिर्नवति ' शतम् ॥ श्रेष्ठमध्यो त्तमानान्तुवाजिनांवीथिका ' स्मृ ता । नवानांकथितावीथ्योदुष्टा नाक्रमणक्रमे ॥ अन्येषामपिसर्वंच गतिद्धव्यार्थंमीरिता'॥ समोन्नतासा विषमास्वकीयांशुद्धानतायाहयवी० हृद्यात्या । स्थानुप्रकीर्णोपलसंप्रकी र्णापार्श्वोन्नताख्यानवधेतिवीथ्य ॥ सर्वंवीथिषु येवाजोद्दढशिक्षासम- न्वित : । तेनराजारथे नित्यंमृग यायांमुदन्नजेदिति ॥ अन्ये तु० उरसात्याद्येगतिविशेषावीथयष्ट त्याहु ' । उरसालीढरथालीढपृथु लीमध्यनामक : । आलीढ शोभ नेरुक्ते ' प्रत्यालीढस्तथापर . ॥ उ पयेनवउक्तसुपादचालोचसर्वंग ' । निर्दिष्टावीथयस्त्वे तादृति ॥ विध्य तेनया । विधयाचने । दुगुपधा

त्किदितीन् । बाहुलकाद्दीर्घ ' ॥

वीथिका । स्त्री० वीथ्याम् ॥

वीथी । स्त्री० पङ्क्तौ ॥ गृहाङ्गे । गृहपिण्डिकायाम् ॥ नाट्यरूपके- । वर्त्मनि ॥ विध्यतेऽनया । वि धृ० । घञ् । पृषोदरादि' । गौ रादि : ॥ यद्वा । विध्यते । इगु पधात्किदितीन् । बाहुलकाद्दी- र्घ : । कृदिकारादितिपाक्षिको ङीष् ॥

वीथ्यङ्ग . । त्रि० नाटकभेदे ॥

वीध्र : । पुं० अग्नौ ॥ वायौ ॥ न० नभसि ॥ त्रि० विमले ॥ वीन्धे । ञिइन्धीदीप्तौ ॥ वाविन्धेरिति० क्रन् ॥

वीनाह . । पुं० इष्टकादिभिर्बद्धकू- पमुखे ॥ विनह्यतेऽनेन० कूप मुखम् । णहबन्धने । हलश्चेति घञ् । उपसर्गस्यघञीतिदीर्घ : ॥

वीपा । स्त्री० विद्युति ॥

वीप्सा । स्त्री० व्याप्तुमिच्छायाम् ॥ नानार्थकाशब्दाधिकरणानांक्रिया गुणाभ्यांप्रयोक्तुर्युगपद्व्याप्तुमिच्छा वीप्सा ॥ ग्रामेग्रामेरम्यमाणिक्य मौ- क्तिकमगाजिगजे । देशेदेशेनविश्वास स्पंदननवनेवने ॥

वीवध . । पुं० पर्याहारे । उभय तोबद्धशिक्यस्कन्धवाह्यकाष्ठे । विहङ्गिकायाम ॥ अध्वनि ।' भा

रे ॥ मार्गे ॥ धान्यादिप्राप्तौ ॥ वि विधे। वधोहननगमनवाऽऽत्मनेनवा । प्रादिभ्योधातुजस्येतिसमासोत्त रपदलोपौ अन्येषामपीतिदीर्घं ॥

वीवधिक: । त्रि॰ वार्त्तावहे ॥ वीव धेनहरति । एकदेशविकृतस्यान न्यत्वात्॰ विभाषाविवधादितिष्ठ न् । षोडशोयथं: ॥

वीर: । पुं॰ शूरे । विक्रान्ते ॥ वि ष्णौ ॥ जिने ॥ शृङ्गाराद्यष्टरमा न्तर्गतरसविशेषे । उत्साहवर्द्धने ॥ उत्तमप्रकृतिर्वीरउत्साहस्थायि भावक: । महेन्द्रदैवतोहेमवर्णो ऽयंसमुदाहृत: ॥ ककुभद्रुमे ॥ ब्राह्मणे ।, भावविशेषे ॥ न॰ अग्नौ ॥ तण्डुलीये ॥ वराहकन्दे ॥ लताकरञ्जे ॥ करवीरे ॥ शृङ्गा म् ॥ नले ॥ मरिचे ॥ पुष्करमूले॥ काञ्जिके ॥ उशीरे ॥ आरुके ॥ त्रि॰ उत्तमे । श्रेष्ठे ॥ वीराचारविशिष्टेयथा । कुलाचाररतोवीर: कुलसक्तोसदा भवेत् । सविद्यासेवनकुर्यात्सोमपा नमहेश्वरि ॥ सर्वदाकुरुतेदेविवीर श्चोत्तमानस ॥ पुं॰ वीरयति । शूर वीरविक्रान्तौचुरादि: । पचाद्यच् ॥ यद्वा । विशेषेण॰ईर्ते॰ईरयतिवा । ईरगतौ । वाऽज्वा ॥ यद्वा । अज ति । अजगतिक्षेपणयो: । स्फायि तञ्चीतिरक् । अजेर्वी ॥ विविधानां

अत्रूणामीरयितावा ॥ यद्वा । ईरण म् । ईरगतौकम्पनेच । भावेघञ् । ईर: पलायनकम्पनञ्च॰तदुभये परवीरप्रयुक्तं विगतमस्मा तिवीर: ॥

वीरक: । पुं॰ करवीरे ॥

वीरकुलम् । न॰ ब्राह्मणानांगणे ॥

वीरगति: । पुं॰ स्वर्गे ॥

वीरजयन्तिका । स्त्री॰ रणेवीराणां नृत्ये ॥

वीरणम् । न॰ उशीरस्यतृणे । वीरत रे । बहुमूलके । गाँडरइतिख्याते तृणे ॥ वीरणपाचनशीतस्तम्भनल घुतिक्तकम् । मधुरज्वरनुद्वान्तिम दजित्कफपित्तहृत् ॥ तृष्णासृग्विष वीसर्पकृच्छ्रदाहव्रणापहम् ॥ कुशा दीनांगणे ॥ यथा । कुश काशश्च दर्भश्चकत्तृणभूतृणंतथा । श्वेतदू र्वानीलदूर्वागण्डदूर्वेतिवीरणम् ॥ विपक्षिणमीरयति । ईरगतौकम्प नेच । ल्युट्युंवा ॥

वीरतर । पुं॰ वीरश्रेष्ठे ॥ शरे ॥ न॰ वीरणे ॥ अतिशयितोवीर: । द्विवचनविभज्येतितरप् ॥

वीरतरु । पुं॰ अर्जुनवृक्षे ॥ वीरस्था सेतरुश्च ॥ कोकिलाक्षवृक्षे ॥ वि ल्वान्तरवृक्षे ॥ भल्लातके ॥

वीरपर्णम् । न॰ सुरपर्णे ॥

वीरपत्नी । स्त्री॰ वीरभार्यायाम् ॥ वी र: पतिर्यस्याइतिविग्रहे॰नित्यस

मल्लादिष्विति० पतिशब्दस्य नकारान्तादेशे० कृते स्त्रियामिति ङीप् ॥ नहि वीरपत्नीनामलभ्यनामकिञ्चिदस्ति ॥

वीरपत्रा । स्त्री० विजयायाम् ॥

वीरपाणम् । न० वीराणां समयविशेषे क्रियमाणे मद्यपाने ॥ यथा । वीरपानन्तु यत्पानं वृत्ते भाविनि वा रणे ॥ वीराणां पानम् । पानाधिकरणयोरिति णत्वम् ॥

वीरपुरुष: । पुं० परैरपराजिते ॥

वीरपुष्पी । स्त्री० सिन्दूरपुष्प्याम् ॥

वीरप्रमोक्ष: । पुं० तीर्थविशेषे ॥

वीरभद्र: । पुं० अश्वमेधाश्वे ॥ वीरश्रेष्ठे ॥ वीरणे ॥ दक्षाध्वरध्वंसि शिवगणविशेषे ॥

वीरभद्रकम् । न० वीरणे ॥

वीरभार्य्या । स्त्री० वीरपत्न्याम् ॥ वीरस्य भार्य्या ॥

वीरमाता । स्त्री० वीरस्वाम् ॥ वीरस्य माता ॥

वीररज: । न० सिन्दूरे ॥

वीररात्रि: । स्त्री० निशाविशेषे ॥ यथा । दीपावल्याममायां वै ग्रहणं यदि लभ्यते । वीररात्रिर्महेशानी त्यागम ॥

वीररेणु: । पुं० भीमसेने । नागवले ।

वीरवती । स्त्री० मांसरोहिण्याम् ॥ वीरजनन्याम् ॥

वीरवत्सला । स्त्री० श्वश्र्वाम् ॥

वीरवत्सा । स्त्री० वीरजनन्याम् ॥

वीरविप्रावक: । पुं० शूद्रद्रव्येण होमकर्त्तरि ॥ यथा । वीरविप्रावको जुह्वन्ने: शूद्रसमर्पितैरिति हेमचन्द्र: ॥

वीरवृक्ष: । पुं० भल्लातके ॥ ककुभद्रुमे ॥ बिल्वान्तरे ॥ देवधान्ये । अश्मरीहरे ॥ वीरश्चासौ वृक्षश्च ० दुस्पर्शत्वात् ॥

वीरव्रत: । पुं० दृढव्रते ॥ नैष्ठिके ॥

वीरसू: । स्त्री० वीरमातरि ॥ वीरं सूते । षूङ् प्राणिगर्भविमोचने । सत्सूद्विषेति क्विप् ॥

वीरसेन: । पुं० नलाभिधभूपपितरि ॥ न० आरुकावृक्षे ॥ आलुके ॥

वीरसेनज: । पुं० नलाभिधनृपे ॥

वीरहा । पुं० त्यक्तयज्ञाग्नौ । नष्टाग्नौ । प्रमादादिना यस्याग्निहोत्रिणोऽग्निर्नष्टो निर्वाणः शान्तस्तस्मिन् ॥ वीरोऽग्निस्तं हन्ति । हन० । क्विप् ॥ हरौ ॥ वीरान् असुरभटान् ० हिरण्यकशिपुप्रभृतीन् वा हन्तीति तथा ॥

वीरा । स्त्री० सुरायाम् । मदिरायाम् ॥ क्षीरकाकोल्याम् ॥ तामलक्याम् ॥ एलवालुके ॥ पतिपुत्रवत्याम् । पत्या सुतेन च युक्तायाम् ॥ रम्भायाम् ॥ विदार्य्याम् ॥ विदारीस्थाने गम्भारीति पाठान्तरम् ॥

काम्बोल्याम् ॥ महाशतावर्याम् ॥ गन्धकन्यायाम् ॥ ब्राह्म्याम् ॥ अतिविषायाम् ॥ शिंशपावृक्षे ॥

वीराध्वा । पुं॰ शूराणांवर्त्मनि ॥ वीराणांसङ्ग्रामेष्वनिवर्त्तिना॰गौब्राह्मणबालस्त्र्याद्यर्थं॰कण्टकविषसर्पसिंहव्याघ्राद्यभीतानामध्वा ॥

वीरारुकम् । न॰ आरूकौ ॥

वीराशंसनम् । न॰ अतिभयप्रदाया युद्धभूमौ ॥ सावीराशंसन युद्धभूमिर्या तभयप्रदा ॥ वीरा 'अ'श्यन्तेऽत्र । आङ्. शंसिरिच्छायाम् । ल्युट् ॥

वीराश्रम : । पुं॰ तीर्थविशेषे ॥ यत्र कार्त्तिकेयस्तिष्ठति ॥

वीरासनम् । न॰ रात्रौखड्गहस्तस्य तिष्ठतोजागरणे ॥ ऊर्द्ध्वस्थाने ॥ वीराणामासनम् । योगिनामासनविशेषे ॥ तदुक्तं योगशास्त्रे वसिष्ठेन । एकंपादमथैकस्मिन् विन्यसेदूरुसंस्थितम् । इतरस्मिंस्तथावाहुं वीरासनमिदं स्मृतम् । इति ॥ अपिच । एकं पादमधः कृत्वाविन्यस्योरौतथेतरम् । ऋजुकायोविशेन्मन्त्रीवीरासनमितीरितमिति तन्त्रशास्त्रम् ॥ श्रीभागवतेपि । कृत्वोरौदक्षिणेसव्यं पादपद्मञ्चजानुनि । बाहुंप्रकोष्ठेऽक्षमालामासीनंतर्कमुद्रयेति ॥

वीरिणी । स्त्री॰ दक्षप्रजापतेःपत्न्याम् ॥

वीरुत् । स्त्री॰ शाखापत्रप्रचयवत्यांलतायाम् । गुल्मिन्याम् । उपलीविटपे ॥ विरुणद्धि । रुधिर्॰ । क्विप् । अन्यषामपीतिदीर्घः ॥

वीरुधा । स्त्री॰ वीरुधि ॥ भागुरिमतेनटाप् ॥

वीरेश । पुं॰ शिवे ॥

वीरेश्वर : । पुं॰ सदाशिवे ॥ वीराणामीश्वरः ॥

वीरोज्झी । पुं॰ होमाकर्त्तरि ॥ यथा । यस्तु दिवाभिनिर्मुक्तोवीरोज्झोवतुहोतिय : ॥ इतिहेमचन्द्रः ॥

वीरोपजीविकः । पुं॰ जीविकार्थमग्निहोत्रिणि ॥ यथा । अग्निहोत्रच्छलाद्य आपरोवीरोपजीविकइति हेमचन्द्रः ॥

वीर्य्यम् । न॰ शुक्रे । रेतसि । यथा । हरितालहरेर्वीर्यं लक्ष्मीवीर्य्यमनःशिला । पारदं शिववीर्य्यं स्यात्गन्धकं पार्वतीरजः ॥ इति । प्रभावे ॥ तेजसि ॥ इन्द्रियसामर्थ्ये ॥ अतिशयशक्तिभाज्यत्वादौ ॥ शक्तौ ॥ साचपिप्पल्यादीनांतु : सारभागसदतिशयरूपा । साद्विविधाचिन्त्याचिन्त्यक्रियाहेतुत्वेन । तत्राचिन्त्यक्रियाहेतुर्यद्द्रव्यरसादीना

स्वस्वकर्मण्यिस्वभावसिद्धाशक्तिः । अचिन्त्यक्रियाहेतुस्वप्रभावापरपर्याय द्रव्याणांरसाद्यनुरूपकार्यंकरणशक्तिः । उक्तञ्च । भूतप्रभावातिशयोद्रव्ये पाकेरसेस्थित । चिन्त्याऽचिन्त्यक्रियाहेतुर्वीर्यंधन्वन्तरेर्मतमिति ॥ अस्याथधिमाह । यामकल्ककषायवीर्यमखिलचूर्णंस्वपञ्चवयषण्मासान्घृतमोदकौसद्गुडौमासत्रयंगुग्गुलो । सिद्धानारसभस्मनासुविपुलवीर्यंसुवर्षंत्रयम्क्विद्धिन्नत्वनिवर्जितगुणपरतैलपुराणमहर्दितनारायणदासकृतापरिभाषा ॥ वीरे॰ अक्तौवेसाधु । तत्रसाधुरितियत् ॥ यद्वा । वीर्यतेऽनेन । वीरविक्रान्तौ । अचोयत् । अघ्न्यादिर्वा ॥ वरी ॥

वीर्यवान् । त्रि॰ मासले ॥ वीर्यमस्यस्यास्मिन्वा । मतुप् ॥

वीर्य्यवृद्धिकरम् । न॰ वृष्ये । वाजीकरणे । शुक्रवृद्धिकारकौषधादौ ॥

वीर्य्या । स्त्री॰ अतिशयशक्तौ ॥

वीसर्प्प । पुं॰ विसर्पे ॥

वीहार : । पुं॰ बुद्धमन्दिरे । मठालये ॥

वुक्क । पुं॰ वकपोदपे । शिवमल्ल्याम् ॥ वाति । वा॰ वाहुलकात्कुक । कुगोकारश्चोत्त्व वा ॥

वृंहण । पुं॰ यावकाख्ये॰ खाद्यभेदे ॥ सयावीवृंहणोगुरु ॥ त्रि॰ पुष्टिकारके ॥

वृंहितम् । न॰ करिगर्जिते ॥ वृहणम । वृंहिध्वनौ । नपुंसके क्तः ॥

वृक । के॰के ॥ ईहामृगे । हुंडार॰ हु॰ भेड़िया॰ बु॰ चभाषा॰ प्र॰ ॥ वर्क्ते । वृकआदाने । इगुपधेतिकः ॥ यद्वा । वृणोति । वृञ॰ सृवभूशुषिमुषिभ्य॰ कक् ॥ शृगाले ॥ कृत्रिमधूपे ॥

वृकदंश । पु॰ कुक्कुरे ॥ वृकान् दंशयति । दश॰ । कर्मण्यण् ॥

वृकधूप । पुं॰ नानासुगन्धिद्रव्यकृतधूपविशेषे । कृत्रिमधूपे ॥ सरलद्रवे । वृकधूपे । श्रीवेष्टे ॥ वृकइवधूप ॥ धूप्यतेऽनेन । धूपसन्तापे । घञ् । वृकनामाधूप॰ शाकपार्थिवादिर्वा ॥

वृकधूर्त्त : । पुं॰ शृगाले ॥

वृका । स्त्री॰ अम्बष्ठायाम् । पाठायाम् ॥

वृकाणी । स्त्री॰ चिवृति ॥

वृकाराति : । पुं॰ कुक्कुरे ॥

वृकारि । पुं॰ कुक्कुरे ॥

वृकी । स्त्री॰ पाठायाम ॥

वृकोदर । पुं॰ भीमाख्यपाण्डवे । भीमसेने ॥ यस्यतीक्ष्णोवृकोनाम जठरेहव्यवाहन । मयादत्त : स

धर्मात्मातेनचासीद्वृकोदर' ॥ द्व० मल्लपु० ॥ वृकवदुदरयस्य ॥

वृक्ण । त्रि० छिन्ने ॥ वृश्चयते स्म । ओव्रश्चू छेदने । क्त ॥

वृक्ष । पुं० महीरुहे । शाखिनि । विटपिनि । पादपे ॥ पुष्पिणः फलिनश्चैववृक्षास्तूभयतः स्मृताः ॥ वृक्षतिवृक्षवरणे । पचाद्यच् । यद्वा । वृश्चत्युग्राम् । वृश्चतीश । ओव्रश्चू । स्नुवृश्चिकृत्युषिभ्यः किदितिसः ।

वृक्षक । पुं० कुटजवृक्षे ॥ ह्रस्वो वृक्षः । ह्रस्वइतिकः ॥

वृक्षखण्ड । पुं० वृक्षाणांसमूहे ॥ वृक्षादिभ्यः खण्डः ॥

वृक्षचर । पुं० वानरे ॥

वृक्षधूप । पुं० श्रीवासे । सरलद्रवे ॥

वृक्षनाथ । पुं० वटवृक्षे ॥

वृक्षपत्रकम् । न० क्षीरिवृक्षपत्रके ॥

वृक्षनाक । पुं० वटद्रुमे ॥

वृक्षभक्षा । स्त्री० वन्दायाम् ॥

वृक्षभवनम् । न० वृक्षकोटरे ॥

वृक्षभित् । स्त्री० वृक्षभेदिनि । वास्याम् ॥ वृक्षं भिनत्ति । भिदिर् । क्विप् ॥

वृक्षभेदी । पुं० कुठारविशेषे । वृक्षादने ॥ वृक्षं भेत्तुं शीलमस्य । भिदिर् विदारणे । सुप्यजातौणिनि ॥

वृक्षमर्कटिका । स्त्री० रुषिइतिप्रसिद्धे पशुमृगजातौ ॥

वृक्षमार्जार । पुं० वृक्षबिडाले । गिलहरी० टिलेरी० इ० भा० ॥

वृक्षरुहू । पुं० जलवेतसे ॥

वृक्षराज । पुं० अम्लवेतसे ॥

वृक्षरुहा । स्त्री० वन्दायाम् ॥ वृक्षं रोहतिरुहेर्मूलविभुजादित्वात्क ॥ अमृतस्रवायाम् ॥

वृक्षवाटिका । स्त्री० अमात्यस्य० गणिकायास्य० गेहस्योपवने ॥ वय्यते । वटवेष्टने । सञ्ज्ञायामितिण्वुल् । टाप् । प्रत्ययस्थादितीत्वम् । वृक्षाणांवाटिका ॥

वृक्षादन । पुं० वृक्षभेदिनि० कुठारविशेषे ॥ वृक्षमत्ति । अद० । कृत्यल्युटइतिल्युट् ॥ अलदले ॥ मधुच्छदे ॥ पियाले ॥

वृक्षादनी । स्त्री० वन्दायाम् ॥ विदारीकन्दे ॥ विदारीगन्धिकौषधौ ॥ टित्वान्ङीप् ॥

वृक्षादिरूढकम् । ) न० आलिङ्गने ॥
वृक्षादिरूढकम् । )

वृक्षामय । पुं० लाक्षायाम् ॥

वृक्षाम्ल । पुं० आम्रातके ॥ न० शाकाम्ले । तिन्तिडीके । चुक्रे ॥ अस्यगुणाः । वृक्षाम्लमाममम्लोष्णंवातघ्नं कफपित्तलम् । पक्वन्तुगुरुसङ्ग्राहिकटुकंतुवरंलघु । अम्लोष्ण

रोचनरुच्यदीपनकफवातकृत् । दृष्यार्शोयक्ष्मगुल्मशूलहृद्रोगजन्तुजित् ॥ वृक्षस्याऽम्लम् ॥ वृक्षेच्छन्नो वा ॥

वृक्षायुर्वेदः । पुं० महीरुहाणाञ्चिकित्सायाम् ॥ स च शार्ङ्गधराख्ये ५३ अध्याये । यथा । तत्रादौ रोपणनिर्णयमाह । प्रातश्छायाविनिर्मुक्तान् मनोज्ञान् जलाशयान् । तस्मात् गृहोपवनप्रान्ते आरामान् विनिवेशयेत् ॥ १ ॥ तत्र भूलक्षणम् । मृद्वी भूः सर्ववृक्षाणां हिता तस्यां तिलान् वपेत् । पुष्पितांस्तांश्च मृद्नीयात् कर्म्मैतत् प्रथमं भुवः ॥ प्रथमं रोप्या वृक्षाः । अरिष्टाशोकपुन्नागशिरीषाः सप्रियङ्गवः । मङ्गल्याः पूर्वमारामे रोपणीया गृहेषु वा ॥ २ ॥ काण्डरोप्याणां विधानमाह । पनसाशोककदलीजम्बूलकुचदाडिमाः । द्राक्षापालीवताश्च बीजपूरातिमुक्तकाः ॥ एते द्रुमाः काण्डरोप्या गोमयेन प्रलेपिताः । मूलोच्छेदेऽथवा स्कन्धे रोपणीयास्ततः परम् ॥ ५ ॥ कालनियमार्थमाह । अजातशाखान् शिशिरे जातशाखान् हिमागमे । वर्षागमे च सुस्कन्धान् यथादिक्स्थान् प्ररोपयेत् ॥ घृतोशीरतिलक्षौद्रविडङ्गक्षीरगोमयैः । आमूलस्कन्धलिप्तानां सङ्क्रामणविरोपणम् ॥ ७ ॥ रोपणविधानम् । शुचिर्भूत्वा तरोः पूजां कृत्वा स्नानानुलेपनैः । रोपयेद्रोपितश्चैव पत्रैस्तैरेव जायते ॥ ८ ॥ रोपितानां सेकविधानम् । सायं प्रातश्च घर्म्मर्त्तौ शीतकाले दिनान्तरे । वर्षासु च भुवः शोषे सेक्तव्या रोपितद्रुमाः ॥ ९ ॥ अनूपजानाह । जम्बूवेतसवानीरकदम्बोदुम्बरार्ज्जुनाः । बीजपूरकमृद्वीकलकुचाश्च सदाडिमाः ॥ वञ्जुलो नक्तमालश्च तिलकः पनसस्तथा । तिमिराम्रातकौ चेति षोडशानूपजाः स्मृताः ॥ ११ ॥ रोपितानां वृक्षाणां किम्प्रमाणमन्तरं कार्य्यमित्याह । उत्तमं विंशतिर्हस्ता मध्यमं षोडशान्तरम् । स्थानात् स्थानान्तरं कार्य्यं वृक्षाणां द्वादशावरम् ॥ १२ ॥ किमर्थमन्तरं कार्य्यं तदाह । अभ्यासजातास्तरवः संस्पृशन्तः परस्परम् । मिश्रैर्मूलैश्च न फलं सम्यग् यच्छन्ति पीडिताः ॥ १३ ॥ तेषां रोगज्ञानमाह । शीतवातातपै रोगो जायते पाण्डुपत्रता । अवृद्धिश्च प्रवालानां शाखाशोषो रससुतिः ॥ १४ ॥ एतेषां चिकित्सामाह । चिकित्सितमथैतेषां शस्त्रेणादौ विशोधनम् ॥ विडङ्गघृतपङ्काक्तान् सेचयेत् क्षीरवारिणा ॥ फलनाशे चिकित्सितमाह ॥ फल

नाग्निकुलत्थैश्च माषैर्मुद्गैस्तिलैर्यवैः । शृतशीतपयः सेक फलपुष्पसमृद्धये ॥ १६ ॥ हृद्यधूपप्रयोग । आविकाजशकृच्चूर्णस्याढकी द्वे तिलाढकम् । सक्तुप्रस्थो जलद्रोणो गोमासतुलया सह ॥ सप्तरात्रोषितैरेतैः सेकः कार्यो वनस्पतेः । वल्लीगुल्मलतानाञ्च फलपुष्पाय सर्वदा ॥ १८ ॥ अथ गोजानाबापनविधानम् । वासराणि दशदुग्धभावित बीजमाज्ययुतहस्तयोजितम् । गोमयेन बहुशो विरूक्षितं क्रोडमार्गपिशितैश्च धूपितम् ॥ मांससूकरवसासमन्वितं रोपितञ्च परिकर्षितावनौ । क्षीरसंयुतजलावसेचितं जायते कुसुमयुक्तमेव तत् ॥ २० ॥ अर्थातिन्तिरीविधानम् । तिन्तिरीत्यपि करोति वल्लरीं व्रीहिमाषतिलचूर्णसक्तुभिः । पूतिमांससहितैश्च सेचिता धूपिता च सततं हरिद्रया ॥ २१ ॥ अथ कपित्थबीजरोपणम् । कपित्थवल्लीकरणाय मूलान्यास्फोतधात्रीधववासिकानाम् । पलाशिनी वेतससूर्यवल्ली श्यामातिमुक्तैः सहिताष्टमूली ॥ क्षीरे शृते चाप्यनया सुशीते ताल शतं स्थाप्य कपित्थबीजम् । दिने दिने शोषितमर्कपादैर्मासं विधिस्त्वेष ततोऽधिरोप्यम् ॥ हस्तायतं तद्द्विगुणं गभीरं



रं खात्वावटं प्रोक्तजलावपूर्णम् । शुष्कं प्रदग्धं मधुसर्पिषा तं प्रलेपयेद्भस्मसमन्वितेन ॥ चूर्णीकृतैर्माषतिलैर्यवैश्च प्रपूरयेन्मृत्तिकयान्तरस्थैः । मत्स्यामिषाम्भः सहितञ्च हन्याद्यावद्घनत्वं समुपागतं तत् ॥ उप्तञ्च बीजं चतुरङ्गुलाधो मत्स्याम्भसा मांसजलैश्च सिक्तम् । वल्ली भवत्याशु शुभप्रवाला विस्मापनी मण्डपमावृणोति ॥ २६ ॥ अथान्येषां रोपणम् । शतशोऽङ्कोठसम्भूतफलकल्केन भावितम् । एतत्तैलेन वा बीजं श्लेष्मातकफलेन वा ॥ वापितं करकाम्भसा मृदितं तत्क्षणजन्मकम् । फलभारान्विता शाखा भवतीति किमद्भुतम् ॥ २८ ॥ श्लेष्मातकरोपणम् । श्लेष्मातकस्य बीजानि निष्फलीकृत्य भावयेत् प्राज्ञः । अङ्कोलविज्जलाद्भिश्छायायां सप्तकृत्वैवं ॥ माहिषगोमयपिष्टान्यस्य करीषे च तानि निक्षिप्य । करकाजलमृद्योगेन्युप्तान्यह्ना फलकराणि ॥ वृक्षाणां रोपणान्याणि । ध्रुवमृदुमूलविशाखानुराधा मघा तथाश्विन्यः हस्तम् । उक्तानि दिव्यदृग्भिः पादपसंरोपणे भानि ॥ ३१ ॥ इति ॥

वृक्षाकृत्सा । स्त्री० वृक्षकृष्णायाम् । वृक्षमारोहतीति तथा ॥

वृक्षारोपकः । त्रि० वृक्षाणामारोप

थितरि ॥
वृक्षार्द्धा । स्त्री॰ महामेदायाम् ॥
वृक्षालय । पुं॰ खगे । पक्षिणि ॥
वृक्षाश्रयी । पुं॰ क्षुद्रोलूके ॥
वृक्षेशय । पु॰ विहगे ॥ वृक्षे शेते । शीङ॰ । अधिकरणे शेतेरित्यच् । शयवासवासिष्वकालादित्यलुक् ॥
वृक्षोत्पल । पुं॰ कर्णिकारे ॥
वृजन । पुं॰ केशे ॥ न॰ पापे ॥ आकाशे ॥ वृणक्ति॰ वृज्यतेवा । वृजीवर्जने । कृपृवृजीत्यादिनाक्यु ॥
वृजिन । पु॰ केशे ॥ न॰ कल्मषे । अघे ॥ रक्तचर्मणि ॥ कर्मफले । धर्माधर्मरूपेसंसारफलेकर्मणि ॥ पापवत्पुण्यस्याप्यनिष्टफलत्वात् ॥ त्रि॰ कुटिले । वक्रे ॥ वृज्यते । वृजी॰ । वृजे . किच्चेति॰ इनच् ॥
वृजिनच्छित्॰ त्रि॰ दुःखहन्तरि ॥
वृत । त्रि॰ वृत्ते । व्यावृत्ते । कृतवरणे ॥ स्वयंवरादौस्वीकृतवरादौ ॥ प्रियतेस्म । वृञ्वरणे । क्तः ॥ आवृते ॥
वृतकोशा । स्त्री॰ देवदाल्याम् ॥
वृतपत्रा । स्त्री॰ पुत्रदात्र्यामोषधौ ॥
वृतपुत्रा । स्त्री॰ वृतपत्रायाम् ॥
वृतिः । स्त्री॰ वरणे । वेष्टने । वाटे । आच्छादितयामीषप्रसिद्धिविषयेका ष्ठकाण्डाद्यावरणे ॥ वरणम् । वृञ्॰ । क्तिन् ॥ गोपने ॥

वृतिङ्करः । पुं॰ विकङ्कतवृक्षे ॥ त्रि॰ वृतिकारके ॥
वृतिक्ष्म । पु॰ सरटे ॥ त्रि॰ वृतौतिष्ठति ॥
वृत्त । पु॰ कूर्मे पुं॰ न॰ पद्ये ॥ यथा । पद्यंचतुष्पदीतच्चवृत्तंजातिरितिद्विधा । वृत्तमक्षरसङ्ख्यातंजातिर्मात्राकृताभवेत् ॥ वृत्तौ ॥ चारित्रे ॥ वेदबोधिताचारस्यपरिपालने ॥ छन्दसि ॥ कृतिच्छन्दोभेदे ॥ यथा । वृत्तमोहस्ततुमाततोरजोरजोरजोगुरुर्लघुश्च । यथा । चित्तवृत्तलोलयानिसर्गरम्यदेहरूपविभ्रमेणराजमानसद्ययौविलासस च्छटाकलाकुतूहलेन । य ॰ समन्ततः आङ्गनाजने ॰ सुराङ्गनाभिभैः लुब्धमनोऽथविधाकलासचित्तपद्मकोषषट्पदः सनोऽसदाच्युः ॥ त्रि॰ अधीते ॥ वीरध्ययनेवृत्तमितिनिपातितः । वृत्तव्याकरणम् ॰ अधीतमित्यर्थः ॥ अतीते ॥ अतिवर्तुले । वृते । मृते । दृढे ॥ वर्ततेस्म॰ वृत्यतेस्मवा । वृतुवरणे । गत्यर्थेतिक्तः ॥ वर्त्तनम् । वृतुवर्त्तनेवरणेवा । भावेक्तः ॥
वृत्तकम् । न॰ गद्यप्रभेदे ॥ तल्लक्षणोदाहरणेयथा । अकठोराऽक्षरंस्वल्पसमासंवृत्तकंमतम् ॥ यथा । सखिअयाणामेवजगतांगतिः परमपुरुषः पुरुषोत्तमोदृप्तदानवभरेणभग्

राज्ञीमवनिमवलोक्यकरुणार्द्रहृद
यस्तस्याभारमवतारयितु रामकृष्ण
स्वरूपेणाष्टमोयदुवंशेऽवततारयस्तुप्र
सङ्गेनापिस्मृतोवागृहीतनामापुंसा
ससारपारमवलोकयति ॥

वृत्तकर्कटिका । स्त्री० वृत्तकर्कव्याम् ॥

वृत्तकर्कटी । स्त्री० वृत्तोर्वारौ । षड्भु
जायाम् ॥

वृत्तगन्धि । न० गद्यप्रभेदे ॥ तल्लक्षणं
यथा । भवेदुत्कलिकाप्रायंसमासा
ढ्य दृढाक्षरम् । वृत्तैकदेशसम्बन्धा
द्वृत्तगन्धिपुनः स्मृतम् । तदुदा
हरणयथा । जयजयजयजनार्द्दनसु
कृतिमनस्तडागविकस्वरचरणपद्मप
द्मपत्रनयनपद्मापद्मिनीविनोदराज
हंसाभभास्वरयशः पटलपरिपूरि
तभुवनकुहर । हरकमलासनादिवृं
दारकवन्दवन्दनीयपादारविन्दद्वन्द्व
द्वन्द्वनिर्मुक्तयोगीन्द्रहृदयमन्दिराविष्कृ
तनिरञ्जनज्योतिः स्वरूपनीर
दरूपविरूपकनाथनाथजगन्नाथमा
मनवधिभवदुःखव्याकुलरक्षरक्ष
रक्ष ॥

वृत्तगुण्ड : । पुं० तृणविशेषे । दीर्घ
माषे । जलाश्रये ॥ अयद्विधा । ल
घुस्थूलभेदात् । तत्राद्यलोऽधिकगु
ण : ॥

वृत्ततण्डुल : । पुं० यावनाले ॥

वृत्तत : । अ० वृत्तमित्यर्थे ॥

वृत्तनिष्पावी । स्त्री० वृत्तनिष्पाविकाया
म् । नखनिष्पावे ॥

वृत्तपर्णी । स्त्री० महाश्रावणिकाया
म् ॥ पाठायाम् ॥

वृत्तपुष्प : । पुं० कदम्बे ॥ शिरीषे ॥
वानीरे ॥ कुब्जके ॥ मुद्गरे ॥

वृत्तफल : । पुं० दाडिमे ॥ बदरे ॥
न० मरिचे ॥

वृत्तफला । स्त्री० आमलक्याम् ॥ वा
र्त्ताक्याम् ॥ श्रृगाल्याम् ॥

वृत्तमल्लिका । स्त्री० श्वेतार्के ॥ मोदि
न्याम् ॥

वृत्तबीज : । पुं० भिण्डायाम् ॥

वृत्तबीजका । स्त्री० पाण्डुरफल्याम् ॥

वृत्तबीजा । स्त्री० आढक्याम् ॥

वृत्तसम्पन्न : । त्रि० सदाचारवति ॥

वृत्ता । स्त्री० झिञ्झिरिष्टायाम् ॥ प्रि
यङ्गौ । रेणुकायाम् ॥ मांसरोहि
ण्याम् ॥

वृत्ताध्ययनर्द्धि : । स्त्री० ब्रह्मवर्चसे ॥
वृत्तस्याचारः ०अध्ययनञ्चगुरुमुखा
द्वेदाक्षरग्रहणम् ०तयोर्ऋद्धि : ॥

वृत्तानन्दम् । न० मात्रावृत्तान्तरे ॥
तल्लक्षणोदाहरणं यथा । एकादश
विश्रामि०सप्तविरामि०यदिवृत्तान्त
संभवति । छन्दोवृत्तानन्दमिदमा
नन्दकारिफणिन्द्रपतिरितिवदति ॥
यथा । मधुरस्मितनवशालियदिव
नमालिवदनकमलमवलोकये । अ

वृत्ति:

धरसुधारसधामपरमभिरामसबलम्बे जीवितमये ॥
वृत्तान्त । पुं० वार्तायाम् । प्रवृत्तौ । उदन्ते । समाचारे ॥ यथा । अतीतजन्मवृत्तान्तं बाल्ये प्रायेणपश्यति । ऐहिकं यौवनेऽन्तेतु तत्सर्वीभावि वीक्ष्यते ॥ वार्ताजनश्रुतिराख्यायिका चेति स्वामी ॥ प्रभेदे । विशेषे ॥ प्रक्रियायाम् ॥ कार्त्स्न्ये । प्रस्तावे । अवसरे ॥ वृत्तोऽनुवर्तनीयोगवेषणीयोऽन्तः समाप्तिर्यस्य । वृत्तोन्तोस्य वृत्तस्यान्तइति वा ॥ भावे ॥
वृत्तावृत्तम् । न० मात्रावृत्ताम्तरे ॥ तल्लक्षणोदाहरणे यथा । इहसमचतुष्कलगणनिर्मितपदचिलघुविरामभवतियदि । नागाधिपपिङ्गलभणितसुमङ्गलवृत्तावृत्तमिदंविपदि ॥ यथा । उदिताबदनेक स्फुरतिविवेकस्तपसिमनोनियत भवति । यावन्नवहरिणीनयनातरुणीस्मितसुभग नविलोकयति ॥
वृत्ति । स्त्री० व्याख्यानग्रन्थविशेषे । विवरणे ॥ आजीवे । वर्तने । कृष्यादिजीवने । अनुष्ठेयायाजीविकायाम् ॥ कैशिक्यादौ ॥ यथा । भारतीसात्वतीचैवकैशिक्यारभटीतथा । चतस्रोवृत्तयश्चैतायासुनाट्यप्रतिष्ठितमितिभरत ॥ शृङ्गारेकैशिकीवीरेसात्वत्यारभटीपुनः । रसेरौद्रेचबीभत्से वृत्तिस, र्वत्रभारती । चतस्रोवृत्तयोह्येता सर्वनाट्यस्यमातृका ॥ प्रवर्तने ॥ विवृतौ ॥ व्यवहारे ॥ वर्तनेऽनया । वृतुवर्तने । स्त्रियांक्तिन् ॥ प्रमाणविपर्ययविकल्पनिद्रास्मृतिषु पञ्चविधासु ॥ लज्जादिवृत्तीनामपिपञ्चस्वेवान्तर्भाव ॥ अर्थसन्निकृष्टेन्द्रिये ॥ इन्द्रियाणांव्यापारे । विषयाकारवृत्तिपरिणामे ॥ वृत्तीनामानन्त्यादर्थवृत्तांसूचयतिपतञ्जलि । वृत्तय, पञ्चतय्यःक्लिष्टाअक्लिष्टाइति । वृत्तयश्चित्तस्यपरिणामविशेषा । रागद्वेषादिक्लेशरूपा, आसुरवृत्तय क्लिष्टा । रागादिरहितादैववृत्तयोऽक्लिष्टा । यद्यपिपञ्चस्वेवक्लिष्टानामक्लिष्टानामन्तर्भाव तथापिक्लिष्टा एवनिरोद्धव्याइतिमन्दबुद्धिवारयितु ताभि, सहाक्लिष्टाउदाहृता, । नामधेयलक्षणाभ्यावृत्तीर्निर्दष्टयितु सूत्रषट्कमाह । प्रमाणविपर्ययविकल्पनिद्रास्मृतय । प्रत्यक्षानुमानागमा प्रमाणानि । विपर्ययोमिथ्याज्ञानमतद्रूपप्रतिष्ठम् । अतद्रूपप्रतिष्ठम् तस्यार्थस्ययद्रूपनतस्मिन्रूपेप्रतिष्ठति तस्यार्थस्ययत्पारमार्थिकरूप नतत् प्रतिभा

सयतीतियावत् । स अर्थोप्यतद्रूप प्रतिष्ठत्वान्मिथ्याज्ञानम् • यथास्था णुर्वापुरुषोवेति । शब्दज्ञानानुयापा तीवस्तुशून्योविकल्प । अभावप्र त्ययालम्बनावृत्तिर्निद्रा । अनुभू तविषयाऽसम्प्रमोष स्मृति ॥ तत्रप्रमाणविपर्ययविकल्पाजाग्रद वस्था • तएवयदानुभवबलात्प्रत्य स्थायमाणा . सास्वप्न . • निद्रात्वस विद्यमानविषया • स्मृतिश्चप्रमाणविप र्ययविकल्पनिद्रानिमित्तेतिव्याख्या तावृत्तय ॥ क्तत्तद्धितसमासैक शेषसनाद्यन्तधातुरूपासुपञ्चसु ॥ विच्छिन्नस्यप्रतिविधाने ॥ अप्रति बन्धे ॥

वृत्तिम्लान : । त्रि॰ वृत्तिक्षीणे ॥

वृत्तिज्ञानम् । न॰ घटाकारज्ञाने ॥ यद्यपिवृत्तिज्ञानमपिस्वरूपज्ञान मेव • तथापि • अन्त करणदोषैस्त त्तथातथाभातीतितयोर्भेद ॥

वृत्तिनिरोध । पुं॰ वृत्तीनांप्रति हनने ॥ तत्साधन सूचयतिभगवा न्पतञ्जलि । अभ्यासवैराग्याभ्यां तन्निरोध • इति । प्रकाशप्रवृत्ति नियमरूपाणांचित्तवृत्तीनामभ्या सवैराग्याभ्याप्रतिहनन सनिरोध यथातीव्रवेगेपित नदीप्रवाह सेतुब न्धेननिवार्यकुल्याप्रणयनेनक्षेत्रा भिमुखंतिर्यक्प्रवाहान्तरमुत्पाद्य ते • तथावैराग्येणचित्तनद्याविषय प्रवाहनिवार्य • समाध्यभ्यासेन • प्र शान्तप्रवाह सम्पाद्यते । एतदुक्तं भवति । तासांविनिवृत्तबाह्याभि निवेशानामन्तर्मुखतयास्वकारणएव चित्तेशक्तिरूपतयावस्थानम् । तत्र विषयदोषदर्शनजेनवैराग्येण • तद्वै मुख्यमुत्पाद्यते • अभ्यासेनचसुखज नकशान्तप्रत्ययप्रवाहप्रदर्शनद्वारेण दृढस्थैर्यमुत्पाद्यतइत्याभ्याभवतिचि त्तवृत्तिनिरोध . ॥

वृत्तिभेद . । पुं॰ प्रवृत्तिनिमित्त भेदे ॥

वृत्तिमान् । त्रि॰ वार्ते ॥ वृत्तिर स्यास्मिन्वास्ति । मतुप् ॥

वृत्तिविषय । पु॰ वृत्तिव्याप्ये ॥ आत्मनि ॥

वृत्तिविस्मरणम् । न॰ ध्यातृध्येया कारवृत्तिशून्ये । द्वैताननुसन्धा ने ॥

वृत्तिव्याप्यत्त्वम् । न॰ विशिष्टशब्दा दिप्रमाणबलात् • तत्तद्विषयाकारा धीसमुन्मेषाभिव्यक्तत्त्वे ॥ ब्रह्मज्ञा नानाशायवृत्तिव्याप्तिरपेक्षिता ॥

वृत्य : । त्रि॰ वरणीये ॥ वरणं • त्रिय तेवा । वृञ्वरणे । एतिस्तुशास् वृदृजुष : क्यप् ॥

वृत्त्यनुप्रास : । पुं॰ शब्दालङ्कारान्तरे । यथा । एकस्याप्यसकृत्पर : । ए

कस्य॰अपिशब्दादनेकव्यञ्जनस्य॰द्वि वॆंहुश्चत्वोवासोहस्यंहत्यनुप्रासः । यथा । युधिष्ठिरहैतवनेवनेचरद्वस्य॰इयोः स्वरव्यञ्जनसमुदाययोरेकदैवावृत्तिः ॥

वृत्र. । पु॰ ध्वान्ते । अन्धकारे ॥ अरौ । शत्रौ ॥ त्वष्टृपुत्रे दानवविशेषे ॥ वृजिनात्त्रातुमधुनायस्माच्छत्रोसिपुत्रक । तस्माद्वृत्रइतिख्याततवनामभविष्यति ॥ घने ॥ शैलविशेषे ॥ वासवे । इन्द्रे ॥ वृणोति । वृञ्॰ । बाहुलकात्त्र ॥ वर्त्तते । वृतुवर्त्तने । स्फायितञ्चीत्यादिनारक्वा ॥

वृत्रद्विट् । पुं॰ इन्द्रे ॥ वृत्रद्वेष्टि । द्विषअप्रीतौ । सत्सूद्विषेत्यादिना क्विप् ॥

वृत्रभोजनः । पुं॰ गण्डीरे । समष्ठिलायाम् । समठ॰इ॰गौ॰दि॰भा॰॥

वृत्रहा । पुं॰ इन्द्रे ॥ वृत्रंहतवान् । ब्रह्मभ्रूणवृत्रेषुक्विप् ॥

वृत्रारिः । पु॰ शक्र । इन्द्रे ॥

वृथा । अ॰ वन्ध्ये । मुधा । अविधौ । निरर्थके ॥ यथा । वृथावृष्टिःसमुद्रस्यवृथातृप्तस्यभोजनम्वृथा । वृथादानसमर्थस्यनीचस्यसुकृतंवृथा ॥ निष्कारणे ॥

वृथाजन्म । न॰ निरर्थकेजनने ॥ *

वृथादानम् । न॰ परिहासनिमित्तं पण्डादिभ्योदेये ॥ धूर्त्तेबन्दिनिमल्लेचकुवैद्ये कितवेशठे । चारचारणचौरेषुदत्तं भवतिनिष्फलम् ॥

वृथामांसम् । न॰ देवतादिकमनुद्दिश्यकृतेमांसे ॥ तद्भक्षणेप्रत्यवायोभवतीत्युक्तंवह्निपुराणे । यथा । वृथारैताववृथामासोवृथावादीवृथामतिः । निन्दकोद्विजदेवानामप्रेतीजायतेनरइति ॥

वृद्ध । पुं॰ वृद्धदारके ॥ न॰गन्धद्रव्यविशेषे । शैलजे । शैलेये । अश्मपुष्पे । रन्दू॰च॰छरीला॰इत्यादिभाषाप्रसिद्धे ॥ रूढे ॥ त्रि॰ जीर्णे । प्रवयसि । स्थविरे । जीने । गतयौवने ॥ सप्ततिवर्षानन्तरवृद्धउच्यते । यथा । वृद्धोजनोदुःखशतानिभुङ्क्ते । इ॰ ॥ नतेनवृद्धोभवतियेनास्यपलितंशिरः । योवैयुवाप्यधीयानस्तंदेवाः स्थविरंविदुरितिमनुः । वृद्धस्यप्रत्युत्थायाभिवादनंकार्य्यम् ॥ ज्ञे । पण्डिते ॥ वर्द्धतेस्म । वृधुवृद्धौ । गत्यर्थेतिक्तः । यस्यविभाषेतिनेट् ॥

वृद्धकाकः । पुं॰ काकोले । द्रोणकाके ॥

वृद्धगङ्गा । स्त्री॰ कामरूपपीठस्थनदीविशेषे ॥

वृद्धत्वम् । न॰ स्थाविरे । वार्द्धक्ये ॥ वृद्धस्यभावः । तस्यभावस्त्वतलौ ॥

वृद्धदारक. । पुं॰ छगलान्त्राम् । विधारा॰ इ॰ भा ॥ वृद्धोदारकोऽस्मात् ॥ वृद्धत्वं दारयतिवा । ण्वुल् ॥

वृद्धदारु । न॰ वृद्धदारके । विधारा॰इ॰भा॰प्रसिद्धे ॥ यथा । वृद्धदारुद्वयगोल्यं पिच्छिलकफवातनुत् । वल्यंकासामदोषघ्नं द्वितीयस्य त्वगुणैर्यदम् ॥

वृद्धनाभि. । त्रि॰ उन्नतनाभौ । तुण्डिले ॥ वृद्धाउन्नतानाभिरस्य ॥

वृद्धप्रपितामह: । पुं॰ प्रपितामहस्य जनके ॥

वृद्धप्रपितामही । स्त्री॰ प्रपितामहस्य जनन्याम् ॥

वृद्धबला । स्त्री॰ महासमङ्गायाम् ॥

वृद्धवाहन । पुं॰ आम्रवृक्षे ॥ सुपद्मोवृद्धवाहनइतिकेचित् ॥

वृद्धविभीतक: । पुं॰ आम्रातके ॥

वृद्धश्रवा. । पुं॰ सुनासीरे । इन्द्रे ॥ वृद्धेभ्य: शृणोति । श्रुश्रवणे । असुन् ॥ वृद्धेश्रवसीयस्येतिवा । वृद्धेषु पण्डितेषुश्रवोयशोयस्येतिवा । । वृद्धात्वृहस्पतेः शृणोतिवा ॥

वृद्धश्रावक: । पुं॰ कापालिनि ॥

वृद्धसङ्घ. । पु॰ वार्द्धके ॥ वृद्धानां सङ्घ: ॥

वृद्धसूत्रकम् । न॰ इन्द्रतूले । थोपाहासी । मरुद्ध्वजे । बुढियाकासूत॰ इ॰ भा॰ ॥

वृद्धा । स्त्री॰ गतयौवनायाम् । पलिक्न्याम् । जरत्याम् ॥ तदवस्थाकालोयथा । आषोडशाद्भवेद्बाला-तरुणीत्रिंशतोमता । पञ्चपञ्चाशत: प्रौढावृद्धाभवतितत्परम् ॥ महाश्रावणिकायाम् ॥ अङ्गुष्ठे ॥

वृद्धाङ्गुलि । स्त्री॰ अङ्गुष्ठे ॥

वृद्धि स्त्री॰ वर्द्धने । स्फातायाम् ॥ विष्कम्भादिष्वेकादशेयोगे ॥ तत्रजातस्यफलयथा । प्रसूतिकालेयदिवृद्धिसंज्ञोयोगः शुभोयोगविनयान्वितश्च । धनप्रयोगग्रहणेप्रवृद्धोविचक्षणस्यात्क्रयविक्रयाभ्यामिति ॥ अष्टवर्गौषधान्तरे । योग्यायाम् । ऋद्धौ । सिद्धौ । लक्ष्म्याम् ॥ अस्यागुणायथा । ऋद्धिर्वृद्धिश्चमधुरासुस्निग्धातिक्तशीतला । कफिमेधाकरीशुक्रबृंहणीगर्भदारापरा ॥ प्रयोगेष्वनयोरेकयथालाभप्रयोजयेत् । यद्यत्प्रातुमिष्टि: स्याद्द्वयमप्यनयोजयेदितिराजनिर्घण्टः ॥ ऋद्धिवृद्ध्योरुत्पत्तिलक्षणानामगुणायथा । ऋद्धिर्वृद्धिश्चकन्दौद्वौभवत: कोशयामले । श्वेतलोमान्वित: कन्दोलताजात. सरन्ध्रक. ॥ सएवऋद्धिर्वृद्धिश्चभे

द्मप्ये तयोर्भुवि । तूलग्रन्थिसमोवृद्धिर्वासावर्तफलाचसा ॥ वृद्धिस्तुदक्षिणावर्तफला प्रोक्ता महर्षिभि । ऋद्धिर्योग्यसिद्धिलक्ष्म्यौ वृद्धेरप्याह्वयाह्वमे ॥ ऋद्धिर्वल्या त्रिदोषघ्नी शुक्रला मधुरा गुरु । प्राणैश्वर्यकरी मूर्च्छारक्तपित्तविनाशिनी ॥ वृद्धिर्गर्भप्रदा शीताबृंहणी मधुरा स्मृता । वृष्या पित्तास्रशमनी-क्षतकासक्षयापहा ॥ राज्ञामप्यष्टवर्गस्तु यतोऽयमतिदुर्लभः । तस्माद्स्यप्रतिनिधिं गृह्णीयात्तद्गुणं भिषक् ॥ मुखग्रहश्च . प्रतिनिधि ॥ प्रतिनिधिमाह । मेदाजीवककाकोलीऋद्धिद्वन्द्वे पिचासति । वरीविदार्यश्वगन्धावाराहीश्च क्रमात्-क्षिपेत् ॥ मेदामहामेदास्थाने शतावरीमूलम्० जीवकर्षभकस्थाने विदारीमूलम्० काकोलीक्षीरकाकोलीस्थानेऽश्वगन्धामूलम्० ऋद्धिवृद्धिस्थाने वाराहीकन्दगुणैस्तुल्यं क्षिपेत ॥ कलान्तरे । वृद्धौ । लाभे । सूद्० व्याज० हि० भा० ॥ अभ्युदये ॥ समृद्धौ ॥ हर्षे ॥ मुष्कवृद्धौ । कुरण्डरोगे । शैलेये ॥ धने ॥ समूहे ॥ नीतिवेदिनां क्षयादित्रिवर्गान्तर्गतवर्गविशेषे ॥ ह्रासाभावे ॥ वर्द्धनम् । वृधु वृद्धौ क्तिन् । वर्द्धतेऽनयावा ॥ उक्त

कर्षोनमूलधनातिरिक्तो ग्राह्यधने ॥

वृद्धिका । स्त्री० ऋद्धिनामौषधौ ॥

वृद्धिजीविका । स्त्री० अर्थप्रयोगे । कुसीदे । ऋणदानजीविकायाम् ॥ वृद्ध्याजीविका ॥

वृद्धिजीवी । त्रि० कुसीदिके ॥ वृद्ध्यर्थं द्रव्यवृद्धि । तयाजीवितु शीलमस्य । णिनि ॥

वृद्धिद । पुं० जीवके ॥ शूकरकन्दे ॥ त्रि०वृद्धिदायिनि ॥

वृद्धिश्राद्धम । न० आभ्युदयिकश्राद्धे ॥ नान्दीमुखश्राद्धे ॥

वृद्धोक्ष । पुं० जरद्गवे । वृद्धवृषे ॥ वृद्धश्वासावुक्षाच । अचतुरेतिसाधु ॥

वृद्ध्याजीव । त्रि० वृद्धिजीविनि । कुसीदिके ॥ वृद्धिराजीवोजीविकाऽस्य ॥

वृधसान । पुं० मनुष्ये ॥ वर्द्धते । वृधु० । ऋञ्जिवृधिमन्दिसहिभ्यः कित्त्यसानच् ॥

वृन्तम् । न० फलपत्रादिर्येनधार्यते तत्र । प्रसवबन्धने । बैंटा०डौंटा० हि०भा० ॥ वृणोति । वृञ्० । बाहुलकाद्ह्लिघृणीतिक्तोनुम्च ॥ घटीधारायाम् ॥ कुचाग्रे । स्तनमुखे ॥

वृन्ताकम् । न० वार्ताकौ । अस्यगुणायथा । वृन्ताकंकफपित्तकृत् ॥ अ

पिच। वृन्ताकस्वादुतीक्ष्णोष्णंकटु पाकमपित्तलम्। ज्वरवातबला सघ्नदीपनशुक्रललघु॥ तद्बलकफपित्तघ्नं वृद्धपित्तकरगुरु॥ वृन्ताकंपित्तलकिञ्चिदङ्गारपरिपाचितम्। कफमेदोनिलामघ्नमत्यर्थं लघुदीपनम्। तदेवहिगुरुस्निग्धं सतैललवणान्वितम्॥ अपरश्वेतवृन्ताककुक्कुटाण्डसमं भवेत्। तदर्शस्सु विशेषेणहितंहीनञ्चपूर्वतः॥ पूर्वतः, क्रमात्॥ भोजनधिगवृन्ताकवृन्ताकधिगवृन्तकम्। सवृन्तधिगतैलाढ्य सतैलधिगरामठम्॥ सर्वासांशाकजातीनांवृन्ताकंशाकनायकम्॥

वृन्ताकी। स्त्री॰ वार्ताक्यां॥

वृन्तिका। स्त्री॰ वृन्तितायाम। कटुक्याम्॥

वृन्दः। पु॰ दशार्बुदे। शतकोटौ। महार्बुदे। त्रि॰ बहौ॥ न॰ समूहे॥ वृणोति वृणभच्चे। वृन्दादयश्चेतिसाधुः॥

वृन्दा। स्त्री॰ तुलस्याम्॥ जलन्धरस्य पत्न्याम्॥ केदारराजकन्यायाम्॥ राधाषोडशनामान्तर्गतनामविशेषे॥

वृन्दारः। त्रि॰ मनोज्ञे॥

वृन्दारकः। पुं॰ अमरे। देवतायाम्। सुरे। प्रशस्तंवृन्दं यस्य सः। शृङ्गवृन्दाभ्यामारकन्। स्त्रियांसूतकापुत्रिकावृन्दारकाणामितिवक्तव्यमिति॰वृन्दारका॰वृन्दारिकेत्युभयम्॥ यूथपतौ॥ यथा। वृन्दारक सुरश्रेष्ठे मनोज्ञे यूथपातरीतिव्याडिः॥ त्रि॰मनोज्ञे॥ श्रेष्ठे॥

वृन्दावनम्। न॰ स्वनामप्रसिद्धे तीर्थविशेषे॥ वृन्दावनेकेशजालसुमानात्मीचदेवता। भूतेशोभैरवस्तत्रसर्वसिद्धिप्रदायकः॥ इत्यागमः॥ वृन्दायचतपस्तेपेतत्तु वृन्दावनं स्मृतम्। वृन्दयाचकृता क्रीडातेनवामुनिसत्तम॥ इतिपुराणम्॥ वृन्दायावनम्॥

वृन्दावनेश्वरः। पु॰ श्रीकृष्णे॥

वृन्दावनेश्वरी। स्त्री॰ राधायाम्॥

वृन्दिष्ठः। त्रि॰ अतिवृन्दारके॥ अयमेषामतिशयेनवृन्दारकः। इष्ठन्। प्रियस्थिरेतिसाधुः॥

वृन्दीयान्। त्रि॰ वृन्दारकतरे॥ अयमनयोरतिशयेनवृन्दारकः। ईयसुनि॰प्रियस्थिरेतिवृन्दारकस्यवृन्दादेशः॥

वृष। पु॰ आर्द्रके॥ मूले॥ वृणोति॥ वृञ्॰। जनिदस्याद्दिनाशक्॥ उन्दुरौ॥

वृषा। स्त्री॰ औषधीविशेषे॥

वृश्चिकः। पुं॰ अलौ। द्रुमे। विच्छू॰ इ॰भा॰प्र॰॥ वृश्चिकविषस्यलक्षण

यथा। दहत्यग्निरिवादौ च भिनत्तीवोर्द्ध्वमाशु च। वृश्चिकस्य विषं यातिपश्चाद्दंशेऽवतिष्ठते॥ औषधन्तु। जीरकस्य कृतः कल्को घृतसैन्धवसंयुतः। सुखोष्णो मधुना लेपाद्वृश्चिकस्य विषं हरेत्॥ गन्धमाघ्राय मृदितसूर्यावर्त्तदलस्य तु। वृश्चिकेन नरो विद्धः क्षणाद्भवति निर्विषः॥ अष्टमराशौ॥ तज्जन्मजातस्य फलं यथा। वृश्चिकोदयसञ्जातः शौर्यवानतिदुष्टधीः। भवेद्विद्वानसम्पन्नो विग्रही सुभगः सुधीः॥ शूककीटे। शुयपोका। इ०भा०प्र०॥ ओषधीविशेषे॥ वृश्चति। आव्रश्चू छेदने। व्रश्चिकृषोः किकन्। ग्रहिज्येति सम्प्रसारणम्॥

वृश्चिकप्रिया। स्त्री० पूतिकायाम्॥

वृश्चिकर्णी। स्त्री० आखुकर्ण्याम्॥

वृश्चिका। स्त्री० क्षुद्रक्षुपविशेषे। नखपर्ण्याम्। पिच्छिलायाम्। अलिप्रियायाम्॥

वृश्चिकाधिप.। पुं० मङ्गले॥

वृश्चिकाली। स्त्री० क्षुपविशेषे। वृश्चिपत्र्याम्। विषघ्न्याम्। सर्पदंष्ट्रायाम्। भूरिदुग्धायाम्। भासुरपुष्पायाम्। बिछाटी। इ० गौ० भा०॥ वृश्चिकाली विषघ्नी तु कासमारुतनाशिनी॥

वृश्चिपत्री। स्त्री० वृश्चिकाल्याम्॥



वृश्चीर। पुं० श्वेतमूलपुनर्नवायाम्॥

वृष। पुं० धर्म्मे॥ वर्षति फलम्। वृषु सेचने च। इगुपधेति कः॥ वर्षयात् सर्व्वकामान्नाधर्म्मो वृष इति शङ्करभाष्यम्॥ बलीवर्द्दे। उक्षणि। भद्रे। ऋषभे। वृषभे। अनडुहि। सौरभेये। गवि॥ शिववाहनवृषस्य स्वरूपं यथा। शृङ्गायुधः शुक्लकायश्चतुष्पादसितक्षुरः। बृहत्ककुत् कृष्णपुच्छः श्यामस्कन्धो वृष स्मृतः इति॥ वृषोत्सर्गवृषे॥ तल्लक्षणं यथा। चरणानि मुखं पुच्छं यस्य श्वेतानि गोपतेः। लाक्षारससवर्णश्च तं नीलमिति निर्द्दिशेत्॥ एवं विधवृषाभावेऽन्यो वृषभो योयस्योपादेयः सोऽप्युक्तः। वर्णतस्ताम्रकपिलो ब्राह्मणस्य प्रशस्यते। तथा। श्वेतोदरः कृष्णपृष्ठो ब्राह्मणस्य प्रशस्यते॥ स्निग्धरक्तेन वर्णेन क्षत्रियस्य प्रशस्यते॥ काञ्चनाभेन वैश्यस्य कृष्णेनाप्यन्त्यजन्मनः॥ इति। वृषोत्सर्गकालस्तु अशौचान्त द्वितीयदिनम्। कार्त्तिकीचैत्री तृतीयुगाश्विनपूर्णिमा चेति॥ स्पृक्कायाम्॥ चतुर्विधपुरुषमध्ये पुरुषविशेषे॥ तल्लक्षणन्तु। बहुगुणबहुवश्यः शीघ्रकामो नताङ्गः सकलरुचिरदेहः सत्यवादी वृषोयमि

ति । तावुरिसन्ने द्वितीयराशौ एतद्राशिजातफलं यथा । स्थिरम तिसुमतिकमनीयताक् शलताद्दि- न्द्रणामुपभोगताम् । वृषगतोऽहिम गुर्भ शमाद्दिशेत्सुकुलिन . कृति- मस्सुखान्यपि ॥ तल्लग्नजातस्य फ लन्तु। वृषलग्ने भवेज्जातो गुरुभक्त. प्रियवद् । गुणीकृतीधनीलुब्धःशू र. सर्वजनप्रियइति ॥ उत्तरपद स्थः श्रेष्ठे ॥ वासे । वासके । चटरूपे ॥ मूषिके ॥ शुक्रसे । वास्तुस्थानभेदे ॥ रिपौ ॥ कामे ॥ बलवति ॥ स्तम्भनामौषधे ॥ व र्षतिफलमधुकामादीन् । वृषु० । इगुपधेतिकः ॥ वृष्यप्रयोगे । श्री कृष्णे ॥ पुण्ये ॥ वत्सरविशेषे ॥ यथा । कोद्रवाः शालिमुद्गाश्च सक्तुमाषास्तथैवच । महार्घेणाव तेसर्वेवृषेचसुरवन्दिते ॥ १५ ॥ न० जले । पिच्छे ॥ वेतसे ॥ त्रि० पु ण्यवति ॥

वृषकर्णी । स्त्री० सुदर्शनायाम् । सु दर्शनशब्दे० द्र० गौ० भा० ।

वृषकर्मा । पु० भगवति । वृषोध र्मस्तद्धर्मकर्मास्य ॥

वृषकेतु । पुं० कर्णस्यपुत्रे ॥

वृषगन्धा । स्त्री० अजान्त्र्याम् ॥

वृषचक्रम् । न० कृषिकर्मोक्तवृषाका रचक्रे ॥

वृषण । पुं० मुष्के । अण्डकोषे । वृषणीभवत सारीकफास्ट्ङ्मास- मेदसाम् । वीर्यवाहिशिराधारौव षणौपुरुषावहौ । स्थूललिङ्गोदरि द्र स्याद् स्थैकवृषणोभवेत् विषमैवीचस्त्रोचैनृप स्याद्वृष णेसमे ॥ प्रलम्बवृषणोऽल्पायुर्निर्द्रव्यो मणिभिर्भवेत् ॥ वर्षति । वृषु से चने । बाहुलकात्स्यु । बहुल मन्यत्रेतियुज्वा । सम्प्रापूर्वकत्वा द्गुणाभाव ॥

वृषणश्व । पु० इन्द्रस्याश्वे । उच्चै. श्रवसि । श्वेतहये ।

वृषवस्तु । न० इन्द्रभवने । नन्दने । कन्दसारे ।

वृषदंशक । पुं० आखुभुजि । बि डाले । वृषान्मूषिकान्दशति । दश० । कर्मण्यण् । स्वार्थेकन् ॥

वृषध्वज । पुं० वृषाङ्के । शिवे ॥ वृ षोध्वजश्चिह्नमस्य ॥ हेरम्बे ॥ पुण्य कर्मणि ॥

वृषा । पुं० कर्णे ॥ महेन्द्रे ॥ वृषभे ॥ तुरगे ॥ वर्षति । वृषु० । कनिन् युवृषितक्षिराजोत्यादिना० कनिन्॥

वृषनाशन । पुं० विडङ्गे ॥

वृषपति । पुं० शिवे ॥ षण्डे ॥

वृषपत्रिका । स्त्री० वस्तान्त्र्याम् । च आन्त्र्याम् ॥

वृषपर्णी । स्त्री० वृक्षविशेषे । दण्डा

ख्याम् । चक्राङ्ख्याम् । सुदर्शनायाम् । पुराती॰ ञू॰ गो॰ भा॰ ॥ चाखुपर्ख्याम् ॥

वृषपर्व्वा । पुं॰ अन्धकसूदने । शम्भौ । ईशे ॥ दैत्यप्रभेदे ॥ शृङ्गारिथि ॥ कशेरौ ॥ वृषरूपाखिपर्वास्य ॥

वृषभ । पुं॰ श्रेष्ठे ॥ गवि । वृषे ॥ औषधीभेदे । शृङ्ग्याम् ॥ वर्षति सूचेथभूमिसिञ्चति । वृषु॰ । ऋषिवृषिभ्यांकिदित्यभच् ॥ आदिजिने ॥ कर्णरन्ध्रे ॥

वृषभगति : । पुं॰ ईरिशार्थे । शम्भौ । वृषभेणगतिर्यस्य ॥

वृषभध्वज : । पुं॰ महेश्वरे । शिवे ॥ वृषभोध्वजश्चिह्नमस्य ॥

वृषभाक्ष । पुं॰ श्रीकृष्णे ॥ सर्वकामाभिवर्षकेषणिश्रेयस्कस । बहुश्रीहाविनिषच् ॥ वृषभोधर्म्मोहृदि रसात ॥

वृषभाक्षी । स्त्री॰ इन्द्रवारुण्याम् ॥

वृषभानु । पुं॰ सुरभानुपुर्थे । राधिकापितरि ॥

वृषभासा । स्त्री॰ अमरावत्याम् ॥

वृषय । पुं॰ चाश्रये ॥ वृषोति । वृञ्वरणे । वृषो मुकदुकौचेतिक यन्॰ धातो : पुगागमश्च ॥

वृषल : । पुं॰ राज्ञभे ॥ शूद्रे । चन्द्रगुप्तनृपे ॥ वाजिनि । तुरगे ॥ अधार्मिके । वृष्यति॰ वर्षतिवा । वृषु॰ । वृषादिभ्यश्चिदितिकल । वृषधर्म्मलुनातिवा । लूञ्॰ । अन्येभ्योपीतिड ॥ वृषलातिवा । ला॰ । क ॥ वृषोहिभगवान्धर्मस्तस्य य कुरुतेह्यलम् । वृषलतविदुर्देवा स्तस्माद्धर्मनलोपयेत् ॥

वृषलपति । पुं॰ शूद्रे॰ चौराणाराज्ञि ॥

वृषलवृत्ति । पुं॰ शूद्रोपक्रमवृत्तौ ॥

वृषली । स्त्री॰ शूद्रायाम् ॥ जातित्वान्ङीष् ॥ चौमार्थे ॥ निकृतास्मकुर्वन्ति । वृषस्यन्तीचपलयतिभर्त्तारमिति॰ वृषली॰ ब्राह्मणस्यपरिणीताब्राह्मण्यपिवृषलीति॰ श्राद्धभुग्वृषलीतल्पमित्यचकुल्लूकभट्ट . ॥ वन्ध्यातुवृषलीज्ञेया॰ वृषलीतुम्हतप्रजा । अपरावृषलीज्ञेयाकुमारीयारजस्वला ॥ पितृगेहेचतिष्ठन्तीयाकन्यारजस्वला ॥ यथाऽविवाह्यपी । पितुर्गेहेचयाकन्या रज : पश्यत्यसंस्कृता । भ्रूणहत्यापितुस्तस्या : साकन्यावृषलीस्मृता ॥ यस्तुतांवरयेत्कन्यांब्राह्मणोज्ञानदुर्बल : । अश्राद्धेयमपाङ्क्तेयतंविद्याद्वृषलीपतिमिति ॥ स्वपतिपरित्यज्यपरपतिगामिन्याम् । यथा । स्वपतिपरित्यज्यपरसृषे॰ वृषायते । वृषलीसाहिविज्ञेयानशूद्रीवृषलीभवेदिति ॥

वृषलीपति : । पुं॰ सवर्णामपरिणीय कृतशूद्राविवाहे ॥ वृषल्या पति ॥ यस्तुतावरयेत्कन्यांब्राह्मणोज्ञानदुर्बल : । अश्राद्धेयमपाङ्क्तेयंतंवि द्याद्वृषलीपतिम् ॥ यदिशूद्रांव्रजेद्विप्रोवृषलीपतिरेवस । तांपितुर्गृहेसज्ञातरजस्काम् ॥

वृषलीफेन . । पुं॰ शूद्रायाअधररसे ॥

वृषलोचन । पुं॰ मूषिके ॥ षि॰ वृषनयने ॥

वृषवाहन : । पुं॰ शिवे ॥

वृषशत्रु : । पुं॰ विष्णौ ॥ त्रि॰षि॰ष: ॥ बिडाले ॥

वृषस्कंधौ । पुं॰भृङ्गरोले ॥

वृषस्यन्ती । स्त्री॰ कामुक्याम् । मैथुनेच्छावत्याम् ॥ वृषनर॰शुक्रलक्षा॰वृच्छत्यात्मन : । सुपआत्मन : क्यच् । अश्ववीरवृषलवणानामात्मप्रीतोक्यचौतिसुक् । लट . शतृ । उगितश्चेतिङीप् ॥

वृषा । स्त्री॰ मूषिकपर्ण्याम् ॥ कपिकच्छ्वाम् ॥ वर्षति । वृषिरिगुपधेति क : । टाप् ॥

वृषाकपायी । स्त्री॰ श्रियाम् ॥ गौर्य्याम् ॥ वृषाकपे स्त्रीतिपुंयोगार्थे॰ वृषाकप्यग्निकुसितकुसिदानामुदात्त इत्यैकारादेशोङीप् च ॥ वर्याम् । शतावर्याम् ॥ जीवन्त्याम् ॥ श्यामाम् ॥ स्वाहायाम ।

वृषाकपि : । पुं॰ हरे । स्मरहरे ॥ कृष्णे । वासुदेवे ॥ वर्षणात्सर्वकामानांधर्मोवृष । कात्तोयात्भूमिमपादितिकपिर्वराह . । वृषत्वात्कपिरूपत्वाच्चवृषाकपि : । कपिर्वराह: श्रेष्ठश्चधर्मश्चवृषउच्यते । तस्माद्वृषाकपिप्राहकश्यपोमांप्रजापतिरितिमहाभारतम् ॥ जातवेदसि । अग्नौ । वृषधर्मनकम्पयति । कांपांकम्पिचलने । कुण्डकम्प्यानलोपश्चेति॰क : । वृषादृधर्मादाकम्पयतिदुष्टानितिवा ॥ यद्वा । वर्षतिकामान् । वृषु॰ । इगुपधेतिक । आकम्पयतिपापानि । पूर्ववद्दि । वृषश्चासावाकपिश्च ॥ यद्वा । वृषाइन्द्रोन कम्प्यते॰आकम्प्यतेवाऽस्मात् ॥ यद्वा । वृषोधर्मो॰वृषाइन्द्रोवा॰कपिरिवयशोयस्य ॥ यद्वा । वृषश्चासकपिर्वराह . । शाकपार्थिवादि : । अन्येषामपीतिदीर्घ . ॥ यद्वा । वृषाइन्द्रस्य॰अकम् वृषाकम् पिबति॰पिबतो । अन्तर्भावितण्यर्थोवा । इन्द्रदु . ख प्राप्नोति॰प्रापयतिवादैत्यान्॰स्वकत्वात् । विश्विसत्वापूर्वकत्वान्नणय : । किंपितु आगमशास्त्रस्यानित्यत्वान्नतुक् ॥

वृषाकर . । पुं॰ माषे ॥

वृषाकृति : । पुं॰ विष्णौ । नारायणे ।

भू० । भुव : सत्तान्तरयोरिति-
क्विप् ॥

वृष्णि . पुं० यादवे ॥ मेषे ॥ श्रीकृष्णे ॥ वर्षति । वृषु० । सृवृषिभ्यांकिदितिनि ॥ त्रि०पाषण्डे ॥ चण्डे ॥

वृष्णिगर्भ : । पुं० श्रीकृष्णे ॥ वृष्णेर्गर्भो यस्य स : ॥

वृष्य : । पुं० माषे ॥ न०वाजीकरणे ॥ त्रि०शुक्रवृद्धिकारकौषधादौ ॥ वृष्यते । वृषु० । विभाषाकृवृषोरितिक्यप् । पक्षे ख्यतितु०वर्ष्यम् ॥ वृषायहिते ॥ वृषायकामुकायहितम् । खलयवमाषेति-
यत् ॥

वृष्यकन्दा । स्त्री० विदार्याम् ॥

वृष्यगन्धा । स्त्री० वृद्धदारके ॥

वृष्यगन्धिका । स्त्री० अतिबलायाम् ॥

वृष्यवल्लिका । स्त्री० विदार्याम् ॥

वृष्या । स्त्री० ऋद्धिनामौषधे ॥ शतावर्याम् ॥ आमलक्याम् ॥

वृसी । स्त्री० व्रतिनामासने ॥ ब्रह्मचार्याद्यासने ॥ ब्रुवन्त : सीदन्त्यस्याम् ॥ पृषोदरादित्वाद्ब्रुवच्छब्दस्य०वृ०आदेश : । अन्येत्वपीत्यधिकरणे ड : ॥

वृहच्चक्षु : । पुं० महाचक्षुशाकेपक्षिविशेषे । दीर्घपादे । कुलङ्क०-
भा० ॥

वृहच्चित्त : । पुं० बीजपूरे ॥

वृहच्छल्क । पु० चिङ्गटमत्स्ये ॥

वृहच्छदा . । पु० दार्वाघाटे । काठकोरवा०इतिख्यातेखगे ॥

वैकट . । पु० वैकटिके । मणिकारे । मणिआरा०इ०भा०प्र०भेकटी०इ०गौ०देशभाषाप्रसिद्धमत्स्ये ॥ यूनि । जाततारुण्ये ॥ विदूषके ॥

वेग : । पुं० जवे । रंहसि । रये । स्यदे ॥ प्रवाहे । ओघे । धारायाम् ॥ किम्पाके । महाकालफले ॥ रेतसि ॥ मूत्रादिप्रवृत्तौ ॥ यथा । वेगान्नधारयेज्जातुर्विण्मूत्रवत्वहद्धाम् ॥ अपिच । वेगरोधेनक्तर्व्योऽन्यत्रक्रोधवेगत : ॥ पुनश्च । स्वभावत : प्रवृत्तानांमलादीनांजिजीविषु : । नवेगान्धारयेद्वीर कामादीनाञ्चधारयेदिति । पृथिव्यादिचतुष्टयमनोवृत्तौसंस्कारे । वेजनम् । ओविजोभयचलनयो : । घञ् ॥

वेगनाशन : । पुं० श्लेष्मणि ॥

वेगवान् । पु० ईश्वरे ॥ त्रि० वेगिनि ॥ वेगोजवोऽस्यास्ति । मतुप ॥

वेगवती । स्त्री० अर्द्धसमवृत्तभेदे ॥ यथा । विषमेप्रथमास्तरतौनदोध कमेवहिवेगवतीस्यात् ॥ यथा । स्मरवेगवतीव्रजरामाकेशववंशरवैरतिमुग्धा । रभसान्नगुरूनगणय

न्तीकेलिनिकुञ्जगृहायजगाम ॥

वेगसर । पु॰ वेगिहये ॥

वेगित । त्रि॰ सञ्जातवेगे । वेगविशिष्टे ॥ वेगः सञ्जातोऽस्य । तारकादित्वादितच् ॥

वेगी । पुं॰ श्येनपक्षिणि ॥ त्रि॰ वेगवति । तरस्विनि । जाङ्घिके ॥ अतिशयितोवेगोऽस्य । अतइनि ॥

वेगिहरिण । पुं॰ श्वेतवारीमृगे ॥

वेङ्कट । पुं॰ द्रविडदेशस्थेऽचलविशेषे ॥

वेचा । स्त्री॰ मूल्ये ॥ विचिर् । अच् । टाप् ॥ वेचामूल्यञ्चवेतनमितिहलायुध. ॥

वेजानी । स्त्री॰ सोमराज्याम् ॥

वेजित : त्रि॰ भीते ॥

वेडम् । न॰ सान्द्रविच्छिन्नचन्दने ॥

वेडा । ) स्त्री॰ नौकायाम् ॥
वेडी । )

वेण । पुं॰ अङ्गात्सुनीथाशामुत्पन्ने पृथो पितरि. ॥ सतृपुत्रेणतु जातेनवेणोपिविदिवंययौ । पुन्नाम्नोनरकात्पात. सतेनसुमहात्मनेतिविष्णुपुराणम् ॥ वर्णसङ्करजातिविशेषे ॥ यथा । वैदेहकेनत्वम्बष्ठामुत्पन्नोवेणउच्यतइतिमनु : ॥

वेणा । स्त्री॰ भारतवर्षस्थनदीविशेषे ॥

वेणि । स्त्री॰ वेण्याम ॥ वेति॰ वीयतेवा । वीगतिव्याप्तिप्रजनकान्त्यसनखादनेषु । वीज्याज्वरिभ्योनि । बाहुलकात्सुत्वम् ॥ यद्वा । वेणति । वेणृ॰ । इन् ॥

वेणिवेधिनी । स्त्री॰ जलौकायाम् ॥

वेणी । स्त्री॰ केशबन्धे । प्रवेण्याम् । प्रोषितभर्तृकादिधार्यकेशरचनाविशेषे ॥ यथा । जटानेयवेणीकृतकचकलापोनगरलगलेकस्तूरीयशिरसिशशिरेखानतिलकम् । इयभूतिर्नाङ्गेप्रियविरहजन्माधवलिमापुरारातेर्भ्रान्त्याकुसुमशरकिमाव्यथयसि ॥ देवताडे ॥ नद्यादेरन्तरे ॥ सेतौ ॥ प्रवाहे ॥ मेष्याम् ॥ नदीविशेषे ॥ वेणति । वेणृगतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु ॥ इन् । कृदिकारादितिङीष् ॥

वेणीर . । पुं॰ अरिष्टवृक्षे ॥

वेणु : । पुं॰ नृपविशेषे ॥ त्वक्सारे । वंशे ॥ वंशवाद्ये ॥ यथा । महानन्दस्तथानन्दोविजयोथजयस्तथा । चत्वारउत्तमाव शामतङ्गमुनिसम्मता ॥ दशाङ्गुलोमहानन्दोनन्दएकादशाङ्गुल । द्वादशाङ्गुलमानस्तुविजय परिकीर्त्तित । चतुर्दशाङ्गुलिमितोजयइत्यभिधीयते ॥ वेणति । वेणृगत्यादौ । बाहुलकादु ॥ यद्वा । अ

जति । अजिवृरीभ्यो निच्चेति णुः । अजेवी ॥

वेणुकम् । न॰ तोत्रे । गजस्य नोदनदण्डे । वेणुना निर्वृत्तम् । निर्वृत्ते ष्वक्षद्यूतादिभ्य इति ठक् । इसुसुक्तान्तात्क । सञ्ज्ञापूर्वकत्वान्नवृद्धि . ॥

वेणुकर्क्कर: । पुं॰ करीरवृक्षे ॥

वेणुज . । पुं॰ वेणुयवे ॥

वेणुदारी । पु॰ नरकात्मजे ॥ वाणासुरात्मजे ॥

वेणुध्म । पुं॰ वेणुवादके । वंशीवादके ॥ वेणुधमति । ध्मा॰ । आतोनुपसर्गेक . ॥

वेणुपत्री । स्त्री॰ वंशपत्रीवृक्षे ॥

वेणुयव । पुं॰ वंशतण्डुले । वंशयवे ॥

वेणुवाद्य । पु॰ वैणवे ॥

वेणुबीजम् । न॰ वंशयवे ॥

वेणवा । स्त्री॰ तीर्थविशेषे ॥

वेणवासङ्गम: । पुं॰ तीर्थविशेषे ॥

वेत । पुं॰ वेत्रे ॥ कृ॰रा॰नि॰ ॥

वेतनम् । न॰ कर्मकरस्य॰भृतौ । कर्मण्यायाम् । विधायाम् । भृत्यायाम् । निर्वेशे । कामकराकृ॰हृ॰भा॰ ॥ जीवनोपाये । आजीवे ॥ रूप्ये ॥ वीयतेऽनेन । वीगत्यादौ । वीपतिभ्यांतनन् ॥

वेतस: । पुं॰ लताविशेषे । रथे । अम्बुपुष्पे । विटुले । शीते । वानीरे । वञ्जुले । वेत॰कृ॰भा॰ ॥ अथ भावप्रकाश । वेतसो विदुलो नम्रो वञ्जुलो दीर्घपत्रक । कालेयो गन्धपत्रश्च वञ्जुलश्च तथा ॥ नदीकूलप्रियस्त्वन्य सुशीतो घनपुष्पका : । जलजातस्तोयकामो विदुरो जलवेतस : ॥ वेतस । शीतलो दाहशोथार्शोयोनिरुग्व्रणाम् । हन्ति वीसर्पकृच्छ्रास्रपित्ताश्मरिकफानिलाम् ॥ अयनम् । अत्र॰ । नपुंसकवृत्तिश्च : । वाधिकत्वस्य॰कृतस्नानं॰स्मृति । शोचन्तकर्मणि । आतोनुपेति का : ॥ यद्वा । अजति । वेञ् । वेञ स्तुट्चेत्यसच् । वाहुलकादात्त्वम ॥

वेतसाम्ल . । पु॰ अम्लवेतसे ॥

वेतसी । स्त्री॰ वेतसे ॥

वेतसीका । स्त्री॰ तीर्थविशेषे ॥

वेतस्वान् । त्रि॰ बहुवेतसे देशे ॥ वेतसा . सन्त्यत्र । कुमुदनडवेतसेभ्यो ड्मतुप् । मादुपधायाश्चेति व : ।

वेताल : । पुं॰ ईश्वरद्वारपाले ॥ भूताधिष्ठितशवे ॥ भवस्मान्नभस्माभासमानभूतविशेषे ॥ शिवगणाधिपविशेषे ॥

वेत्ता । त्रि॰ वेदितरि । ज्ञातरि ॥ वेत्ति । विद॰ । तृच् ॥

वेत्र : । पु॰ वेते । योगिदण्डे । सुदण्डे । वीयते । वीगत्यादिषु । गुधृवीपचिवचीत्यादिना॰त्र : ॥ वं

शे ॥ फलिन्याम् ॥ पुं॰ असुरविशे
षे ॥

वेत्रधर . । पुं॰ द्वारपाले ॥

वेत्रधारकः । पुं॰ द्वा स्थिते ॥

वेत्रवान् । त्रि॰ वेत्रधारके ॥

वेत्रवती । स्त्री॰ नदीविशेषे ॥ सातुमा
लवदेशात्॰कालपीसमीपेयमुनायां
मिलिता ॥ वेत्रासुरमालरि ॥ वेत्रा
णिसन्त्यस्याम् । मतुप् । ङीप् ॥

वेत्रावती । स्त्री॰ वेत्रवत्यानद्याम् ॥

वेत्रासनम् । न॰ वेत्रनिर्मितासने ।
आसन्द्याम् ॥ स्याद्वेत्रासनमासन्दी
ति॰हेमचन्द्र . ॥

वेत्रासुर । पु॰ असुरविशेषे ॥

वेत्री । पु॰ द्वारपाले ॥ त्रि॰वेत्रयुक्ते ॥

वेद । पुं॰ आम्नाये । श्रुतौ । अने
पगृहीतवर्णात्मन्यपौरुषेयवाक्ये ॥
वेदयतिबोधयतिआत्मानम् । विद
ज्ञाने । वृत्यतोण्यन्तात्पचाद्यच्
॥ नार्थंबुद्धावेदसृष्टि . कालिदासा
दिवाक्यवत् । किन्तुव्यासबुद्धायत्ना
त्स्यादतोऽपौरुषेयता ॥ यथाहुरा
र्यियामाचार्याः । वेदोऽनादितया
वायद्वापरमेश्वरप्रणीततया । भवति
परमप्रमाणं वेद्योनास्तिस्वतस्वपरतो
वा ॥ नापेक्षतेयदन्यद्यदपेक्षन्तेऽ
खिलानिमानानि । वाक्यतल्लिङ
मानांमानवशाद्यतीन्द्रियावगतौ ॥
मानंप्रबोधयन्तंबोधमानेनयेबुभुत्स

न्ते । एधोभिरेवदहनदग्धुंवाञ्छन्ति
तेमहात्मान ॥ ४६ ॥ वेदोनादिर
मुष्यव्यञ्जकईशः स्वयप्रकाशात्मा ।
तदभिव्यक्तिमुदीच्यप्रोक्तोसौसूरि
भि॰ प्रमाणमिति ॥ रूपाणामव
लोकेचक्षुरिवान्यन्नकारणदृष्टम् । त
द्वदृष्टावगतौवेदवदन्योनवेदको हे
तुः ॥ निगमेषुनिखिलतार्थंतन्त्वं का
श्यादिप्रकाशयति । तदिदमनुवा
दमाचप्रामाण्य तस्यसिद्धातिनकि
ञ्चित् ॥ अप्रहयवर्तिनिगमेसाधयति
द्वैतमेवएकोंश । अद्वैतमेववस्तुप्र
तिपादयतिप्रसिद्धमपरोंश ॥ ५० ॥
सचवेदामन्त्रब्राह्मणभेदाद्द्विविध ॰
श्विधिमन्त्रनामधेयनिषेधार्थवादभेदा
त्पञ्चविधश्चभवति ॥ अज्ञातज्ञा
पकोवेदइतिप्रमाणविद ॥ अ
तोवेदार्थज्ञानप्रशंसामाहकूर्मपुराण
म् । नवेदपाठमात्रेणसन्तोषंका
रयेद्बुध . । पाठमात्रावसानस्तुपङ्के
गौरिवसीदति ॥ योऽधीत्यविधिव
द्विप्र.वेदार्थंनविचारयेत् । ससान्व
य शूद्रसम पात्रतांनप्रपद्यते ॥
व्यासश्च । वेदस्याध्ययनसर्वधर्मशा
स्त्रस्यवापियत् । अजानतार्थंतत्स
र्वंतुषाणांकण्डनयथा ॥ यथापशुर्भा
रवाहीनतस्यभजतेफलम् । द्विजस्त
थार्थानभिज्ञोनवेदफलमश्नुते । पा
ठमात्रवतोनित्य द्विजातीश्चार्थवर्जि

तान् । पशूनिबचतान्प्राच्चोवाङ्‌माचे थापिनार्चयेत् ॥ श्रुतहीनम धीतयन्नेहनःसुचतद्भवेत् । श्रुतन्तु केवलमपिसमुद्धारायकल्पते । योधीतेनार्थंतत्त्वज्ञस्तस्यतद्धारणाहथा । भारवाहीसभृतक केवलस्त्रभागभवेत् ॥ तस्मादर्थंपरिज्ञानेयत्नःकार्यौविजानता । ज्ञानकर्मसमयुक्तायुक्तार्थैकथितमया ॥ अधीतश्रुतसयुक्त तथाश्रेष्ठंनकेवलम् । अधीत्ययत्किञ्चिदपितदर्थमवबुध्यच । स्वर्गेलोकमवाप्नोतिधर्मानुष्ठानविद्द्विजः इति । अपिच । वेदार्थज्ञोजपजप्त्वातथैवाध्ययनंद्विजः । कुर्वन्स्वर्गमवाप्नोतिनरकान्तुविपर्यये॰इतिचव्यास ॥ मनुः । वेदशास्त्रार्थंतत्त्वज्ञोयचतत्राश्रमेवसेत् । इहैवलोकेतिष्ठन्सब्रह्मलोकायकल्पते इति । व्यास । समुच्चितलोकमपिश्रुताधीतविशिष्यते । चतुर्णामपिवेदानांकेवलाध्ययनाद्द्विजा ॥ अज्ञेभ्योग्रन्थिनःश्रेष्ठाग्रन्थिभ्योधारिणोवराः । धारिभ्यज्ञार्थतत्त्वज्ञास्तेभ्योप्यध्यात्मचिन्तकाः ॥ पुस्तकेवेदलिखननिषेध । पाद्मोत्तरखण्डे ११० ऽध्यायेयथा । वेदस्यलिखनकृत्वाय : पठेद्ब्राह्मणाभवेत् । पुस्तकावाप्दहेशाप्यब्रह्मघातीभवेद्ध्रुवमिति ॥ विदस्त्वमेनधर्मम् । विदस्त्रा

ने । इत्यर्थ तिघञ् ॥ वेदार्थवेदम हेतुत्वाद्व्याकरणे ॥ व्याकरणेनहि पदादिविभागशक्त्यग्वेदादयोज्ञाय न्ते ॥ अनुभवे । भावेघञ् ॥ इत्तो ॥ कोशे ॥ इन्द्रियादिदेवताप्रकाश के ॥ मौनशरीरावच्छे देनभगवदा ख्यमितिन्यायशास्त्रम् ॥

वेदगर्भ ० । पु॰ अजयोनौ । ब्रह्मणि ॥ ब्राह्मणे ॥ वेदोगर्भेयस्यस ॥

वेदगर्भा । स्त्री॰ दुर्गायाम् । वेदजन यित्र्याम् ॥ अस्यमहतोभूतस्यनिश्व सितमेतद्यदृग्वेद इत्यादिश्रुते । म मैवाख्यापराशक्तिर्वेदसंज्ञापुरातनी । ऋग्यजु सामरूपेणसर्गादौसप्रव र्त तइतिकूर्मपुराणे द्वादशाध्याये श्री भगवद्वाक्य तथाचचत्वारोवेदा साङ्गाः सरहस्याबहुधाभिन्नाः । एकशतमध्वर्युशाखा । सहस्रवर्त्मा सामवेदः । एकविंशतिधाबाह्वृच्यम् । नवधाथर्वणोवेदइतिमहाभाष्यम् ॥

वेदज्ञ । त्रि॰ वेदपारगे ॥ वेदंजानाति । ज्ञा॰ । आतोनुपसर्गेइतिक ॥

वेदनम् । न॰ अनुभूतौ । सवेदने ॥ विदज्ञाने । ल्युट्‌चेति॰ल्यु टिकोब त्वम् ॥ विवाहे ॥

वेदना । स्त्री॰ ज्ञाने ॥ दुःखे । पीडायाम् ॥ विदवेदनाख्यानमिवा सेषुचुरादिः । ण्यासेतियुच् ॥ व

दृ । विदज्ञाने । घट्टिवन्दिविदिभ्य श्चेतिवाच्यमितियुच् ॥

वेदनास्कन्ध । पु० विषयज्ञानप्रपञ्चे । विज्ञानस्कन्धजन्ययोः सुखदुःखयोः याप्रियाप्रियानुभवविषयस्पर्शेसुखदुःखतद्रहितविशेषावस्थाचित्तस्य जायते० सवेदनास्कन्धइतिवाचस्पतिः । सुखादिप्रत्ययोवेदनास्कन्ध इत्यानन्दगिरि ॥

वेदनिन्दकः । पु० नास्तिके । वेदनिन्दाकरे ॥ वेदनिन्दति । णिदिकुत्सायाम् । ण्वुल् ॥

वेदपारग । पु० मन्त्रब्राह्मणात्मकशाखाध्यायिनि ॥ त्रि० अवगतवेदार्थतत्त्वे० ज्ञानिनि० सन्न्यासिनि ॥ वेदस्यपारंगच्छति । गम्लृ० । अन्तात्यन्तेतिगमेर्डः ॥

वेदभाग । पुं० मन्त्रब्राह्मणयोः ॥ पूर्वैरुदाहृतेषुहेत्वादिषु । तेयथा । हेतुनिर्वचननिन्दाप्रशंसासंशयोविधि । परकृतिः पुराकल्पोव्यवधारणकल्पनेतिहेत्वादय ॥

वेदमाता । स्त्री० गायत्र्याम् ॥ सर्वेषामादिजाः प्रोक्तानगैवानघवेधा वा । उपासतेद्यादिदेवींगायत्रींवेदमातरम् ॥ अपिच । योधीतेऽहन्यहन्येतांसावित्रींवेदमातरम् । विज्ञायार्थंब्रह्मचारीसयातिपरमांगतिमिति ॥ दुर्गायाम् ॥

वेदमार्ग । पुं० वेदविधितेपथि ॥ यथा । कलौचैर्निरभिद्यन्तेसर्वोवर्णतोश्वरे । पाखण्डिनामसद्वादैर्वेदमार्गा कलौयथेतिश्री० । अपिच । एतस्माद्वेदमार्गाद्धियदन्यदिहजायते । तत्सर्वंकर्मविज्ञेयंरौद्रंशौचविवर्जितमितिव०पु० ॥

वेदवती । स्त्री० कुशध्वजराजकन्यायाम् ॥ विवेकस्यप्रतीहार्याम् । वेदविद्याभिमानिन्यांदेवतायाम् ॥

वेदवदनम् । न० व्याकरणे । यथा । योवेदवेदवदनसदनंहिसम्यग्ब्राह्म्या सवेदमपिवेदकिमन्यशास्त्रम् । यस्मादतः प्रथममेतदधीत्यधीमान्शास्त्रान्तरस्यभवतिश्रवणेधिकारीतिसिद्धान्तशिरोमणिः ॥ योगिनीतन्त्रेप्ययमेवपाठ ॥

वेदवादरत । त्रि० वेदेयेसन्तिवादाः अर्थवादाः अक्षय्यहवैचातुर्मास्ययाजिनः सुकृतंभवतीत्येवमादयस्तेष्वेवरते । वेदार्थसत्यत्वेनैवमेवैतद्धितिमिथ्याविश्वासेनसन्तुष्टे ॥

वेदवास । पुं० ब्राह्मणे । वेदस्यवासोयस्मिन् ॥

वेदवित् । पुं० कर्मब्रह्माख्यवेदार्थविदि । कर्मकाण्डोपासनाकाण्डज्ञानकाण्डात्मकसर्ववेदार्थविदि ॥ वेदज्ञे ॥ऋग्वेदादयोवेदाश्चत्वारस्तत्त्वानीतिवेदविदइति ॥ वेदवेदार्थ

त्यवेत्ति • विद्यते • विन्दते वा । विद ज्ञाने • विद सत्तायाम् • विद विचारणे वा । सत्खिति • क्विप् ॥

वेदव्यास: । पुं॰ शुकदेवस्यपितरि । माठरे । द्वैपायने । पाराशर्ये । बादरायणे ॥ वेदं व्यस्यति । असु॰ । अण् ॥ यथा । वेदमेकं चतुर्भेदं कृत्वा शाखाशतैर्विभुः । करोति बहुलं भूयो वेदव्यासस्वरूपधृक् ॥ द्वापरे तु युगे विष्णुर्व्यासरूपी महामुने । वेदमेकं सबहुधा कुरुते जगतो हितः ॥ यया सुकुरुते तन्वा वेदमेकं पृथक् प्रभुः । वेदव्यासाभिधाना तु मा सा मूर्त्तिर्मधुद्विषइति विष्णुपुराणम् ॥

वेद: । न॰ धने ॥ विद्यते • लभ्यते । विद्लृ लाभे । असुन् ॥

वेदसार: । पुं॰ श्रीदेवीभागवते ॥

वेदसंन्यासी । पुं॰ वेदविहिताग्निहोत्रादिकर्मत्यागिनि ॥

वेदस्वामी । पुं॰ आगमपे । आगमाधिपती ॥ यथा च कालिदास: । सुरुशनो ज्ञारकराजपुत्रा ज्ञेया: क्रमेणागमपा: प्रवीणा: । निजागमेशाद्धनिमेखलाया अस्य सदाचारकरो निरुक्त: ॥ इति ॥ सदाचारकर: • तेषां विप्रादीनामाचारकृत् • उक्तम् ॥

वेदायणी । स्त्री॰ सरस्वत्याम् ॥

वेदाङ्गम् । न॰ शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति श्रुतिबोधितेषु षट्सु ॥ तत्राकारादिवर्णानां स्थलकरणप्रयत्नबोधिका अकुहविसर्जनीयानां कण्ठ इत्यादिका शिक्षा । यागक्रियाणामुपदेश: • कल्प: । साधुशब्दान्वाख्यानं व्याकरणम् । वर्णागमो वर्णविपर्ययश्चेत्यादिना निरुक्तम् । श्रुतिच्छन्दसा प्रत्यायकं छन्द: । यज्ञादिगणनशास्त्रं ज्योतिषमिति सङ्क्षेप: ॥

वेदाश्रय: । पुं॰ परमेश्वरे ॥ वेदा आश्रयभूता यस्य ॥

वेदादि । न॰ प्रणवे ॥

वेदानुवचनम् । न॰ नित्यस्वाध्यायलक्षणे मन्त्रब्राह्मणाध्ययने ॥ वेदस्य अनुवचनम् ॥ वेदोऽनूच्यते गुरूच्चारणानन्तरं पठ्यते इति ॥ अथवा । वेदस्य अनु पश्चात् गुरूपासनानन्तरम् वचनम् • पठनम् ॥

वेदान्त: । पुं॰ उपनिषदि ॥ तदुपकारिशारीरकसूत्रादौ ॥ तथा च वेदानामन्तोऽवसानभागो वेदान्त इति व्युत्पत्तियोगात् स्याद्वेदान्तशब्दो वेदशिरोभागे । तरभेदेषूपनिषत्सु • शारीरकादौतूपचरित इति ॥ वेदानामन्ते निर्णये । प्रस्थानत्रयात्मके मार्गे ॥ आसुप्तेरामृते: कालं नयेद्वेदान्तचिन्तयेतिसत्यासिनो यावज्जीवाग्निहोत्रप्रयोगवच्छ्रवणं च विहितं श्रवण

दि । गृहस्थादीनान्तु श्रवणादिका भ्यम् । तदुक्तम् । दिने दिने तु वेदान्तश्रवणाद्भक्तिसंयुतात् । गुरुशुश्रूषया लब्धात् कृच्छ्राऽशीतिफलं लभेदिति ॥ वेदेषु तिलेषु तैलवदन्तोऽवस्थितो य । तैलवद्वेदे वेदान्त उ प्रतिष्ठित इति श्रवणात् ॥

वेदान्तकृत् । पुं० वेदान्तार्थसम्प्रदायप्रवर्त्तके वेदव्यासादौ ॥

वेदान्तग । त्रि० ब्रह्मज्ञे ॥ वेदान्तानामुपनिषदामर्थं ब्रह्म गच्छति । गम् । डप्रत्यय ॥

वेदान्तसार । पुं० वेदान्तस्य मथितार्थे । वेदान्तस्य सारः ॥

वेदान्ती । पुं० ब्रह्मतत्त्वज्ञे । येत्वेताविद्यात्मिकाचेतोवृत्तिमुपेक्ष्य केवलतदनुकूलयुक्त्यनुसन्धानकौशलेनैव तुष्यन्ति ते तु नैयायिकादिसदृशा निन्दिता एव । तदुक्तम् । वेदान्ता बहुतर्ककर्कशमतिग्रस्ता परमायया । भट्टाः कर्मकलाकुलाहतधियो द्वैतिवैशेषिकाः । अन्ये भेदरताविवादकलहास्ते तत्त्वतो वञ्चितास्तस्मात् सिद्धमतस्वभावकमयधीरः परं संश्रयेत् । इति ॥ वेदान्ता उपनिषदः प्रमाणमस्यास्ति इनि ॥

वेदाभ्यास । पुं० वेदानुशीलने ॥ स पञ्चविधो यथा दक्ष । द्वितीये च तथा भागे वेदाभ्यासो विधीयते । वेदाभ्यासो हि विप्राणां परमं तप उच्यते । ब्रह्मयज्ञः परश्चैव षडङ्गसहितस्तथा । वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः । तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा । ग्रहत्व शिखितो नवेदमनधीत्यान्यां विद्यामधीतान्य न वेदाङ्गस्मृतिभ्य ॥

वेदार । पु० कृकलासे । इ० त्रि० ष ॥

वेदारण्यम् । न० तुन्दयादेशासमधिष्ठितपुण्यस्थाने ॥

वेदि । पु० पण्डिते । बुधे । वेत्ति । विद् । सर्वधातुभ्य इन् इति विदीतिइन् । न० अम्बष्ठायाम् ॥ स्त्री० परिष्कृतायाम् भूमौ ॥ परिष्कृता० यज्ञार्थं० पशुबन्धनार्थ० यज्ञपात्रासादनाय वा द्विसंस्कारभूमिर्वेदिरुच्यते ॥ विद्यते० धर्मेन ज्ञायते० विचार्यते० प्राप्यते वा । पूर्वोदेरिन् ॥ यद्वा । वेदयति० धिद्यते वा । विदनिवासादौ० चुरादि । अवट् ॥ अङ्गुलिमुद्रायाम् ॥

वेदिका । स्त्री० चतुरस्रायाकर्मार्थेवेद्याम् ॥ वितर्दिम् । प्राङ्गणादिषु कृते उपवेशनस्थाने । स्वार्थे क ॥

वेदिजा । स्त्री० द्रौपद्याम् । इति हे

मचन्द्र ॥

वेदित । त्रि॰ ज्ञापिते ।

वेदितव्य । त्रि॰ विदुरे । ज्ञातरि ॥ इ॰ है॰ चन्द्र ॥

वेदी । पु॰ पण्डिते ॥

वेदी । स्त्री॰ सरस्वत्याम् ॥ वेदिश ब्दार्थे ॥

वेदीतीर्थम् । न॰ तीर्थविशेषे ॥

वेदीश । पुं॰ द्रुहिणे । विधौ । ब्रह्मणि ॥

वेदोदय । पुं॰ रवौ । सूर्ये ॥

वेदोदित । त्रि॰ वेदोक्ते ॥

वेदोपकरणम् । न॰ शिक्षादिवेदाङ्गे ॥ वेदस्यउपकरणम् ॥

वेद्धव्य । त्रि॰ ताडयितव्ये ॥

वेद्य । त्रि॰ वेदितव्यवस्तुनि । ज्ञेये । सविदिषयभूते ॥ वेदितुयोग्य । विदेर्ज्ञानार्थात्कर्मणियत् । सचार्हकृत्यतृचश्चेत्यर्हार्थे । इत्याहभगवान शङ्कराभाष्ये । नि : श्रेयसार्थिभिर्वेदनार्हत्वाद्वेद्यइति ।

वेध । पुं॰ व्यधे । वेधने ॥ वेधनम् । विधविधाने । घञ् ॥ वेपथे ॥ गभीरतायाम् । गहरा॰ इति भाषाप्र॰ ॥

वेधक । पुं॰ अम्लवेतसे ॥ कर्पूरे । न॰ धान्याके ॥ त्रि॰ वेधकर्तरि ॥

वेधनम् । न॰ वेधे । बींधना॰ इ॰ भा॰ ॥ विध॰ ल्युट् ॥ वेधसाधने ॥ विध्यतेऽनेन । करणेति ल्युट् ।

वेधनिका । स्त्री॰ मणिशङ्खादिवेधनोपकरणे । आस्फोटन्याम् । भौरी॰ बर्मी॰ इ॰ भा॰ ॥ विध्यतेऽनया । विधविधाने । ल्युट् । स्वार्थेक ॥

वेधमुख्य । पुं॰ कर्चूरे । वेधिमुख्य ॥

वेधमुख्यक । पु॰ कर्चूरके ॥ द्राविडके । कल्यके॥ स्वार्थेकन् ॥

वेधमुख्या । स्त्री॰ कस्तूर्याम् वेधिमुख्या ॥

वेधा । पुं॰ परमेष्ठिनि । धातरि॥ बुधे ॥ विष्णौ । हृषीकेशे ॥ रवौ ॥ श्वेतार्के ॥ विदधाति । डुधाञ् । विधाञोवेधचेतिविधादेशोऽसिप्रत्ययस्य ॥ विधति । विधविधाने । असुन्वा ॥

वेधसम् । न॰ ब्रह्मतीर्थे । अङ्गुष्ठमूले । इ॰ श॰ च॰ का॰ ॥

वेधित । छिद्रिते । विद्धे । विंधा॰ बींधा॰ इ॰ भा॰ ॥ वेध्यतेस्म । विध॰ ण्यन्तोऽनेकार्थ । क्तः ॥

वेधी । पुं॰ अम्लवेतसे ॥ त्रि॰ वेधकर्तरि ॥ वेधविशिष्टे ॥

वेधिनी । स्त्री॰ रक्तपायाम् ॥ मेथिकायाम् ॥

वेध्यम् । न॰ लक्ष्ये ॥ त्रि॰ वेधनीये ॥

वेन । पुं॰ प्रजापतौ ॥ वजति ।

अज० । धाप् वस्त्रस्य्यतिथ्योम । अजेर्वी ॥

वेन्ना । स्त्री० नद्याम् ॥ वनति । वन शब्दे सम्भक्तौ वा । अनेरित्योपधाया वृति० न । लघूपधगुण ॥

वेपथु । पुं० कम्पे ॥ वेपनम् । टुवेपृ कम्पने । ट्वितोऽथुच् ।

वेपनम् । न० कम्पने । टुवेपृ० । ल्युट् ॥

वेप । न० अनवद्ये ॥

वेपमान । त्रि० भयेन कम्पमाने ॥

वेम । पुं० वायदण्डे ॥ यथा । वायदण्ड पुंसि वेमा वेमो नावेमनद्ग योरिति श० र० अ० ली० ॥

वेमा । पु० न० वायदण्डे । तन्तुवायदण्डो वेयु० इ० गौ० भा ॥ वयति० अनेन । वेञ् । वेञ सर्वञ्चेति० इमनिच् । अर्द्धर्चादि । सामनी० वेमनी० इति प्रयोगात् ॥

वेमन । त्रि० वेमवति ॥ वेमाऽस्यास्ति । पामादित्वात्० न : ॥

वेरम् । न० कलेवरे । शरीरे ॥ वार्त्ताकौ । वृन्ताके ॥ कुङ्कुमे । घुसृणे ॥

वेरकम् । न० कर्पूरे ॥

वेरट । पु० नीचे ॥ न० बरटीफले ॥ त्रि० मिश्रीकृते ॥

वेलम् । न० आरामे । उपवने । कृत्रिमवने ॥

वेला । स्त्री० काले समये ॥ मर्यादायाम् । सीमायाम ॥ होरायाम् ॥ यथा । चतुर्विंशतिवेलाभिरहोराच प्रचक्षते । पश्चिमाद्देहोराचान्तिहोराचा विद्यादिक्रमक्र० वह्निपुराणम च ब्धे कूले ॥ अब्धेर्विकारे । अक्लान्तविकृतौ ॥ अक्लिष्टमरणे ॥ रागे ॥ ईश्वरस्य भोजने ॥ बुधस्य भार्यायाम् ॥ वाचि ॥ वेलति । वेलृ गतौ । पचाद्यच् ॥ वेल्यते० अनया वा । वेल कालोपदेशे । गुरोश्च हल इत्य । टाप् ॥

वेलाकूलम् । न० ताम्रलिप्तदेशे ॥

वेलायाम् । अ० कालपरिमाणे ॥

वेल्लम् । न० पुं० विडङ्गे ॥ वेल्लति । वेल्ल चलने । पचाद्यच् ॥ अभ्यनुज्ञाने ॥

वेल्लजम । न० मरिचे ॥ वेलनम् । वेल्ल० । घञ् ॥ वेल्ल जायते । जनौ० । अन्तर्भाविण्यर्थ० । अन्येभ्योपीतिड ॥

वेल्लनम् । न० भूमौ अश्वस्य लुण्ठने । लुठने । अङ्गपरिवर्त्तने ॥ वलनइ० प्र० रोटिकानिर्माणार्थ काष्ठे ॥

वेल्लनी । स्त्री० मालादूर्वायाम् ॥

वेल्लन्तर । पुं० सजलदेशप्रसिद्धे वृक्षविशेषे । वीरतरौ । तथा । वेल्लन्तरोऽजगतिशीरतरु प्रसिद्ध श्वेतासिताऽरुणविलोहितनीलपुष्प : ।

आत्जातितुल्यकुसुम शमिसूक्ष्म पत्र स्रोतृकण्टकौघजलदेशजएष मघ . ॥ वेलन्तरोरसिपाकितिक्तस् त्याकफापह । मूत्राघातश्मजि दृग्यात्थीयेनिमूत्रानिलार्त्तिजित् ॥

वेलवल . । पुं॰ कैलिनागरे ॥

वेलि । स्त्री॰ लतायाम् ॥

वेलिकाख्या । स्त्री॰ वृक्षविशेषे । मरु न्मालायाम । विल्वपत्र्याम् ॥

वेलितम् । न॰ चेष्टिते ॥ गमने ॥ त्रि॰ कुटिले ॥ विधते । कम्पिते ॥ वेलतिस्म । वेल॰ । गत्यर्थेतिक्त ॥

वेश । पु॰ वेश्यागृहे ॥ गृहमात्रे ॥ नेपथ्ये । अलङ्कारादिकृतशोभाया म् ॥ विशन्त्यत्र । विशप्रवेशने । ह लश्चेतिघञ ॥ विशति॰वेशनम्॰ विशतीवा । विश॰ । पदरुजविश स्पृशोघञ ॰अच्वा ॥ पण्यस्त्रिया . भृतौ ॥ प्रवेशे ॥

वेशक : । पुं॰ गृहे ॥ वेशएव । स्वा र्थेक : ॥

वेशजीवी । त्रि॰ वेशवति ॥

वेशदान । पु॰ सूर्य्यशोभायाम् ॥

वेशधारी । पुं॰ छलतपस्विनि ॥ त्रि॰ वेशधारके ॥

वेशनम् । न॰ चणकचूर्णे । वेसण॰ इ॰भा॰प्र॰ ॥ यथा । दोलयचणका नाम्बुनिस्तुषायन्त्रपेषिता । तच्चू र्णंवेशनप्रोक्तपाकशास्त्रविशारदे ॥

वेशनमोदक । पु॰ बुंदियाकालाडू॰इतिख्यातेखाद्यप्रभेदे ॥ यथा सुक्तामोदकवत्कार्यावेशनस्यचमो दका , । तेवल्यालघव : शीता : किञ्चिद्वातकरास्तथा । विष्टम्भिनो ज्वरघ्नाश्चपित्तरक्तकफापहा : ॥ *

वेशनवटिका स्त्री॰ पकौरी॰इ॰प्र॰ खाद्यद्रव्ये वटिकावेशनस्यापिक थितायानिमज्जिता । रुच्याविष्टम्भ जननीबल्यापुष्टिकरीस्मृता ॥

वेशन्त । पु॰ पल्वले । अल्पसरसि ॥ विशन्त्यस्मिन्भेकादय । विश॰ । जृविशिभ्याभाच् ॥ वन्हौ ॥

वेशर : । पुं॰ अश्वतरे ॥

वेशवार । पुं॰ वेगर॰इ॰भा॰प्र॰मां सादिसाधकद्रव्य ॥ यथा । द्रव्या णिवेशवारस्यनागकौदलानिहि । तज्जुलाचलवङ्गानिमरिचानिसमा सत . ॥

वेशि । पुं॰ जन्मकालेसूर्याक्रान्तरा शेर्द्वितीयेराशौ ॥ यथा । सूर्याद्वितौ यमृक्षवेशिस्थानप्रकीर्त्तितंयवनैरा ति ॥

वेशीजाता । स्त्री॰ पुत्रदात्रीलता- याम् ॥

वेश्मकलिङ्ग । पुं॰ चटके ॥

वेश्मकूल : । पु॰ चव्योषधायाम् ॥

वेश्म । न॰ गृहे । सद्मनि ॥ विशन्त्य त्र । विश॰ । मनिन् ॥

वेश्मनकुल । पुं॰ गन्धमूषिके ॥
वेश्मभू । स्त्री॰ गृहरचनावच्छिन्नभूमौ । वास्तुनि ॥ वेश्मनोभूः ॥
वेश्यम् । न॰ वेश्यालये ॥ वेशेभव । दिगादित्वाद्यत् ॥
वेश्या । स्त्री॰ वारस्त्रियाम् । गणिकायाम् । रूपाजीवायाम् ॥ वेशेनपण्येनसम्पद्यते । कर्मवेशाद्यत् ॥ वेशेवेश्यागृहेभवावा । दिगादित्वाद्यत् ॥ वेश प्रवेशेसुत्यस्था । अन्येभ्योपीतियत् ॥ पाठायाम् ॥
वेश्यागण : । पुं॰ वेश्यावारे । वेश्यासमूहे ॥
वेश्याचार्य्य । पुं॰ पीठमर्द्दे ॥
वेश्याजनसमाश्रय । पुं॰ । गणिकागृहे । वेशे ॥ वेश्याजनस्यसमाश्रयोवासस्थानम् ॥
वेश्यालय : । पुं॰ वेशे ॥
वेष । पुं॰ वेशे । प्रसाधने । अलङ्कारचनादिकृतशोभायाम् ॥ विवेष्टि । विष्लृव्याप्तौ । घञ् ।
वेषण । पुं॰ कासमर्द्दे । पचोपस्करे ।
वेषणा । स्त्री॰ वितुन्नके । धन्याके ॥
वेष्ट : । पुं॰ वेष्टने ॥ निर्यासे ॥ श्रीवेष्टे । सरलद्रवे । वेष्टते । वेष्टवेष्टने । घञ् ॥
वेष्टक । पुं॰ कुष्माण्डे । पुष्पफले ॥ प्राचीरे । वृतौ ॥ न॰ उष्णीषे ॥ निर्यासे ॥ श्रीवेष्टे ॥ त्रि॰ वेष्टनका रके संवेष्टके ॥
वेष्टनम् । न॰ कर्णशष्कुल्याम् ॥ उष्णीषे ॥ मुकुटे ॥ वृतौ । गुग्गुलौ ॥ व्यावर्तने । वेठन॰ लपेटन॰ इ॰ भा॰ प्र॰ ॥
वेष्टनक । पुं॰ रतिबन्धविशेषे ॥ यथा । जङ्घैगपादमेकस्तुभुजान्तरैर्वेष्टयेद्यदि । कान्तकण्ठाश्रितानारीव न्धोवेष्टनकः स्मृतः ॥
वेष्टनवेष्टक । पुं॰ रतिबन्धविशेषे ॥ यथा । जङ्घापादद्वयनार्याभुजाभ्यां वेष्टयेद्यदि । कराभ्यांकण्ठमालिङ्ग्यबन्धोवेष्टनवेष्टकः ॥
वेष्टनिका । स्त्री॰ वेष्टमिकायाम् ॥
वेष्टवंश । पुं॰ कण्टकिनि ॥
वेष्टसार । पुं॰ श्रीवेष्टे ॥
वेष्टित । त्रि॰ वलयिते । रुद्धे । संवीते । आवृते ॥ न॰ लासके ॥ स्त्रीणांकरणान्तरे ॥ वेष्ट्यतेस्म । वेष्टवेष्टने । क्त ॥
वेष्प । पुं॰ जले । नीरे । पानीये ॥ विवेष्टि । विष्लृ॰ । पानीविविष्य. प । कृतिप ॥
वेष्य । पुं॰ नट्टे ॥ विविधाङ्गविक्षेपारेषसम्पद्यते ॥
वेष्या । स्त्री॰ गणिकायाम् ॥ वेवेष्टि । विष्लृव्याप्तौ । अघ्न्यादित्वाद्यत् ॥
वेसनम् । न॰ चणकदालिचूर्णे । वेशने ॥
वेसर । पुं॰ सङ्कराश्वे । अश्वतरे ॥

वेसवार । पुं॰ व्यञ्जनादौसंस्कारार्थं दीयमानेहिङ्ग्वादौ । उपस्करे ॥ द्रव्याणिवेसवारस्तुनागवल्लीदलानि हि । तण्डुलाश्चलवङ्गानिमरिचानि समासतः ॥ सर्वव्यञ्जनपरिभाषायान्तु । हिङ्ग्वार्द्रंमरिचजीरहरिद्राधान्यकतथा । क्रमेणद्विगुणंसर्वंवेसवारमिमञ्जगुः । स्तोकेनवारिणासर्वंघृतसङ्गालितम् । मात्रयाव्यञ्जनेदेयकासमर्दंचतत्स्मृतम् ॥ वेसनम् । विसप्रेरणे । घञ् । वेसप्रेरणं वारयति॰ वृणोतिवा । वृञ्॰ । कर्मण्यण् ॥

वेहत् । स्त्री॰गर्भोपघातिन्यांगवि ॥ विहन्तिगर्भम् । सम्वत्पदिहदित्यतिप्रत्ययेनसाधु ॥

वेहार । पुं॰ स्वनामख्यातेदेशविशेषे ॥ यथा । वेहारेचैवश्रीहट्टे कोशलेशवकर्णिके । अष्टादशभुजाकार्यामाहेन्द्रेचहिमालये॰ इतिमत्स्यसूक्ते ५॰ पटल ॥ माहिषासुरमर्द्दिनीतिशेष ॥

वै । अ॰ हेतौ ॥ पादपूरणे ॥ सम्बोधने ॥ विशेषे ॥ स्मरणार्थे ॥ अनुनये ॥ प्रसिद्धौ ॥ निश्चये ॥ वाति । वागतिगन्धनयो । ॰बीगत्यादौवा । डे ॥

वैशतिक । त्रि॰ विंशत्याक्रीते ॥

वैकक्षम् । न॰ तिर्यग्वक्षोलम्बिमाल्ये ॥

वैकक्षकम् । न॰ उरस्युपवीतवत्तिर्यक्क्षिप्तमाल्ये ॥ विशिष्ट कक्षोस्मात्॰ विकक्षमुरस्तत्रभवम् । तत्रभवइत्यण् । स्वार्थेकन् ॥

वैकङ्कत । पुं॰ विकङ्कते ॥ विकङ्कतस्यावयवोविकारोवा । पलाशादित्वादञ् ॥

वैकटिक । पुं॰ मणिकारे ॥

वैकर्ण । पुं॰ वात्स्ये ॥ विकर्णस्यापत्यम् । विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिष्वित्यण् ॥

वैकर्णेय । पुं॰ काश्यपे ॥ विकर्णस्यापत्यम् । विकर्णकुषीतकात्काश्यपइतिढक् ॥

वैकल्पिक । त्रि॰ विकल्पेनभवे ॥

वैकल्यम् । न॰ विकलतायाम् ॥ अविवेके ॥ विकलस्यभाव । ष्यञ् ॥

वैकारिक । पुं॰ देवःसाहङ्कारेसात्त्विकाहङ्कारे ॥ देवतावर्गे ॥ गणविशेषे ॥ सचवन्धस्तेषां॰ येविकारानेवभूतेन्द्रियाहङ्कारबुद्धिरूपान॰ पुरुषबुद्ध्योपासते । तान्प्रतीदमुच्यते॰ दशमन्वन्तराणीहतिष्ठन्तीन्द्रियचिन्तका । भौतिकास्तुशतपूर्णंसहस्रन्त्वाभिमानिका ॥ बौद्धादशसहस्राणितिष्ठन्तिविगतज्वरा । पुरुषनिर्गुणंप्राप्यकालसङ्ख्यानिवर्त्तते ॥ तेखल्वमीविदेहायेषांवैकृति

कोशश्च ॥

वैकुण्ठः । पुं॰ विष्णौ । इन्द्रे । वि-
ष्टरश्रवसि ॥ विकुण्ठाया अपत्यम् ।
शिवाद्यण् । यथोक्तं विष्णुपुराणे ।
चाक्षुषस्यान्तरे देवो वैकुण्ठः पुरुषो-
त्तमः । विकुण्ठायामसौ जज्ञे वैकु-
ण्ठैर्दैवतैः सहेति ॥ अपिच । कु-
ण्ठजडस्य विष्णोर्वा विशिष्टस्य करोति
या । विकुण्ठां प्रकृतिं वेदाः सत्त्वारम्भां
वदन्ति ताम् ॥ गुणाश्रयेण भगवान्
तस्यां जातः स्वसृष्टये । परिपूर्णत-
मत्वेन वैकुण्ठस्य विदुर्बुधाः ॥ विग-
ता कुण्ठा नाशो यस्य स विकुण्ठः । वि-
कुण्ठस्य ज्ञानशक्तिस्वरूपत्वेन
चाश्रयत्वेन शाऽस्य । ज्योत्स्नादि-
त्वादण् ॥ यद्वा । विविधा कुण्ठा
माया विद्यतेऽस्य ॥ अण् ॥ यद्वा ।
विकुण्ठानां जीवानामयं नियन्ता ।
ज्ञाता वा । तस्येदमिति शेषद्वितीया ।
अण् ॥ विगता कुण्ठाऽस्मात् प्रज्ञा-
द्यण् ॥ स्वर्गे तद्रूपाभिधे विष्णोर्धाम-
विशेषे । तद्वर्णनं यथा । उपरिष्टा-
त्त्रिंशत्कोटयः सत्यमीरितम्
। सत्यादुपरि वैकुण्ठो योजनानां प्रमा-
णतः ॥ भूर्लोकात् परिसङ्ख्यात-
कोटिरष्टादश प्रभो । यत्रास्ते श्रीप-
तिः साक्षात् सर्वेषामभयप्रदः ॥
वैकुण्ठादुत्तरे वै लोकाः षोडश-
कोटयः । तिर्यगेवमहाराजकेला-

साध्याः सुपर्वतः ॥ पार्वत्या सहितः
शम्भुर्यत्रास्ते स्वगणैर्वृतः । इति
पाद्मे स्वर्गखण्डे ६ अध्यायः ॥
अपिच । अमृतं शाश्वतं नित्यमनन्तं
परमं पदम् । हिरण्मयं मोक्षपदं ब्र-
ह्मानन्दसुखाह्वयम् ॥ एवमादिगु-
णोपेतं तद्विष्णोः परमं पदम् । यज्ज्ञा-
त्वा न निवर्त्तन्ते तद्धाम परमं हरेः ॥
न हि वर्णयितुं शक्यं कल्पकोटिशतै-
रपि । अपि द्रष्टुमशक्यं तद्ब्रह्मरुद्रा-
दिदैवतैः ॥ ज्ञानेन शास्त्रमार्गेण
द्रक्ष्यते योगिपुङ्गवैः । तत्स्थानमु-
पभोक्तव्यमव्यक्तब्रह्मसेविनाम् ॥
शीघ्राङ्घ्रिभक्तिसेवैकरसभोगविव-
र्जिताः । महात्मानो महाभागा भ-
गवत्पदसेवकाः ॥ तद्विष्णोः प-
रमं धाम यान्ति ब्रह्मसुखप्रदम् । ना-
नाजनपदाकीर्णं वैकुण्ठं तद्धरेः प-
दम् ॥ प्राकारैश्च विमानैश्च सौधैर-
त्नमयैर्युतम् । तन्मध्ये नगरी दिव्या
सायोध्येति प्रकीर्त्तिता ॥ चतुर्द्वार-
समायुक्ता हेमगोपुरसंयुता । च-
ण्डादिद्वारपालैस्तु कुमुदाद्यैः सु-
रक्षिता ॥ चण्डप्रचण्डौ प्राग्द्वारे
याम्ये भद्रसुभद्रकौ । वारुण्यां जय-
विजयौ सौम्ये धातृविधातरौ । कु-
मुदः कुमुदाक्षश्च पुण्डरीकोऽथ वाम-
नः । शङ्कुकर्णः सर्वनेत्रः सुमु-
खः सुप्रतिष्ठितः । तस्मिन्नन्धवि-

वहृदयचित्त गतश्चतुरीद्नसमये- मासिक्षाद्वाराययाकथ स्वभवात । कस्तद्विषोज्ञ्योर्नासामध्यस्थितसुषु म्णानाड्याश्च । तथोक्तनासाद्वारे बयथाकर्थाश्चन्नाद्स्वरूप प्रत्यक्षो भवतीत्यर्थ . । तस्माद्वैखरीदशा पन्नाज्ञाद्यान्पवनप्रेरितोवर्णसमू होयच्चि सर्वेषाप्रत्यक्षविषयोभव तीत्यर्थ । परापश्यन्तीदशापन्न स्तुयोगिनामेवप्रत्यक्षोनतुसर्वेषामि त्यपिवोध्यमितितट्टीका ॥ हरिर प्याह । वैखर्यामध्यमायाश्चपश्य न्त्याश्चैतदद्भुतम् । अनेकतीर्थभे दायास्त्रय्यावाच . परपदमिति । तत्रश्रोत्रविषयावैखरीमध्यामाहृद यदेशस्थापदप्रत्यक्षानुपपत्त्याव्यव- हारकारणम् । पश्यन्तीतुसैाव्य वहारातीतायोगिनान्तुतत्रापिप्रकृ तिप्रत्ययविभागावगतिरस्ति । प रायान्तुनेतिव्याकृत्युक्तम् । स्वरू प्यातिरेकान्त . परावागनपायि नी । तस्यांदृष्टस्वरूपायामधिका रोनिवर्त्ततइत्युक्तं । अनेनती र्थभेदाया नामाख्यातादिभेदा- वैश्वदञ्चन्द्रादिरूपानेकभेदाया । आहखल्वपिचत्वारिवाक्परिमि तानीतिऋक्मन्त्रइतितद्व्याख्या तार : ॥

वैखानस . । पु० तपोविशेषाश्रमस्थ तापसविशेषे । वानप्रस्थे ॥ ब्रह्मणोनखाज्जात . । येनखास्तेवै खानसाइतिश्रुति । यद्वा । विखनसमुनिप्रोक्तं सूत्रमधिकृत्यतन्मा र्गानुसारीवैखानस . ॥

वैगुण्यम् । न० विगुणत्वे ॥

वैचक्षण्यम् । न० विचक्षणत्वे ॥

वैचित्यम् । न० अविवेके ॥

वैचित्र्यम् । न० विचित्रतायाम् ॥ *

वैजनन . । पु० सूतिमासि ॥ विजा यतेऽस्मिन् । जनी० करणेतिल्युट् । विजननमेव । प्रज्ञाद्यण् ॥ यद्वा । विजननस्यगर्भमोचनस्या यम् । तस्येदमित्यण् ॥ नवमेदश मेवापिप्रबलैः सूतिमारुतैः । निस्सार्यतेबाणइवजन्तुश्छिद्रेणसे- त्वर . ॥

वैजपायन . । पु० ऋष्यन्तरे ॥

वैजयन्त . । पु० गृहे ॥ शक्रध्वजे ॥ शक्रप्रासादे ॥ वैजयन्त्य पताका. सन्त्यस्य अर्शआद्यच् ॥

वैजयन्तिक . । पु० धृतपताके । पता किनि ॥ वैजयन्त्यस्यास्ति । व्रीह्या दित्वष्ठन् ॥ यद्वा । वैजयन्त्या पताकयाचरति । चरतीतिठक् ॥

वैजयन्तिका । स्त्री० पताकायाम् ॥ जयन्तीवृक्षे । जाईतिप्रसिद्धे ॥ अ ग्निमन्थे ॥ विजयन्तस्यायम् । तस्ये दमित्यण् । स्वार्थेकन् ॥ यद्वा ।

वैजयन्तीशब्दाद्द्विप्रतिकृताविति कन्॥

वैजयन्ती। स्त्री॰ पताकायाम्॥ जयन्तीपादपे॥ अग्निमन्थे॥ विजयते। जिपराभवे। तृभूवहीतिझच्। विजयन्तस्येयम्। तस्येदमित्यण्॥ पञ्चवर्णमय्याजानुपर्यन्तलम्बितायामालायाम्॥ सा चोक्ता विष्णुपुराणे। पञ्चरूपायामालावैजयन्ती गदाभृत। साभूतहेतुसङ्घातभूतमाला च वै द्विजेति। पञ्चरूपामुक्तामाणिक्यमरकतेन्द्रनीलवज्रसमानवर्णा हरेर्या वैजयन्त्याख्यामाला। साभूतहेतुनापञ्चतन्मात्राणां सङ्घात पञ्चभिः भूतमाला च महाभूतपञ्चकैः इति सूक्ष्मस्थूलभूतमयीत्यर्थः॥

वैजयि। पु॰ अर्जुनात्मजे॥ विजयस्यापत्यम्। इञ्॥ जिनचक्रवर्त्ति विशेषे। मघवति॥

वैजयिक। त्रि॰ विजयस्यनिमित्तं॰ विजयस्यनिमित्तं संयोग उत्पातौ वा। तस्यनिमित्तमितिठञ्॥

वैजवाप। पु॰ गृह्यभेदे॥

वैजिकः। पु॰ सद्योऽङ्कुरे॥ न॰ शिग्रुतैले॥ हेतौ। कारणे॥ त्रि॰ बीजसम्बन्धे॥ प्रतिषिद्धमैथुनसङ्कल्पादिनाऽपेक्षकरैर्दोषजैरपि॥

वैज्ञानिकः। त्रि॰ प्रवीणे। निपुणे। शिल्पिनि। ज्ञातसुखे। कुशले॥ विज्ञानजनिते॥ विज्ञानवृद्धि। विज्ञानेनयुक्त। तत्र नियुक्तादिति ठक्। यद्वा। विज्ञानेनजयति। तेनदीव्यतिखनतिजयतिजितमिति ठक्॥

वैडाल। त्रि॰ विडालसम्बन्धिनि॥

वैडालव्रतम्। न॰ दुष्टाचारविशेषे॥ यथा। यस्य धर्मध्वजो नित्यं सुराध्वज इवोच्छ्रितः। प्रच्छन्नानि च पापानि वैडालं नाम तद्व्रतम्॥

वैडालव्रतिक। पुं॰ छद्मतापसे। सर्वाभिसन्धिनि॥ यथा मनुः। धर्मध्वजी सदा लुब्धश्छाद्मिको लोकदम्भकः। वैडालव्रतिको ज्ञेयो हिंस्रः सर्वाभिसन्धकः॥ इति॥ विडालव्रतेन चरतीति वैडालव्रतिकः। विडालो हि प्रायेण मूषिकादि हिंसाकाङ्क्षितया ध्याननिष्ठ इव विनीतः सन्नवतिष्ठते तद्वद्व्यवहरतीत्यर्थः॥

वैडालव्रती। पुं॰ भण्डतापसे॥ वैडालव्रतिन. पापाः सर्वधर्मविनाशकाः। सद्यः पतन्ति पापेषु कर्मणस्तस्य तत्फलम्॥

वैणवम्। न॰ वेणुफले॥ वेणोः फलम्। बिल्वादिभ्योऽण् इति विधेर्मयटोलुक्। त्रि॰ वेणोर्विकारे॰ दण्डादौ॥ वेणोर्विकारः। पूर्ववदण्॥ पुं॰ राज्ञि। उपनयनेवैणवदण्डे॥

वैणविकः । त्रि॰ वेणुवादे । वेणुर्वो ॥ वेणोर्विकारः । अ॰ रञ् । वेणव शिल्पमस्य । शिल्पमितिठक् ॥

वैणवी । स्त्री॰ वंश्यादौ । वंशरोचनायाम् । वेणोर्विकारः । विल्वादण् । ङीप् ॥

वैणिकः । त्रि॰ वीणावादे वीणा॰ तज्जन्यवादनशिल्पमस्य । शिल्पमितिठक् ॥

वैणुकः । पु॰ वेणुवादिनि ॥ न॰ तो त्रे । गजस्यतोदनदण्डे । हस्तिवालनार्थं तोत्रमुखैर्वंशदण्डे ॥ वेणुनानिर्वृत्तम् । निर्वृत्तेऽक्षद्यूतादिभ्यइतिठक् । इसुसुक्तान्तात्कः ॥ साध्वर्थे॰ गुडादिभ्यठञ् ॥

वैण्य । पु॰ पृथुनाम्निधराधीशे ॥ यथा । वैण्यस्यमथितेपाणौसम्भूतमस्यामुने । वैण्योनाममहीपालोयः पृथु परिकीर्त्यते ॥

वैतसिकः । त्रि॰ कौटिके । मांसिके । मांसविक्रेतरि ॥ वीतसेनमृगपक्ष्यादिवधोपायेनचरति । चरतीतिठक् ॥

वैतण्डिकः । त्रि॰ वितण्डावादिनि ॥

वैतत्यम् । न॰ महत्वे ॥ विततस्यभावः । ष्यञ् ॥

वैतथ्यम् । न॰ वितथस्यभावे । असत्यत्वे ॥ वैतथ्यसर्वभावानांस्वप्नआहुर्मनीषिणः । भावेष्यञ् ॥

वैतनिकः । त्रि॰ भृतके । भृतिभुजि । वेतनेनकर्मकृति ॥ वेतनेनजीवति । वेतनादिभ्योजिवतीतिठक् ॥

वैतरणि । स्त्री॰ वैतरण्याम । वृत्तिरुद्र

वैतरणी । स्त्री॰ यातुमातरि । राक्षसानांजनन्याम ॥ तीर्थविशेषे ॥ नरकनद्याम । विण्मूत्रपूयशोणितकेशनखास्थिमेदोमांसवसादिव्याप्तेनद्याम् ॥ यथा । नदीवैतरणीनामदुर्गन्धारुधिरावहा । उष्णतोयामहावेगाअस्थिकेशतरङ्गिणीति यमद्वारि ॥ विगतस्तरणिर्यत्र॰ तत्रभवा । तत्रभवइत्यण् ॥ विगता तरणिर्नौर्यत्रवा । प्रज्ञादण् ॥ वितरणंनदानेनलभ्यते॰ वृत्तिवा । शैषइत्यण् । ङीप् ॥ यमद्वारेमहाघोरेतप्तावैतरणीनदी । तान्तर्तुन्ददाम्येनांकृष्णावैतरणींसुगामितिवैतरणीगोदानानन्तरप्रार्थनामन्त्रः ॥

वैतस । पु॰ अम्लवेतसे ॥

वैतानम् । न॰ श्रौतकर्मणि । गार्हपत्यकुण्डस्थानतोन्॰ आहवनीयादिकुण्डेषुवितत्यक्रियतइति ॥

वैतानिक । पु॰ श्रौतहोमे । अग्निहोत्रे । गार्हपत्यकुण्डस्थानामग्नीनामाहवनीयदक्षिणाग्निकुण्डयोर्विंहारोवि त नम्॰ तत्रभव । ठक् कर्मयोगिनि ॥

वैतालिक । पुं॰ वैहितासे ॥

वैदर्भ | वैदिक

त्रि॰ बोधकरे । मङ्गलपाठके । स्तुत्यादिना प्रातर्जागरणकारिणि ॥ विविधैन तालेन॰ शब्देन चरति । चरतीति ठक् ॥ वैतालिकास्तु विभिः काव्यनृतैः सौख्यशायिकाः॰ कृत्यन्यच ॥

वैतालीयम् । न॰ छन्दोभेदे ॥ षड्विषमे ऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तरा । न समात्र पराश्रिता कला-वैतालीये ऽन्ते रलौ गुरुः ॥ यथा । कुसुमं नमदेन चर्चितं तमयस्निन्दति राधिके कुचम् । सुदमा तनुते ऽत्र यत्किमतद् वैतालीयफलहरे ॥

वैदग्धी । स्त्री॰ भङ्ग्याम । छभनिमौलिकायाम ॥ वैदग्ध्ये ॥ शोभायाम ॥ विदग्धस्य भाव । ब्राह्मणादित्वात्॰ ष्यञ । षित्वान् ङीष । यलोप ॥ भर्त्तानि श्वसितेप्यसूयति॰ मनोजिघ्र सपत्नीगण॰ श्वश्रूरिङ्गितदैवत॰ नयनयोरीहालिहोयातर । तद्दूरादयमञ्जलि॰ किमधुना दृग्भङ्गिभागेनते वैदग्धीमधुरप्रबन्धरसिकव्यर्थोयमत्रश्रम ॥

वैदग्ध्यम् न॰ विदग्धभावकर्मणो । चातुर्य ॥ ब्राह्मणादित्वात् ष्यञ् ॥

वैदर्भ । पु॰ विदर्भदेशाधिपतौ ॥ सतु दमयन्तीपिता भीमसेन॰ रुक्मिणीजनको॰ भीष्मकश्च ॥ दन्तरोगविशेषे । यथा । घृष्टेषु दन्तमांसेषु संरम्भो जायते महान् । भवन्ति दन्ताश्चपला सवैदर्भो ऽभिघातज ॥ ८ न॰ वाक्यवक्रत्वे । त्रि॰ विदर्भसम्बन्धिनि ॥

वैदर्भी । स्त्री॰ काव्यरीतिभेदे ॥ यथा माधुर्यव्यञ्जकैर्वर्णैरचना ललितात्मिका । अवृत्तिरल्पवृत्तिर्वा वैदर्भीरीतिरिष्यते ॥ उपनागरिकावृत्त्यनुप्रासघटकवृत्तिभेदे ॥ लोपामुद्रायाम् । दमयन्त्याम् । रुक्मिण्याम् ॥

वैदल । पु॰ पिष्टके । पूपे ॥ शमीधान्ये ॥ तद्गुणा यथा । वैदला मधुरा रूक्षा कषाया कटुपाकिन । वातला कफपित्तघ्ना बद्धमूत्रमलाहिमा ॥ ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारका । मुद्गमसूरयोरनाध्मानकारित्वमन्यवैदलापेक्षया॰ न च सर्वथा॰ एतयोरपि किञ्चिदाध्मानकारित्वदर्शनात् ॥ न॰ भिक्षुपात्रविशेषे ॥ यथा । अलाबुदारुपात्रञ्च मृन्मयं वैदलं तथा । एतानि यतिपात्राणि मनुः स्वायम्भुवो ऽब्रवीत् ॥

वैदिक । पु॰ वेदज्ञब्राह्मणे ॥ त्रि॰ श्रुत्युपनिबद्धे धर्मादौ । वेदोक्ते ॥ यथोक्तं श्रीदेवीभागवते । यथा ।

शुकउवाच । सन्देहोवक्ततेचित्ते नहिगच्छतिमेक्वचित् । भवताकथितयत्तच्छृखतेमेनराधिप ॥ वेदधर्मेषुहिंसास्यादधर्मंबहुलाहिंसा । कथमुक्तिप्रदोधर्मोवेदोक्तोवतभूपते ॥ प्रत्यक्षेयज्ञनाचार . सोमपाननराधिप । पशूनांहिंसनतद्वद्भक्षण चामिषस्यतु ॥ सौत्रामणौतथाप्रोक्त ' प्रत्यक्षेणसुराग्रह ' । यूतक्रीडातथाप्रोक्ताव्रतानिविविधानिच ॥ - व्रतानि॰ब्रह्मचारिपुंस्त्रीमैथुनादीनि - ॥ श्रूयतेशपुराष्यासीच्छशबिन्दुर्नृपोत्तम । यज्वाधर्मपरोनित्य वदान्य सत्यसागर ॥ गोप्ताधर्मसेतूनांशास्ताचोत्पथगामिनाम् । यज्ञाश्वविहितास्तेनबहवोभूरिदक्षिणा ' ॥ चर्मणांपर्वतोजातोविन्ध्याचलसम ' पुन ' । मेघाम्बुप्लवनाज्जातामदीचर्मणवतीशुभा ॥ सोपिराजादिवयात : कीर्त्तिरस्याचलाभुवि । एवंधर्मेषुवेदेषुनमेबुद्धि ' प्रवर्त्तते ॥ - स्त्रीसंयोगनिरूपणलक्षणार्थदोक्षाग्यकर्मेच - ॥ स्त्रीसङ्गेनसदाभोगेसुखमाप्नोतिमानव । अलाभेदु खमत्यन्तंजीवन्मुक्त ' कथंभवेत् ॥ जनकउवाच । हिंसायज्ञेषुप्रत्यक्षासाऽहिंसापरिकीर्त्तिता । उपाधियोगतोहिंसानान्यथेतिविनिर्णय . ॥ - अहिंसेतिच्छेद :

अहिंसनंसर्वभूतानान्यचतीर्थेभ्यइतिश्रुते । उपाधियोगत इति । रागरूपोपाधिनाकृतातुहिंसैवभवति - ॥ यथाचेन्धनसयोगादग्नौधूम ' प्रवर्त्तते । तद्वियोगेतथातस्मिन निर्धूमस्य विभातिवै ॥ अहिंसाञ्चतथाविद्धिवेदोक्तामुनिसत्तम । रागिणासापिहिंसैवनिस्पृहाणानसामता ॥ आर्द्रेन्धनोपाधिनाबह्नि . सधूमत्वमन्यथानिर्धूमत्वम् । तथारागाद्युपाधिनापशुालम्भस्यहिंसात्वमन्यथाहिंसात्वाभावइति - ॥ अरागेणचयत्कर्मंतथाहङ्कारवर्जितम् । अकृतंवेदविद्वांस प्रवदन्तिमनीषिण ॥ गृहस्थानान्तुहिंसैवयायज्ञे द्विजसत्तम । -गृहस्थानांरागिणामित्यर्थ ' । -। अरागेणचयत्कर्मंतथाहङ्कारवर्जितम् ॥ साहिंसैवमहाभागमुमुक्षूणाजितात्मना मित्यष्टादशोध्याय . प्रथमस्कन्धे ॥ वेदेभव । अध्यात्मादित्वाट्ठञ् ॥ न । वेदार्थज्ञाने ॥

वैदिकदर्शनम् । न॰ वैदिकानांसिद्धान्ते । यथा । अन्योविज्ञानमयतथानन्दमयआन्तर ' । अस्तीत्येवोपलब्धव्यइतिवैदिकदर्शनमिति ॥

वैदुष्यम् । न॰ विद्वत्तायाम् ॥ यथा । वाग्वैखरीशब्दझरीशास्त्रव्याख्यानकौशलम् । वैदुष्यविदुषांतद्वद्भु

कर्थ्यमचमुन्नयेदिति ॥ विदुष कर्म
भावो वा । ब्राह्मणादित्वात् ष्यञ् ।

वैदूर्य्यम् । न० रत्नविशेषे । इति ख्याते
कृष्णपीतवर्णमणौ । बालवायजे ।
बालसूर्ये । केतुरत्ने ॥ तच्छायालक्ष
णा यथा । एकवेणुपलाशकोमलरु
चामायूरकण्ठत्विषामार्जारेक्षणपि
ङ्गलच्छविजुषाञ्ज्ञेयन्त्रिधाच्छायया ।
यद्गात्रं गुरुतान्दधातिनितरांस्निग्ध
न्तुदोषोज्झितवैदूर्य्यंविशदंवदन्तिसु
धियः स्वच्छन्तच्छोभनम् ॥ तस्य
कुलक्षणं यथा । निच्छायमृच्छिलाग
र्भंलघुरूक्षञ्चसक्षतम् । सत्रासपरुषं
कृष्णं वैदूर्यंदूरतस्त्यजेत् ॥ तत्परी
क्षा यथा । घृष्टं यदात्मनास्वच्छं स्व
च्छायांनिकषाश्मनि । स्फुटंप्रदर्श
येदेतद्वैदूर्य्यंजात्यमुच्यते ॥ विशेषो
गारुडे युक्तिकल्पतरौ च द्रष्टव्यः ॥
विदूरात्प्रभवति । विदूरात् ञ्य ।
नन्वर्थासङ्गतिः बालवायाद्ध्यसौ
प्रभवतिविदूरेतुसंस्क्रियते । सत्यम्
। बालवायस्यापिविदूरमितिसंज्ञा ।
अथवा । बालवायस्य विदूरआदेशः
। अतएवभाष्ये बालवायोविदूरञ्च
प्रकृत्यन्तरमेवेतिसमाहितम् ॥

वैदूर्य्यभूमि । स्त्री० बालवायप्रभव
स्थाने ॥ उरगेन्द्रमूर्द्धन्यरत्नाङ्कुरैः
सहोदितमेघध्वनेर्विदूरभूमिर्नवाङ्कुरा
ङ्कुराभवतीतिप्रसिद्धिः । उरगमू



र्द्धन्यरत्नसन्निधानात्कालेपिमेघागर्ज
न्तीतिवार्त्ता । केचित्तुयत्रवेरगर
त्न मेघरसितञ्च तत्रैववैदूर्यभूमि
रित्याहुः ॥

वैदेह । पु० वणिजि ॥ निमिराज
पुत्रे । जनके ॥ वैश्याद्ब्राह्मण्यामु
त्पन्नेसङ्करजात्यन्तरे ॥ त्रि० विदेहदे
शजाते ॥

वैदेहक । पु० वाणिजके ॥ शूद्राद्वै
श्यासुते ॥ विदेहेषुभवः । धूमादि
भ्यश्चेतिवुञ् ॥ विदेग्धिवा । दि
ह० । ण्वुल् । प्रज्ञाद्यण् ॥ वैनि
श्चित देहउपचयोयस्येतिवा । वि
देहेषुभवः । तत्रभवइत्यण् वि
देहस्यापत्यंवा । जनपदेभ्यञ् । क
स्वार्थे ॥

वैदेही । स्त्री० रोचनायाम् ॥ सीता
याम् । जानक्याम् ॥ वणिक्स्त्रि
याम् । वैदेहनार्याम् ॥ पिप्पल्या
म् ॥ विदेहेषुभवा । अण् । ङीप् ।

वैद्यः । पुं० भिषजि । रोगहारिणि
। अगदङ्कारे । चिकित्सके ॥ सचतु
र्विधः । रोगहरः १ । विषहरः
२ । शल्यहरः ३ । कृत्याहरः ४
। इतिभेदात् ॥ सत्वयस्यप्रकोपस्यप्र
सरस्थानमेवच । दोषाणाञ्चवयोवेद
सभवेद्भिषगुत्तमः ॥ व्याधेस्तत्त्वपरि
ज्ञानवेदनायाश्चनिग्रहः । एतद्वैद्य
स्यवैद्यत्वंनवैद्यः प्रभुरायुषः ॥

कुचेल : कर्कशोदीन : कृशमीरु समागत : । पश्चवैद्यानपूज्यन्ते धन्व न्तरिसमामपि ॥ सुश्रु तनश्रुतयेन हारीतयेनहारितम् । नालोकितचर कयेनसवैद्योवैद्यनिन्दित . ॥ इ तौलिङ्ग प्रशमनेरोगाणामपुनर्भवे । ज्ञानचतुर्विधयस्यसराजार्होभिष क्तम ॥ अपिच । एकशास्त्रमधी यानोनविद्याच्छास्त्रनिश्चयम् । त स्माद्बहुश्रुत शास्त्रंविजानीयाच्चि कित्सक ' ॥ शास्त्र गुरुमुखोद्गीर्ण मादायोपास्यचासकृत् य कर्म कुरुतेवैद्य सवैद्योऽन्येतुतस्करा. ॥ इतिसुश्रुत विद्यामधीते । तदधीतेतद्वेदवा ॥ वासकवृक्षे ॥ पण्डिते ॥

वैद्यकम् । न॰ आयुर्वेदे । चिकित्सा शास्त्रे ॥

वैद्यनाथ : । पु॰ देशविशेषे ॥ शिवे । महालिङ्गविशेषे ॥ यथा । भारख ण्ड वैद्यनाथोवक्रेश्वरस्तथैवच । वी रभूमौसिद्धिनाथोराढेवतारकेश्वर ॥ भैरवविशेषे ॥ यथा । हार्द्दपीठ वैद्यनाथेवैद्यनाथस्तुभैरव ' । देव ताजयदुर्गाख्या नेपालेजानुनीमम ॥ इति ॥

वैद्यबन्धु . । पुं॰ आरग्वधवृक्षे ॥ ॥

वैद्यमाता । स्त्री॰ अटरुषे । वासके ॥ वैद्यस्यमातेव ॥

वैद्यसिंही । स्त्री॰ वासकवृक्षे ॥

वैद्या । स्त्री॰ काकोल्याम् ॥

वैद्यी । स्त्री॰ वैद्यपत्न्याम् ॥

वैध : । त्रि॰ विधिबोधिते ।

वैधहिंसा । स्त्री॰ वेदबोधितप्राणिवधे ॥ साचाहिंसेव । यथाहमनु । या वेदविहिताहिंसानियतास्मिँश्चराच रे । अहिंसामेवतांविद्याद्वेदाद्धर्मो हिनिर्बभाविति ॥

वैधात्र . । पुं॰ सनत्कुमारे ॥ विधा तुरपत्यम् । तस्य ॥ त्रि॰ विधातृस म्बन्धिनि ॥ यथाहु . । कालञ्च वैधा त्र अतिकालभक्ष्मेनकाञ्चय श्रि योदेव्या . कोवानभवति धृति . को र्पितनै . । महादेव हित्वातवस तिसतीनामचरमेकुचाभ्यामासङ्ग . कुरवकतरोरप्यसुलभइति ॥

वैधात्री । स्त्री॰ ब्राह्म्यामोषधी ॥

वैधृति : । पुं॰ विष्कम्भादिषुयोगविशेषे ॥ तत्रजातस्यफलयथा । मैत्री विहीन . कुटिल खलश्चमूर्खोद रिद्र ' परवञ्चकश्च । कुकर्मकर्त्ता परदाररक्तोभवेन्नरोवैधृतिलब्धज न्मा ॥

वैधेय । त्रि॰ मूर्खे ॥ विधेय॰विधा नम् । तस्यायमधिकारी॰अविद्या वद्भिषयत्वाच्छास्त्राणाम् । तस्येद मित्यण् । स्त्रियां॰वैधेयी ॥

वैध्यत : । पुं॰ यमप्रतीहारे ॥

वैनतेयः। पुं॰ खगेश्वरे। गरुडे॥ पक्षिणामध्येगरुडोभगवद्विभूतिः। वैनतेयश्चपक्षिणामित्युक्तेः। विनतायाअपत्यम्। स्त्रीभ्योढक्॥ अरुणे। सूरसूते॥

वैनयिकः। पुं॰ शस्त्राभ्यासरथे। योग्यरथे॥ गुणविशेषे॥ यथा। लोकधीगुरुशास्त्रेभ्योभातिवैनयिकोगुणः। यस्तुसद्यथावज्ञितलोकबुद्धिगुरुकृतशास्त्राद्वा॰समर्जितः सवैनयिकोभाति। समर्जितोवैनयिकोममेवाक्तनुचेष्टया। योमनोवाक्तनुचेष्टयाशुद्धव्यापारैर्याज्जितः सवैनयिकोवोद्धव्यः॥ त्रि॰ विनयान्विते॥ विनयादिभ्यष्ठगितिस्वार्थेठक्॥

वैनाशिकः। पुं॰ बौद्धे॥ सर्वक्षणिकत्ववादिनिपूर्णवैनाशिके॥

वैनाशिकः। त्रि॰ क्षणिके। परतन्त्रे। परायत्ते॥ बौद्धे। थसहादिभि॥ पुं॰ जर्णनाभे॥ न॰नाडीभचक्रविशेषे॥ निधनतारायाम्॥

वैनीतकः। पुं॰ न॰परम्परावाहने॥ वोढ़ृपरम्परया॰यद्वाह्यं॰वहवोद्दृष्टानराःवहन्ति॰शकटशिविकादि यथा॰तद्वैनीतकम्। विनीतकानामिदम्। तस्येदमित्यण्॥ यद्वा। विनीयतेस्म। क्तः। स्वार्थेकन्॥

वैपरीत्यम्। न॰ व्यत्यासे। विपर्यासे। विपर्यये। व्यत्यये॥ द्रु॰ हे॰न्द्र॥ विपरीतस्य। भावः। ष्यञ्॥

वैपरीत्यलज्जालु। पुं॰ स्त्री॰स्वल्पक्षुपवृत्तफलावालज्जालौ॥ यथा। लज्जालुर्वैपरीत्यान्यास्वल्पक्षुपवृत्तफला। वैपरीत्यावलज्जालुर्व्वाभिधानैप्रयोजयेत्॥ लज्जालुर्वैपरीत्याख्या॰कटुकाकफापनुत्। रसैर्नियामकश्चैवमानोविज्ञानकारकः॥ इ॰रा॰नि॰रट॥

वैवधिकः। त्रि॰ वार्त्तावहे। कांवडिया॰इ॰भा॰प्र॰॥ विवधेन॰वीवधेनवा॰हरति। विभाषाविवधादिति पक्षेठकः। एकदेशविकृतस्याऽनन्यत्वात्॰वीवधादपिठक्॥

वैबोधिकः। पुं॰ वैतालिके। विबोधः शीलमस्य। शीलमितिठक्॥

वैभवः। पुं॰ विभवस्वरूपे॥ न॰ऐश्वर्य्ये॥

वैभाजित्रम्। न॰ विभाजयितुर्धर्म्मे॥ तस्यधर्म्यमित्यधिकारेविभाजयितुर्णिलोपश्चाञ्॰वक्तव्यइत्यञ्णिलोपश्च॥

वैभ्राजम्। न॰ सुराणामुद्यानविशेषे॥ विपुलाख्यस्याद्रेर्मूले॰वैभ्राजाख्यंनामवनमस्ति। यथा। वैभ्राजवैपुलेमूलेसितोदस्यक्षदोत्तम। देवैर्निषेव्यतेरुद्र॰कामदेरप्सुमतप्रभैः॥

वैमात्र : । पुं॰ विमातृजे ॥ विमातु
रपत्यम् । अण् ॥

वैमात्री । स्त्री॰ विमातु : कन्या-
याम् ॥

वैमात्रेय । पुं॰ वैमात्रे ॥ विमातु
रपत्यम् । शुभ्रादिभ्यश्चेतिढक्
स्त्रीभ्योढगित्यत्र॰स्त्रीप्रत्ययान्तस्यग्र
हणत् ॥

वैमात्रेयी । स्त्री॰ विमातु कन्यायाम् ॥

वैमानिक । त्रि॰ विमानयायिनिदे
वादौ ॥ विमानेनचरतीत्यर्थे ठक् ॥

वैमेय । पुं॰ विनिमये ॥

वैय्वकि : । पुं॰ विय्वात्मजे । विय्व
स्यजात्यन्तरस्यापत्यम । व्यासवरु
डेत्यादिनेञ्॰प्रकृतेरकङादेश

वैयाकरण । त्रि॰ व्याकरणशास्त्रा-
भिज्ञे ॥ व्याकरणमधीते॰वेदवा॰त
दधीतेतद्वेदेत्यण् । ऐजागम ॥
व्याकरणस्यव्याख्यान व्याकरणे-
भवोवावैयाकरण । अण्ऋतय
नादिभ्यष्ठत्यण् ॥ स्त्री वैयाकरणी ॥

वैयाघ्र । त्रि॰ व्याघ्रचर्मावृतस्यन्द-
ने । द्वैपि ॥ व्याघ्रस्यविकार : ।
प्राणिरजतादिभ्योञ् । वैयाघ्रेण
चर्मणापरिवृतोरथ । द्वैपवैया-
घ्रादञ् ॥

वैयाघ्रपद्य । पुं॰ गोत्रप्रवर्तकमुनिवि
शेषे ॥ व्याघ्रपदोऽपत्यम । आ-
ङ् । इन्द्रद्युम्नमुनौ ॥ व्याघ्रपदो

गोत्रापत्यत्वात् ॥ यद्वा । व्याघ्रस्ये
वपादावस्येतिबहुव्रीहौ पादस्यलोपह
त्तिलोपिगर्गादित्वात्यञिपाद . प
दितिपद्भावेनयञ्भ्यामित्यैच् ।

वैयात्यम् । न॰ अविनीततायाम् ॥
विरूपयातंगमनम्॰चेष्टनंयस्य ।
वियातस्यभाव : । दृढादित्वात्-
ष्यञ् ॥

वैयासम् । न॰ व्यासोपन्यस्तेवच-
सि ॥ शेषद्भत्यण् ॥

वैयासकि । पु॰ शुकदेवे ॥ व्यासस्य
अपत्यम् । व्यासवरुडनिषादचण्डा
लविम्बानाञ्चेतिवक्तव्यमितिवार्त्ति
कादिञ्॰अकङादेशश्च । नय्वा-
भ्यामित्यैजागम ॥

वैरम् । न॰ विरोधे ॥ तच्चसमुत्थान
पञ्चविधम् । स्त्रीकृतम् १ यथाकृ
ष्णशिशुपालयो । वास्तुजम २
यथाकौरवपाण्डवानाम् । वाग्ज
म् ३ यथाद्रोणद्रुपदयो । साप
त्नम् ४ यथामूषिकमार्जारयो ।
अपराधजम् ५ यथापूजनीब्रह्मद
त्तयो . ॥ वीरस्यकर्म । वैरमैथुनि
कयोरितिनिर्देशात्॰युवादित्वाद
ण् ॥ अतिवादांस्तितिक्षेतनावम
न्येतकच्चन । नचेमंदेहमाश्रित्यवैर
कुर्वीतकेनचित् ॥

वैरङ्गिक । त्रि॰ विरागयोग्ये ॥ वि
राग नित्यमर्हति । छेदादिभ्यु॰वि

रागविरक्तमिति पाठान्तरम् । विरक्ता देशस्थ ॥

वैरञ्च । पुं॰ सनकादिषु ॥

वैरदेया । स्त्री॰ देव्यन्तरे ॥

वैरनिर्यातनम् । न॰ वैरशुद्धौ । प्रतीकारे । कृतापकारस्य प्रत्यपकारे । वैरस्य निर्यातनम् । यत निकारादौ चुरादि । ल्युट् ॥

वैरप्रतिक्रिया । स्त्री॰ वैरनिर्यातने ॥

वैरशुद्धिः । स्त्री॰ वैरनिर्यातने ॥ वैरस्य शुद्धिः ॥

वैरस्यम् । न॰ विरसत्वे ॥

वैरागी । त्रि॰ विषयेच्छारहिते । वैराग्ययुक्ते ॥ यथा । सनकश्च सनन्दश्च तृतीयश्च सनातनः । सनत्कुमारो वैरागी चतुर्थः पुत्र एव च ॥

वैराग्यम् । न॰ विषयेषु तृष्णाया रागाभावे ॥ तस्य च॰ यतमानसंज्ञा॰ व्यतिरेकसंज्ञा॰ एकेन्द्रियसंज्ञा॰ वशीकारसंज्ञेति चतस्रः संज्ञा भवन्ति । तत्रैव द्रष्टव्यम्॰ विषयास्त्यक्तुमशक्नुवतोऽपि तस्मागेच्छात्यागयत्नाद्य वैराग्यम् । ततो विषयाणां मध्ये त्वचादिव्यतिरेकेणापि इसिद्वितीयम् । तथासत्यपि मनसि रागसत्त्वैक्येन॰ बाह्येन्द्रियैरेव विषयसेवनं तृतीयम् । तथाप्यौदासीन्यं चतुर्थम् । यथाहुः । वैराग्यमाद्यं यतमानसंज्ञकं द्वितीयो व्यतिरेकसंज्ञम् । एकेन्द्रियाख्यं त्वथ रागमोहसत्यप्यभावस्तु वशीकृताख्यमिति ॥ विषयेषु च यित्वादिदोषदर्शनेन॰ वैतृष्ण्ये ॥ तद्वैराग्यन्तु पश्चायाद्दर्शनश्रवणादिभिः ॥ देहादिब्रह्मपर्यन्ते ह्यनित्ये भोग्यवस्तुनि ॥ विषयेष्वौदासीन्यभावे ॥ ब्रह्मादिस्थावरान्तेषु वैराग्यविषयेष्वनु । यथैव काकविष्ठायां वैराग्यं तद्धि निर्मलम् ॥ त्यागेच्छायाम् ॥ दोषदृष्टिर्जिहासा च पुनर्भोगेष्वदीनता । हेतुस्वरूपकार्याणि वैराग्यस्य विदुः क्रमात् ॥ परमपरञ्चेति द्विविधं वैराग्यम् ॥ दृष्टेष्वानुश्रविकेषु च॰ भोगेषु॰ रागविरोधिन्यामस्पृहात्मिकायाम् चित्तवृत्तौ दृष्टादृष्टविषयेषु॰ स्पृहाविरोधिचित्तपरिणामे ॥ वैराग्यात्प्रकृतिलयः ॥ यथा च॰ नवनीलनीरजदलोपमातिमृद्वीं तनुं त्वङ्मांसानि तामिषायदि पुनर्नैव प्रजानां पति . . प्रत्ययच्चरद्दस्मित्रपि शितया सयह ग्रभतोग्रभ्याङ्चहकान्तनौ निपतत कोवाकथयारयेत् ॥ अपिच । श्रियो दोलालोला विषयजरसाः प्रान्तविरसाः विपद्गेहं देहं महदपि धनं भूरिनिधनम् । बृहच्छोको लोकः सततमबलाऽनर्थकुलातथाप्यस्मिन् घोरे पथि

वसरतानात्मनिरता ॥ विराग एव। स्वार्थेष्यञ् ॥

वैराजम्। न० सामविशेषे ॥ पुं० ब्रह्मरूपेविराजोदेहे ॥

वैराज्यम्। न० अणिमादिसिद्धिविभाक्तू ॥ विराजोभाव:। ष्यञ् ॥

वैराट:। पुं० विराटतनये ॥ इन्द्रगोपकीटे ॥

वैराटी। स्त्री० उत्तरायाम्। अभिमन्युपत्न्याम् ॥ विराटस्यापत्यं स्त्री। अण्। ङीप् ॥

वैरातङ्क:। पुं० अर्जुनवृक्षे ॥

वैरिञ्च:। पुं० सनकादिषु ॥ त्रि० विरिञ्चसम्बन्धिनि ॥

वैरी। पुं० रिपौ। अस्य वैरमस्ति। इनि ॥ षष्ठभवने ॥

वैरूपम्। न० सामविशेषे ॥

वैरूप्यम्। न० विरूपतायाम् ॥

वैरोचन:। पुं० रवेस्तनये ॥ विष्णुपुत्रे ॥ बलिदानवे ॥ सिद्धगणे बुद्धे ॥ अग्निपुत्रे ॥ त्रि० सवितु:सम्बन्धिनि ॥ विरोचनस्यायम्। अण् ॥

वैरोचननिकेतनम्। न० पाताले ॥

वैरोचनि:। पु० अर्कपुत्रे ॥ बलिदैत्ये ॥ सुगते ॥ विरोचनस्यापत्यम्। अतइञ् ॥

वैरोचि:। पु० बाणासुरे ॥

वैरोद्धार:। पु० कृतापकारस्यप्रत्यपकारे। प्रतीकारे। वैरनिर्यातने ॥

वैलक्षण्यम्। न० विलक्षणत्वे ॥

वैलक्ष्यम्। न० व्यलीके ॥ विलक्षणस्यविस्मयव्यस्तभाव:। ष्यञ् ॥

वैल्व:। पुं० विल्वस्यकाण्डे ॥ विल्वविकारे ॥ विल्वस्यावयवोविकारोवा। विल्वादिभ्योण्। वैल्व: खादिरोवायूप: स्यात् ॥ न० विल्वशाके। विल्वफले ॥ त्रि० विल्वसम्बन्धिनि ॥

वैवधिक:। पु० वार्त्तावहे ॥ पसौरी० कू० भा० प्र० विवधेनधान्यतण्डुलादिनाव्यवहरति। ठक् ॥ कृषिवृद्ध्यादिजीवे ॥

वैवर्ण्यम्। न० विवर्णतायाम् ॥

वैवस्वत:। पु० श्राद्धदेवे। अन्तके। यमे ॥ सप्तमेमनौ ॥ विवस्वतोऽपत्यम्। अण् ॥ रुद्रविशेषे ॥ शनैश्चरे ॥

वैवस्वती। स्त्री० दक्षिणस्यादिशि।

वैवाहिकम्। न० धनविशेषे ॥ यथा। वैवाहिकन्तुतद्विद्याद्भार्यायायत्सहागतम्। भार्याप्राप्तिकालेलब्धमित्यर्थ: ॥ त्रि० विवाहसम्बन्धिन्यन्यादौविवाहेभव। अध्यात्मादेठञिष्यते ॥

वैवाह्य:। त्रि० सम्बन्धिनि ॥

वैशम्पायन। पुं० यजुर्वेदधरे। व्यासशिष्येमुनौ ॥ विशम्पस्यगोत्राप

ख्यम् । अश्वादिभ्यः फञ् ॥

वैशसम् । न० हिंसायाम् ॥ यथा । वरहुतवहज्वालापुञ्जान्तर्व्यवस्थितिः । नशौरिचिन्ताविमुखजनसंवासवैशसमितिकात्यान. । शौरिचिन्ताविमुखैर्युतन्निन्द्रापरैर्युजनैर्युथ सवास सएववैशसहिंसात स्ववरमित्यर्थः ॥ नरकविशेषे ॥

वैशस्तम् । न० विशसितुर्धर्म्ये ॥ विशसितुरिड लोपश्चाञ् वक्तव्य. ॥

वैशाख. । पुं० मासविशेषे । माधवे । राधे ॥ वैशाखीपौर्णमास्यस्मिन् सास्मिन् पौर्णमासीत्यण् ॥ खजके । मन्थानदण्डे । र० च० भा० प्र० ॥ विशाखाप्रयोजनमस्य । विशाखाषाढादित्वण् ॥ न० धन्विनांस्थानभेदे । वितस्त्यन्तरे पाष्णिस्तैपादद्वयेविशाखाख्यस्थानंभवति । विशाखएव । स्वार्थेऽण् ॥

वैशाखी । स्त्री० वैशाखपूर्णिमायाम् ॥ विशाखयायुक्तापौर्णमासी । नक्षत्रेणयुक्त कालइत्यण् । ततोङीप् ॥ रक्तपुनर्नवायाम् ॥

वैशारदी । स्त्री० मायायाम् ॥ विशारदईश्वरः । तस्येयम् । अण् ङीप् ॥

वैशारद्यम् । न० विशुद्धौ ॥ विशारदस्यभावः । दृढादिषु•पेर्यितला भमतिमन : शारदानामितिष्यञ् ॥

वैशिकः । पुं० विविधनायिकासंगतनायकविशेषे ॥ बहुवेश्याभोगीरसिकोवैशिकइतितल्लक्षणम् ॥

वैशिष्ट्यम् । न० विशिष्टत्वे । सम्बन्धपदार्थे । विशिष्टधीनियामके ॥

वैशेषिक । पु० कणादमुनिकृतदर्शनविशेषे । परमार्थतोद्रव्यादिसमवायान्तषट्पदार्थवादिनि । यथात्मनोद्रव्यत्वंतस्यगुणावुद्ध्यादयोनव । वासनात्वेनवेदोक्ताकृतिवैशेषिकादयवुद्ध्यादिधर्मिणामन्तः । करणमेवात्मेतिभ्रमित्वा• आत्मगुणाएववासनात्वेन० यथा । महारजनमित्यादिश्रुत्योच्यतइतिवदन्तकाणादाद्यर्थः ॥ अथवैशेषिकग्रन्थविवरणम् । सतुविशेषपदार्थनिरूपकग्रन्थः । अस्यमतन्यायदर्शनमततुल्यम् । अजगत. कारणपरमाणुपर्यन्तंनिरूपितम् ॥ इहखलुनिखलप्राणिनिसर्गप्रतिकूलवेदनीयतयानिखिलात्मसंवेदनसिद्धं दुःखंजिहासतस्तदानोपाय जिज्ञासु · परमेश्वरसाक्षात्कारमुपायमाकलयति । यदाचर्मवदाकाशं वेष्टयिष्यन्ति मानवा. । तदाशिवमविज्ञायदु.खस्यान्तोभविष्यतीत्यादिवचन•निचयप्रामाण्यात् । परमेश्वरस्यसाक्षात्कारश्च•श्रवणमननभावनाभिर्

वनीयः। यदाह। आगमेनानुमानेनध्यानाभ्यासबलेनच। त्रिधा प्रकल्पयन्प्रज्ञांलभतेयोगमुत्तममिति। तच्चमननमनुमानाधीनम्। अनुमानञ्चव्याप्तिज्ञानाधीनम्। व्याप्तिज्ञानञ्चपदार्थविवेकसापेक्षम्। अत. पदार्थषट्कम्। अथातो धर्मं व्याख्यास्याम.। इत्यादिकाया दशलक्षण्याकणभक्ष भगवता व्यवस्थायि। तत्राह्निकद्वयात्मके प्रथमेध्याये समवेताशेषपदार्थकथनमकारि। तत्रापिप्रथमाह्निके जातिमन्निरूपणम्द्वितीयाह्निकेजातिविशेषयोर्निरूपणम्। आह्निकद्वयात्मकेद्वितीयेभूतविशेषलक्षणम्। तत्रापिप्रथमाह्निकेभूतविशेषलक्षणम्। द्वितीयेदिक्कालप्रतिपादनम्। आह्निकद्वयात्मकेतृतीये आत्मान्त.करणलक्षणम्। तत्रा प्यात्मलक्षणप्रथमे। द्वितीयेऽन्तःकरणलक्षणम। आह्निकद्वययुक्ते चतुर्थे शरीरतदुपयोगिविवेचनम। तत्रापिप्रथमेतदुपयोगिविवेचनम्। द्वितीयेशरीरविवेचनम्। आह्निकद्वयवतिपञ्चमे कर्मप्रतिपादनम्। तत्रापिप्रथमेशरीरसम्बन्धिकर्मचिन्तनम्। आह्निकद्वयशालिनिषष्ठे श्रौतधर्मनिरूपणम्। तत्रापिप्रथमेदानपरिग्रहधर्म

विवेकः। द्वितीयेचातुराश्रम्योचितधर्मनिरूपणम्। तथाविधेसप्तमे गुणसमवायप्रतिपादनम्। तत्रापिप्रथमेबुद्धिनिरपेक्षगुणप्रतिपादनम्। द्वितीयेतत्सापेक्षगुणप्रतिपादनम् समवायप्रतिपादनञ्च। अष्टमेनिर्विकल्पकसविकल्पकप्रत्यक्षप्रमाणचिन्तनम्। नवमेबुद्धिविशेषप्रतिपादनम्। दशमेअनुमानप्रतिपादनम्। तत्रोद्देशोलक्षणपरीक्षाचेतित्रिविधास्यशास्त्रस्यप्रवृत्तिरितिवैशेषिकग्रन्थविवरणम्॥ कणादमुनिकृतदर्शनशास्त्रवेत्तरि। औलूक्ये॥ विनयादित्वात्स्वार्थे ठक्॥ त्रि॰ विशेषविदि॥

वैशेष्यम्, न॰ भागाधिक्ये॥ भावे ष्यञ्॥

वैश्य, पु॰ ऊरव्ये। ऊरुजे। भूस्पृशि। तमउपसर्जनरज प्रधानेतृतीयवर्णे॥ तस्य चकृष्यादीनतादृशानिकर्माणिभवन्ति॥ तानि चवर्णाश्रमशब्दे द्रष्टव्यानि। निषिद्धानियथा। वैश्यानांधनलोभेनमिथ्यामूल्यप्रकाशनम्। अपालनपशूनाञ्चानित्याविभवेसतीतिपाद्मे स्वर्गखण्डे २७ अध्याय॥ लक्षणन्तु। विशत्याशुपशुभ्यश्चकृष्यादानरुचि शुचि.। वेदाध्ययनसम्पन्नः सवैश्यइतिसञ्ज्ञित॥ विशति।

विश० क्विप्। स्वार्थे० ष्यञ् ॥
वैश्यकर्म। न० कृषिगोरक्ष्यवाणिज्यादौ॰
वैश्या। स्त्री० अर्याणाम्। आर्यायाम्। बुधशक्त्यन्तरे॥ तारायाम् ॥
वैश्रवण।पु० कुवेरे॥विश्रवसोऽपत्यम्। शिवादिषु विश्रवसो विश्रवणरवणावा देशौ निपातितौ० अण्च ॥
वैश्रवणालय.। पुं० वैश्रवणावासे ॥ वटवृक्षे ॥
वैश्रवणावासः। पुं० वटद्रुमे ॥ कुवेरपुर्याम ।
वैश्रवणोदय'। पुं० वटवृक्षे ॥
वैश्व'। पुं० उत्तराषाढनक्षत्रे ॥
वैश्वदेव'। पुं० अन्नसाध्ये होमबलिदानातिथिभोजनात्मकेसायम्प्रातर्गृहस्थप्रतिविहितेकर्मविशेषे ॥ विश्वेदेवादेवताअस्य। साऽस्यदेवतेत्यण्॥ न० उत्तराषाढानक्ष० ॥
वैश्वदेवी। स्त्री० आमिक्षायाम् ॥ जगतीछन्दःप्रभेदे ॥ तल्लक्षणादि यथा। वाणाश्वैश्छिन्नावैश्वदेवीममौयौ। यथा। अर्चामन्येषां त्वं विहायामराणामद्वैतेनैकंविष्णुमभ्यर्च्यभक्त्या। तत्राशेषात्मन्यर्चितेभाविनीतेभ्रात'सम्पन्नाराधनावैश्वदेवी ॥
वैश्वदेव्यम्। न० सामविशेषे ॥
वैश्वानर'। पु० अग्नौ। वह्नौ ॥ अन्यभिमानिन्यांदेवतायाम् ॥ जाठराग्नौ ॥ चित्रकवृक्षे। विश्वेनराअस्य। नरेसंज्ञायामितिविश्वशब्दस्य दीर्घं॥ विश्वानरस्यापत्यम्। ऋष्यण्। गोत्रापत्ये० शिवादित्वादञ्वा॥ विश्वेषानराणाकर्त्तरि॥ ब्रह्मणि। जीवे॥ विश्वनराभिमानित्वात्०स्थूलसमष्ट्युपहितचैतन्ये॥ विश्वेचतेनराश्च०विश्वानराः। पूर्वपदस्यदीर्घः। विश्वानराम्भोक्तृत्वेनव्यवस्थितान्प्रति० अनेकधाधर्माधर्मकर्मानुसारेण०सुखदुःखादिप्रापणात्० अयपरमात्माकर्माफलदाता० वैश्वानरशब्दितोभवति॥ अथवा। विश्वश्चासौनरश्च० विश्वानरः। नरेसंज्ञायाम्। विश्वानरएव। वैश्वानर'। स्वार्थेऽण्॥
वैश्वानरमार्गः। पुं० दहनवीथ्याम्। पूर्वोत्तराषाढयो'समीपे।
वैश्वानरीवीथी। स्त्री० दक्षिणमार्गे नक्षत्रविशेषाणासंज्ञाविशेषे॥ यथा। शतभिषक्तथा। वैश्वानरी भाद्रपदेरेवतीचैवकीर्त्तिता। एतास्तुवीथयस्तस्योदक्षिणोमार्गउच्यतइति ॥
वैश्वी। स्त्री० उत्तराषाढानक्षत्रे ॥
वैषम्यम्। न० विषमत्वे ॥ भावे०ब्राह्मणादित्वात्ष्यञ् ॥
वैषयम्। न० विषयाणांसमूहे भि

ख्यायण् ।

वैषयिक । त्रि॰ विषयसम्बन्धिनि ॥

वैहुतम् । न॰ हैमभस्मनि ॥

वैष्टम् । न॰ विष्णौ ॥ विष्टपे ॥ वेवेष्टि । विश॰ भ्रस् जिगमिनमिहनिविश्यशाम्बश्चेतिष्ट्रन ॥ दिवि ॥ वायौ ॥

वैष्णव । त्रि॰ विष्णूपासके । विष्णुमन्त्रदीक्षिते । कार्ष्णे । हरौ ॥ तल्लक्षणमाहात्म्यादि यथा । फलसन्धानरहिता विष्णुभक्ताश्च वैष्णवा । मत्प्रीतिभक्तिकामास्ते सर्वदा सर्वकर्मसु ॥ गुरुवक्त्राद्विष्णुमन्त्रो यस्य कर्णं प्रविश्यते । जीवन्मुक्तं वैष्णवं तं वेदाः सर्वे वदन्ति च ॥ पुरुषाणां शतं पूर्वं पैतृकञ्च शतं परम । मातामहश्च च शतं मातरं मातृमातरम् भगिनीं भ्रातरञ्चैव भागिनेयञ्च मातुलम् । श्वश्रूं श्वशुरञ्चैव गुरुपत्नीं गुरोः सुतम् ॥ गुरुञ्च ज्ञानदातारं मित्रञ्च सहचारिणम् । भृत्यं शिष्यं तथा चेटीं प्रजाः स्वाश्रमसन्निधौ ॥ उद्धरेदात्मना सार्द्धं मन्त्रग्रहणमात्रतः । मन्त्रग्रहणमात्रेण जीवन्मुक्तो भवेन्नरः । तत्संस्पर्शमात्रेण पूतं तीर्थञ्च भारतम् । तस्यैव पादरजसा सद्यः पूता वसुन्धरा ॥ पादोदकं तस्य नं तीर्थमेव भवेद्ध्रुवम् । इ॰ ब्र॰ वै॰ व॰ पुराणम् । येकण्ठलग्नतुलसीमयकाष्ठमाला येद्वादशाङ्ग हरिनामकृतोर्द्ध्वपुण्ड्राः । ये कृष्णभक्तिसुदृढा धृतशङ्खचक्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ति ॥ अपि च । पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदमिति ॥ अस्याचारश्च । सर्वान् कामान् परित्यज्य दृढभक्तिञ्च साधयेत् । स एव वैष्णवाचारः कामसङ्कल्पवर्ज्जितः ॥ विष्णोरयम् । अण् ॥ न॰ विष्णुपुराणे ॥ यथा । त्रयोविंशतिसाहस्रं वैष्णवं परमाद्भुतमिति ॥

वैष्णवी । स्त्री॰ विष्णोः शक्तौ ॥ यथा । एषा विश्वक्तिरुद्दिष्टा नर्यासिद्धान्तगामिनी । एषा श्वेता परा सृष्टिः सात्त्विकी ब्रह्मसंस्थिता ॥ एषैव रक्ता रजसि वैष्णवी परिकीर्त्तिता । एषैव कृष्णा तमसि रौद्री देवी प्रकीर्त्तिता । अष्टादशतथा कोट्यो वैष्णव्या भेद उच्यते । या विष्णो राजसी शक्तिः पालनी चैव वैष्णवी ॥ इति वाराहपुराणम् ॥ दुर्गायाम ॥ यथा । शङ्खचक्रगदाधारि विष्णुमाता तथा रिहा । विष्णुरूपाथवा देवी वैष्णवीति न गीयते ॥ इति देवीपुराणम् ॥ गङ्गायाम ॥ तुलस्याम् ॥ अपराजितायाम ॥ शतावर्याम ॥

वैसादृश्यम । न॰ विसदृशत्वे ॥

वैसारिण । पु० मत्स्ये ॥ विविषसरति । स० । ग्रह्यादित्वात्णिनि । ततोविसारिणोमत्स्यइति स्वार्थेऽण ॥ सिद्धे ॥

वैहायस । पु० खेचरे ॥

वैहायसी । स्त्री० भारतवर्षस्थनद्यन्तरे ॥

वैहर्य्य । त्रि० परिहासेनलाखनी येऽग्राखसवध्यादौ ॥

वैहासिक । पु० वासन्तिके । कौलिकाले । विदूषके । प्रहासिनि ॥

वोटा । स्त्री० चेट्याम् । दास्याम् ॥ इ०हे०न्द्र० ॥

वोड्र । पु० गोनसाख्ये ॥ भाषान्तरे ।

वोड्री । स्त्री० पणचतुर्थांशे । बुडि० इ०गो०दे०भा०प्र० ॥

वोढव्य । त्रि० वहनीये ॥

वोढु । पु० मुनिविशेषे ॥

वोढा । पु० भारिके ।। सूते । वोढुम् । वह० । अर्हत्यर्थतर्प्य तितृच् । ढत्वधत्वष्टुत्वढलोपा । सहिवहोरोदवर्णस्ये त्योकारः ॥ चनड्हि । ऋषभे । परिणेतरि ॥ मूढे ॥

वोद्र । त्रि० आर्द्रे ॥

वोदाल । पु० पाठीनमत्स्ये ॥

वोद्र । पु० गोनसाख्ये ॥ भाषान्तरे ॥

वोद्री । स्त्री० पणपादे । काकिन्याम् ॥

वोरक । पु० लेखके ॥ इ०वि०शेष ॥

वोरट । पु० कुन्दपुष्पे ॥ इ०वि०शेष ॥

वोरपट्टी । स्त्री० मन्दरायाम् । मादरी० कट्० चटाइ० इ०भा०प्र० ॥

वोरव । पु० वोरो० इ०गौ०भा०प्र० धान्यविशेषे ॥ यथास्यगुणाः । वोरवस्तुवुधैः प्रोक्तस्त्रिदोषशमनोऽपचः । मधुरश्चाम्लपाकश्चग्राहि पित्तकरोगुरुः ॥

वोरुखान पु० पाटलवर्णाश्वे ॥ इ०हे०न्द्र० ॥

वोलम् । न० गन्धरसे । अस्यगुणाः । वोलंरक्तहरंशीतंमेध्यं दीपनपाचनम् । मधुरंकटुतिक्तञ्चदाहस्वेदत्रिदोषजित् ॥ ज्वरापस्मारकुष्ठघ्नं गर्भाशयविशुद्धिकृत् ॥ अपिच । वोलं स्यात्कटुतिक्तोष्णंकषायंरक्तदोषनुत् । कफपित्तामयानृक्प्रदरादिरुजापहम् । पु० रसगन्धे ॥ वोलयति । कुलमज्जनं । अच् ॥ वातिवा । वा० । पिञ्छादित्वादूलच् ॥

वोलक । पु० लेखके ॥

वोला । स्त्री० दोलावर्त्ते ॥ यथा । हिमुपितरविमितकलितकलाभिर्ललितनिवहा० मड्गलमिश्रलभक्तितगणितकलयाकिलनवा । एकादशकलविरतिविदितमदुगतिरिह-

वेला० यशसापूरितभुवनभुवनरसनासनवेला ॥

वेल्लाह'। पु० अश्वविशेषे ॥ यथा वेल्लाहस्त्वयमेश्वस्यात्पाण्डुकेशरबालधिः॥ इ० हे० चन्द्र:॥

वेहित्थम्। न० यानपात्रे। पोते। जहाज० इ० भा० प्र०॥ इ० हे० चन्द्र:॥

वौषट्। अ० देवहविर्दानमन्त्रे॥ स्वाहादेवहविर्दानेश्रौषट्वौषटवषट्स्वधेत्यमर॥ उक्ततेऽनेन। वह०। बाहुलकात्० डौषट्॥

व्यंशक.। पु० पर्वते॥ इ० मुद्राङ्कितशेष चन्द्र.॥

व्यंसक.। पुं० धूर्ते॥

व्यसित। त्रि० वञ्चिते॥

व्यक्त'। त्रि० स्फुटे॥ मनीषिणि॥ प्रत्यक्षे। हेतुमदनित्यमव्यापिसक्रियमनेकमाश्रितंलिङ्गम्। सावयवंपरतन्त्रंव्यक्तम्। इतिलक्षिते॥ स्थूले॥ यथा। अव्यक्तोव्यक्तकारणमिति॥ व्यज्यतेस्म। अञ्जूव्यक्त्यादौ। क्त:। विप्रवादस्तेक्तेतु० अञ्जेर्नत्वेव्यक्तप्रतिषेधइतिनिष्ठातस्यअस्येनपादानइतिमनत्वम्॥

व्यक्तकाल:। पुं० स्थितिकाले॥

व्यक्तदृष्टार्थ:। पुं० प्रत्यक्षिणि॥ साक्षिणि। इ० त्रि० शेष॥

व्यक्तविशेष। पुं० बुद्धे॥

व्यक्ति। स्त्री० पृथगात्मताम्॥ प्रत्यक्षे। स्पष्टतायाम्। शरीरविषयादिरूपायांभोगभूमौ॥ प्रभावे॥ व्यक्तिलक्षणमाहगोतम। यथा। व्यक्तिगुणविशेषाश्रयोमूर्त्तिरिति। अस्यार्थ.। यद्यपिजात्यादेरपिव्यक्तित्त्वात्प्रमेयत्त्वमेवव्यक्तित्त्वम्० तथापिजात्याकृतिशक्तिविषयव्यक्तेरिदलक्षणम्। तथाच० गुणविशेषोजात्याकृतिसमानाधिकरणोगुण० सङ्ख्यादिभिन्नस्तदाश्रय'० मूर्त्तिर्व्यक्तिरितिसमानार्थकमित्यर्थ'। परेतु० गुणारूपादय० विशेषाविशेषका० उत्क्षेपणादयस्तेषामाश्रयोद्रव्यम्० तेनजात्याश्रयोव्यक्तिरित्याशय.। विशेषलक्षणमाहमूर्त्तिरिति। मूर्त्ति: सस्थानविशेषस्तद्वानित्याहु.। अपचमध्यमपदलोपीसमासइत्याशय। अन्येतु० व्यक्तेर्लक्षणमूर्त्तिरिति० सैवेत्याह। गुणविशेषाश्रयइति। गुणविशेषस्य० अवच्छिन्नपरिमाणस्याश्रयइत्यर्थइत्याहु:॥ १३२॥ व्यज्यतेऽनया। अञ्ज्०। क्तिन्॥ जनौ॥ इ० हे० चन्द्र:॥

व्यय। त्रि० व्याहते। व्याकुले॥ अपवर्जिते॥ सोद्यमे। व्यासक्ते॥

त्रिविध० विविधैर्वाऽयमध्वयथा। विरुद्धमगतिर्वा अग० इत्यनेन्द्रे तिसाधु ॥

व्यङ्कट । पुं० अद्रिप्रभेदे ॥

व्यङ्ग । पुं० भेके ॥ मुखरोगविशेषे ॥ तल्लक्षणंयथा । क्रोधायासप्रकुपितोवायुः पित्तेनसंयुतः । मुखमागम्यसहसामण्डलंविसृजत्यतः ॥ नीरुजंतनुकंश्यावंमुखेव्यङ्गंतमादिशेत् ॥ त्रि० हीनाङ्गे० छिन्ननासिकादौ ॥ विगतानि०विगतानि वाअङ्गान्यस्य ॥ विकले ॥ विगतमङ्गमस्य ॥

व्यङ्गा । पुं० शैले । पर्वते हे० त्रि० शेषः ॥

व्यङ्गाङ्गः । त्रि० विकलाङ्गे । व्यङ्गमङ्गयस्य सः ॥

व्यङ्ग्यः । त्रि० व्यञ्जनयाबोध्येऽर्थे ॥ यथा । वाच्योर्थोऽभिधयाबोध्यो० लक्ष्योलक्षणयामतः । व्यङ्ग्योव्यञ्जनयाताः स्युस्तिस्रः शब्दस्यशक्तय ॥ प्रकाश्ये । आन्तरेशब्दे ॥

व्यजः । पु० तालवृन्ते । व्यजत्यनेन । अज० गोचरसञ्चरेतिघप्रत्ययान्तोनिपातितः ॥

व्यजनम् । न० वाजी । तालवृन्ते ॥ चामरे ॥ व्यजत्यनेन । अज० । करणेल्युट् । वायाविति पक्षे वीन ॥

व्यञ्जक । पु० अभिनये ॥ त्रि० व्यक्तिकारके । प्रकाशके ॥ वैखरीरूपेशब्दे ॥ घटप्रत्यक्षसमयेआलोको व्यञ्जकोयथा । व्यञ्जनयाप्रतिपादके ॥ हृ०सा०द०प० ॥ व्यनक्ति । अञ्जू० । ण्वुल् ॥

व्यञ्जनम् । न० निष्ठाने । तेमने । दधिघृतादौ । सूपशाकादौ । तीवण हृ०भा०प्र० ॥ चिह्ने ॥ श्मश्रुणि ॥ अवयवे । स्त्रीपुंसयोः गुह्यदेशे । स्त्र्यादिचिह्ने ॥ अहनि । दिने ॥ व्यज्यतेऽनेनवाल्युट् ॥ स्वरहीनवर्णे ॥ अस्वरितस्यास्योच्चारणं न भवति । नपुनरन्तरेणाच व्यञ्जनस्योच्चारणमपिभवतीतिभाष्योक्तेः ॥

व्यञ्जना । स्त्री० शब्दस्यवृत्तिविशेषे ॥ तस्यालक्षणं यथा । विरतास्वभिधाद्यासुययार्थोबोध्यतेपरः । सावृत्तिर्व्यञ्जनानामशब्दस्यार्थादिकस्यच ॥ शब्दबुद्धिकर्मणांविरम्यव्यापाराभावइतिनयेनाभिधालक्षणातात्पर्याख्यासुतिसृषुवृत्तिषुस्वस्वमर्थं बोधयित्वोपक्षीणासु० ययान्योर्थोबोध्यते०साशब्दस्यार्थस्यप्रकृतिप्रत्ययादेश्चवृत्तिर्व्यञ्जनध्वननगमनप्रत्यायनादिव्यपदेशविषयाव्यञ्जनानाम ॥ विशेषः साहित्यदर्पणादौद्रष्टव्यः ॥

व्यञ्जित । त्रि० प्रकटीकृते ॥

व्यडम्बक । पुं॰ एरण्डे ॥ व्यडम लमम्बयति । अविम्ल सने । णिच् । ण्वुल् ॥

व्याडम्बनम् । न॰ एरण्डे ॥ व्यडमलम म्बयति । अवि॰ । ल्युट्॰ युज्वा ॥ शुक्लैरण्डे ॥

व्यतिकर । पुं॰ व्यसने ॥ व्यतिष ङ्गे॰ ॥ मिश्रणे ॥ क्षोभे ॥ स म्बन्धे ॥

व्यतिकीर्ण॰ । त्रि॰ सङ्कीर्णे ॥

व्यतिक्रम । पुं॰ व्यत्यये । अन्यथा त्वे । क्रमविपर्यये ॥ यथा । सर्व अप्राङ्मुखोदातायदीतावउदङ्मु ख॰ । एषएवविधिर्दानेविवाहेतु व्यतिक्रम ॥ व्यतिक्रमणम् । क्र मु॰ । घञ् । मैादात्तोपदेशेतिन वृद्धि॰ ॥ अन्याये ॥

व्यतिभेद । पुं॰ समावेशे ॥

व्यतिरिक्त । त्रि॰ व्यतिरेकविशिष्टे । भिन्ने । अन्यस्मिन् ॥ व्यतिरि च्यतेस्म । रिचिर्विरेचने । क्त ॥

व्यतिरेक: । पुं॰ अभावे । विरहे ॥ कारणंकार्याद्व्यावृत्तौ । कार्यव्य तिरेकप्रयोजकव्यतिरेकप्रतियोगि त्वे ॥ अलङ्कारविशेषे । यथा । व्य तिरेकोविशेषस्तुउपमानोपमेययो: शैलाद्यवोन्नता: सन्त: किन्तुप्रकृ तिकोमला ॥ अथमुपमेयाधिक्य पर्यवसायीव्यतिरेक ॥ यथावा । पल्लवतकाल्पतरोरेषविशेष क रस्यवीर । भूषयतिकर्णमेक प रस्तुकर्णंतरस्करुते । तन्न्यून त्वपर्यवसायी । यथा । रक्तस्त्वं नव पल्लवैरहमपिश्लाघ्यै॰ प्रियायागुणै स्त्वामायान्तिशिलीमुखा स्मरधनु र्मुक्ता॰ सखेमामपि । कान्तापाद तलाहतिस्तवमुदेतद्वन्ममाप्यावयो:स र्वं तुल्यमशोककेवलमहंधात्रासशो क कृत ॥ अनुभयपर्यवसायीय था । दृढतरनिबद्धमुष्टे कोषनि षण्णस्यसहजमलिनस्य । कृपणस्यकृ पाणस्यकेवलमाकारतोभेद । वि शिष्ट॰ अतिरेक॰ पृथग्भाव ॥ विपर्यये ॥

व्यतिरेकव्याप्ति । स्त्री॰ साध्यनिषे धेसाधननिषेधरूपेण॰ प्रवृत्तायाव्या प्तौ । यथा । यत्रवह्निर्नास्ति॰ तत्र धूमोनास्तीति॰ यथाह्रदे ॥

व्यतिरेकसञ्ज्ञा । स्त्री॰ वैराग्यविशेषे । परिपाचनेचानुष्ठीयमानेकेचित्क षाया॰ पक्वा॰ पच्यन्तेकेचित् तत्रैवपूर्वापरीभावेसतिपच्यमाना भ्य कषायेभ्य पक्वानांव्यतिरेको णावधारणं । स्वचित्तेपूर्वविद्यमा नदोषाणांमध्येऽभ्यस्यमानंविवेकेने तेपक्वा॰ एतेऽवशिष्टाइतिचिकित्स कवद्विवेचनस्वरूपे ॥

व्यतिरेकुदाहरणम् । न॰ उदाहरण

विशेषे अव्यगीतम । तद्विपर्ययाद्वाविपरीतव्यतिरेक्युदाहरणमिति अस्यार्थ . । तद्विपर्ययात्.साध्यसाधनव्यतिरेकव्याप्तिप्रदर्शनात् । तथाचसाध्यसाधनव्यतिरेकव्याप्त्युपदर्शकोदाहरणं. व्यतिरेक्युदाहरणम् । यथाजीवच्छरीर.सात्मकम्प्राणादिमत्वात्.यन्नैवम्.तन्नैवम्.यथाघटक्ष्वति । वाकार ' प्रयोगमपेक्ष्य.तथाचान्वय्युदाहरणं व्यतिरेक्युदाहरणं वाप्रयोक्तव्यमित्यर्थः ॥ ३६ ॥

व्यतिषक्त । त्रि. सम्बन्धाक्रान्ते । सम्बद्धे । व्यतिषज्यतेस्म । षञ्जसङ्गे । क्त । उपसर्गात्सुनोतीत्यादिनाषत्वम् ॥

व्यतिषङ्ग । पुं. विनिमये ॥ सङ्गे । परस्परमेलने ॥ व्यतिषञ्जनम् । षञ्ज. । घञ् ॥

व्यतिहार । पुं. विनिमये । परस्परकरणे ॥ यथा.त्वमहमस्मि.अहम्त्वमसीतिव्यतिहार . सचैकत्वतात्पर्यावगमाद्भवतीति । व्यत्यये । अन्यस्मिन्नन्यावभासे ॥ व्यतिहरणम् । हृञ्. । घञ् । व्यतिह्रियतेऽनेनाअथवा । घञ् । उपसर्गस्येतिपाक्षिकोदीर्घाभाव . ॥

व्यतीत । त्रि. विगते । विशेषेण. अतीत ॥

व्यतीपात । पुं. महोत्पाते । उपद्रवे ॥ अपमाने । पलायने । योगविशेषे ॥ तत्रजातस्यफलयथा । कठोरशाक्य । पिशुनस्वभावोगदातुरोमातृहितोमनुष्य । परस्वकार्येकृतपक्षपातोयस्यप्रसूतौव्यतिपातयोग । व्यतिक्रम्यपतनम् । पत्लृगतौ । घञ् । उपसर्गस्येतिदीर्घ ॥ अन्ययोगे ॥

व्यतीहार । पुं. परीवर्त्ते । व्यतिहरणम् . व्यतिह्रियतेवा । हृञ्. । घञ् । उपसर्गस्येतिपाक्षिकोदीर्घ . ॥ परस्परमेकजातीयक्रियाकरणे ॥

व्यत्यय : । पुं. व्यतिक्रमे । व्यत्यासे । विपर्यासे । विपर्यये । व्यत्ययनम् इण्. । एरच् ॥

व्यत्यस्त : । त्रि. व्यतिक्रमसहिते ॥ यथा । व्यत्यस्तपाणिनाकार्यमुपसंग्रहणंगुरो । सव्येनसव्य स्पृष्टव्योदक्षिणेनचदक्षिणक्षतिमनु : ॥ उत्तानाभ्यांहस्ताभ्यादक्षिणोपरिभावेनव्यत्यास भिन्नसमाचारात् बोध्य ॥

व्यत्यास । पुं. व्यतिक्रमे । व्यत्यये ॥ व्यत्यसनम् । असुक्षेपणे । घञ् ॥

व्यत्यासित । त्रि. वैसादृश्यप्रापिते ॥ तारकादित्वादितच् ॥

व्यथकः । त्रि० व्यथाकारिणि । दुःखजनके ॥ भयङ्करे । व्यथयतिव्यथभयचलनयोः । बहुलमन्यत्रापीति वुन् ॥

व्यथा । स्त्री० पीडायाम् । दुःखे ॥ व्यथ० । षटादयश्चितइतित्वात् अङ् । टाप् ॥

व्यथित । त्रि० दुःखिते । पीडिते ॥ व्यथासञ्जाताऽस्य । तारकादित्वादितच् ॥

व्यधः । पुं० वेधे ॥ व्यधनम् । व्यधताडने । व्यधजपोरित्यप् ॥ ताडने ॥

व्यधनम् । न० वेधने ॥

व्यध्व । पु० प्रतिकार्वे । धनुर्गुणे ॥

व्यध्वः । पु० दुरध्वे । विपथे । निन्दितवर्त्मनि ॥ विरुद्धोऽध्वा । प्रादयो गताद्यर्थे इतिसमासः । उपसर्गादध्वनइत्यच् ॥

व्यपगतः । त्रि० निरस्ते ॥

व्यपदेशः । पु० शब्दे । नामनि ॥ कपटे ॥ विशिष्टोऽपदेशः । वाक्यविशेषे यथा । व्याजेनात्माभिलाषिणां व्यपदेशइतीर्यते इत्युज्ज्वलनीलमणिः ॥

व्यपवर्गः । पुं० । व्यपवर्गभेदे ॥

व्यपाकृति । स्त्री० अपह्नवे । अलीकारे ॥

व्यपाश्रयः । पुं० आश्रये ॥

व्यपेतः । त्रि० अपगते ॥

व्यपोढः । त्रि० विपरीते ॥

व्यपोहः । पुं० व्यपोहने ॥

व्यपोहनम् । न० अपाकरणे ॥

व्यभिचारः । पु० कदाचारे । भ्रष्टाचारे ॥ परिलिपि । स्खालित्ये ॥ हेत्वाभासविशेषे ॥ तल्लक्षणं यथा । साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वं हि व्यभिचार इति व्यधिकरणधर्मावच्छिन्नाभावचिन्तामणिः ॥ स च त्रिविधः । साधारणासाधारणानुपसंहारिभेदात् । तत्र विपक्षवृत्तित्वं साधारणत्वम् । सर्वसपक्षव्यावृत्तत्वमसाधारणत्वम् । व्याप्तिग्रहानुकूलैकधर्म्युदाहरणाभावो यत्र सर्वस्यैव पक्षत्वं सोऽनुपसंहारी । इति सव्यभिचारचिन्तामणिः ॥ विशिष्टोऽभिचारः ॥ व्यभिचरणं वा । चर० । घञ् ॥

व्यभिचारिणी । स्त्री० परपुरुषगामिन्याम् । कुलटायाम् । यथा । हताधिकारां मलिनां पिण्डमात्रोपजीविनीम् । परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् ॥ व्यभिचारोव्यतिक्रमोऽस्त्यस्याः । इनिः । ङीप् ॥

व्यभिचारी । पुं० चतुस्त्रिंशत्प्रकारशृङ्गारभावविशेषे ॥ ते यथा । निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः । आलस्यं दैन्यचिन्तामोहः स्मृतिर्धृतिः ॥ व्रीडाचपलता

हर्षश्चावेगोजडतातथा गर्वोविषाद
औत्सुक्यंनिद्रापस्मारएवच ॥ सुप्तो
विबोधोऽमर्षश्चावहित्थमथोग्रतामति
। उपलम्भश्च्याधिश्चउन्मादोमरणं त
था ॥ त्रासश्चैववितर्कश्चविज्ञेयाव्य
भिचारिणइतिहेमचन्द्रः ॥ साहित्यद
र्पणे त्रियस्त्रिंशदुक्ताः । यथा । वि
शेषादाभिमुख्येनचरन्तोव्यभिचारिणः
। स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च
तद्भिदाः ॥ स्थिरतयावर्त्तमानेहि
रत्यादौनिर्वेदादयः प्रादुर्भावतिरो
भावाभ्यामाभिमुख्येनचरणाद्व्यभि
चारिणः कथ्यन्ते । केते । इत्या
ह । निर्वेदावेगदैन्यश्रममदजडता
औग्र्यमोहौविबोधः स्वप्नापस्मारग
र्वामरणमलसतामर्षनिद्रावहित्थाः
। औत्सुक्योन्मादशङ्काः स्मृतिम
तिसहिताव्याधिसन्त्रासलज्जाहर्षासू
याविषादाः सधृतिचपलताग्ला
निचिन्तावितर्का इति ॥ त्रि०व्य
भिचारविशिष्टे ॥

व्यय । पुं० अर्थापचये । वित्तस्या
पगमे । उठाव०खरच०इ०भा० ॥
पूर्वगृहीतदेहेन्द्रियादिवियोगे ॥ ध
र्मादिषुविनियोगे ॥ नाशे ॥ व
त्सरविशेषे ॥ तत्फलंयथा । दुर्भि
क्षं जायतेघोरंसर्वोपद्रवसंयुतम् ।
अनावृष्टिः समाख्याताव्ययेसंवत्स
रेप्रिये ॥ २० ॥ न०लग्नाद्द्वादशभव
ने व्ययनम् । व्ययवित्तसमुत्सर्गे
ऽदन्त । घञ् । अच् वा ॥ विपूर्वा
दिणएरच् ॥

व्ययित । त्रि० कृतव्यये ॥

व्ययी । त्रि० व्ययुक्ते ॥ यथा । द्रविणं
परिमितमधिकव्ययिनंजनमाकुली
कुरुते । चीनांशुकमिवपीनस्तनज
घनाया कुलीनायाः ॥

व्यर्थ । त्रि० निरर्थके । मोघे । वि
फले ॥ यथा । भर्त्तानिश्वसितेऽप्य
सूयतिमनोजिघ्रः सपत्नीगणः श्व
श्रूरिङ्गितदैवतंनयनयोरीहालिहो
यातरः । तद्दूरादयमञ्जलिः किं
मधुनादृग्भङ्गिभागेनते वैदग्धीमधु
रप्रबन्धरसिकव्यर्थोऽयमत्रश्रमइति
॥ विशेषणगतंअर्थोयस्मात् ॥

व्यर्थभाषणम् । न० निरर्थकवाक्या
पारे ॥ यथा । देशराष्ट्रप्रसङ्गाश्चपरा
र्थपरिकल्पनात् । नर्महासप्रसङ्गा
च्चभाषणंव्यर्थभाषणमितिदेवलः ॥

व्यलीक । पुं० नागरे । षिङ्गे ॥
न०अप्रिये ॥ अकार्ये ॥ वैलक्ष्ये ॥
पीडने ॥ व्यङ्गे । विशेषणचलति ।
अलभूषणादौ । अलीकादयश्चेति
साधु ॥ विगतान्तते । विगतम
लीकम् ॥ विपर्ययेऽपीतिस्वामी ॥

व्यवकलनम् । न० वियोगे । हीने ॥
अङ्कशास्त्रोतरकरणे । बाकिकाटा०
इ०गो०दे०भा० ॥

व्यवकलितः । त्रि॰ कृतव्यवकलने । वियोजिते । न॰ व्यवकलने ॥
व्यवच्छिन्नः । त्रि॰ भिन्ने ॥ विशेषिते ॥
व्यवच्छेदः । पुं॰ पृथक्त्वे ॥ बाणमुक्तौ ॥
व्यवच्छेदकम् । न॰ विशेषणे ॥
व्यवच्छेद्यम् । त्रि॰ विशेष्ये ॥
व्यवधा । स्त्री॰ अन्तर्धायाम् । तिरोधाने ॥ व्यवधानम् । डुधाञ्॰ । आतश्चोपसर्गे इत्यङ् ॥
व्यवधानम् । न॰ अन्तर्धौ । तिरोधाने । वस्त्वन्तरकृतेऽवच्छेदे । खड्गादेः कोषादिवदावरणे ॥ व्यवपूर्वाद्धाञो ल्युट् ॥
व्यवधायक । त्रि॰ व्यवधानकर्त्तरि ॥
व्यवधि । पुं॰ पिधाने । व्यवधाने ॥ व्यवधानम् । डुधाञ्॰ । उपसर्गे घोः किः ॥
व्यवसर्गः । पुं॰ दाने ॥ व्यवसर्जनं सृज॰ । घञ् ॥
व्यवसायः । पुं॰ उपजीविकायाम् ॥ उद्यमे ॥ फलाव्यभिचार्युद्यमे ॥ यथा । व्यवसायिनाव्यवसायः फलाव्यभिचार्युद्यमोभगवद्विभूतिरिति । निश्चये ॥
व्यवसायात्मिका । स्त्री॰ निश्चयात्मिकायां बुद्धौ ॥ व्यवसायोनिश्चयः आत्मायस्याः ॥
व्यवसायी । त्रि॰ कृतनिश्चये ॥ सोद्यमे ॥ व्यवसायविशिष्टे ॥ वाणिज्यकारके ॥ अनुष्ठातरि ॥
व्यवसित । त्रि॰ निश्चये ॥ प्रतारिते ॥ अनुष्ठिते ॥ विशिष्टमवस्यतिस्म॰ अवसीयतेस्मवा । षोऽन्तकर्मणि । क्त । द्यतिस्यतीतीत्वम् ॥
व्यवस्था । स्त्री॰ संस्थायाम् । सविषयकत्वनिर्धारणे ॥ विशिष्टावस्था ॥ शास्त्रनिरूपितविधौ ॥ रचनानियमे ॥ व्यवतिष्ठतेऽनया । ष्ठा॰ । आतश्चोपसर्गे इत्यङ् । टाप् ॥ व्यवस्थानवा ॥
व्यवस्थान । पुं॰ श्रीहरौ ॥ यस्मिन् व्यवस्थिति सर्वस्य ॥ जातिवर्णाश्रमतद्धर्मादिकान्विभज्यकरोतिवा । कृत्यल्युटोबहुलमिति॰ बहुलग्रहणात्कर्त्तरिल्युट् । व्यवतिष्ठतेसर्वंजगदस्माद्ध्रुवेणवा । अधिकरणेल्युटवा ॥ न॰ व्यवस्थितौ ॥
व्यवस्थापक । पुं॰ व्यवस्थादातरि ॥
व्यवस्थापित । त्रि॰ निश्चिते ॥
व्यवस्थितः । त्रि॰ अप्रचलिते । तत्तद्योगेनावस्थिते । प्रतिष्ठिते ॥ विशेषेणअवस्थितः ॥ व्यवस्थांप्राप्ते ॥ इतच् ॥
व्यवस्थितिः । स्त्री॰ अवस्थाने । व्यवस्थाने ॥

व्यवस्था । स्त्री० निश्चये स्थैर्ये ॥

व्यवहरणम् । न० व्यवहारे ॥

व्यवहर्त्ता । पुं० व्यवहारकर्त्तरि ॥ प्राड्विवाके ॥

व्यवहार: । पुं० शास्त्रीयलौकिकादि व्यवहरणे । व्यौहार० इ० भा०॥ यथाहु: । अहमिदमितिचमति व्याससततव्यवहरतिसर्वलोकोपि । प्रथमाप्रतीचिचरमान्विवसतिवपु-रिन्द्रियादिवाह्यार्थे ॥ इति ॥ द्रुम प्रभेदे ॥ व्यासे ॥ पणे ॥ स्थितौ व्युत्पत्तौ ॥ विवादे । ऋणादाना दिविषयचतुष्पाद्ये ॥ ऋणादाना द्यष्टादशविषयो० विरुद्धार्थिप्र-त्यर्थिवाक्यजनितसन्देहहारोवि-चारएवव्यवहार: । यथाहकात्या यन । विनानार्थेऽवसन्देहहरणा द्धारउच्यते । नानासन्देहहरणा द्व्यवहारइतिस्मृतइति ॥

व्यवहारज्ञ: । पुं० प्राप्तव्यवहारे ॥ सतुषोडशवर्षानन्तरंभवति । यथा । बालआषोडशाद्वर्षात्पौगण्डोपि निगद्यते । परतोव्यवहारज्ञ: स्वतन्त्र: पितरावृतेइति ॥ त्रि० व्यवहार ज्ञातरि ॥

व्यवहारदर्शनम् । न० न्यायदर्शने । विचारकरणे ॥

व्यवहारपदम् । न० वादिनाराज्ञिनि वेदने ॥ यथाहयाज्ञवल्क्य । स्मृ

त्याचारव्यपेतेन० मार्गेणाधर्षित: परै: । आवेदयतिचेद्राज्ञिव्यवहा रपदंहितदिति ॥

व्यवहारपाद । पुं० व्यवहारांशे ॥ य था । पूर्वपक्ष: स्मृत: पादोहि पादश्चोत्तर स्मृत: । क्रियापा दस्तथाचान्य श्चतुर्थोनिर्णय: स्मृत इति ॥

व्यवहारमातृका । स्त्री० व्यवहारोप योगिक्रियायाम् । साचमिताक्ष रातोनुसन्धेया ॥

व्यवहारमार्ग । पुं० व्यवहारविषये । व्यवहारपदे ॥

व्यवहारविधि: । पुं० धर्मशास्त्रे । व्यवहारस्यविधाने ॥

व्यवहारविषय: । पुं० व्यवहार-पदे ॥

व्यवहारिका स्त्री० लोकयात्रायाम् ॥ वर्हण्याम् । सम्मार्जन्याम् ॥ इङ्गुदे ॥

व्यवहारी । त्रि० व्यवहारविशिष्टे ॥

व्यवहार्य: । त्रि० व्यवहरणीये । व्य वहर्त्तव्ये । व्यवहारयोग्ये॥

व्यवहित । त्रि० दूरेस्थिते ॥ व्यवधान विशिष्टे । सान्तरे । भित्त्याद्यन्तरि ते ॥ तिरोहिते ॥

व्यवहृत: । त्रि० कृतव्यवहारे ॥

व्यवहृति: । स्त्री० व्यवहारे ॥

व्यवाय: । पुं० सुरते । ग्राम्यधर्मे ।

मैथुने ॥ अन्तर्द्धौ । व यवधाने ॥ शुद्धाविति धरणिः ॥ न० ते जसि ॥ व्यवायनम् । द्रुण् गतौ० अवगतौ वा । एरच् ० घञ्वा ॥

व्यवायी । पु० स्त्री० कामुके ॥ त्रि० द्रव्यविशेषे ॥ व्यवायोऽस्मिन्वा ऽस्ति । इनिः ॥

व्यश्नुवानः । त्रि० व्याप्नुवति ॥ अशेः लटः शानजादेश ॥

व्यष्टि । स्त्री० व्यस्तव्यापिनि ॥ विशेषे ॥ अध्यात्मादिविभागेन व्याप्तिर्व्यष्टिरितीरिता ॥

व्यसनम् । न० अशुभे ॥ सक्तौ ॥ दैवानिष्टफले । अमरः ॥ पापे ॥ विपत्तौ । निष्फलोद्यमे ॥ स्त्रीपानमृगयादिष्वष्टादशविधेषु ॥ यथोक्तं मनुना । मृगयाक्षो दिवास्वप्नः परिवादः स्त्रियो मदः । तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥ कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः । वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु ॥ द्वयोरप्येतयोर्मूलं यं सर्वे कवयो विदुः । तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ ॥ पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥ दण्डस्य पातनञ्चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥ सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः । पूर्वं पूर्वं गुरुतरं विद्याद्व्यसनमात्मवान् ॥ तथाहि द्यूतात्पानं कष्टतरम् ० मद्यपानेन मत्तस्य सम्प्रज्ञानाशात् ० यथेष्टचेष्टया देहधनादिविरोधकृत्यादयो दोषाः ० द्यूते तु पाशिकौशलाभावादिरप्यस्ति । स्त्रीव्यसनात् ० द्यूतं कष्टम् ० द्यूते हि वैराद्यवाद्योनीतिमार्गस्थोऽत्रदोषाः ० मूत्रपुरीषवेगधारणाद्व्याध्युत्पत्तिः ० स्त्रीव्यसने पुनरपत्योत्पत्त्यादिगुणयोगोऽप्यस्ति । मृगयास्त्रीव्यसनयोः स्त्रीव्यसनं दुष्टम् ० तत्रादर्शनकार्याणां कालातिपातेन धर्मलोपादयो दोषाः ० मृगयायां तु व्यायामेनारोग्यादिगुणयोगोऽप्यस्तीत्येवं कामजचतुष्कस्य पूर्वं पूर्वं गुरुदोषम् ॥ क्रोधजेष्वपि त्रिषु ० वाक्पारुष्यात् ० दण्डपारुष्यं दुष्टम् ० अङ्गच्छेदादेरशक्यसमाधानत्वात् ० वाक्पारुष्ये तु ० कोपाग्निः ० दानमानपानीयसेकैः शक्यं शमयितुम् । अर्थदूषणात् ० वाक्पारुष्यदोषवन्मर्मपीडाकरम् ० वाक्पारुष्यस्य दुश्चिकित्स्यत्वात् । एवं पूर्वं पूर्वं दुष्टतरं त्वजेदित्यर्थः । यतो व्यसनासक्तिरनर्थावहा ॥ व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते । व्यसन्यधोऽधो

व्रजति स्वर्गं व्यसनीकृतः ॥ इति ॥ अन्यत्रापि । एकैकव्यसनासक्ताः सर्वे मृत्युवशंगताः । यः पुनः सहितान् सेवेत् विषयान् विषयी नरः । स पतेत् महदैश्वर्यात् छिन्नमूल इव द्रुमः ॥ इति ॥ चौर्य्यं च व्यसनान्यत्र कामजानि भवन्त्युत । मिथ्यावाक्यं परमं तस्माद् दुस्तराबुभौ ॥ परदाराभिगमनं त्रिनाशे रक्षरौद्रत्वं तिरामायणम् ॥ व्यस्यते । असुभिः पर्णः । भावकर्मकरणादौ ल्युट् ॥ सर्वथैतत् सम्पादयिष्यामीत्याग्रहो व्यसनम् ॥

व्यसनवारकः । पु॰ राजर्षिविशेषे ॥

व्यसनार्त्तः । त्रि॰ उपरक्ते । दैवमानुषान्यतरपीडायुक्ते ॥ व्यस्यति श्रेयोमार्गात्॰ व्यसनम्॰ तेनार्त्तः ॥

व्यसनी । त्रि॰ व्यसनग्रस्ते । पञ्चभद्रे ॥ व्यसनमस्यास्ति॰ अस्मिन्वा । इनि ॥

व्यस्तः । त्रि॰ व्याकुले । व्याप्ते ॥ प्रत्येकम् । पृथक्पृथगर्थे ॥ विपरीते ॥ व्यस्यतेस्म । असुक्षेपणे । क्तः ॥ विभक्ते ॥ विक्षिप्ते ॥ *

व्यस्तपदम् । न॰ ऋणादौनाभियोगेपदान्तरेणोत्तरे ॥ यथा ॥ सुवर्णशताभियोगे॰ अनेनाहताडितइति ॥

व्यस्तारम् । न॰ हस्तिनोमदप्रयोगे ॥

व्याकरणम् । न॰ वेदस्यानेनशब्दशास्त्रे ॥ विशिष्यव्याक्रियन्ते व्युत्पाद्यन्ते शब्दाअनेन । डुकृञ्॰ ल्युट् । प्रादिसमासः ॥ अस्यार्थोऽयं यथा । नवैच्छन्दशास्त्रागमारम्भकालकृतोशिमुषौशोशनो विच्छिन्नेषु । अलक्षिप्रमेयोड्डशे वाश्रितेषु स्वतोधर्मशास्त्रादिकारब्धिकालमिति ॥ अत्रोक्तं महाभाष्ये । पुराकल्पएतदासीत् । संस्कारकालोत्तरं ब्राह्मणाव्याकरणं स्माधीयते॰ तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानज्ञेभ्योवैदिका शब्दाउपदिश्यन्ते॰ तदद्यत्वे नतथा॰ वेदमधीत्यत्वरिता वक्तारोभवन्तीति । त्वरिताविधा दाताश्चितकैयटः । संस्कारउपनयनम् । करणमाभ्यन्तरप्रयत्नः । अनुप्रदाननादादिर्वाह्यः प्रयत्नः । तेनअधीतव्याकरणशिष्टैभ्यइत्यर्थं इतिविवरणम् ॥

व्याकारः । पु॰ व्याकरणे ॥ कृञो घञ् ॥

व्याकीर्णः । त्रि॰ विकीर्णे । विक्षिप्ते ॥ *

व्याकुलः । त्रि॰ शोकादिभिरितिकर्त्तव्यतापरिज्ञानशून्ये ॥ विह्वले ॥ व्याकोलति । कुलसंस्त्यानेबन्धुषु च । इगुपधेतिकः ॥ उपद्रुते ॥ सम्भ्रान्ते ॥

व्याकुलात्मा । त्रि॰ शोकाभिभूतचित्ते

व्याकृत । पुं० कार्यब्रह्मणि । संभूतौ । हिरण्यगर्भे ॥

व्याकृति । स्त्री० भङ्ग्या ॥ व्युत्पत्तौ ॥ व्याकरणम । डुकृञ्० । क्तिन् ॥ विशिष्टाआकृतिर्वा ॥ व्यञ्जने ॥

व्याकोश । त्रि० व्याकोषे । विकसिते ॥ व्यावृत्त कोश सङ्कोचोऽस्मात् । प्रादिसमास ॥

व्याकोष । पु० प्रफुल्ले । उत्फुल्ले । विकसिते ॥ व्यावृत्त कोष सङ्कोचोऽस्मात् । प्रादिभ्यो धातुजस्येतिसमास ॥

व्याक्षेप । पु० अन्तराये ॥ व्याक्षेपोभविष्णुत्वा कार्यसिद्धेर्हि लक्षणम् ॥

व्याख्या । स्त्री० विवरणे ॥ व्याख्यानम् । ख्या० । आतश्चोपसर्गेऽङ् । टाप् ॥

व्याख्यागम्यम् । न० उत्तराभासभेदे ॥ यथा अस्तव्यस्तपदव्यापिनिगूढार्थं तथाकुलम् । व्याख्यागम्यमसारत्वमोत्तरमुक्तिबुधै । ॥ व्याख्ययागम्यते ज्ञायतेयत गमॢ० । पोरदुपधादितियत् ॥ *

व्याख्यात । त्रि० विवृते । कथिते । विस्पष्टमाख्याते ॥

व्याख्याता । त्रि० विवरणकर्त्तरि ॥

व्याख्यानम् । न० व्याख्यायाम् ॥ यथास्वलक्षणम् । पदच्छेद पदार्थोक्तिर्विग्रहोवाक्ययोजना । आक्षेपस्यसमाधानव्याख्यानं पञ्चलक्षणम् ॥ व्याख्यानसाधने ॥ व्याख्यायतेऽनेन । ख्या० । करणेल्युट् ॥

व्याघात । पु० विष्कम्भादियोगान्तर्गतयोगभेदे ॥ अत्रजातस्यफलं यथा । व्याघातजातश्चसतांनितान्तव्याघातजन्मामनुज कठोरः । असत्यभाषीकृपयाविहीनोमन्दश्चघोरोदीर्घतनु कृशाङ्ग ॥ अन्तराये । विघ्ने ॥ घाते । प्रहारे ॥ विशिष्टआघात ॥ अलङ्कारविशेषे ॥ तस्यलक्षणं यथा । तद्यथ साधितकेनाप्यपरेणतदन्यथा । तथैवयद्विधीयेतसव्याघातइतिस्मृतः ॥ येनोपायेनयदेकेनोपकल्पितं तस्यान्येनजिगीषुतयातदुपायकमेवयदन्यथाकरणं सखसाधितवस्तुव्याहृतिहेतुत्वात् व्याघात ॥ उदाहरणम् । दृशादग्धमनसिजजीवयन्तिदृशैवया । विरूपाक्षस्यजयिनीस्ता स्तुवेवामलोचना ॥

व्याघ्र । पु० शार्दूले । द्वीपिनि । रक्तैरण्डे ॥ करञ्जे ॥ नराद्युत्तरस्थ श्रेष्ठे ॥ यथानरव्याघ्र ।

व्याजिघ्रति । प्रा० । यथाजिघ्रतीत्यजातविति । घ्राआतश्चोपसर्गेङ्गतिक । पाघ्राध्मधेटदृश ।

श्रुतिशीन । प्र॰ सञ्ज्ञायामितिनि
षेधात् ॥
व्याघ्रदल । पुं॰ एरण्डे ॥
व्याघ्रनख । पुं॰ स्नुहीवृक्षे ॥ व्या
लनखे । व्यस्तफले ॥ व्याघ्रस्यनखे
॥ न॰ नखीनामनिगन्धद्रव्ये ।
व्याडायुधे । कर्त्ते । चक्राकारकी
कन्दविशेषे ॥ नखक्षतविशेषे ॥
व्याघ्रस्यनखमिव ॥
व्याघ्रनखकम् । न॰ नखक्षते ॥
व्याघ्रनायकः । पुं॰ शृगाले । इ॰
रा॰ ट॰ ॥
व्याघ्रपात् । पुं॰ विकङ्कते । ग्रन्थि
ले ॥ व्याघ्रस्यपादाइवपादमूला-
न्यस्य ॥ मुनिविशेषे ॥ त्रि॰
व्याघ्रतुल्यचरणे ॥
व्याघ्रपादः । पुं॰ विकङ्कतवृक्षे ॥
विकण्टकवृक्षे ॥ मुनिविशेषे ॥
रक्तैरण्डे ॥
व्याघ्रपुच्छ । पुं॰ एरण्डमात्रे । व्या
घ्रपुच्छमिवपुच्छमस्य ॥
व्याघ्राट । पुं॰ भरद्वाजपक्षिणि ॥
व्याघमटति । अट॰ । कर्मण्यण् ।
व्याघ्रइवअटतिवा । अच् ॥
व्याघ्रादनी । स्त्री॰ चित्रलायाम् ॥
व्याघ्रायुधम् । न॰ नखाख्यगन्धद्र
व्ये ॥
व्याघ्रास्यः । पुं॰ बिडाले ॥ न॰
व्याघ्रमुखे ॥

व्याघ्री । स्त्री॰ निदिग्धिकायाम् ।
कण्टकार्य्याम् ॥ व्याजिघ्रति ।
घ्रा॰ । व्याघ्रादिभिरितिलिङ्गादा
तश्चोपसर्गइतिक॰ नतुश॰ । गौ
रादि ॥ धूम्रवर्णायाम्वराटिका
याम् ॥ व्याघ्रस्त्रियाम् ॥ यथा
। व्याघ्रीवास्ते जराचायुर्यातिभि
न्नघटाम्बुवत् । निघ्नन्तिरिपुवद्रो
गास्तस्माच्छ्रेय समाचरेत् ॥ इ॰
कुलार्णवः ॥
व्याङ्गि । पुं॰ व्यङ्गसुते ॥ अपत्ये
इञ् । स्वागतादीनाञ्चेतिवृद्धिनि
षेधऐजागमश्चन ॥
व्याचिख्यासित । त्रि॰ व्याख्यातु
मिष्टे ॥
व्याचिख्यासुः । त्रि॰ व्याख्यातु
मिच्छौ ॥
व्याज । पुं॰ शाठ्ये । कपटे ॥
स्वरूपाच्छादने । अपदेशे । मिषे ॥
व्यजन्ति॰ क्षिपन्त्यनेन । अज॰
। हलश्चेतिघञ् । निष्ठायामिट्
त्वान्नकुत्वम् ॥
व्याजनिन्दा । स्त्री॰ अलङ्कारविशेषे ॥
यथा । निन्दायानिन्दयाव्यक्ति
र्व्याजनिन्देतिगीयते । विधेस
निन्द्योयस्तेप्राणीकमेवाहरच्छिरः ॥
अत्रहरनिन्दया॰ विषमविपाकंसं
सारप्रवर्त्तयतोविधेर्निन्दाव्यङ्
ग्या॰ व्याजनिन्दा ॥ यथावा । वि

धिरेवविशेषगर्वेणैव कारटस्वरट
कस्तवापराध । सहकारतरोरुकार
योसौसहवाससरसेनकोकिलेन ॥ अ
न्यस्तुत्या॰अन्यस्तुत्यभिव्यक्तिरिति
पञ्चमप्रकारव्याजस्तुतिप्रतवन्द्वः
व्याजनिन्दा ॥ कपटकुत्सायाम् ॥
व्याजस्तुति । स्त्री॰ अलङ्कारविशेषे
॥ यथा । उक्तिर्व्याजस्तुतिर्निन्दा
स्तुतिभ्यास्तुतिनिन्दयोः ।। क स
र्धुनिविवेकस्ते पापिनोनयसेदिवम्
॥ साधुदूतिपुन॰ साधुकर्त्तव्य
क्रिमत परम । यन्मदर्थे विलू
नासिदन्तैरपिनखैरपि ॥ निन्दया
स्तुतेः॰ स्तुत्यानिन्दयावा॰अवग
मन व्याजस्तुतिः । क. स्वर्धुनी
त्युदाहरणे॰विवेकोनास्तीतिनिन्दा
व्याजेन॰गङ्गामुक्तिप्रदेव॰महा
पातकिनोपि॰स्वर्गं नयतीतिव्याज
रूपयानिन्दयातत्प्रभावातिशयस्तु
तिः । साधुदूतीत्युदाहरणे॰म
दर्थमियन्त क्लेशमनुभूतवत्यसीति
व्याजरूपयास्तुत्या॰मदर्थेनगतासि
॰किन्तुरन्तुमेवगतासि॰धिक्त्वादू
तिकाधमे विरुद्धकारिणीमितिनि
न्दावगम्यते ॥ कपटप्रशंसायाम् ॥
व्याजोक्ति ।। स्त्री॰ छलवाक्ये ॥ अ
लङ्कारविशेषे ॥ यथा ॥ व्याजो
क्तिरन्यहेतूक्त्यायदाकारस्यगोपनम् ।
सखिपश्यगृहारामपरागैरस्मिधूस

रा ॥ अत्रचौर्यरसक्रान्तसङ्केतभूपृष्ठ
सुलुठनसम्बधूलिजालस्यगोपनम् ॥
कस्यावानभवेद्रोष प्रियाया॰ स
व्रणे धरे । सभृङ्गपद्ममाघ्रासीर्वारि
तापिमयाधुना ॥ उपपतिनाख
ण्डिताधरायानायिकाया॰ सका
शमागच्छन्तंप्रियमपश्यन्त्येवसख्या
नायिकाप्रतिहितोपदेशवचनमत
म्प्रति॰नायिकापराधगोपन फक्का
पङ्क्तिरत्रास्वायविशेष । अत्रतस्याव
चनस्यान्यथानयनेनापह्नव । अस्या
माकारस्यहेत्वन्तरवर्णनेन॰गोपन
मिति॰लक्षणा॰लक्ष्यनाम्निचोक्तिय
इत्याकारस्यगोपनार्थहेत्वन्तरप्रत्या
यकव्यापारसाचेयलक्षणम् ।
व्याड । पु॰ हिंस्रपशौ ॥ क्रांसा
दिपशौ ॥ सर्पे ॥ व्याडति । अ
डउद्यमे । व्याङ्पूर्वः । पचाद्य
च ॥ खले । वञ्चके ॥ इन्द्रे ।
व्याडायुधम् । न॰ व्याघ्रनखाख्यगन्धद्र
व्ये ॥ व्याडस्यव्याघ्रस्यायुधमिव ॥
व्याडिः । पुं॰ मुनिभेदे । विन्ध्यस्थे
नन्दिनीसुते । मेधाविनि । व्यड
स्यापत्यम् । इञ् । स्वागतादित्वा
द्वृद्धिनिषेधऐजागमश्चन ॥
व्यात्तः । त्रि॰ विवृते । व्याप्त॰ इ॰
भा॰प्र॰ । यथाव्यात्तानन : ॥
व्यात्युक्षी । स्त्री॰ रसिकजनानाम
न्योन्यजलक्रीडने । करपाणे । क

लक्षीडायाम्। करपत्रिकायाम्। छींटाखेलना॰ इ॰ छींटाछींटीसेखेल ना॰ इ॰ च॰ भा॰ ॥ व्यतिहारेणक्षणम्॰ परस्पराभ्युक्षणम्। उक्षसेच ने। कर्म्मव्यतिहारेणच् स्त्रियामिति णच्प्रत्यय। णच. स्त्रियामञ्। टिड्ढाणञित्यादिनाङीप् ॥

व्यादित :। त्रि॰ प्रसारिते ॥

व्यादिष्ट :। त्रि॰ सन्दर्शिते ॥ व्याक्रपूर्व्वाद्दिशे : क्त ॥

व्याध :। पुं॰ मृगबधाजीवे। मृगयौ। लुब्धके ॥ अयसर्व्वेषुभायोयाच्चियाज्जात। यथोक्तंब्रह्मवैवर्त्ते। नापिताद्गोपकन्यायासर्व्वस्त्री॰ तस्ययोषिति। ब्याधाद्भूबव्याधस्वयतवान्मृगहिंसकइति ॥ दुष्टे ॥ तारामयेऽपि ॥ मेदने ॥ विध्यति। व्यधताडने। श्याद्व्यधेतिण ॥

व्याधभीत :। पुं॰ मृगे ॥

व्याधाम :। पुं॰ वज्रे ॥ इ॰ है॰ न्द्र : ॥

व्याधि :। स्त्री॰ कुष्ठौषधौ ॥ रोगे। धातुवैषम्यनिमित्ते॰ ज्वरातीसारादिरूपेविकारे ॥ चिकित्साशास्त्रे॰ प्रथमत्वाभूतशरीरिसमवाय: पुरुषइत्युच्यते। तस्मिन्क्रियासोऽधिष्ठानम॰ कस्माल्लोकस्यद्वैविध्यात्॥ लोकोहिद्विविध॰ स्थावरोजङ्गमश्च। द्विविधात्मकएवाग्नेयसौम्यश्च॰ तद्भूयस्त्वात्। पञ्चात्मकोवा। तत्रचतुर्व्विधोभूतग्राम। स्वेदजाण्डजोद्भिज्जजरायुजसञ्ज्ञ :। तत्रपुरुषप्रधानम्। तस्योपकरणमन्यत्। तस्मात्पुरुषोऽधिष्ठानम्। तद्दु :खसंयोगाव्याधयइत्युच्यन्ते। तेचतुर्व्विधा॰ आगन्तव॰ शारीरा॰ मानसा॰ स्वाभाविकाश्चेति। तेषामागन्तवोऽभिघातनिमित्ता। शारीरास्त्वन्नपानमूलावातपित्तकफशोणितसन्निपातवैषम्यनिमित्ता। मानसास्तु॰ क्रोधशोकभयहर्षविषादेर्ष्याभ्यसूयादैन्यमात्सर्य्यकामलोभप्रभृतयइच्छाद्वेषभेदैर्भवन्ति। स्वाभाविका. क्षुत्पिपासाजरामृत्युनिद्राप्रभृतय॰ तएतेमन. शरीराधिष्ठाना : ॥ तेषांसंशोधनसंशमनाहाराचारा. सम्यक्प्रयुक्तानिग्रहहेतव. इत्यादिसुश्रुतेप्रथमाध्याय। विगतमाधिरनेन ॥ विविधमाधत्ते॰स्माद्वा ॥ व्याधानवा। उपसर्गेघो कि : ॥

व्याधिघात :। पुं॰ आरग्बधे ॥ व्याधीन्हन्ति। हन॰ कर्म्मण्यण्। हनस्तोचिण्णलो : ॥

व्याधित .। त्रि॰ व्याधियुक्ते। आमयाविनि। आतुरे ॥ व्याधि: सञ्जा

तोस्य । तद्‌स्यसञ्जाततारकादिभ्य इतच् ॥

व्याधिहन्ता । पुं॰ वाराहीकन्दे ॥ चि॰ व्याधिघातकी ॥

व्याधूत : । चि॰ कम्पिते ॥ विशेषेण चासमन्ताद्‌धूत ॥

व्यान । पुं॰ शिष्यगमनवत्यखिल शरीरवर्त्तिनिदेहस्थपञ्चवाय्वन्तर्गतानिलविशेषे ॥ प्राणापानयोर्निग्रमनकर्माचरणामन्युत्थादनादिवीर्यवत्कर्महेतुत्वादखिलशरीरवर्त्ती व्यानदूत्यर्थ ॥ व्यानेविनामय त्यङ्गव्याने व्याधिप्रकोपण । प्रतिदानतथाकण्ठाद्‌व्यापनाद्‌व्यानउच्यते । व्याप्त्याअनित्यनेनइलस्तिघञ् ॥

व्यानतम् । न॰ रतिबन्धान्तरे ॥ यथा । स्वेच्छयाभ्रमतिमञ्चमेपियायेत्स्त्रियःप्रचरतिवक्षभाषितम् । व्यानतरतमिदयन्तिप्रियाख्यादधोमुखपतुष्पदाकृति ॥

व्यानद्ध : । चि॰ विशेषेणबद्धे ॥

व्यापक । चि॰ अपरच्छिन्ने । अन्यूनदेशकालवर्त्ती ॥ विष्णौ ॥ स्वसत्ताप्रकाशेभ्र्यानामरूपेऽव्याप्नोति । आप्लृव्याप्तौ । ण्वुल्‌टचावितिण्वुल् ॥ तद्भिन्नवृत्त्यत्यन्ताभावाऽप्रतियोगिनि । यथा । साध्यस्यव्यापकोयस्तुहेतोरव्यापकस्तथा

सउपाधिभवेत्तस्यनिष्कर्षोयंप्रदर्श्यते ॥ कु॰भा॰प॰ ॥ आच्छादके ॥ यथा । पद्मस्यव्यापकसारमसन्दिग्धमनाकुलम् । अव्याख्यागम्यमित्येवमुत्तरवद्विदोविदुः ॥ पद्मस्य॰ भाषार्थस्य॰ व्यापकमाच्छादकम्॰ अभियोगाप्रतिकूलमित्यावत् । इतिव्यवहारतत्त्वम् ॥ लिङ्गिनि ॥ येनचप्रतिबद्धतद्‌व्यापकम ॥ मीर्छ ॥

व्यापकता । स्त्री॰ व्यापकत्वे ॥

व्यापत्ति । स्त्री॰ व्याधौ । मरणे ॥

व्यापद् । स्त्री॰ आपदि ॥ मृत्यौ ॥ व्याङ्‌पूर्वात्पदे क्विप् ॥ विशिष्टाआपद ॥

व्यापनम् । न॰ आच्छादने ॥ व्याप्तौ ॥

व्यापन्न । चि॰ मृते ॥

व्यापाद । पुं॰ द्रोहचिन्तने ॥ व्यापादनम् । व्याङ्‌पूर्वकपदधातोर्ण्यन्ताद्भावेघञ् ॥

व्यापादनम । न॰ मारणे ॥ व्याङ्‌पूर्वात्पदधातोर्ण्यन्तात्ल्युट् ॥

व्यापादित । चि॰ मारिते ।

व्यापार । पु॰ कर्मणि । क्रियायाम् ॥ दशमभवने ॥

व्यापारित । चि॰ नियुक्ते ॥

व्यापारी । चि॰ व्यापारविशिष्टे व्यवसायिनि ॥

व्यापिका । स्त्री॰ व्यापिन्याम॥व्या

प्नोति । आप्लृ० ख्युन् । टाप् । ह्रस्वम् ॥

व्यापी । त्रि० विभौ । व्यापके । आत्मनि । पुंसि ॥ सकलवस्तुव्यापनशीले ॥ व्याप्तुं शीलमस्य आप्लृ० । सुप्यजाताविति णिनि ॥

व्यापिनी स्त्री० व्यापिकायाम् ॥

व्यापृतवान् । त्रि० व्यापृतमात्रे ॥

व्यापृत: । पु० कर्मसचिवे । आयुक्ते ॥ त्रि० व्यापारयुक्ते ॥

व्यापृति: । स्त्री० व्यापारे ॥

व्याप्त: । त्रि० ख्याते । समाक्रान्ते ॥ यथा । यद्यत्कार्यं कारणेन व्याप्तमन्तर्बहिश्चेति । कारणत्वेन सर्वकार्यव्यापनाद्व्याप्त: । परमात्मा । पुंसि ॥ व्याप्यतेस्म ॥ आप्लृ० । गत्यर्थाकर्मकेति क्त: ॥ कार्त्स्न्येन सत्त्वे तत्र । सर्वंकार्यमुपादानत्वेन व्याप्नोति । विपूर्वादाप्नोते: पूर्ववत्कर्त्तरि क्त: ॥

व्याप्ति: । स्त्री० व्यापने ॥ लाभे । इति मेदिनी ॥ लक्षणे । इति हेमचन्द्र: ॥ यत्र धूमस्तत्राग्निरिति साहचर्यनियमे ॥ व्यापनम् । आप्लृ० । स्त्रियाबादिभ्य इति क्तिन् ॥ प्राप्तौ ॥

व्याप्यम् । न० लिङ्गे । साधने ॥ अधिकदेशकालनियतव्याप्यम् ॥ व्यापकाभावे व्याप्याभावो न्याय्य: ॥ व्याप्यते । आप्लृ० । ऋहलोर्ण्यत् ॥ कुष्ठौषधौ । पालके । व्याधौ । उत्पले ॥ त्रि० व्याप्तिविशिष्टे । व्याप्तिकर्मणि ॥ आकारे ॥ शङ्कितसमारोपितोपाधिनिराकरणेन स्वभावप्रतिबद्धं व्याप्यमिति सांख्या ॥ अस्यार्थ: । संशययुक्त: शङ्कित: विपर्ययुक्त: समारोपित: उपाधिर्विशेषणम् स्वभावेति । भाव: सत्ता तया प्रतिबद्धमित्यर्थ: ॥ प्रसंगृहीतम् तेन लिङ्गसत्ताभावेनाऽनुमानं सिद्ध्यति भाव: ॥

व्याप्यत्वासिद्ध: । पुं० सोपाधिके ॥ साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधि: । साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम् । साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम् । पर्वतो धूमवान्वह्नित्वादित्यत्रार्द्रेन्धनसंयोग उपाधि: । यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकता । यत्र वह्निस्तत्रार्द्रेन्धनसंयोगो नास्ति अयोगोलके आर्द्रेन्धनाभावादिति साधनाव्यापकत्वम् । एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधि: । सोपाधिकत्वाद्वह्नित्वं व्याप्यत्वासिद्धो हेत्वाभास: ॥

अव्यभिचारितसामानाधिकरण्या भावे ॥

व्याम. । पुं॰ बाह्वो सकरयोस्तयो स्तिर्यगन्तरे । स्कन्धपार्श्वप्रसारित योर्बाह्वोर्मध्ये । व्यायामे । न्यग्रो धे ॥ विशेषणमप्यत्र ऽमेन । अमग तौ । इलसंवितिघञ् ॥

व्यामनम् । न॰ व्यामे ॥

व्यामिश्र । त्रि॰ सङ्कीर्णे ॥

व्यामृष्ट । त्रि॰ प्रमृष्टे ॥

व्यामोह . । पुं॰ मोहे । विपरीतज्ञा ने ॥

व्यायच्छमान । त्रि॰ व्यायामं कुर्व ति ॥

व्यायत । त्रि॰ व्यापृते ॥ दीर्घे ॥ दृढे ॥ अतिशये ॥ विशेषेणायत ॥

व्यायाम । पुं॰ वियामे ॥ दुर्गसञ्च रे ॥ शरीरायासजनकेपौरुषेश्रमे । मल्लक्रीडायाम् ॥ यथा । यथा । व्यायामोहिसदापथ्योबलिनांस्निग्ध भोजिनाम् । सचशीतेवसन्तेचतेषां पथ्यतम स्मृत । सर्वेष्वृतुषुस र्वेहि शूरैरात्महितार्थिभि । श क्त्यर्द्धेनतुकर्त्तव्योव्यायामोहन्त्यतो ऽन्यथा ॥ कुचौललाटेयोवायोध दाचघर्म प्रवर्त्तते । शक्त्यर्द्धं तविजा नीयाद्वायतोच्छ्वासमेवच ॥ लाघवं कर्मसामर्थ्यंस्थैर्यंक्लेशसहिष्णुता । दोषक्षयोग्निवृद्धिश्चव्यायामादुपजा यते ॥ व्यायामकुर्वतोनित्यंविरु द्धमपिभोजनम् । विदग्धमविदग्ध वानिर्दोषं परिपच्यते ॥ नचव्या यामसदृशमन्यत्स्थौल्यापकर्षणम् । नचव्यायामिनं मर्त्त्यंमर्दयन्त्यर योबलात् ॥ नचैनं सहसाक्रम्यज रासमधिगच्छति । व्यायामक्षुण्ण गात्रस्यपद्भ्यामुद्वर्त्तितस्यच ॥ व्या धयोनोपसर्पन्ति वैनतेयमिवोरग ॥ रक्तपित्तीकृशःशोषीश्वासीश्वासी क्षतातुर । भुक्तवान्स्त्रीषुचक्षीणो व्यायामंपरिवर्जयेत् ॥ वातपित्ता मयीबालोवृद्धोऽजीर्णीचसन्त्यजेत् ॥ अतिव्यायामत . कासोरक्तपित्त प्रजायते । श्रम क्लम क्षयस्तृष्णा ज्वरश्छर्दिश्चजायते ॥ इतिराजवल्ल भ ॥ व्यामे ॥ इतिहेमचन्द्र ॥

व्यायामवान् । त्रि॰ व्यायामिनि व्यायामोऽस्त्यस्य बलादित्वात्पक्षे मतुप् तदभावे॰ इनि ॥ व्यायामी ॥

व्यायास । पुं॰ परिश्रमे ॥ विशिष्ट आयास : ॥

व्यायोग । पुं॰ दशविधरूपकान्तर्गत रूपकविशेषे ॥ यथा । आम्नाटक प्रकरण भाण प्रहसन डिम । व्या योग समवाकारोवीथ्यङ्केहामृगा इति । अभिनेयप्रकारा . सुभाषा. षट्स्वताद्विका : ॥ इतिहेमच न्द्र ॥

व्याल०। पुं० दुष्टगजे ॥ सर्पे ॥ श्वापदे ॥ सिंहे ॥ त्रि० खले ॥ शठे ॥ व्याडति । अडउद्यमेव्याङ्पूर्व० । पचाद्यच् । डलयोरैक्यस्मरणाद्व्यालः यद्वा विरुद्धमासमन्तादलति० अडतिवाचल० अड० । डलयोरैक्यत्वम् । पचाद्यच् ॥
व्यालक । पुं० दुष्टगजे । गम्भीरवेदिनि ॥ दू० त्रि० शेष० ॥
व्यालखड्गः । पुं० व्यालनखे ॥
व्यालगन्धा । स्त्री० नाकुल्याम् । रास्नायाम् ॥
व्यालग्राह । पुं० व्यालग्राहिणि ॥
व्यालग्राही । पुं० आहितुण्डिके ॥ व्यालंगृह्णाति । नन्द्यादीतिणिनिः ॥
व्यालजिह्वा । स्त्री० महासमङ्गायाम् ॥
व्यालदंष्ट्रः । पुं० गोक्षुरे ॥
व्यालनख । पुं० गन्धद्रव्यविशेषे । व्याघ्रनखे ॥
व्यालपत्रा । स्त्री० एर्वारौ ॥
व्यालबल । पुं० व्यालनखे ॥
व्यालमाल० । पुं० शिवे ॥ व्याला० सर्पाएवमालायस्य ॥
व्यालमृग । पुं० चित्रव्याघ्रे ॥
व्यालम्ब । पुं० रक्तैरण्डे ॥
व्यालायुधम् । न० व्याघ्रायुधे ॥ व्यालसिंहइवायुधमिव ॥
व्याली । त्रि० व्यालवति ॥
व्याली । स्त्री० दुष्टायाम् ॥
व्यालोडनम् । न० विमर्दने ॥
व्यालोलित । त्रि० विलुलिते ॥
व्यावक्रोशी । पुं० परस्पराक्रोशने
व्यावर्त्तः । पुं० रोगभेदे ॥ विशिष्टआवर्त्ते ॥
व्यावर्त्तकः । त्रि० भेदके ॥
व्यावर्त्तनम् । न० इतरेतरवियोगस्थाने ॥ वेष्टने । वेठन० दू० भा०
व्यावर्त्तयितुम् । अ० बाधितुमित्यर्थे
व्यावर्त्तिका । स्त्री० बाधिकायाम् प्रतिबन्धिकायाम् ॥ यथा । भो भल्लाप्रतिभान्तिविजनेभया किन्तुस्फुरायुधमती० दिहस्थापत्त्योमतोनिविशतेगाढोरहीसुग्रहः । अक्षोपास्यमितिस्फुरत्यपिहृदिव्यावर्त्तिकावासना० कानामैयमतक्यंसोढ्गहनादेबोसतायासना ॥
व्यावर्त्तित० । त्रि० बाधिते । पराङ्मुखीकृते ॥
व्यावहारिक । त्रि० व्यवहारसिद्धे ॥ व्यवहारेणचरति । चरतीतिठक् । स्वागतादिः ॥ विनयादित्वात्स्वार्थेवाठक् ॥

व्यावृत्त : । त्रि० निवृत्ते ॥ वृते ॥
व्यावृत्ति . । स्त्री० व्यतिरेके । निरसने ॥ खण्डने ॥ अवृत्तौ ॥ यथा सर्वसपक्षव्यावृत्तिरेवदोषो० नविपक्षव्यावृत्तिरपितस्याननुगुणत्वात् ॥
व्याश्रय . । त्रि० विभिन्नाश्रये । नानापक्षसमाश्रये ॥ विभिन्नआश्रय . ॥
व्यास ' । पुं० मुनिविशेषे । बादरायणे । पाराशर्य्ये । भगवति० कृष्णद्वैपायने । मुनीनामध्येभगवतोविभूतौ ॥ येन० ऋगवेदादिविभागेन० चतुर्धावेदाव्यस्ता ' । तत्रर्ग्वेदएकविंशतिधाकृत यजुर्नवाधिकशतधाकृत । सामवेद सहस्रधाकृत अथर्वण पञ्चाशच्छाखाभेदेनकृत ' । एवंविभागेनचतुर्द्धावेदाव्यस्ता : । अन्यानिचपुराणानि० व्यस्तान्यनेनेतिव्यास ॥ तवेदशास्त्रपरिनिष्ठितशुद्धबुद्धि- चर्माम्बरसुरमुनीन्द्रनुतकवीन्द्रम्- । कृष्णत्विषकनकपिङ्गजटाकलापव्यासनमामिशिरसातिलकमुनीनाम् ॥ व्यस्यतिविभजतिविस्तारयतिविपूर्वोदस्यतेर्वाहुलकात्कर्त्तरिघञ । वेदविस्तारकरणाद्व्यासनामाभवन्मुनिरितिभागवतम् ॥पाठकब्राह्मणे ॥ यथा । विस्पष्टमद्रुतमान्तस्पष्टाक्षरपदन्तथा । कलस्वरसमायुक्तंरसभावसमन्वितम् ॥ बुद्ध्यमान ' सदर्थेग्रन्थार्थंकृत्स्नशोनृप । ब्राह्मणादिषुसर्वेषुग्रन्थार्थंश्चार्पयेन्नृप । यएववाचयेद्ब्रह्मन्सविप्रोव्यासउच्यते ॥ विस्तृते । प्रपञ्चे । विस्तारे ॥ मानभेदे ॥ गोलस्थमध्यरेखायाम ॥ व्यसनम् । असुक्षेपणे । घञ ॥
व्यासक्त ' । त्रि० व्यापृते । विशेषेणासक्ते । सलग्ने ॥ व्यासक्त कार्यान्तरविस्मरतीत्यसावधानोक्ति ॥
व्यासङ्ग , । पुं० विक्षेपे ॥ विशिष्टासङ्गे ॥ विशेषेणआसङ्ग . ॥ घ व्यासि ॥
व्यासमाता । स्त्री० सत्यवत्याम् । वासव्याम् ॥
व्यासिद्ध . । त्रि० निषिद्धे ॥
व्यासेध . । पुं० प्रतिषेधे । व्यासेधम् । व्याङ्पूर्वात्सिधतेर्घञ् ॥
व्याहत . । त्रि० बाधिते ॥ विधूनिते ॥ चयनीते ॥ विशेषेणआहत . ॥ व्यर्थे ॥
व्याहति : । स्त्री० व्याघाते ॥
व्याहन्यमान । त्रि० प्रतिषिद्ध्यमाने ॥
व्याहरणम् । न० व्याहारे । यथा । स्नातुस्तुवरुणस्तेजोजुहृतोऽग्निश्रियहरेत् । भुञ्जानस्ययमस्त्वायुस्त

स्मान्नव्याहरत्त्विष्विंतिभविष्योत्त
रपुराणम् ।।
व्याहरत् । त्रि॰ शब्दयति ।।
व्योहार । पुं॰ उक्तौ । लपिते ।
वचसि ।। व्य हरणम् । व्याङ्
पूर्वात्॰हञोभावेघञ् ।।
व्याहृतम । त्रि॰ उक्ते ।। सन्दिष्टे ।।
व्याहृति । स्त्री॰ भूरादिषु ।। व्या
हरतिभूरादिसप्तलोकान् । हञ्॰
। व्याङ्पूर्वस्तत ॰ क्तिन् । व्या
हारे ।।
व्युच्छिन्न । त्रि॰ विमुक्ते । विशेषे
णोच्छन्ने ।।
व्युत । त्रि॰ स्यूते ।। द्व॰दि॰के
ष ।।
व्युति । स्त्री॰ व्यूतौद्व॰दि॰वी
ष ।।
व्युत्क्रम । पुं॰ क्रमविपर्यये । व्यति
क्रमे । उत्क्रमे । अक्रमे । विभिष्टउ
त्क्रम ।
व्युत्क्रमणम् । न॰ पृथगवस्थाने ।।
व्युत्पूर्वात्क्रमेर्ल्युट ।।
व्युत्थानम् । न॰ स्वातन्त्र्यकृत्ये । चि
त्तमूढविक्षिप्ताख्यभूमिवये । समा
धिपारणे ।। विरुद्धमुत्थानम् । प्रा
दयोगतेतिसमास ।। वैपरीत्येनो
त्थानवा ।। विरोधाचरणे । न्याय्यां
वृत्ति समुल्लङ्घ्यतविरुद्धतयास्थि
ति । व्युत्थानमुदितराज्ञ . साम
न्तोवयुत्थितोयथा ।। एषयानुगुणात
यास्थितिमतिक्रम्यततप्रतिकूलत्वेन
॰यास्थिति सा॰व्युत्थानमित्यु
दितमङ्गिरितिशेष । तत्रप्रसि
द्धिप्रमाणयति । राज्ञइत ।। प्र
तिरोधने । नृत्यभेदे ।। विशेषेणो
त्थाने ।।
व्युत्थापनम् । न॰ बाधने ।।
व्युत्पत्ति । स्त्री॰ सम्यग्ज्ञाने ।।
संस्कारे ।। विशेषेणोत्पत्ति ।। वि
विधावीत्पत्ति ।। शक्तिज्ञाने ।।
व्युत्पन्न । त्रि॰ व्युत्पत्तियुक्ते ।। स
म्यग्ज्ञानवति ।। संस्कृते ।। विशेषे
णाव्यक्तम्॰उत्पन्न परिचित ।।
व्युत्पादक । पुं॰ व्युत्पत्तिजनके ।।
व्युदसनम् । न॰ निरसने ।।
व्युदस्त । त्रि॰ प्रतिषिद्धे ।।
व्युदाम । पुं॰ प्रतिषेधे ।।
व्युषित । त्रि॰ पर्युषिते । वुसा॰द्व
तिभाषाप्रसिद्धे ।। व्युष्येष्म । उ
ष॰ । क्त ।। देशान्तरङ्गते ।।
व्युष्टम् । न॰ कल्पे । प्रभाते । काल॰
द्व॰भा॰ ।। फले ।। दिने ।। त्रि॰
उषिते । पर्युषिते ।।
व्युष्टि । स्त्री॰ फले ।। समृद्धौ ।।
स्तुतौ ।। व्युष्कनम्॰व्युष्कातेवा । उ
ष्कोविवासे ।। स्त्रियांक्तिन् ।। स्तक
रणसवेद्यविस्तृतत्वे । अपरोक्षख्या
तौ ।।

व्यूढ । त्रि॰ विन्यस्ते । व्यूहरचनया स्थिते ॥ संहते ॥ पृथुले ॥ विशेषेणोद्यतेऽस्त्र । वहप्रापणे । क्तः ॥

व्यूढकङ्कट त्रि॰ सन्नद्धे । वर्मिते । सज्जे . दंशिते । धृतसन्नाहे ॥ गूढोधृत ॰ कङ्कट सन्नाहोयेन ॥

व्यूढि । स्त्री॰ व्यूहे ॥ विन्यासे ॥ संहतौ ॥ पृथुलतायाम् ॥

व्यूत । त्रि॰ ऊते । तन्तुसन्तते ॥

व्यूति । स्त्री॰ वस्त्रादिवानेवाणे ॥ विशिष्टाऊतिः । वेञ॰ ऊतिपूतीत्यादिनाक्तिनिनिपातित ॥

व्यूह । पुं॰ निर्माणे ॥ वृन्दे । समूहे । विभागे ॥ तर्के ॥ देहे ॥ विस्तारे ॥ बलविन्यासे । युद्धार्थसेनारचनायाम् । युद्धार्थसैन्यस्यदेशविशेषेविभज्यदुर्लङ्घ्यत्वनिमित्तस्थापने ॥ व्यूहते । ऊह तर्के । वृगुपधेतिकः ॥ व्यूह्यतेवा । घञ् ॥ विशिष्टऊहोवा ॥

व्यूहनम् । न॰ सैन्यसंस्थाने ॥

व्यूहपार्ष्णिः । पुं॰ व्यूहपृष्ठे । प्रत्यासारे । सैन्यस्यपृष्ठेधनुःशतद्वयान्तरेस्थितसैन्ये ॥ व्यूहस्य पार्ष्णिः पृष्ठभाग ॥

व्यूहभेदः । पुं॰ बलविन्यासस्यप्रभेदे । व्यूहस्यभेदोविशेष ॥ यथाह । समग्रस्तुसैन्यस्यविन्यासस्थानभेदतः । सव्य दण्डतिविख्यातोयुद्धेषुपृथिवीभुजाम् ॥ व्यूहभेदास्तुचत्वारोदण्डोभोगोऽसमण्डलम् । असंहतश्चनिर्णीतानीतिसारादिसम्मता . ॥ अन्येऽपिप्रकृतिव्यूहा . क्रौञ्चचक्रादय . क्वचित् । तच । तिर्यग्वृत्तिस्तुदण्ड स्याद्भोगोऽन्वावृत्तिरेवच । मण्डल सर्वतोवृत्ति: पृथग्वृत्तिरसंहत ॥ वृत्ति ॥ दण्डवदवस्थान दण्ड । अन्योन्यानुगतावृत्तिर्भोग । सर्पशरीरवदवस्थान मण्डलम् । गजादीनाविजातीयैरमिश्रितानांस्थानमसंहत । शकटमकरपताकासर्वतोभद्रदुर्जयादयोऽन्येपिव्यूहाः सन्तितेषामलक्षणंभारतादिपुद्रष्टव्यम्॥

व्यो । अ॰ लोहे ॥

व्योकार । पुं॰ लोहकारके ॥ व्योइत्यव्ययलोहवाचीतिश्रीभोजः । व्योकरोति । डुकृञ् ॰ । कर्मण्यण् ॥

व्योम: । पु॰ मयसु पुत्रे ॥

व्योमकेश . । पुं॰ शिवे ॥ व्योमेत्याकाशाद्युपलक्षणार्थम् व्योमव्यापिनः केशायस्येतिवा ॥

व्योमचारी । पु॰ देवतायाम् ॥ विहङ्गमे । खगे ॥ चिरजीविनि । त्रि॰व्योमचरे ॥

व्योमचारिपुरम । न॰ देवानापुरे ॥ व्योमचारिणापुरम् । शौभे ॥

व्योमधूम । पु॰ मेघे ॥

व्रतयज्ञ । पुं॰ संशितव्रते ॥

व्रतसङ्ग्रह । पुं॰ दीक्षायाम् ॥

व्रतस्थ । पुं॰ ब्रह्मचारिणि ॥

व्रतादेश । पुं॰ उपनयने ॥

व्रती । पुं॰ यजमाने ॥ साधके ॥ ब्रह्मचारिणि ॥ चान्द्रायणादिव्रतचारिणि ॥ व्रतमेणाजिनादिधारणंभोजनादिनियमोवास्यास्ति । इनि । यद्वा । व्रतयति । व्रताज्भोजनतन्निवृत्त्योरितिणिच् । व्रतेष्टु तिणिनि ॥

व्रतोपनयन । न॰ व्रतस्योद्यापने ॥

व्रतोपायनम् । न॰ वायने ॥

व्रश्चन । पुं॰ स्वर्णादिच्छेदनद्रव्ये । पत्रपरशौ । छेनी॰ इ॰ भा॰ व्रश्चतेऽनेन । ओव्रश्चू॰ । करणेतिल्युट् ॥ न॰ छेदने ॥

व्राजि । स्त्री॰ वात्यौ ॥ वाताल्यौ ॥ व्रजति । व्रजगतौ । वसिवपीत्यादिना॰ इञ् ॥

व्रात । पुं॰ सङ्घे । नानाजातीयानामनियतवृत्तीनामुत्सेधजीविनांसङ्घे ॥ न॰ तेषांकर्मणि ॥ व्रयते॰ नियम्यते॰ मुण्डमिश्रेतिणिजन्तात्व्रतशब्दात्॰ घञ् । व्रातच्फञोरितिलिङ्गाद्वृत्ति : ॥ पुं॰ समूहमात्रे ॥ व्याधादौ ॥

व्रातीन । त्रि॰ सङ्घजीविनि ॥ शरीरायासजीविनि ॥ व्रातेनशरीरायासेनजीवति॰ नतुवृत्तिवैभवेन । व्रातेनजीवतीतिखञ् ॥

व्रात्य । पुं॰ षोडशादिवर्षपर्यन्तमप्यसंस्कृतेभ्रष्टगायत्रीकेविप्रादौ । संस्कारहीने ॥ यथाहमनु । आषोडशाद्ब्राह्मणस्य सावित्रीनातिवर्त्तते । आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥ अतऊर्ध्वंत्रयोप्येते यथाकालमसंस्कृता सावित्रीपतिताव्रात्याभवन्त्यार्यविगर्हिता ॥ नैतैरपूतैर्विधिवदापद्यपिहिकर्हिचित् । ब्राह्मान्यौनांश्चसम्बन्धा- नाचरेद्ब्राह्मण सहेति ॥ शरीरायासजीवीव याधादिव्रात॰ सङ्घस्तत्र । शाखादिभ्योय ॥ यद्वा । व्रातमर्हति । दण्डादिभ्यइतियत् ॥ उपनयनादिसंस्कारहीने ॥

व्रात्यस्तोम । पुं॰ यज्ञविशेषे ॥

व्रीड । पुं॰ लज्जायाम ॥ भावे घञ ॥

व्रीडनम् । न॰ लज्जायाम् ॥

व्रीडा । स्त्री॰ लज्जायाम् । त्रपायाम् ॥ गुरोश्चेच्छ । टाप् ॥

व्रीडाकरवात । पुं॰ गुदरवे । पर्दे ॥

व्रीडित । त्रि॰ लज्जिते ॥ भावेक्त ॥

व्रीहि : । पुं॰ धान्यमात्रे ॥ आशुधान्ये ॥ व्रहति॰ उपचयगच्छति । वृहवृद्धौ । इगुपधात्कि

व्रीहिमय: | व्रैहेयम्

द्वितीन् । पृषोदरादि ॥ व्रीयती । व्रीङ् गत्याम् । बाहुलकाड्डिक्वा ॥

व्रीहि फलशा० व्रीहि । विल्वादि भ्योऽण् । फलपाकशुषामिति० लु पि० युक्तवद्भाव: ॥

व्रीहिक । पुं० धान्यविशिष्टे ॥ ठन् ॥

व्रीहिकाञ्चन: । पु० मसूरे

व्रीही । स्त्रि० व्रीहियुक्तचोट्टी ॥ व्रीह्यादिभ्यश्चेतिङ्गि ।

व्रीहिपर्णी । स्त्री० शालपर्ण्याम् ॥

व्रीहिमय । पुं० पुरोडाशे ; व्रीहेर्वि कृत्यादि गौडकुलोत्पन्ना डोचवाल

कार: पुरोडाश० । व्रीहे: पुरोडा शङ्कुतिमयट् ॥

व्रीहिराजक० । पुं० कामलिकाया म् । कङ्गुधान्ये ॥ चीनकधान्ये ॥

व्रीहिश्रेष्ठ । पु० शालिधान्ये ॥

व्रीह्यगारम् । न० कुसूले । धान्य गृहे ॥

व्रैह । त्रि० व्रीहिनिर्मिते ॥

व्रैहेयम् । न० व्रीहिभूस्थले। धान्यसा मान्यस्यकलमादेश्चोत्पत्तियोग्ये चे त्रे ॥ व्रीहीणाभवनक्षेत्रम् । व्री हिशाल्योर्ढक् ॥

प्रधानो पनाम तुलाराम मिश्रात्मज श्रीधनपति मिश्रापरनाम्ना श्रीसद्गुरु कुलावधूत श्रीपरमहंस परिव्राज काचार्य श्री सर्वरिहरानन्द नाथ भारती शिष्येण ब्रह्मावधूत श्री सुखानन्दनाथ परनामधेयेन विरचिते शब्दार्थचिन्तामणौ यवर्ग:

समाप्तिङ्गत

श्रीसुखानन्दनाथ तच्छिष्य श्री जगदीशमिश्रा परनाम ब्रह्मावधूत श्री जगदानन्दनाथ प्रीतिकामै:, श्रीमन्महा राजाधिराज रविकुलाव तंस महोमहेन्द्र यावदार्यकुलकमल दिवाकरै मेदपाटदेशाधीशै: अखिल भूपाल मौलिमणिभि: श्री १०८ श्रीयुत सज्जनसिंहै: सस्थापिते उदयपुरस्थ सज्जन यन्त्रालये मुख्यमन्त्रि कविराजिराज श्रीश्यामलदास प्रेरणया पण्डितवाजपेयि वंशीधरेण पण्डितनाजितदेव शर्मणाच शोधित: हैडजीवनराम शम्भूनाथ गुलाबराम लक्ष्मीनाथ प्राणनाथ लालसिंह प्रभृतिभिर्हिजैः कर्मकरैश्चक्रमेणाद्भिन्न सर्दारवेग यवनेन गौरीशङ्करेणच मार्गशीर्षशुक्ला चतुर्दश्या सोमवासरे शब्दार्थ- चिन्तामणेरीशस्य यवर्गोमुद्रित

### शंस्ता

शं । पुं॰ शिवे ॥ शस्त्रे ॥ शकारे ॥

शयु । त्रि॰ शुभान्विते ॥ शमस्य स्य । कशंभ्यावभयुस्तितुतयसः इतियुस् । सकार पदत्वात्॰ ॥ पदे ऽनुस्वारस्यपरसवर्णो ऽनुनासिकाय । शय्युं ॥

शंव । पुं॰ मुसलाग्रस्थलौहमण्डलके ॥ वज्रे ॥ त्रि॰ शुभान्विते । आम्यत्यरीन् । अन्तर्भावितण्यर्थाच्छमेर्वन् ॥ शशुभमस्यास्यवाभेद्यत्वादितिवा । कशम्भ्यामितिव । पदत्वेऽपिदन्त्योऽयं । अनुस्वारस्यवैकल्पिकेपरसवर्णोऽनुनासिकाव । शव्वं ॥

शंसट्॰ अल्प कथने ॥ आभिमुख्ये ॥

शंसन् । त्रि॰ कथयति ॥

शंसनम् । न॰ शंसायाम् ॥ सूचने ॥ कथने ॥ शंसुस्तुतौ । ल्युट् ॥

शंसा । स्त्री॰ वचसि । वचने ॥ वाञ्छायाम् ॥ प्रशंसायाम् ॥

शंसित । त्रि॰ निश्चिते ॥ हिंसिते ॥ स्तुते ॥ अनुष्ठिते । शंसि क्त ॥

शंसितव्रत । त्रि॰ अनुष्ठितव्रते ॥

शंस्ता । पुं॰ स्तोतरि ॥ होतरि ॥ शंसति । शंसु॰ । तृन्तृचौशंसिक्षदादिभ्य संज्ञायामनिटाविति तृन् । नपत्रादियहणस्यनियमार्थत्वान्नदीर्घः । शंस्तारौ॰शंस्तार



इत्यादि ॥

शंस्य । त्रि॰ स्तुत्ये ॥

शक । पुं॰ म्लेच्छजातिप्रभेदे । शकदेशोद्भवेपुरस्तात्क्षत्रिये॰पश्चाद्विलक्रियालोपादिनाशूद्रत्वमापन्ने ॥ यथाहमनु । शनकैस्तुक्रियालोपादिमाः क्षत्रियजातयः । वृषलत्वंगतालोकेब्राह्मणादर्शनेनच ॥ पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा यवनाः शकाः । पारदाः पह्लवाश्चीनाः किराताःदरदाः खशाः । इति । अयसत्ययुगेसगरेणमस्तकार्धंमुण्डयित्वाविशान्यत्वं वेदबाह्यत्वञ्चाऽकारि । अर्धं शिरः शकानान्तुमुण्डयामासभूपतिरिति पाद्मेस्वर्गखण्डे निरूपितम् ॥ रू मइतिप्रसिद्धेदेशे । तत्रत्याः सर्वे शकपदवाच्याः ॥ शालिवाहननाम्नाप्रसिद्धेनृपतिभेदे ॥ तस्यमरणदिनावधिवत्सरगणनाख्ये शकाब्दे॰इतिप्रसिद्धयातिथिपत्रेव्यवह्रियते ॥

शककारक । पुं॰ शकप्रवर्त्तिकर्तृरिनृपतिवरे ॥ यथाहकालिदासः । निहत्यतैभूतलमण्डलेशकान्सपञ्चकोव्यब्ददलप्रमान् ५५०००००० कलौ । सराजपुत्रः शककारकोभवेत्प्राधिराजोद्युत-शाककर्ता । अतः शतकोटिस

स्याद्वै पश्चात्कोटि ॥ कलौ षट्श
ककारकाः स्युः। युधिष्ठिरो विक्रम
शालिवाहनौ नराधिनाथौ विजया-
भिनन्दन । ततोऽनुनागार्जुनमेदि
नीविभुर्बलिः क्रमात् षट्शककार
का कलौ ॥ एषामन्तरालवर्षाण्या
ह । युधिष्ठिराद्दयुगाब्धरामय
३०४४ ॥ वालब्धरविभ्रव १३५
ऽभ्रखखाष्टभूमय १८००० हृशायु
त १०००० लक्षचतुष्टय४०००००
क्रमाम्महा हनागा ८२१ इति
शाकवत्सराः ॥ एषाजन्मभूमि
माह ॥ युधिष्ठिरोभूत्विहस्तिना
पुरे॰ तथोज्जयिन्यापरोविक्रमा
ह्वय । शालेयधाराभृतिशालिवा
हन सुचित्रकूटे विजयाभिनन्दन
॥ नागार्जुनोरोहितकेक्षितौबलि
र्भविष्यतीन्द्रोभृगुकच्छपत्तने ॥ कृ
तप्रशस्तिकादन्तरभवेत्तदाभवि-
ष्यन्त्यवनीभृतोऽर्वत ॥

शकट । पुं॰ न॰ अनसि । छक
डा॰ इ॰ भा॰ ॥ गन्त्र्याम् । गा
डी॰ इ॰ भा॰ । शक्नोतिभार-
वोढुं॰ नोदयितुंवा । शक्लृ शक्तौ
। शकादिभ्योऽटन् ॥ तिनिशवृ
क्षे ॥

शकटव्यूहः । पुं॰ शकटाकारबलवि
न्यासे । सूच्याकाराय पश्चात्
पृथुतः शकटव्यूहोभवति । तेन
पृष्ठतोभयेसतियातव्यं मार्गं गच्छे
त् ॥

शकटहा । पु॰ श्रीकृष्णे ॥ त्रि॰
शकटनाशके ॥

शकटाह्वा । स्त्री॰ रोहिणीनक्षत्रे ॥

शकटिका । स्त्री॰ गन्त्र्याम ॥

शकटी । स्त्री॰ मुनीनावाहनविशेषे
॥ बह्वादित्वान् ङीप् ॥

शकट्या । स्त्री॰ शकटसङ्घे ॥ शक
टानांसमूहः । पाशादिभ्यायः ॥

शकल । पु॰ न॰ खण्डे एक
देशे ॥ न॰ रोहितादिमत्स्यानां
त्वचि ॥ रागवस्तुनि ॥ वल्कले ॥
पुं॰ कट्यन्तरे । शक्यते॰ शक्नो
तिवा । शक्लृ शक्तौ । शकिशम्यो
र्निदितकल॰ ॥

शकली । पु॰ मत्स्ये ॥ शकल॰ अस्त्य
मस्यास्ति । अतइनि ॥

शकलीकृत । त्रि॰ खण्डीकृते ॥

शका । स्त्री॰ भाषान्तरे ॥ शक्नोतीत्य
र्थेपचाद्यच्

शकान्तक । पु॰ विक्रमादित्ये ॥

शकार । पुं॰ राज्ञोऽनूढाया स्त्रि
याभ्रातरि ॥ यथा । मदमूर्खताभि
मानोदुष्कुलतैश्वर्यसंयुक्त । सोय
मनूढाभ्राताराज्ञः श्याल शकार
इत्युक्त ।

शकारि । पु॰ विक्रमादित्ये । माष
साम्ये ॥

शकुन । पुं॰ पक्षिमात्रे ॥ पक्षिवि
शेषे । गृध्रे ॥ चित्रप्रभेदे ॥ उत्स
वादिषुमङ्गलार्थंगेयेगीतविशेषे ॥ न॰
शुभाशुभशंसिनिमित्ते । शुभा
शुभज्ञाननिर्णयहेतौ ॥ यथा । श
कुनंकथ्यतेतत्तु यच्छुभाशुभसूचक
म् । तथाहि । विप्राश्वेभफलाम्बुदु
ग्धदधिगोसिद्धार्थपद्माम्बरवेश्यावा
द्यमयूरचाषनकुला बद्धैकपश्वामि
षम् । सद्वाक्यकुसुमेक्षुपूर्णकलशच्छ
त्राणिमृत्कन्यकारत्नोष्णीषसितोक्ष
मद्यससुतास्त्रीदीप्तवैश्वानराः ॥
आदर्शाञ्जनधौतवस्त्ररजकोमीनाज्य
सिंहासनशावरोदनवर्जितध्वजम
धुच्छागास्त्रगोरोचनम् । भारद्वाज
नृपानवेदनिनदामाङ्गल्यगीताङ्कुशा
दृष्टाः सत्फलदाः प्रयाणसमये
रिक्तोघटः स्वानुगः ॥ नरोनिवृ
प . सितवाससाक्षौवाचप्रशस्तांम
धुरांस्तुजल्पन् । एवंविधायोविद
धिप्रयाणप्रवेशकालेकुरुतेऽर्थसिद्धि
म् ॥ पृथ्वीपतिर्ब्राह्मणहर्षयुक्तोवे
श्याकुमारीसुहृदः सुवेशाः । ना
र्योनराः श्वेतवृषाऽधिरूढाः शु
भायदृष्टाः सकलोद्यमेषु । श्वेता
म्बराश्वेतविलेपनाढ्याश्वेतास्रज
मूर्द्धनिधारयन्ती । हृष्टाप्रहृष्टायदि
गौरवर्णानारीनरैः स्यात्तदभीष्ट
सिद्ध्यै ॥ धूतातपत्र . शुचिशुक्लवा



सा पुष्पाऽर्चितचन्दनचर्चिता
ङ्गः । निश्चावयुक्तः कृतभोज
नोवाविप्रः पठन्नृयच्छतिसर्वसिद्धि
म् अभ्युपगच्छतियस्ययियासो
स्तोपुरुषोऽप्यथवाफलहस्तः । सर्व
समीहितसिद्धिरवश्यंतस्यनरस्यभव
त्यचिरेण ॥ आदायरिक्तंकलशंज
लार्थीयदिव्रजेत्कोऽपिसहाध्वगेन ।
पूर्णंसमादायनिवर्त्ततेसौयथाकृ
तार्थः पथिकस्तथैव ॥ गोधाजाह
कसूकराहिशशकानांकीर्त्तनंशोभ
नंनोशब्दोनविलोकनंचकपिऋ
क्षाणामुतोव्यत्ययः । नद्युत्तारभ
यप्रवेशसमरेनष्टार्थसंवीक्षणे व्यत्य
स्ताः शकुनान्तपेक्षणविधौयाश्चोदि
ताः शोभनाः ॥ वामाङ्गेकोकिला
पल्लीपोतकीशूकरीवला । पिङ्गला
छुच्छुकाश्रेष्ठाशिवापुरुषसञ्ज्ञिता
छिक्करः पिप्पकोभासः श्रीकण्ठो
वानरोरुरुः । स्त्रीसंज्ञकाः काक
ऋक्षश्वानस्तुदक्षिणेशुभाः ॥
प्रदक्षिणगताः श्रेष्ठाः यात्रायांमृ
गपक्षिणः । ओजामृगाव्रजन्तोऽति
धन्यावामेखरस्वनः ॥ श्यामाशि
वापिङ्गलिकान्यपुष्टापल्लीवलाशूक
रिकातथैव । छुच्छुन्दरीचापिशु
भायवामेपुन्नामधेयाः शकुनाश्च
सर्वे । श्रीकण्ठछिक्काररुरुप्लवङ्गा
श्रीकण्ठभासोभरुकोमयूरः । श्ये

न सम : पिप्पकयाप्रशस्ता : श्री
नामधेयाश्वपिदृक्षिणेन ॥ दुष्टे श
कुनेजातेयत्कर्त्तव्यंतदाह । प्रा
च्यायामांस्तत्रपश्चमरत्नायायादाग्नि
शाकुनेवैविरुद्धे । तिग्मान्कत्वे
वह्नितीयेतृतीयेचवसप्रश्चान्नेचतुर्थ-
गम . स्यात् ॥ वसप्रश्चान्हिस्त
तुल्यान्निगमान्तीच्चानुप्राप्येत्य
र्थं । शक्नोति । शक् । शकेरुनोन्तो
न्युनयक्रुत्युनप्रत्यय ॥

शकुनज्ञः । त्रि॰ शकुनज्ञातरि ॥

शकुनज्ञा । स्त्री॰ ज्येष्ठ्याम् । प
ल्ल्याम् ॥

शकुनाहृतः । पुं॰ शालिविशेषे ॥

शकुनिः । पुं॰ विहगे । पक्षिणि ॥
सौबले । दुर्योधनस्यमातुले ॥ क
रणान्तरे ॥ तत्रजातस्यफलं यथा ।
परजनधनहर्त्ताविश्वकः क्रूरचेष्टः
करधृतकरवालोव्याहतः स्वामिप
क्ष । अतिशयपरदारासक्तचित्त
सरोषोभवतिशकुनिजन्मामानवः
शीघ्रकर्म्मा । शक्नोतीत्यर्थे । शकेरु
नोन्तोन्युनयक्रत्युनि ॥

शकुनिकः । त्रि॰ शकुनीकुशले ॥
आकर्षादित्वात्कन् ॥

शकुनिप्रपा । स्त्री॰ पक्षिणांपानीय
शालायाम् । शीयते ॥

शकुनी । स्त्री॰ श्यामाख्यविहगे ॥

शकुनीश्वरः । पुं॰ गरुडे ॥

शकुन्तः । पुं॰ कीटविशेषे । भा
सपक्षिणि ॥ विहङ्गमात्रे ॥ श
क्नोति । शकेरुनोन्तोन्युनयद्गति॰
उन्त ॥

शकुन्तला । स्त्री॰ दुष्यन्तपत्न्याम्
भरतमातरि ॥ निर्जनेतुवनेयस्मा
त्॰ शकुन्तैः परिरक्षिता । शकु
न्तलेतिनामाऽस्याः कृतञ्चापिततो
मया ॥ कालिदासविरचितेना-
टके ॥

शकुन्तलात्मजः । पुं॰ भरते ॥ य
न्नाम्नाभारतोवर्षः सुप्रसिद्धोधरा
तले ॥

शकुन्तिः । पुं॰ पक्षिमात्रे ॥ शक्नो
ति । शकेरुनोन्तोन्युनयक्रुतिशके
रुन्तिः ॥

शकुन्दः । पुं॰ करवीरे ॥

शकुलः । पुं॰ मत्स्यविशेषे । कल
के । शउल॰ हि॰ गौ॰ दे॰ भा॰
प्र॰ ॥ शक्नोतिगन्तुंवेगेन । बाहु
लकादुकेरुलच् ॥

शकुलगण्डः । पुं॰ शालमत्स्ये ॥

शकुलादकः । पुं॰ श्वेतदूर्वायाम् ।
गोलोम्याम् ॥ शकुलस्यमत्स्यस्येवा
क्षियस्याः । यस्याऽदर्शनादित्यच्
। स्वार्थेकन् ॥

शकुलाक्षी । स्त्री॰ गण्डदूर्वायाम् ॥

शकुलादनी । स्त्री॰ कणमेयाम् । क
टुक्याम् । कट्टशाके । जलपिप्प

स्याम् । काचकादाम॰इति॰गौ॰भा॰प्र॰ ॥ माषाम् ॥ किम्पुलिकायाम् ॥ शकुलं रद्यते । अद॰। कर्मणिल्युट् ॥ ङीप् । गञ्जीषधाशाम् । कट्फले ।

शकुलार्भक । पु॰ गडकमत्स्ये ॥ शकुलस्य मत्स्यविशेषस्य अर्भक . ॥

शकुली । स्त्री॰ मत्स्यविशेषे । सौरी॰ इ॰दे॰भा॰प्र॰ । मृगाल् इ॰ गौड॰दे॰भा॰ ॥ शकुलीयाहिणी कृषामधुरातुवरास्मृतेतिभावप्रकाश : ॥ शकुलीरोहिताकाराभूमौ प्रायस्सरसी । गुर्वीपाकेचम धुराभेदिकादि पकोपर्व तिराजवल्लभ ॥

शकृत् । न॰ विष्ठायाम ॥ शक्नोति॰ शक्यतेवानिस्सर्तु वानिस्सारयितुवा । शकेर्क तिन् ॥

शकृत्करि । पु॰ वत्से ॥ शकृत्करोति । स्वम्वशकृतेरिन् ॥

शकृद्द्वारम् । न॰ गुदे । पायौ ॥ शकृतोद्वारम् ॥

शक्कर । पु॰ वृषे ॥ इ॰हे॰चन्द्र ॥

शक्करि । पु॰ इ॰शि॰शेष . ॥

शक्करी । स्त्री॰ चतुर्दशाक्षरायांवृत्तौ । शर्करायाम् ॥ नदीप्रभेदे ॥ मेखलायाम् ॥

शक्त । त्रि॰ शक्तिविशिष्टे । समर्थे ॥ शक् । कर्मणिक्त ॥ शक्तानां भूषण क्षमा ॥

शक्ति । स्त्री॰ अस्त्रविशेषे । सेल इ॰ भा॰प्र॰ ॥ गौर्याम् । दुर्गायाम ॥ यादेवीसर्वभूतेषुशक्तिरूपेणसस्थिता । चैतन्यरूपायाम । चिच्छक्ती । निर्विषयकस चिदि ॥ साचसर्वैकरूपा ॥ यथा । एकैव शक्ति परमेश्वरस्यभिन्नाचतुर्धा व्यवहारकाले । भोगेभवानीपुरुषेषुविष्णु कोपेषुकालीसमरेषुदुर्गा ॥ अपिच । एकमूर्त्तिरपिभिन्नरूपिणीयाजगज्जननपालनक्षये । काच्युतेश्वरतयाविवर्त्ततेव्रह्मशक्तिमह-मानतोस्मितामिति ॥ तथाहिदेवीभागवते । निर्गुणायासदानित्याव्यापिकाऽविकृताशिवा । योगगम्याखिलाधारातुरीयायाचसंस्थिता ॥ तस्यास्तुसात्त्विकीशक्तीराजसीतामसीतथा । महालक्ष्मी सरस्वतीमहाकालीतितास्त्रिय ॥ तासांतिसृणाशक्तीनान्देहाङ्गीकारलक्षण । सृष्ट्यर्थंसमाख्यात सर्ग : शास्त्रविशारदैरिति ॥ साचसच्चिदानन्दव्रह्मरूपिणी । तस्यावासात्त्विकीशक्तिस्तथाराजसीतयातामसीचयाशक्ति तत्तच्छक्ति विशिष्टंयत्परम्व्रह्मेत्यर्थ : । तन्महालक्ष्म्याद्ययोया प्रसिद्धा स्त्रियस्ता स्त्रियोभवन्ति । साम्यावस्था

ऽभेकब्रह्मरूपिणीमूलदेवता तत्दे
वोगुणविशिष्टब्रह्मरूपिणीमहाल
क्ष्म्यादयोदेवताइतिभाव अतए
वश्रुत्यागमपुराणादिष्वासच्चिदा
नन्दरूपत्वमुक्तं नतुकेवलजडशक्ति-
रूपत्व सृष्ट्यर्थंजगत्सर्गंमाययसा-
सातिस्पष्टाशक्तीनादेशस्त्रीकारेदे
हधारणातत्त्वच्चणोय, सर्गं सोऽ
न्यास्त्वविशारदे ' परिगृहते सर्गं
शब्देनसमाख्यातद्वाख्यर्थं.। अपि
च। चौरश्रें वह्निप्रमाणानिपठितो
निसपरिगृहते । प्रत्यक्षानुमा
नशब्दाख्यं वदतीयकम् । चत्वा
र्येवेतरेप्राहुरूपमानयुतानिच ॥ इ
तरेनैयायिकैकदेशिन.। अर्थाप-
त्तियुतान्यन्येपञ्चप्राहुर्मनीषिण
॥ समवेताभिकाश्च बप्रवदन्तिमनी
षिण । पूर्वोक्तानिपञ्चसाभिरूप
षष्ठम्० ऐतिह्य सप्तममितिसप्तप्रमा
णानि०। एते: प्रमाणैर्दुर्ज्ञेयय
द्ब्रह्मपरमच्युतत्। एतेरनेकधा
भेदभिन्नै. प्रमाणैर्दुर्ज्ञेयमत्परब्रह्म
तदेवपरममुख्य जगत्कारणमस्ती-
तिवेदान्ताआहुरितिशेष । एव
मेतानिसर्वमतानिवेदे० एवसन्ति।
तत्रकिमतमुख्यमितिविमर्शोदुर्घट
एव। तथापियथश्रुतिवाक्यानापर
स्परविरोधस्तथोपक्रमोपसंहारादि
लिङ्गैःश्रु ततात्पर्यंनिर्णीयतात्पर्यं
वतोश्रुति प्रवलेतिसिद्धान्तउत्तर
मीमांसायामुक्त.। ननुतेनसिद्धा
न्तेनब्रह्मैवजगत्कारणमितिसिद्धातो
तिचेत्तत्रानुमानेनागमेनश्रुतिवा
क्येनच० यद्ब्रह्मकि सशक्तिक जगत्का
रणमुतशक्तिरहितमितिविचार.
कार्यव्यवहृत्याहवितर्कइति। वित
र्कस्वाथकर्तव्योबुद्ध्याचैवागमेनच।
निश्चयात्मिकयायुक्त्याविचार्यचपु
न पुन ॥ वितर्कोऽनुमानमित्य
र्थ । बुद्ध्येत्यस्यार्थोनिश्चयात्मि
कयायुक्त्येति। प्रत्यक्षतस्तुविज्ञान
चिन्त्य मतिमतासदा। दृष्टान्तेना
पिसतत शिष्टमार्गानुसारिणा ॥
किञ्चमतिमताप्रत्यक्षतोयद्विज्ञान०
तदपिचिन्त्य याथार्थ्य०प्रमाणत्वमे
त्यर्थ.। शिष्टमार्ग. शिष्टाचारस्त
दनुसारिणादृष्टान्तेन०व्याप्तिग्रहवे
णापिसततमनुमेयमितिशेष ॥ तमे
वदृष्टान्तमाह। विद्यासीपीति। वि
द्यासीपिवदन्त्येव पुराणे परिगीयते।
द्रुहिणे सृष्टिशक्तिश्चहरौपालनशक्ति
ता ॥ हरेस हारशक्तिश्चसूर्येशक्ति
प्रकाशिका। धराधरणशक्तिश्चशेषे
कूर्मेतथैवच ।. साद्याशक्ति. परि
णतासर्वस्मिन्याप्रतिष्ठिता। दाह
शक्तिस्तथावह्नौसमीरेप्रेरणात्मिका ॥
साद्येति । यासर्वस्मिन्०आद्याश
क्तिरस्तिसाशक्ति. परिणता०तत्तच्छ

क्तिरूपेणेत्यर्थः ॥ शिवोपि शवतां यातिकुण्डलिन्याविवर्जितः । शक्तिहीनस्तु यः कश्चिदसमर्थः स्मृतो बुधैः ॥ एवं सर्वभूतेषु स्थावरेषु चरेषु च । ब्रह्मादिस्तम्बपर्यन्तं ब्रह्माण्डेऽस्मिन् महातपाः ॥ शक्तिहीनन्तु निन्द्यं स्याद्वस्तुमात्रं चराचरम् । अशक्तः शत्रु विजये गमने भोजने तथा ॥ तथा विश्वासी यदन्तो व्यन्वयः ॥ एवं सर्वगता शक्तिः सा ब्रह्मेति विविच्यते । सोपास्या विविधैः सम्यक् विचार्य सुधिया सदा ॥ एवमिति । यथा सर्वपदार्थस्यावच्छेदेन शक्तिमत्त्वं व्याप्तिर्गृहीता । तथा ब्रह्मणोपि पदार्थत्वावच्छिन्नत्वेन शक्तिरस्ति । सा च शक्तिः सामर्थ्यरूपा । न तस्याश्च भिन्नत्वं न भासते । अग्निशक्त्यादावदृष्टत्वात् । किन्त्वभिन्नैव । तदेव दर्शयितुमेव सर्वगताशक्तिः सा ब्रह्मेति विविच्यते । इत्यनेन तस्याश्च तादात्म्यं दर्शितम् । तथा च श्रुतिप्रतिपाद्यं ब्रह्म । मायाप्रधानादसि होति न तस्य कार्यं कारणञ्च विद्यते । परास्य शक्तिर्विविधैव श्रूयते । इत्यादिश्रुतिभिरनुमानादिभिश्च शक्तिकमेव जगत्कारणमिति तदेवोपास्यमिति भावः । एतेन कार्यशक्तिरित्यस्तोपरब्रह्मसामर्थ्यरूपा शक्तिरस्तीति बोधितम् । सा यास्ये

ति । यतो ब्रह्मभिन्ना न शक्तिस्ततस्तस्याः भजने । अग्निशक्त्यादौ मोऽग्नौ हि महार्थसिद्धत्वं ह ब्रह्मण उपासनं जातमेवेति सर्वेषां कारणभूता सैव शक्तिः, स स्याचन्था तन्मेवोपास्येत्यर्थः । विष्णोः पराल्पिका शक्तिस्तया होनाप्यकर्म्म कृत् । दुर्गेशा राजसी शक्तिर्यया होनो ह्यसृष्टिकृत । शिवे च तामसी शक्तिस्तया संहारकारक । इत्यूह्य मनसा सर्वं विचार्य च पुनः पुनः ॥ ब्रह्मविष्णुरुद्रादिषु प्रसिद्धेऽन्वयव्यतिरेक दर्शयन्नेतेषामेकैकगुणवत्त्वयाख्यत्वेन नोपास्यत्वं श्रीभगवद्रूपेणयेति दर्शयति विष्णोरिति ॥ शक्तः करोति ब्रह्माण्डं सा वै पालयतेऽखिलम् । इच्छया संहरत्येषा जगदेतच्चराचरम् ॥ न विष्णुर्नेश्वरः शक्तो न ब्रह्मा न च पावकः । न सूर्यो वरुणः शक्ताः स्वे स्वे कार्ये कथञ्चन ॥ तया युक्ता हि कुर्वन्ति स्वानि कार्याणि ते सुराः । सैव कारणकार्येषु प्रत्यक्षेणावगम्यते ॥ सगुणा निर्गुणा सा तु द्विधा प्रोक्ता मनीषिभिः । सगुणा रागिभिः सेव्या निर्गुणा तु विरागिभिः ॥ सगुणा एकैकगुणविशिष्टा । निर्गुणा सा स्याच्छ्रोपाधिकब्रह्मरूपेत्यर्थः ॥ धर्मार्थकाममोक्षाणां स्वामिनी सा निराकुला । ददाति वाञ्छितान् कामान् पूजिता विध

पूर्वकम् । अजानन्तिजनामूढास्तां
सदामाययावृता । जानन्तोपिन
रा कैचिन्मोहयन्तिपरानपि ॥ प
ण्डिता स्वोदरार्थंवापाखण्डानि
पृथक् पृथक् । प्रवर्त्तयन्तिकलिना
प्रेरितामन्दचेतस ॥ कलावस्मिन्
महाभागानानाभेदसमुत्थिता ।
नान्येयुगेतथाधर्माद्दृष्टा व्याकथञ्चन
॥ विष्णुश्चरत्यसावुग्रतपोवर्षाण्यने
कश: । ब्रह्माहरस्तथेदेवाध्यायन्त:
कमपिप्रभुम् ॥ कामयाना सदा
काम देवय: सर्वदेवहि । यजन्ति
यज्ञान विविधान्ब्रह्मविष्णुमहेश्व
रा ॥ यदिब्रह्मादयोमुख्यास्तर्हिते
ऽन्यं किमितिभजेयु• भजन्तिच•
तस्मान्नतेमुख्या• किन्तुपराशक्ति
रेवेतिभाव । तैवैशक्ति परांदेवीं
ब्रह्माख्यापरमात्मिकाम् । ध्याय
न्तिमनसानित्यनित्यामत्वासनात
नीम् ॥ परब्रह्मैवतस्यारूप नान्य
मस्तीत्यभिप्रायेण• ब्रह्मात्मिकाम
व्युक्तम् । स्पष्टीकृतश्चैतदस्माभिरु
पोद्घाते ॥ तस्माच्छक्ति सदासे
व्याविहृद्भि कृतनिश्चयै । निश्च
य: सर्वशास्त्राणांज्ञातव्योमुनिस
त्तमा । कृष्णाच्छ्रुतमयाचैतत्ते
नज्ञातन्तुनारदात् । पितु सका
शात्तेनापिब्रह्मणाविष्णुवाक्यत ॥
नश्रोतव्य नमन्तव्य नध्येयाम चनव-



ध्येये । शक्तिरेवसदासेव्याविहृद्भि :
कृतनिश्चयै ॥ यथागजशरीरेप्र-
विष्टस्यचेतनस्यगजइतिव्यवहार•
तथाप्रथमतोमायाशरीरेप्रविष्टस्यचे
तनस्यमायाशक्तिरितिव्यवहारस्त
दनन्तरगुणोत्पादादिकंगुणवि
शिष्टमायाशबलब्रह्मणएवब्रह्मावि-
ष्णुरुद्रइत्यादिव्यवहार । तथाच
सर्वकारणब्रह्ममायाशक्तिसहितमेव
भवतीतिमायाशक्तिदेवीभगवतीत्या
दिमुख्यशब्दैर्देवीपास्यत्वात् । श
क्तिरेवेति ॥ प्रत्यक्षमपिदृष्टमस्मद
तास्वविचेष्टितम । यत सर्वेषुभू
तेषुज्ञातव्याशक्तिरेवहि ॥ इति
श्रीदेवीभागवतेप्रथमस्कन्धेऽष्टमो-
ध्याय : ॥ शाशक्ति . परमात्मा
सोयेसोसापरमात्मता । चन्तरं नै
तयो कोपिसूक्ष्मवेदचनारदेति
तृतीयस्कन्धे ७ऽध्याय : ॥ इति ॥
उत्साहादौ । नीतिवेदिनाप्रभावो
त्साहमन्त्रजासुतिस्रष्व ॥ तत्रप्रभु
त्वेसाधकत्वात्कोशदण्डौप्रभुशक्
ति । विक्रमेबलशक्ता विस्फुर-
णमुत्साहशक्ति । सन्ध्यादीनांसा
मादीनाञ्चयथास्थानमन्त्रशक्ति
॥ बले । सहसि । शौर्ये । परा
क्रमे ॥ वृद्धिसामर्थ्ये ॥ शिवा
म् । योगिनि । मायाम् ॥ प्रकृ
तौ ॥ चण्डाम् ॥ भक्तावपदा

यमर्थोबोद्धव्यइतीश्वरसङ्केते ॥
शक्यतजेतुमनयाया । शक् घञ्शौ
। स्त्रियांक्तिन् । कात्साम् । शर्म
लाख्ले ॥ पु० वशिष्ठमुनेर्ज्येष्ठपुत्रे ॥
शक्तिग्रह । पुं० शिवे । कार्त्तिके
ये ॥ शब्दशक्तिज्ञाने ॥ अस्मात्प
दादयमर्थोबोद्धव्यइतीश्वरेच्छाशक्
तिरितितात्पर्य्या । तज्ज्ञानन्तु
व्याकरणादिभ्यः । अतएव । शक्ति
ग्रह व्याकरणोपमानकोषाप्तवाक्या
द्व्यवहारतश्च । वाक्यस्यशेषाद्विवृते
र्वदन्तिसान्निध्यत सिद्धपदस्य वृद्धा
॥ इतिप्राञ्चः ॥
शक्तिग्राहक । पुं० व्याकरणोपमा
नादौ ॥ त्रि० शक्तिग्रहीतरि ॥
शक्तित्रयम् । न० ज्ञानेच्छाक्रियाख्य
शक्तित्रये ॥ यथा । इच्छाक्रियात
थाज्ञानगौरीब्राह्मीतुवैष्णवी । त्रि
धाशक्तिः स्थितायत्रतत्परञ्ज्यो
तिरोमिति ॥ राज्ञाप्रभुमन्त्रोत्साहा
ख्यासु ॥ अत्र विजयार्थराज्ञाशक्ति
त्रयसादरमादरणीयनतुहापनीयम्
॥ त्रिशक्तयोयथा । एताभिशक्ति
दृष्टिस्तामयसिद्धान्तगामिति । एता
श्वेतापराकृष्टि · सात्त्विकीब्रह्मस
स्थिता ॥ एषैवरक्तताराजसीवैष्णवी
परिकीर्त्तिता । एषैवकृष्णातमसि
रौद्रीदेवीतुकीर्त्तिता ॥ परमात्माय
थादेवएकएवत्रिधास्थितः । प्रयोज
नवशाच्छक्तिरेकैवत्रिविधाभवेदि
तिवाराहपुराणम् ॥ शक्तीनांत्रय
म् ॥
शक्तिधरः । पुं० कार्त्तिकेये । स्का
न्दे । त्रि० शक्तिभृति । शक्तेर्धर्त्त
रि ॥
शक्तिपर्ण । पुं० सप्तपर्णवृक्षे ॥
शक्तिपाणि । पुं० कार्त्तिकेये ॥ त्रि०
शक्तिधारिणि । शक्तिः पाणौयस्य
सः ॥
शक्तिवन्धनम् । न० प्रजननसामर्थ्ये ॥
शक्तिसम्बन्धे ॥
शक्तिभृत् । पुं० कार्त्तिकेये ॥ त्रि०
शक्तिधारके ॥
शक्तिमान् । त्रि० शक्ते ॥
शक्तिहेति । त्रि० शक्तिधरे ॥
शक्तिहेतिक । त्रि० शस्त्रास्त्रधारिणि
। प्रासीके ॥
शक्ती । स्त्री० शस्त्रान्तरे । शक्ती ॥ ब
ह्वादिषुशक्ति शब्दइतिपाठात्प
क्षेङीष् ॥
शक्त्यर्द्ध । पुं० अमहाराकुक्षिललाट
ग्रीवासूत्पन्नेघर्मे०दीर्घनि श्वासे
च ॥ यथा । कुक्षौललाटेग्रीवायाय
द्वाघर्मं प्रवर्त्तते । शक्त्यर्द्धंतंवि
जानीयाद्दावनिश्वासमेवच ॥
शक्य । त्रि० शक्तिविषये । शक् या
श्ये । वाच्ये ॥ यथा । शक्योऽर्थोऽ
भिधयाज्ञेय लक्ष्योलक्षणयामतः

। व्याघ्रोऽस्त्रनयाश्चेयस्ति शब्दस्तु
त्यवधूरिति ॥ ईश्वरसङ्केत . शक्तिस्त
याऽर्थे वाचकपदत्वाज्ज्ञानम् । शक्तिरो
स्त्वाहिविशिष्टे वक्तव्यादिपदे त
इत्येवाऽर्थे गवादित्वाच्च सप्रमुख्या
र्थे इत्युच्यते । समर्थे ॥ शक् । श
क्तिसङ्कोर्शितियत्साध्ये । शक्यतीये ॥
शक्यतावच्छेदकम् । न० शक्या
भिसमानार्थे ।

शक्र । पु० इन्द्रे । देवराजे ॥ कुटजवृक्षे
॥ अर्जुनपादपे ॥ शक्नोतीति दैत्यान्
नाशितुम् । शक् । स्फायितञ्चीति
रक् ॥ ज्येष्ठानक्षत्रे ॥

शक्रक्रीडाचल । पु० सुमेरुपर्वते ॥

शक्रगोप । पुं० इन्द्रगोपकीटे ॥

शक्रज । पुं० काके । श्यावके । गूढ
मैथुने ॥ इन्द्रपुत्रे ॥ शक्राज्जात
। जनी० । ड ॥

शक्रजित् । पु० इन्द्रजिति । रावणपु
त्रे । शक्रमजैषीत् । जि० । सत्सू
द्विषेत्यादिना क्विप् ॥

शक्रधनु । न० शक्रायुधे शक्रस्य धनु ॥

शक्रध्वज । पु० इन्द्रध्वजे । उत्सवति
शेषे ॥ चतुरस्रध्वजाकारराजद्वारे प्र
तिष्ठितम् । आहु शक्रध्वजनाम
पौरलोकसुखावहम् ॥ विशेषो देवी
पुराणे वाराहीसंहितादिषु द्रष्ट
व्य । ॥ शक्रस्य ध्वजइव ॥

शक्रनन्दन । पु० जयन्ते । अर्जुने
वालिनि । काके ॥ शक्रस्य नन्दन

शक्रपर्याय । पु० कुटजवृक्षे ॥ शक्र
पर्यायोऽस्य

शक्रपादप । पु० देवदारुवृक्षे शक्र
स्य पादप ॥ कुटजे ॥

शक्रपुष्पिका । स्त्री० शक्रपुष्प्याम ॥

शक्रपुष्पी । स्त्री० अग्निशिखावृक्षे ॥
शक्रोऽर्जुनतरु पुष्पमस्या । शक्र
शब्दस्तत्पुष्पेलाक्षणिक । पाक
कर्णेति ङीष् ॥

शक्रभवनम् । न० स्वर्गे ॥

शक्रभित् ०द् । पु० इन्द्रजिति । रा
वणौ ॥ शक्रमभैत्सीत् । भिदिर०
। क्विप् ॥

शक्रभुवनम । न० नाके । सुरलोके ॥
शक्रस्य भुवनम् ॥

शक्रभूभवा । स्त्री० इन्द्रवारुण्याम् ॥

शक्रमाता । स्त्री० भार्ग्याम ॥ इन्द्र
जनन्याम ॥

शक्रमातृका । स्त्री० इन्द्रध्वजाङ्गयष्टिवि
शेषे ॥

शक्रमूर्द्धा । पु० वल्मीके ॥ वृ० त्रि०
शेष ॥

शक्रवल्ली । स्त्री० इन्द्रवारुण्याम् ॥

शक्रवारुणी । स्त्री० इन्द्रवारुण्याम् ॥

शक्रवाहन । पु० मेघे ॥

शक्रबीजम् । न० इन्द्रयवे ॥ शक्रस्य
बीजम् ॥

शक्रशरासनम् । न० इन्द्रधनुषि ॥

शक्रशाखी । पुं॰ कुटजवृक्षे ॥ शक्रस्य शाखी ॥

शक्रशाला । )
शक्रशालिका । ) स्त्री॰ प्रतिश्रये । सभायाम् ॥

शक्रशिर । न॰ वल्मीके ॥ इन्द्रस्याग्रे ॥

शक्रसारथिः । पुं॰ मातली ॥

शक्रसुत । पुं॰ जयन्ते ॥ वालिवानरे ॥ अर्जुने ॥ काके ॥ शक्रस्य सुत ॥

शक्रसुधा । स्त्री॰ कुन्दुरौ ॥

शक्रस्रष्टा । स्त्री॰ हरीतक्याम् ॥

शक्राख्य । पुं॰ पेचके ॥ त्रि॰ इन्द्रनामके ॥

शक्राणी । स्त्री॰ इन्द्राण्याम् ॥ शक्रमपातिक्रोशयति । अपशब्दे । कर्मण्यण । टिड्ढेतिङीप् ॥

शक्रायुधम् । न॰ इन्द्रायुधे ॥ यक्ष्मसन्ध्यादिकयथावाराश्याम् । सूर्यस्य विविधवर्णाः । पवनेनविघट्टिताकराः साभ्रे । वियतिधनुःसंस्थानायेदृश्यतेतदिन्द्रधनुः ॥ केचिदनन्तकुलोरगनिःश्वासोद्भूतमाहुराचार्याः । तद्यायिनान्तपाणामभिमुखमजयावहंभवति ॥ अच्छिन्नमवनिगाढद्युतिमत्स्निग्धघनांविविधवर्णम् । द्विरुदितमनुलोमंचप्रशस्तमम्भः प्रयच्छतिच ॥ विदिगुद्भूतदिक्पतिनाशचव्यभजमरक्तकादि । पाटलपीतकनीलैः शस्त्राग्निचुक्ताःदोषाः ॥ जलमध्येऽनावृष्टिर्भुविसस्यवधस्तरौस्थितेव्याधि । वल्मीकेशस्त्रभयनिशिसचिववधायधनुरैन्द्रम् ॥ वृष्टिकरोत्यवृष्ट्यावृष्ट्यावृष्टिं निवारयत्यैन्द्र्याम् । पश्चात्सदैववृष्टिं कुलिशभृतश्चापमाचष्टे ॥ चापमवौन । कुरुतेनिशायामाखण्डलायादिशिभूपपीडाम् । याम्यापरोदकप्रभवनिहन्यात्सेनापतिनायकमन्त्रिणोच ॥ निशिसुरचापसितवर्णाद्यं जनयतिपीडाद्विजपूर्वाणाम् । भवतिचयस्यादिशितद्दिश्यनरपतिमुख्यंनचिराद्धन्यात् ॥ इति ॥

शक्राशन । पुं॰ कुटजवृक्षे ॥ न॰ भङ्गायाम् । विजयायाम् । संविदि ॥ अस्यगुणायथा । शक्राशनस्तुतीक्ष्णोष्णमोहकृत्कुष्ठनाशनम् । बलमेधाग्निकृत्श्लेष्मदोषहारिरसायनम् ॥

शक्राह्वः । पुं॰ इन्द्रयवे ॥

शक्रोत्थानम् । न॰ शक्रध्वजोत्सवे ॥

शक्रोत्सव । पुं॰ ध्वजोत्थाने । इन्द्रस्योत्सवे ॥

शक्त । त्रि॰ प्रियवदे ॥ शक्नोति । शक्॰ । सूचक्यविभ्य । क्त ॥

शक्रा । पुं॰ हस्तिनि ॥ शक्तौ ॥ शक्नोति । शक्॰ । स्नामदिपद्यर्त्तिपृशकिभ्योवनिप् ॥

शक्कर: । पु॰ वृषे ।

शक्करी । स्त्री॰ चतुर्द्दशाक्षरायाच्छन्दोजातौ ॥ नदीविशेषे ॥ मेखलायाम् ॥ सामविशेषे॰ नित्यबहुवचनान्तोयम्॰ शक्कर्य इति॰ महानाम्नीषु च्छन्दः शक्करीगीयन्ते ॥ शक्करी॰ अङ्गुलिरितिमन्त्रव्याख्यानम् ॥ वनीरचेतिकौमी ॥

शङ्क । पुं॰ शकटवाहकवृषे । स्कन्धवाहे । अवधूर्त्तिसे ॥ इ॰ हा॰ को ॥

शङ्कनक । पुं॰ क्षुद्रशण्डे ॥ शङ्कते । शङ्किशङ्कायाम् । कर्त्तरि॰ अनुदात्तेतश्चहलादेरितियुच् । संज्ञायांकन् ॥

शङ्कर । पु॰ सदाशिवे ॥ एकादशरुद्राणांमध्ये भगवद्विभूतौ ॥ शं कल्याणं करोति । अभिधाने । संज्ञायामिति॰ अच् ॥ यथा । शङ्करोभिसदाध्यानात् परमशक्तिरामयम् । भूतानामसकृद्यस्मात् तेनायं शङ्कर: स्मृत: ॥ इतिस्कान्दे ॥ त्रि॰ कल्याणकरे ।

शङ्कराचार्य्य । पुं॰ स्वनामाप्रसिद्धे॰ अद्वैतवादिनि॰ वेदान्तभाष्यकर्त्तरि॰ नरावतारेविश्वेश्वरे ॥ यथाहु: । सत्सम्प्रदायप्रथनायशिष्यैः शिष्यैश्चतुर्भि: सहयोवतीर्णः । उक्तोद्धृतत्सङ्गमतन्तराजेश्रीशङ्कराचार्यगुरुतमीडे ॥

शङ्करावास । पुं॰ कर्पूरप्रभेदे ॥ कैलाशे ॥

शङ्करावाससञ्ज्ञ: । पु॰ कर्पूरे ॥

शङ्करी । स्त्री॰ मञ्जिष्ठायाम् ॥ पार्वत्याम् ॥ श्रीगिरीशङ्करीसम्मतेतिदेवीगीता ॥ जप्येश्वराधिवासिन्यां शम्बायाम् ॥ शम्याम् ॥

शङ्क्यम् । न॰ शङ्कूपयोगिदारुणि ॥ शङ्कुवेष्टितम् । उगवादिभ्योयत् ॥

शङ्का । स्त्री॰ त्रासे ॥ वितर्के ॥ इति शब्दार्णव: ॥

शङ्कित: । त्रि॰ भीते ॥ वितर्किते । संशययुक्ते ॥ अविश्वस्ते ॥ शङ्कासञ्जाताऽस्य । तारकादित्वादितच् ॥ पुं॰ चोरकनाम्निगन्धद्रव्ये । दुष्पवे ॥

शङ्कितवर्ण । ) पुं॰ चौरे ॥
शङ्कितवर्णक: । )

शङ्कु । पुं॰ सङ्ख्याविशेषे ॥ मवधा १•••••••••••••• ॥ अस्त्रप्रभेदे । दीर्घायुधे । कुन्ते । शल्ये ॥ यादोभेदे । शङ्कोचमत्स्ये ॥ कीले ॥ दीपसूर्य्ययोश्छायापरिमाणार्थंकाष्ठादिनिर्मितेक्रमेणसूच्यग्रे द्वादशाङ्गुलपरिमितेकीलके ॥ ईशे । शम्भौ ॥ मेढ्रे ॥ कलुषे ॥ राक्षसे ॥ नखीनामगन्धद्रव्ये ॥ द्वादशाङ्गुलपरिमाणे ॥ स्थाणौ । शा

शाखपत्रहरितकरी ॥ पर्णनालि ॥ पत्रशिरानालि ॥ शङ्कतेऽस्मात् । शकि० । खरुशङ्कुपीयुनिलङ्गुलि त्वितिकुप्रत्ययान्त साधु. ॥

शङ्कुकर्ण. । पुं० गर्दभे ॥ सिद्धस्थानविशेषे ॥ शङ्कुकर्णध्वनिः प्रोक्त इतिदेवीगीता ॥

शङ्कुकर्णी । स्त्री० औषधिप्रभेदे । पाककर्ण्यादिवाङ्गीष ॥

शङ्कुचि : पु० शङ्कुमत्स्ये ॥

शङ्कुतरु । पुं० शालवृक्षे ॥

शङ्कुर : त्रि० भयदे ॥ त्रासदायिनि ।

शङ्कुला । स्त्री० उत्पलपत्रिकायाम् । पूगकर्त्र्याम् । सरौता०इ०भा०प्र० ॥ शङ्कतेऽस्या. । शकि० । बाहुलकादुलच् । टाप् ॥

शङ्कुवृक्ष. । पु० शालवृक्षे ॥

शङ्कुशिरा । पुं० दानवविशेषे ।

शङ्कुश्रुति. । पुं० पातालाधिपतिदैत्यविशेषे ॥

शङ्कोच । पुं० शङ्कुमत्स्ये । शांकोच० इ०गौ०दे०भा०प्र० ॥

शङ्कोचि. । पु० शङ्कोचमत्स्ये ॥

शङ्ख. । पुं० अलिकास्थि । भालाऽस्थनि ॥ कुवेरस्यनिधिप्रभेदे ॥ नखीनामनिगन्धद्रव्ये । शुक्तौ । कोशदले ॥ कर्णसमीपास्थनि ॥ अष्टनागनायकान्तर्गतनागविशेषे ॥ हस्तिदन्तमध्ये ॥ दशनिखर्वसङ्ख्यायाम् । लक्षकोटौ ॥ धर्म्मशास्त्रप्रणेतृमुनिविशेषे ॥ रणवाद्यविशेषे । भाषामाने० । ० ॥ पुं०न०कम्बौ ॥ अर्णोभवे । पावनध्वनौ । अन्त. कुटिले । महानादे ॥ अस्योत्पत्त्यादिरुक्ताश्रीदेवीभागवतेब्रह्मवैवर्ते च यथा । अस्थिभि शङ्खचूडस्य शङ्खजातिर्बभूव ह । नानाप्रकाररूपेण शश्वत्पूता सुरार्च्चने ॥ प्रशस्तं शङ्खतोयञ्च देवानां प्रीतिदम्परम् । तीर्थतोयस्वरूपञ्च पवित्रं शम्भुनाविना ॥ शङ्खशब्दोभवेद्यत्रतत्रलक्ष्मी. सुसुस्थिरा । सस्नात. सर्वतीर्थेषु य. स्नात शङ्खवारिणा ॥ शङ्खो हरेरधिष्ठानं यत्र शङ्खस्ततो हरि: । तत्रैववसतेलक्ष्मीर्दूरीभूतममङ्गलम् ॥ स्त्रीणाञ्चशङ्खध्वनिभि. शूद्राणाञ्चविशेषत । भीतारुष्टायाति लक्ष्मी. स्थानमन्यत्स्थलान्तरम् इति ॥ मूलाद्यहङ्कारात्मकेपाञ्चजन्ये । यथा ॥ भूतादिमिन्द्रियादिञ्च द्विधाहङ्कारमीश्वर. । बिभर्त्ति शङ्खरूपेणशार्ङ्गरूपेणचस्थितमिति विष्णुपुराणम् ॥ शङ्खति०जनयति । खनुअवदारणे । अन्येभ्योपीतिड: ॥ शङ्खयतीतिवा ॥ शाम्यतिअलक्ष्मीर्वा । शमु० । अन्तर्भावितण्यर्थ: । शमे: ख: ॥

शास्यत्यनेनवा ॥ असुरविशेषे ॥

शङ्खकः। पुं॰ शिरोरोगविशेषे। तल्लक्षणादिर्यथा। पित्तरक्तानिला दुष्टा, शङ्खदेशे विमूर्छिता। तीव्ररुग्दाहरागदहि शोथं कुर्वन्ति दारुणम् ॥ सशिरो विषवद्वेगान्निरुध्याशु गलन्तथा। त्रिरात्राज्जीवितघ्नन्ति शङ्खकोनामनामत ॥ त्र्यहाज्जीवतिभैषज्यं प्रत्याख्येयस्य कारयेत्। पित्तरक्तानिला॰ अत्र कफोऽपि योज्यः। कृतानुताप कफपित्तरक्तैरितिसुश्रुतवचनात्। विमूर्छिता, प्रवृद्धाः। त्रिरात्रात्त्रिरात्रमध्ये मारयति। अत्र चिकित्सा शिरोरोगे भावप्रकाशेद्रष्टव्या। न॰ वलये। पु॰ न॰ वस्त्रौ॥

शङ्खकार। पु॰ शूद्रागर्भे विश्वकर्मौरसजाते॰ वर्णसङ्करजातौ। शाङ्खिके। शाखारी॰ इतिभा॰। शङ्खकरोति। डुकृञ्॰ कर्मण्यण्॥

शङ्खचरी। स्त्री॰ ललाटिकायाम् ॥ शङ्खचरति। चर॰। पचादौचर ङित्युक्तेर्ङीप् ॥

शङ्खचर्चौ। स्त्री॰ ललाटिकायाम् ॥

शङ्खचिल्लः। पुं॰ कम्बुतायिनि ॥

शङ्खचूड। पुं॰ दैत्यविशेषे ॥

शङ्खचूर्णम्। न॰ शङ्खजातचूर्णे ॥ शङ्खचूर्णंकटुक्षारमुष्णक्रिमिहरं परम् ॥

शङ्खज। पुं॰ कपोतडिम्ववद्दृश्यमुक्तायाम ॥ त्रि॰ शङ्खजातवस्तुनि ॥

शङ्खद्रावी। पुं॰ अम्लवेतसे ॥

शङ्खधरा। स्त्री॰ हिलमोचिकायाम्॥

शङ्खधारी। पुं॰ छन्दोविशेषे। अजानन्दकर्णौ षडेवात्रवर्णाः। बुधानन्दकारीभवेच्छङ्खधारी ॥ यथा। स्फुरद्गोपनारीपरीरम्भकारी। हरिःपातुवृन्दावनाभ्यर्णचारी ॥

शङ्खध्म। पु॰ शङ्खवादके। शाङ्खिके ॥

शङ्खध्मा। पु॰ शाङ्खिके ॥

शङ्खनख। पु॰ क्षुद्रशङ्खे ॥ शङ्खस्यनखइव। शङ्खनतिवा। बहुलमन्यत्रापीतियुचल्युडवा। स्वार्थेक। पृषोदरादि, नखीनाम गन्धद्रव्ये। शङ्खनख्याम् ॥

शङ्खनखा। स्त्री॰ शङ्खनख्याम् ॥ हिधाशङ्खनखाख्याऽन्याशुक्त्याख्यावदरीकर ॥ इतिरत्नमाला ॥

शङ्खपुष्पी। स्त्री॰ मङ्गल्यकुसुमायाम् ॥ शङ्खपुष्पीतुशङ्खाव्हामङ्गल्यकुसुमापिच। शङ्खपुष्पीसरामेध्यापुष्पा मानसरोगहृत्। रसायनीकषायोष्णास्मृतिकान्तिबलाग्निदा॥ दोषापस्मारभूतास्त्रकुष्ठक्रिमिविषप्रणुत्। इतिभावप्रकाशः॥ पाककर्णेतिङीष् ॥

शङ्खप्रस्थः । पुं॰ चन्द्रस्थचिह्ने ॥
शङ्खभृत् । पुं॰ विष्णौ ॥ भूता
हङ्कारात्मकं पाञ्चजन्याख्यं शङ्खं
बिभर्त्ति । डुभृञ्॰ ॥ क्विप् ।
तुक् ।
शङ्खमुखः । पुं॰ कुम्भीरे ॥
शङ्खमूलम् । न॰ मूलके ॥
शङ्खसञ्ज्ञा । स्त्री॰ यात्रायोगान्त
रे । यथा । स्वाभसंस्थे बुधेलग्ने
शुक्रे वादेवपूजिते । शङ्खसञ्ज्ञा
ह्वयेयोगेयातुः कीर्त्तिप्रदः
सदा ॥
शङ्खसेनः । पुं॰ चित्रगुप्तात्मजेका
यस्थविशेषे ॥
शङ्खाख्य । पुं॰ शङ्खाख्याम् ॥
शङ्खालुकम् । न॰ श्वेततायुक्तेक
न्दविशेषे
शङ्खाह्वा । स्त्री॰ शङ्खपुष्प्याम् ॥
शङ्खिका । स्त्री॰ तृणविशेषे । चो
रायाम् । चोरबहुली॰ इ॰ गौ॰
भा॰ ॥
शङ्खी । पुं॰ हरौ ॥ समुद्रे ॥
त्रि॰ शङ्खवति ॥
शङ्खिनी । स्त्री॰ चोरपुष्प्याम् ।
किमिन्याम् । शाखाहुली॰ इ॰
भाषा ॥ श्वेतबुह्कायाम् । वधूभे
दे । वनिताप्रभेदे ॥ तीर्थविशेषे
॥ बुद्धशक्तिविशेषे ॥ श्वेतपुन्नागे ॥
यवतिक्तायाम् ॥ श्वेतवन्दायाम् ॥
शङ्खवत्याम् ॥ चतुर्विधस्त्रीमध्ये
स्त्रीविशेषे ॥ तल्लक्षणं यथा । दी
र्घासुदीर्घनयनावरसुन्दरी याकामो
पभोगरसिका गुणशीलयुक्ता । रे
खात्रयेणचविभूषितकण्ठदेशासम्भो
गकेलिरसिकाकिलशङ्खिनीसा ॥
शशकं पद्मिनीतुष्टाचित्रिणीरमतेमृ
गम् । वृषभं शङ्खिनीतुष्टाहस्ति
नीरमतेहयम् ॥ पद्मिनीपद्मगन्धा
चमीनगन्धाचचित्रिणी । शङ्खिनी
क्षारगन्धास्यान्मदगन्धाचहस्तिनी ॥
नाडीविशेषे ॥ गान्धार्याश्चसरस्व
त्याः स्थितामध्येचशङ्खिनी ॥ श
शङ्खाः सन्त्यस्याः शङ्खाका
रपुष्पत्वात् । अतइनि ॥
शङ्खिनीफलः । पुं॰ शिरीषवृक्षे ॥
शङ्खिनीवासः । पुं॰ शाखोट-
वृक्षे ॥
शचि । स्त्री॰ शच्याम् । इन्द्राण्याम्
॥ शचति । शचव्यक्तायांवाचि । स
र्वधातुभ्यइन् ॥ स्त्रीकरणाकरे ॥
शची । स्त्री॰ पुलोमजायाम् । पौलो
म्याम् । इन्द्राण्याम् । शचति॰
व्यक्तंवदति । शच॰ । इन्नन्तात्॰
कृदिकारादिति ङीष् ॥ शतावर्या
म् ॥
शचीपतिः । पुं॰ इन्द्रे ॥ शच्याः
पतिः ॥
शचीशः । पुं॰ इन्द्रे ॥

शट पुं॰ देशान्तरे ॥ शटेरच्
।भ॰ चर्म्मे ॥
शटा । स्त्री॰ जटायाम् ॥ शटति । श
टरुजाविशरणगत्यवसादनेषु । अ
च् । टाप ॥
शटि . । पुं॰ शठ्याम् । गन्धपला
श्याम् । शट॰ । इन् ॥
शटिका । स्त्री॰ शटीप्रभेदे । गन्ध
पत्रायाम् ॥
शटी । स्त्री॰ गन्धशठ्याम् । गन्धमू
ल्याम् । षड्ग्रन्थिकायाम् । कर्चू
रे । पलाशे । गन्धपलाश्याम् ।
कचूर॰हू॰दे॰भा॰ । वनआदा॰हू
॰गौ॰दे॰भा॰ ॥ गन्धपलाशीसुगन्ध
द्रव्य काश्मीरेप्रसिद्धम् । शटति ।
शट॰ । अच् । गौरादि . ॥
शट्ट । पु॰ शट्टके ॥
शट्टकम् । न॰ शट्टे । साटा॰हू॰भा॰
प्र॰ ॥ शालिचूर्णघृततोयमिश्रित
शट्टकवदेत् ॥
शठ । पु॰ मध्यस्थपुरुषे ॥ धूस्तूरे
॥ धूर्त्ते । परवञ्चनार्थं॰मन्यथाजा
नन्नप्यन्यथावादिनि । गूढविप्रियकृ
ति ॥ यथोक्तं विप्यपरार्थे । प्रियव
क्तिपुरोऽन्यत्रविप्रियंकुरुतेभृशम् ।
युक्तापराधचेष्टश्चशठोऽयकथितोबु
धैरिति ॥ अपिच । परकार्यविमुखे
। यथा । मनसावचसायश्चदृश्यते
कार्यतत्पर . । कर्मणाविपरीतश्च
सशठ . सद्भिरुच्यते ॥ चतुर्विधप
त्यन्तर्गतपतिविशेषे ॥ तल्लक्षणं यथा
। कामिनीविषयकपटपटुरिति ॥
शठति॰वञ्चयति । शठकैतवे । प
चाद्यच् ॥ न॰ तगरे । कुङ्कुमे ॥
तीक्ष्णायसे ।
शठता । स्त्री॰ कुसृतौ । निकृतौ ।
मायायाम् । शाठ्य ॥ भावकर्म
णोस्तल् ॥
शठाम्बा । स्त्री॰ अम्बष्ठायाम् । छिन्न
पत्र्याम् ॥
शण । पु॰ स्वनामख्यातप्रसिद्धेक्षुपे ।
माल्यपुष्पे । काटुतिक्तके । त्वकसा
रे । दीर्घपल्लवे ॥ न॰ भङ्गायाम् ।
मातुलान्याम् ॥
शणघण्टिका । स्त्री॰ शणपुष्प्याम् ॥
शणपत्रम् । न॰ शणवल्कलनिर्मितप
त्रे । कागद॰हू॰प्र॰ ॥
शणपर्णी स्त्री॰ अशनपर्ण्याम ॥ श
ण पर्णमस्या । शणशब्द शण
पर्णसदृशेलाक्षणिक । पाककर्ण
तिङीष् ॥
शणपुष्पम् । न॰ शणके ॥
शणपुष्पिका । स्त्री॰ घण्टारवायामो
षधौ ॥ शणा. पुष्प यस्या . । स्वा
र्थे कन ॥
शणपुष्पी । स्त्री॰ घण्टारवायाम् ।
घण्टेतिख्यातौषधौ ॥ शणा : पुष्प
यस्या । शणशब्दस्तत्पुष्पसदृशेलक्षणा

नयिका । पाककर्मत्रिदोष ॥
चक्राणुवी । शणपुष्पीकटु तिक्ता
वामिनीकफपित्तजित् ॥ आढक्या
म् ।
शणसूत्रम् । न० शणद्रुमांशुसूत्रे ।
पवित्रकी ॥ शणोति । शणगतौ ।
पचाद्यच् । शणस्यसूत्रम् ।
शणालु ।
शणालुक: । पु० आरेवते । आरग्व
धे ॥ इ०श०र०ली० ॥
शणिका । स्त्री० शणपुष्प्याम ॥
शणीरम । न० शोणमध्यस्थपुलिने
॥ दर्दरीतटे ॥ इ०मेदिनिकार ।
शण्डम् । न० षण्डे । अब्जादिसमूहे
॥ पु०असुरपुरोहिते ॥ शण्डते ।
शण्डजायांसङ्घातेच । अस्मात्
पचाद्यच् ॥
शण्डिक । पुं० देशविशेषे ॥
शण्डिल । पु० मुनिविशेषे ॥ शण्ड
ते । शण्डि० । सलिकल्यनिमहिभ
ण्डिभण्डिशण्डिपिण्डितुण्डिकुकिभू
भ्यइलच् ॥
शण्ढ । पुं० गोपतौ । सांड०इ०
भा० ॥ धाकृष्टाण्डे ॥ वर्षवरे ।
चमसमहिलिवी । अभ्यन्तरस्त्रीरक्ष
की ॥ तृतीयप्रकृतौ । क्लीवे ॥
शाम्यतिशिष्याभावात् । शमउप
शमे । शमेढं: ॥ वन्ध्यापुरुषे ।
उन्मत्ते

शतम । न० दशगुणितदशसङ्ख्या
याम । दशतौ । १०० दशदशत
परिमाणमस्य । पङ्क्तिविंशतीतिनि
पातनात् । प्रकृति शभाव० त
प्रत्यय: ॥ सङ्ख्येये ॥
शतक । त्रि० शतसङ्ख्याविशि
ष्टे सङ्घे ॥ शतपरिमाणमस्य । स
ङ्ख्यायाअतिशदन्ताया. कन् ॥
शतेनक्रीतोवा ॥
शतकीर्त्ति । पु० भाव्यर्हद्विशेषे ॥
शतकुन्द । पु० करवीरे ॥
शतकुम्भ । पु० पर्वतविशेषे ॥ श्वेत
करवीरे ॥
शतकोटि । पुं० वज्रे ॥ शतको
टयोधारा कोणलक्षणा यस्यस
॥ दशार्बुदे । चले । पद्म ॥ -
शतक्रतु । पुं० इन्द्रे ॥ शतक्रत
वोयस्यस: ॥
शतखण्डम् । न० सुवर्णे ॥ त्रि०श
तभागे ॥
शतग्रन्थि । स्त्री० दूर्वायाम् ॥
शतघ्नी । स्त्री० शिल्पविद्याप्रसिद्ध
शस्त्रविशेषे ॥ प्राकाररक्षार्थनि-
र्मितयन्त्रविशेषे ॥ शतहन्ति ।
हन० । अमनुष्यकर्तृकेचेतिटक् ॥
ङीप् ॥ लोहकण्टकसञ्छन्नाशतघ्नी
महतीशिलेति० विजयरक्षित ॥
वृश्चिकाल्याम् ॥ करञ्जवी ॥ गल
रोगविशेषे ॥

शतच्छन्दः । पुं॰ काष्ठकुट्टखगे । दार्वाघाटे ॥ शतछदाख्ये ॥
शततम । त्रि॰ शतस्य पूरणे । मि त्यशतादिमासार्द्धमाससंवत्सराच्चे तिडट्तमडागम ॥
शततारा । स्त्री॰ शतभिषायाम् ॥
शतदन्तिका स्त्री॰ नागदन्त्याम् ॥
शतद्रु । स्त्री॰ सरिद्विशेषे । शतुद्री ॥ अस्याजलगुणाः यथा । शतद्रोर्विपाशायुतः सिन्धुनद्याः सुशीतलघुस्वादु सर्वाम्यथमम । अल निर्मलदीपनपाचनस्तु प्रदत्ते बलबुद्धिमेधायुषश्च । शतधाद्रवति । द्रुगतौ । हरिमितयोर्द्रुव इति चेतिकु । मितद्वादित्वाड्वा ॥
शतधा । ) स्त्री॰ शतप्रकारे ॥ दूर्वायाम् ॥
शतधा । )
शतधामा । पुं॰ विष्णौ । शतमन न्तानिधामान्यस्य ॥
शतधारम् । न॰ पवौ । वज्रे । शतधारा कोषलक्षणायस्य त्रि॰ शतधाराविशिष्टे ॥
शतधृति । पुं॰ इन्द्रे । ब्रह्मे ॥ परमेष्ठिनि । स्वर्दर ॥ दिवि । स्वर्गे ।
शतपत्र । पुं॰ मयूरे ॥ दार्वाघाटे ॥ सारसे ॥ राजकीरे ॥ नूरीतोता॰ इ॰ भा॰ न॰ कमले शतपत्राख्यस्य ॥
शतपत्रक । पु॰ दार्वाघाटे । काष्ठकुट्टखगे ॥ शतंपत्राख्यस्य ॥
शतपत्रनिवास । पुं॰ ब्रह्मणि ॥ त्रि॰ पद्मस्थे ॥
शतपत्रिका । स्त्री॰ शतपत्र्याम् । सेवन्त्याम् ॥
शतपत्री । स्त्री॰ सेवन्त्याम् । सेवती॰ इ॰भा॰ ॥ पाटलवर्णासेवती॰गुलाब इ॰प्रसिद्धास्त्री॰उभयो पर्यायाव था । शतपत्रीतरुणीकर्णिका चारुकेशरा । सहाकुमारीगन्धाढ्या लाक्षापुष्पातिमञ्जुला ॥ शतपत्री हिमाहृद्याग्राहिणीशुक्रलालघु: दोषत्रयास्त्रजिद्वर्ण्यातिक्ताकटीचपाचनी ॥
शतपथ । पु वेदैकदेशे ।
शतपथिक । त्रि॰ शतपथाध्येतरि ॥ शतपथमधीतेवेदवा । क्रुकम् पदोत्तरपदात्॰ शतषष्टे . षिकन् पथ इतिषिकन् ॥ षित्वात्॰ स्त्री॰ शतपथिकी ॥
शतपदचक्रम । न॰ नाम्नानक्षत्रज्ञानार्थचक्रे ॥ तद्यथा । चक्रंशत पदचक्रे॰ स्वाक्षराक्षरसम्भवम् । नामादिवर्णतोज्ञेयाक्षराग्र्यं शकास्तथा ॥ तिर्यगूर्ध्वगतारेखा रुद्रसंख्यालिखेद्बुध: ॥ आयते कोष्ठकानाञ्चशतेकानाम्नमय . ॥ च॰ व॰ क॰ इ॰ कोष्ठाम्नाः॰

म० ट० प० र० ता० हरिति० चाग्नेय्याम् । न० य० भ० ज० खा० नैऋत्या० ग० स० द० च० ला० वायव्याम् ॥ पञ्चपञ्चक्रमेणैवधि श्चवर्णान्प्रयोजयेत् । पञ्चस्वरसमायोगेएकैकपञ्चधाकुरु ॥ श्चवर्णाद्या स्त्रयोच्चैवा. सन्ध्यक्षरयुतास्तथा । सजातीयैक्यमाख्यातपञ्चस्वरविनिर्णय ' ॥ चतुर्दशारेप्यकारेच० ग्रैम सञ्चपरिग्रह । कृशांतृकुपु० भु० ट० श्चागेयीथिनीवायव्यराखिच ॥ कु० घ० ङ० छा० भवेत्सप्तमेरौ द्रेसौम्यागगोचरे । पु० ष० ण० ठा० भवेत्सप्तमैर्हस्ते चाग्नेयसञ्ज्ञके ॥ भु० ध० फ० ढाभवेत्सप्तमेपूर्वाषाढे चनैऋती । ढ० थ० भ० ञ० भवेत्सप्तमेवायव्येभाद्रउत्तरे एवंसप्तमचतुष्कञ्चज्ञातव्य स्वरवेदिभि.। धिष्ण्योनिक्रान्तकादीनिप्रत्येकचतुरक्षरे .। सोभिजित्य श्रवा स्तस्यतेकंवादशाधिकम् । यद्वर्णा श्चक्षोहस्थ क्रूर सौम्योपिवा भव :। तत्रस्थोवेधयेत्सम्यक्पुंसोनामादिमाक्षरम् । सौम्येविद्ध शुभर्क्षं यमशुभपापखेचरे . ॥ मिश्रे मिश्रफलतत्र निर्वेधेनशुभाशुभम । यद्दाच्य सर्वतोभद्रे यशोपप्रदभेद त :। शुभाशुभफलसर्वंतद्दिशापि विचिन्तयेत् ॥ पञ्चस्वरा.० च०

कृ० उ० ए० ओकारास्तेयौगेधिष्ण्यानिनचाधि । श्चवचतुर्भिर्वर्णैरेकनक्षत्र यथा । श्च० कृ० उ० ए० कृत्तिका । यो० व० वि० बु० रोहिणी । वे० वो० क० कि० मृगशिर.। कु० घ० ङ० छ० आर्द्रा । के० को० ह० हि० पुनर्वसू । हु० हे० हो० ड० पुष्य । डि० डु० डे० डो० श्लेषा । म० मि० मु० मे० मघा । मो० टा० टि० टु० पूर्वाफाल्गुनी । टे० टो० प० पि० उत्तराफाल्गुनी । पु० ष० ण० ठ० हस्त । पे० पो० र० रि० चित्रा । रु० रे० रो० त० स्वाति । ति० तु० ते० तो० विशाखा । न० नि० नु० ने० अनुराधा । नो० य० यि० यु० ज्येष्ठा । ये० यो० भ० भि० मूलम । भु० ध० फ० ढ० पूर्वाषाढा । भे० भो० ज० जि० उत्तराषाढा । जु० जे० जो० ख अभिजित् । खि० खु० खे० खो० श्रवण । ग० गि० गु० गे० धनिष्ठा । गो० स० सि० सु० शतभिषा । से० सो० द० दि० पूर्वभाद्रपदा । दु० थ० भ० ञ० उत्तरभाद्रपदा । दे० दो० च० चि० रेवती । चु० चे० चो० ल० अश्विनी। लि० लु० ले० लो० भरणी । क्षत्रयुक्त अकारयुक्तानक्षं

य'। छलेनदीर्घोच्चेय'। ताल ऽ. शकारेषदन्त्यसकारोच्चेय ॥ इ तिशतपदचक्रम् ॥

शतपदी । स्त्री॰ कर्णजलौकायाम् ॥ शतपादायस्या । कुम्भपदीषुचे तिसाधु ॥ शतावर्याम् ॥

शतपत्रम्' न॰ श्वेतकमले । पुण्ड रीके ॥

शतपर्वा । पुं॰ वंशे । त्वक्सारे । शतंपर्वाण्यस्य ॥ वृक्षविशेषे । शत पोरके ॥ यथा । शतपर्वाभवेत् किञ्चित्कोषकारगुणान्वित । वि शेषात्किञ्चिदुष्णश्चसस्वार पवना पह ॥

शतपर्वी । स्त्री॰ दूर्वायाम् ॥ वचा याम् ॥ भार्गवभार्यायाम् ॥ कौ जा गरपूर्णिमायाम् ॥ कटुकायाम् ॥ शतपर्वाण्यस्याः । पाक्षिक . ङीष भावः ॥

शतपर्विका । स्त्री॰ दूर्वायाम् ॥ वचा याम् ॥ शतपर्वाण्यस्या'। शेषा दितिकम् ॥ यद्वा । शतपर्वति । पर्वपूरणे । ण्वुल् । यवे ॥

शतपर्वेश'। पुं॰ शुक्रग्रहे ॥ शत पर्वायाईशः ॥

शतपात्‌॰द् । स्त्री॰ शतपद्याम् ॥ श त पादाअस्या'॥ सङ्ख्यासुपूर्व स्येतिसाधुः ॥

शतपादिका । स्त्री॰ शतपद्याम् ॥ का कोल्याम् ॥

शतपादी । स्त्री॰ शतपादिकायाम् ॥

शतपुष्पा । स्त्री॰ सितच्छत्रायाम् । अतिच्छत्रायाम् । मधुरायाम् । सौंफ । धानसोवा॰इ॰भा॰प्र॰ ॥ अस्यागुणायथा। शतपुष्पाकटुस्तीक्ष्णा पित्तकृद्दीपनीकटु । उष्णाज्वरानि लश्लेष्मव्रणशूलाक्षिरोगहृत् ॥ मिश्रे यातद्गुणाप्रोक्ताविशेषाद्योनिशूलनु त्। अग्निमान्द्यहरीहृद्याबद्धविट्क्र मिशुक्रहृत् ॥ रूक्षोष्णापाचनीकास सवमिश्लेष्मानिलान्हरेत् ॥ अपि च । एकैवाह्वहुरसासवासिनेव वासिता।शतपुष्पावदत्येव छत्र दत्वा जिगीषया ॥ शत पुष्पाण्यस्या'। सहच्काण्डेतिटाप् ॥

शतपुष्पिका । स्त्री॰ शतपुष्पायाम् ॥

शतपोरक । पुं॰ शतपर्वाख्यवृक्ष विशेषे ॥

शतप्रसूना । स्त्री॰ शतपुष्पायाम् ॥

शतप्रास । पुं॰ करवीरवृक्षे ॥ श त प्रास'इवपत्राण्यस्य ॥ शत पुष्पा णिप्रास्यतिवा। असुक्षेपणे । कर्म ण्यण् ॥

शतबलि । पुं॰ कपोनामत्स्यविशे षे ॥

शतभिषक् । स्त्री॰ शतभिषानक्षत्रे ॥ भि॰ शतभिषजिजाती। बत्सशा लेतिजातार्थस्यालुक् । पक्षे शा

तभिषजः। शतभिषेषि ॥

शतभिषा। स्त्री० अश्विन्यादिषु चतुर्विंशे ॥ तत्र जातफलं यथा। शीतभीरुरतिसाहसी सदा निष्ठुरो हि चतुरो नरो भवेत्। वैरिणामतिशयेन हिंसको वा कलोद्यदि यक्षसम्भवे ॥

शतभीरु। स्त्री० मल्लिकायाम्। बेला० वेली० रायबेल० इ० च० भा० प्र० पुष्पे। शतं बह्वो वियोगिनो भीरवोऽस्याः।

शतमख। पुं० इन्द्रे। शचीपतौ ॥ शतं मखा अस्य ॥

शतमन्यु। पु दिवस्पतौ ॥ इन्द्रे ॥ शतं मन्यवो यागा अस्य। शतेषु दैत्येषु मन्युः क्रोधोऽस्येति वा। शतं मन्यवो दैन्यान्यस्य वा। दैत्यैः पराजितत्वात् ॥

शतमान पु० दशरूप्यधरणेषु। विंशत्यधिकरत्तिकाशतत्रयपरिमाणे रूप्यधरणे। ॥ धरणानि दशज्ञेय शतमानस्तु राजतकृतिमनु ॥

शतमार्ज्ज। पु० अस्त्रकारके ॥ इ० कश्चित्।

शतमूला। स्त्री० दूर्वायाम् ॥ वचायाम् ॥

शतमूलिका स्त्री० द्रवन्त्याम्। मूषिकपर्ण्याम् ॥

शतमूली। स्त्री० बहुसुतायाम्। शतावर्याम् ॥ शतं मूलान्यस्याः। पाककर्णेति ङीष् ॥

शतयष्टिक। पु० शतलतिकाहारे। देवच्छन्दे ॥

शतरुद्रियम्। न० हविरादौ ॥ शतं रुद्रा देवता अस्य। शतरुद्राद्घश्चेति घ ॥

शतरुद्रीयम्। न० शतरुद्रिये ॥ शतरुद्राद्घश्चेति चकाराच्छः शतशब्दोऽनन्तवचन ॥

शतरूपा। स्त्री० स्वायम्भुवमनोपत्न्याम् ॥ ब्रह्मण कन्यायाम्। पत्न्याश्चेति मात्स्ये तृतीयोध्याय ॥

शतलुम्प। )<br>शतलुम्पक। ) पु० किरातार्जुनीयकाव्यकर्त्तरि भारविकवौ ॥

शतवीर्य्या। स्त्री० श्वेतदूर्वायाम् ॥ शतं वीर्याण्यस्याः ॥ कपिलद्राक्षायाम् ॥ शतावर्याम् ॥

शतवेधी। पु० अम्लवेतसे ॥ शतं वेद्धुं शीलमस्य। विधविधाने। सुपीतिणिनि ॥

शतवेधिनी। स्त्री० चुक्रिकायाम्। चूकाख्यशाके ॥

शतव्रज। पुं० अनन्तगतौ। अपरिमितगतौ ॥

शतसहस्रम्। न० शतगुणितसहस्रे। लक्षे ॥

शतसहस्रकम्। न० तीर्थविशेषे ॥

शल्फा॰ हू॰ गौ॰ भा॰ ॥ मधु
रिकायाम् । अतिच्छत्रायाम ॥

शतिक । त्रि॰ शत्ये ॥ शतेनक्री
त॰ शतस्यविकारोऽवयवोवा ।
शतस्यनिमित्त संयोगउत्पातोवा-
॥ क्रीतवत्परिमाणादित्यतिदेशा
त्॰शताच्चठन्यतावशतइतिठन् ॥

शतेर । पु॰ शत्रौ ॥ हिंसायाम् ॥
शीयते । शद्लृशातने । शदेस्तच्चे
त्यरन् ॥

शत्य । त्रि॰ शतिके ॥ शतिकव
दतिदेशाद्यत् ॥

शवि । पु॰ कुञ्जरे । हस्तिनि॥शीय
ते । शद्लृ । राशदिभ्यांत्रिप् ॥

शत्रु । पु॰ । स्वविषयान्तरावनिपे
॥ विषयानन्तरोराजेत्यमर ॥ नि
पातकारिणि । रिपौ । वैरिणि ।
सपत्ने । अरौ । अभिघातिनि ॥
शत्रुर्द्विधा । आभ्यन्तरोवाह्यश्च ।
आभ्यन्तर कामक्रोधादिरूप ।
वाह्यइष्टविघातादिकर्ता । यथा
हु । एक शत्रुर्नद्वितीयोस्ति
शत्रुरज्ञानतुल्य पुरुषस्यराजन् ।
येनावृत्त. कुरुतेकार्यंतथघोराणि
कर्माणिसुदारुणानीति ॥ लग्नात्
षष्ठस्थाने ॥ शातयति । शद्लृ॰
। यन्त । रुशातिभ्यांक्रुन् । ब
हुलमन्यत्रापीतिणिलुक । प्रज्ञा
दिपाठात्स्वार्थेऽण् ॥ शातयितरि ।
हन्तरि ॥ यथा । इन्द्रशत्रु ।
इन्द्रस्यशत्रुर्हन्ता । इन्द्र॰ शत्रु
र्हन्तायस्येतिबहुव्रीहिर्वा ॥

शत्रुघ्न । पु॰ सुमित्रातनये । श
त्रुमर्द्दने । श्रीरामभ्रातरि ॥ श
त्रून्हतवान् । हन॰ । मूलवि
भुजादित्वात्क ॥ यद्वा । शत्रून्
हन्ति । अमनुष्यकर्त्तृकेपिचेत्यपि
शब्दात्॰कृतघ्नशत्रुघ्नादय सिद्धा
इतिदुर्गसिंह । पाणिनीयेपि॰
बहुलग्रहणादभीष्टसिद्धि । कृत्य
ल्युटोबहुलम् ॥ त्रि॰ अरिघ्ने ॥

शत्रुघ्नजननी । स्त्री॰ सुमित्रायाम ॥

शत्रुजित । पु॰ भूपविशेषे । कुव
लयाश्वपितरि ॥ त्रि॰ वैरिजय
कारिणि ॥ शत्रून्जयतिअभिभव
ति । जि॰ । क्विप्॰ तुक् ॥

शत्रुञ्जय । पु॰ विमलाद्रौ ॥ हस्ति
नि । शत्रुजयति जि॰ । सञ्ज्ञाया
भृतृवृजीतिखच् ॥ शत्रुजेतरि ॥

शत्रुता । स्त्री॰ शत्रुत्वे । वैरिभावे
। तल् ॥

शत्रुन्तप । त्रि॰ वैरितापकृति ॥

शत्रुमर्द्दन । पु॰ शत्रुघ्ने ॥ त्रि॰ वैरि
घ्ने ॥

शत्रुवश । त्रि॰ शत्रुमति । शत्रु
रस्यवश । अन्येभ्योपिदृश्यतइति
वलच् । असञ्ज्ञात्वान्नदीर्घ

शत्रुहा । पु॰ क्रूरकर्माणिवक्षौ ॥

अत्वरी । स्त्री० निशायाम् ॥
अद । पु० फलमूलादौ ॥ अदेरच्॥
अद्रि । पु० पर्वताधरे । मेघे ॥
 शिखरी ॥ हस्तिनि ॥ खङ्गे ॥
 स्त्री० तडिति ॥ शीयतेऽस्यातेवा।
 अद्लु० । वद्विशदीतिक्रिन् ॥
अनक्वायधि । स्त्री० गजपिप्पल्याम्॥
अनके । अ० चत्वरायाम् ॥ शनैरेव
 । अव्ययसर्वनाम्नामकच्प्राक्टेरिति
 कच् ॥ सम्प्रमेयेत्यर्थे ॥
अनपर्णी । स्त्री० वसनमयाम् ॥
 कट्याम् ॥
शनि० । पु० सप्तमग्रहे । सौरौ ।
 शनैश्चरे । नीलवाससि । मन्दे ।
 छायात्मजे ॥ कुकुरे ॥
शनिगृहम् । न० मकरराशौ ॥ कुम्भ
 राशौ ॥ शनैर्गृहम् ॥
शनिप्रसू । स्त्री० छायायाम् । सूर्य
 पत्न्याम् ॥
शनिप्रियम् । न० नीलमणौ ॥
शनिवार । पु० शनिभोग्यसावकादि
 ने ॥ तत् ० उदयकालादेरुयका
 ल: ॥
शनैश्चर । पु० शनियहे ॥ शनैश्च
 रति० पङ्गुत्वात् । चर० । अच् ॥
 त्रि० मन्दगामिनि ॥
शनैः । अ० क्रियामान्द्ये । स्वैरे ॥
 चत्वरायाम् । अहूले । शनैश्चरे ।
 शयति ० । शानयतिवा । शमद्!

ने० शानतेजनेवा। ऐसप्रत्यय । पृ
 षोदरादित्वात्० यस्यन फलेपा।
शन्तनु: । पु० प्रतीपभूपतनये । म
 हाभिषि ॥
शप । पुं० शपथे । निर्भर्त्सने ॥
शपथ । पुं० कारे ॥ आक्रोशे ॥
 दिव्ये । सकये । सुतादिभि. शपने
 ॥ शपन्ति शपथाक्रोशे । शीङ्श
 पिरुगमीत्यादिनाऽथप्रत्यय ॥
शपनम । न० शपथे ॥ शप० । ल्यु
 ट् ॥
शपमान । त्रि० क्रोशति ॥ स्वरि
 तेत्वादात्मनेपदम् ॥
शप्त । त्रि० शापयस्ते ॥ शप्यतेस्म
 । शप० । क्त: । पुं० उल० दू०
 गौ० भा० प्र० तृणविशेषे ॥
शफ । पुं० सुगन्धिद्रव्यविशेषे । न
 खे । क्षोखदशे ॥ न० तरूणां
 मूले ॥ गवादीनांखुरे ॥ शफत्य
 ति । फलगतौ । पन्येभ्योपीति
 ड: । पृषोदरादि: ॥
शफर । पुं० मत्स्यविशेषे । प्रोष्ठ्या
 म् । सूँठी० ह० गौ० दे० भा०
 प्र० शफरति । रा० । आतोऽनु
 पेतिक: ॥
शफराधिप । पुं० इल्लिशि० मत्स्यं
 । वाविकापूरे ॥ शफराणामधिप:॥
शफरी स्त्री० शफरे । प्रोष्ठ्याम
 ॥ जातीरितिकौष् ॥

शबल । पु॰ एते । कर्बुरे । चि
त्रे । किर्मीरे । शपति॰ च क्रोश
ति वर्णान् । शप॰ शपेर्वः ऐतिक
लप्रत्ययोबत्वञ्च । चो॰ष्ठ्यमध्य. ॥
त्रि॰ तद्वति ॥

शब्द । पु॰ चत्वरे । यशसि ॥
गीतौ । वाक्ये । खे । श्रवणे
। ध्वनौ । इतिहेमचन्द्रः । श्रो
चग्राह्यगुणपदार्थविशेषे । अस्य
पर्यायाः । शब्दः॰ निनादः नि
नदध्वनिध्वानरवस्वना । स्वानः नि
र्घोषनिर्ह्रादनादनिस्वाननिस्वनाः
। आरवारावसंरावविरावाः । इ
त्यमर. ॥ प्रयोगेणाभिज्वलितया
काशदेशः शब्दः । सद्विविधः
ध्वन्यात्मको॰ वर्णात्मकश्चेतिभे
दात् । तथाहि । शब्दोध्वनिश्च
वर्णश्च मृदङ्गादिभवोध्वनिः । कण्ठ
संयोगादिजन्यावर्णास्ते कादयोम-
ता ॥ सर्वः शब्दोनभोवृत्ति
श्रोत्रोत्पन्नस्तुगृह्यते । वीचीतरङ्ग
न्यायेनतदुत्पत्तिस्तुकीर्तिता । क
दम्बगोलकन्यायादुत्पत्तिः कस्य
चिन्मते । उत्पन्नः कोविनष्टः क
इतिबुद्धेरनित्यता ॥ सोयकइति
बुद्धिस्तुसाजात्यमवलम्बते । तदेवौ
षधमित्यादौसजातीयेऽपिदर्शना-
त् । इ॰ भा॰ प॰ शब्द निरूप
णम् । शब्दइति । नभोवृत्तिरा

काशसमवेतः । दूरस्थशब्दस्या
ऽग्रहणादाह । श्रोत्रोत्पन्नइति ।
ननुमृदङ्गाद्यवच्छेदेनोत्पन्नेशब्दे॰
श्रोत्रेकथमुत्पत्तिरतआह । वीचीत
रङ्गन्यायेनेति । आद्यशब्दस्यबहिः
र्दिगवच्छिन्नोऽन्यः शब्दस्तेनैव
शब्देनजन्यते॰ तेनचापरस्तद्व्याप
क एवं क्रमेणश्रोत्रोत्पन्नोगृह्यतइ
ति कदम्बगोलकन्यायादिति ।
आद्यशब्दाद्दशदिक्षु॰ दशशब्दाउत्प
द्यन्ते । ततश्चान्येदशशब्दाउत्पद्य
न्ते॰ इतिभावः । अस्मिन्कल्पे
गौरवादुक्तं कस्यचिन्मतइति । ननु
शब्दस्यनित्यत्वात्कुतउत्पत्तिः कथम
त॰ आह । उत्पन्न. कइति । शब्द्
नामुत्पादविनाशप्रत्ययशालित्वा
दनित्यत्वमित्यर्थः । ननुसएवा
यं ककारइत्यादिप्रत्यभिज्ञानाच्छब्दा
नांनित्यत्वम् । इत्यत्रोत्पादविना
शबुद्धिश्चसरूपाचेत्यतआह । सोय
कइतिबुद्धिस्तुसाजात्यमवलम्बतेइ
त्यादि । तत्रप्रत्यभिज्ञानं तत्स
जातीयत्वविषयः ॥ ननुतद्व्यक्त
भेदोविषयः । उक्तप्रतीतिविरोधा
त् । इत्यञ्चद्वयोरपिबुद्ध्योर्नभ्रमत्व
मिति । ननुसजातीयत्वसोयमिति
प्रत्यभिज्ञायांभासते॰ इतिकुत्रदृष्ट
मित्यतआह । तदेवेति । यदौषध
मयाकृतंतदेवान्येनापिकृतमित्या

दिदर्शनादितिभाव इतिमुक्ता
वली ॥ अ प्तवाक्यं । आप्तश्रुतिरा
प्तवचनन्त्विति साङ्ख्या । अथाप्त
वचनमिति लक्ष्यनिर्द्देश । शिष्टल
क्षणम् । आप्ताप्राप्तायुक्तेतियावत् ।
आप्ताचासौश्रुतिश्च । आप्तश्रुति ।
श्रुतिः वाक्यजनितं वाक्यार्थ विज्ञान
म् । तच्चस्वत प्रमाणम । अपौरुषेय
वेदजनितत्वे नचसकलदोषाशङ्काबि
निर्मुक्ता युक्ता भवति एवं वेदमूल
स्मृतीतिहासपुराणवाक्यजनितम
पिज्ञानयुक्तम् । आदिविदुषश्चकल्पा
दौ । कल्पान्तराधीतश्रुतिस्मरणसम्भ
व । सुप्तप्रबुद्धस्येव । पूर्वेद्युरव
गतानामर्थानामन्येद्यु । तथाचा
वट्यजैगीषव्यसंवादे । भगवा
न् जैगीषव्योदशमहाकल्पवर्त्तिज
न्मस्मरणमात्मनउवाच । दशसु
महाकल्पेषुपरिवर्त्तमानेनमयेत्या
दिनाग्रन्थसन्दर्भेण । आप्तग्रह
णेनच । अयुक्ता । शाक्यभिक्षुक
निर्ग्रन्थकसंसारमोचकादीनामा
गमाभासा परास्ताभवन्ति । अयुक्त
त्वञ्चैतेषांविगानाद्विच्छिन्नमूलत्वात्
प्रमाणविरुद्धार्थाभिधानात् । कैश्चि
देवम्लेच्छादिभि पुरुषापसदै
पशुप्रायै । परिग्रहाद्बोद्धव्यम् । तु
शब्देनानुमानाद्व्यवच्छिनत्ति । वा
क्यार्थोहिप्रमेय । नतुतद्धर्मोवा
क्ययेनतत्रलिङ्गं भवेत् । नचवाक्य
वाक्यार्थं बोधयत् सम्बन्धग्रहणम
पेक्षते । अभिनवकविविरचितस्यवा
क्यस्यादृष्टपूर्वस्याननुभूतचरवाक्या
र्थबोधकत्वादिति । अध्ययनकार्य्यं
शब्द । शब्दइतिशब्दजनितमर्थ
स्वरूपज्ञानमुपलक्षयतिकार्य्येकारणो
पचारात् । साद्वितीयासिद्धि सु
तारमुच्यते । तदिदं द्विधाश्रवणम् ।
अन्येव्याचक्षते । यस्यसाङ्ख्यशास्त्र
पाठमन्यदीयमाकर्ण्यतत्त्वज्ञानमुत्
पद्यतेसासिद्धि शब्द । शब्दपाठा
नन्तरभावात् । इतिसाङ्ख्या ॥
आप्तोपदेश शब्द इतिगौतमसू
त्रम् । अस्यार्थ । शब्दइतिलक्ष्य
कथनं तदर्थं । प्रमाणशब्दइति ।
आप्तोपदेशइतिलक्षणम् । आप्त
प्रकृतवाक्यार्थयथार्थज्ञानवान् ।
तस्योपदेशइत्यर्थं । प्रकृतवाक्या
र्थ । यथार्थज्ञानप्रयुक्त : शब्दइति
फलितार्थं । अथवा । आप्तोय
थार्थउपदेश । शब्दबोधयस्मात् त
त् । शाब्दत्वव्याप्यजातिविशेष । त
थाच । यथार्थशाब्दज्ञानकरणत्वम
र्थं । । अत्रचविशेष्यावृत्त्यप्रकारक
त्वतइतितत् प्रकारकत्वादिप्रमाल
क्षणानामेकम् । लक्षणपरत्वलक्ष्य
तावच्छेदकंनिवेशनीयमतोनाभेद
॥ ७ ॥ विभजते । सद्विविधोदृष्टा

दृष्टार्थत्वात् । सप्रमाणशब्द श
ब्दतदुपजीविप्रमाणातिरिक्तप्रमाण
गम्यार्थो दृष्टार्थश्च । शब्दतदुपजी
विप्रमाणमात्रगम्यार्थोऽदृष्टार्थश्च
• तथा च दृष्टार्थत्वादृष्टार्थत्व
भेदात् प्रमाणशब्दस्य द्वैविध्यमित्य
र्थः ॥ ८ ॥ शप्यते । शपआक्रोशे
। आशपिभ्यां दन्नाविति दन् ॥ शा
स्त्रे शब्दस्तु वाचकइति । शास्त्रे •
व्याकरणादिशास्त्रे • यो वाचकः
साधुशब्दः • सएव निरूपपदेन शब्दश
ब्देन व्यवह्रियते न ध्वनिर्न चापभ्रंशः
। सहि द्विविधो लौकिकवैदिकभेदात्
। तत्र गौरश्वः पुरुषो हस्ती शकुनि
र्मृगो ब्राह्मण इति लौकिकाः । शन्नो
देवीरभीष्टये • इषेत्वोर्ज्जेत्वा । अग्नि
मीले पुरोहितम् • अग्न आयाहि वीत
य इति वैदिका इत्यर्थः ॥ वाक्यसन्द
र्भे ॥ अस्य प्रयोगविषयो यथा । म
हान् शब्दस्य प्रयोगविषयः । सप्त
द्वीपा वसुमती त्रयो लोकाश्चत्वारो वे
दाः साङ्गाः सरहस्या बहुधा भिन्नाः ।
एकशतमध्वर्युशाखाः । सहस्रवर्त्मा
सामवेदः । एकविंशतिधा बाह्वृच्य
म् । नवधाथर्वणो वेदः । वाकोवा
क्यम् । इतिहासः । पुराणम् । वै
द्यकमित्येतावच्छब्दस्य प्रयोगविषयः
। एतावन्तं शब्दस्य प्रयोगविषयमन
नुनिशम्य सन्त्यप्रयुक्ता इति वचनमेव

लं साहसमेव । एतस्मिन्नतिमहति
शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र
नियतविषया दृश्यन्ते । तद्यथा ।
शवतिर्गतिकर्मा कम्बोजेष्वेव भाषि
तो भवति । विकारएवैनमार्या भाष
न्ते शव इति । हम्मतिः सुराष्ट्रेषु
रंहतिः प्राच्यमध्येषु । गमिमेव
त्वार्याः प्रयुञ्जते । दातिर्लवनार्थे
प्राच्येषु • दात्रमुदीच्येषु । इति महा
भाष्यम् । जीवतो मृतावस्था विका
रस्तत्रेत्यर्थः । ॥ इति कोषट ॥ श
ब्दश्चतुर्विधः । जातिगुणक्रियायदृ
च्छाशब्दभेदात् । तत्र जातिशब्दो य
था गौरश्वः पुरुषो हस्ती शकुनिर्ब्राह्म
ण इत्यादि । गुणशब्दो नीलो हरित
इत्यादि । क्रियाशब्दः पचति प
ठति गच्छतीत्यादि । यदृच्छाशब्दो
डित्थो डवित्थ आखण्डलो पाखण्ड
इत्यादिः ॥

शब्दकोषः । पुं• शब्दसमूहे ॥ शब्दा
नां कोषोऽर्थसमूहः शब्दकोषः ॥

शब्दग्रहः । पुं• कर्णे ॥ शब्दो गृह्यते
ऽनेन । ग्रहवृदृनिश्चिगमश्चेत्यप् ॥

शब्दनः । त्रि• शब्दकारके । रवणः ॥
शब्दयतितच्छील । शब्दशब्दक्रि
यायाम् । चलनशब्दार्थादितियुच् ॥

शब्दब्रह्म । न• वेदे ॥

शब्दभावना । स्त्री• शाब्दीभावनाया
म् ॥ शब्दस्य भावना ॥ प्रेरणाधर्मकं

शशब्दव्यापार' स्वज्ञानकरणक' स्तुत्यादिज्ञानेतिकर्तव्यताक . पदत्व-प्रयत्नभाव्यमिष्ट शब्दभावनोच्यते ॥

शब्दभेदी । पु० अर्जुने । तृतीयेपाण्डवे ॥ भेदनभेद् । सोस्त्यऽस्य० भेदी । शब्दस्य भेदी ॥ बाणविशेषे । इ० रामायणम् ॥

शब्दयन् । त्रि० व्याहरति ॥ शब्दशब्दोन्० तत्करोतीतिण्यन्ताल्लट शतृप्रत्यय । स्त्री० ङीप् ।

शब्दयोनि । पु० भूवेधस्पर्शादिधातुषु ॥ शब्दस्यनाम्नोयोनि ॥

शब्दवृत्ति । स्त्री० शब्दप्रवृत्तौ ॥ साचचतुर्विधा यथा । तत्स्थतत्संगता भ्यांश्चतत्समीपतयापिच । तस्माच्चपर्याच्छब्दानावृत्तिरुक्ताचतुर्विधा ॥ साच० मुख्यलक्षणागुणभेदेन० त्रिधा । मुख्यापिरूढियोगभेदन्द्विधारूढिश्चस्वरूपेणजात्यागुणेनवा-निर्देशार्हैर्वस्तुभि० सम्यासंश्चिसङ्केतेन०प्रवर्तते । यथा०डित्थ डवित्थ ' ० गौ शुक्लइति । लक्षणाचतेनैवसङ्केतेनाभिहितार्थसम्बन्धिनि । यथागङ्गायांघोषइति । गौणीच० अभिहितार्थलक्षितगुणयुक्तेतत्सदृशे । यथा० सिंहोदेवदत्तइति । योगवृत्तिस्तु० एतत्त्रिविधवृत्तिप्रतिपादितपदार्थयो प्रकृतिप्रत्यायार्थयोर्योगेन । यथा० पङ्कजम्० औपगव : ०पाचकइत्यादि ० ॥

शब्दवेधी । पु० अर्जुने ॥ दशरथे ॥

शब्दस्मृति ' । स्त्री० व्याकरणे ।

शब्दहेतु ' । पु० यष्ट्यादिषु । यथा । यष्टोगुणक्रियाजातिरूढय शब्दहेतव । गोमान्नीलोत्पलस्वेवपाचकोघटएवच ॥ आकाशवृत्तिशब्दानातत्तदर्थप्रवर्तका ' ॥

शब्दाधिष्ठानम् । न० कर्णे ॥

शब्दानुशासनम् । न० प्रकृत्यादिविभागेनशब्दव्युत्पादने ॥ उक्तञ्च यथा । विविक्ता ' साधव ' शब्दा : प्रकृत्यादिविभागत । ज्ञाप्यन्तेयेनतच्छास्त्रमत्रशब्दानुशासनमिति । व्याकरणस्येदमन्वर्थनामशब्दानुशासनमिति ॥

शब्दार्थ । पु० शब्दजन्यज्ञानविषये । वस्त्वाकृतौ ॥ शब्दस्यअर्थ ॥ यत्पर . शब्द सशब्दार्थ इतिमीमासका ॥ सयोगोविप्रयोगश्चसाहचर्यंविरोधिता । अर्थ प्रकरणलिङ्गशब्दस्यान्यस्यसन्निधि : । सामर्थ्यमौचितोदेश : कालोव्यक्ति ' स्वरादय : । शब्दार्थस्यानवच्छेदेविशेषस्मृतिहेतव ॥

शब्दितम् । त्रि० भाषिते ॥ गीते ॥ प्रतिपादिते ॥ शब्दसशब्दनेघोरादिक । कर्मणिक्त ॥

शम् । अ० कल्याणे ॥ सुखे ॥ शास्त्रे

शम' । पुं० शान्तौ । विषयेभ्यइन्द्रियोपरतौ ॥ मोक्षे ॥ अन्तरिन्द्रियनिग्र

द्वे । अन्तःकरणोपरमे ॥ मनोने
स्वास्थ्ये ॥ मनःप्रसादे । अन्तःक
रणस्य विषयेभ्यो निवृत्तौ ॥ श्रवणा
द्व्यतिरिक्तविषयेभ्यो मनसो निव
र्तने ॥ उपशान्तौ ॥ सर्वकर्मसन्न्या
से ॥ सदैव वासनात्याग शमोऽयमि
ति शब्दित ॥ शमनम् । शम
उपशमे । भावे घञ् ॥ नोदात्तोप
देशेति वृद्ध्यभाव ॥ शान्तिरसे ॥
शाम्यतेऽनेनेति व्याख्यानात् ॥ पा
णौ । शये । हस्ते ॥ शाम्यति कण्डू
यनं वानेन । हलश्चेति घञ् ॥ उप
चारे । चिकित्सायाम् ॥

शमक । त्रि॰ शान्तिकारके ॥

शमथ । त्रि॰ शान्तौ ॥ मन्त्रिणि ॥
शमनम् । शम॰ । शमादिभ्योऽथच्
॥ शाम्यति वा । बाहुलकादथप्रत्य
य ॥

शमन । पु॰ यमराजे । यमे । श्रा
द्धदेवे । अन्तके । पितृपतौ ॥ मृग
विशेषे ॥ कलापे ॥ न॰ शान्तौ ॥
वधे । हिंसायाम् ॥ परम्परा के ।
प्रोक्षणे । यज्ञार्थपशुहनने ॥ चर्व
णे ॥ शमयति । शम॰ । णिजन्ता
ल्ल्युः । भावे ल्युट् वा ॥

शमनस्वसा । स्त्री॰ कालिन्द्याम् । य
मुनायाम् ॥ शमनस्य स्वसा ॥

शमनी । स्त्री॰ उन्मूलिन्याम् ॥

शमनीषद् । पु॰ निशाचरे । राक्ष
से ॥

शमपरा । स्त्री॰ सौधप्रभेदे ॥

शमयिता । त्रि॰ विनाशके ॥

शमल । पु॰ अपराधे ॥ न॰ विष्ठा
याम् ॥ शस्यते । शाम्यति वा ।
शम॰ । शकिशम्योर्नित्‌ इति कल ॥

शमसुखम् । न॰ शान्त्यानन्दे ॥

शमादिषट्कम् । न॰ शमदमोपरति
तितिक्षासमाधानश्रद्धासु ॥ शमा
दीनां षट्कम् ॥

शमान्तक । पु॰ कामदेवे ॥ इ॰
त्रि॰ शेष ॥

शमि । स्त्री॰ शिम्बायाम् ॥ शाम्य
ति । शम॰ । सर्वधातुभ्य इन् ॥

शमित । त्रि॰ शान्ते । शीतोष्णास
हने ॥ शम्यते स्म । शम॰ । क्त ।
वादान्तशान्तेत्यत्र साधु ॥ वि
नाशिते ॥ निर्वापिते ॥

शमी । त्रि॰ शान्ते ॥

शमिर । पु॰ शमीवृक्षे ॥

शमी । स्त्री॰ सक्तुफलायाम् । शिवा
याम् । छोंकरा॰ जाटी॰ इ॰ भा॰ प्र॰
वृक्षे ॥ अस्या गुणायथा । शमी
तिक्ता कटु शीता कषाया रेचनी ल
घु । कम्पकासज्वरश्वासकुष्ठार्शः
क्रिमिजित् स्मृता ॥ शिम्बिकाया
म् ॥ बल्गुल्याम् ॥ शाम्यति ।
शम॰ । अच् । गौरादिः ॥ यद्वा
। शमयति रोगान् । शमेरन्तान् ङी

ष ॥

अमीक । पुं॰ मुनिविशेषे ॥ आम्यति । अम॰ । अलीकादित्वादीकन ॥

अमीगर्भ । पुं॰ ब्राह्मणे ॥ अग्नौ ॥

अमीज । पुं॰ शमीधान्ये ॥

शमीधान्यम् । न॰ वैदले । माषादौ । यथा । मुद्गमाषाराजमाष . कुलत्थ मयकस्तिल : । काकाण्डाचौवरद्रु तिशमीधान्यगण . स्मृत . ॥ शम्या धान्यम् ॥

शमीपचा । स्त्री॰ खदिरियाम् । लज्जालौ । शमीपत्रसदृशानिपत्राणियस्या सा ॥

शमीफलम् । न॰ शम्या : फले । सांगर॰सैगर॰इ॰भा॰प्र॰ । यथा । शमीफलकोमलबीजसम्मिततमोदकैर्लेहितमिवकेवलम् । प्रलिह्यैवेति विधिनाविपाचितसराजिकवाटधिसैन्धवान्वितम् ॥ शमीफलगुरुस्वादु कुष्ठाघ्र : कफहृत्सरम् । सुरुच्यग्निलघुकृन्मेध्यपापविनाशनम् ॥

अमीर । पुं॰ अल्पायांशम्याम् ॥ ह्रस्वाशमीत्यर्थे॰कुटीशमीशुण्डाभ्योर ॥

अम्या । स्त्री॰ शतद्रुयाम् । विद्युति ॥ भयङ्करत्वात्॰असुखमिवति । पा॰ । आतोनुपेतिक । टाप् ॥

अम्याक : । पु॰ आरग्वधे । चतुरङ्गु ले ॥ शङ्कन्याक पाकोऽस्य ॥ विपाके ॥ पावके ॥

अम्पाक : । पुं॰ आरग्वधे ॥

अम्ब । पु॰ अवे । मुसलाग्रस्थलोह मण्डलके । लोहकाञ्च्याम् । पवौ ॥ अम्बसम्बन्धने॰चुरादि । अम्ब्यतिसम्बध्नातिअच्॰न इतिवियाद्वे पवर्गतृतीय । अच् ॥ प्रतिलोमे । द्वितीयकर्षणे ॥ यथा । अम्बाकरोति॰अनुलोमंकृष्टंचप्रतिलोमं कर्षतीत्यर्थ ॥ कृञोद्वितीयेतिडाच् ॥ त्रि॰ शुभान्विते ॥ अमस्यास्ति । कशकृभ्यामिविव ॥ यद्वा । आम्यति । अम॰ । अमेर्वन् ॥ टल्वाद्य । चोष्ठ्यवानपि ॥

अम्बर : । पुं॰ अवयाम्भवतिमृगविशेषे । सांगर॰इ॰भा॰प्र॰ ॥ अस्मगुणा । अम्बरमुपलशिलाधमीत लघुकदुस्मृतम् । रसेपाकेचमधुर कफहृद्रक्तपित्तकृत् दैत्यविशेषे ॥ मत्स्यप्रभेदे ॥ गिरिविशेषे ॥ अवयोति । वञ् । पचाद्यच् ॥ अवसवरणरातिवा । क : ॥ अवयति । बाहुलकादरन्निति वा । अमिधातोः सञ्ज्ञायामिलञ्चा ॥ न॰ सलिले । जले ॥ चित्रे ॥ चौडवलविशेषे ॥

अम्बरकन्द । पुं॰ वाराहीकन्दे ॥

अम्बरचन्दनम् । न॰ चन्दनविशेषे । कैरातेबहुलगन्धे ॥

अम्बरविद्या । स्त्री॰ मायायाम् । अ

म्बरस्यदैत्यविशेषस्यविद्या ॥

शम्बरसूदन . । पुं॰ मदने । कामदेवे ॥ शम्बरदैत्यविशेष॰सूदितवान्॰ सूदयतिवा । सूद॰ । नन्द्यादित्वा ल्ल॒ः ॥

शम्बरारि । पु॰ मनसिजे । कामे ॥ शम्बरस्यदैत्यविशेषस्य॰व्रतविशेस्यवा॰अरि . अच् ॥

शम्बरी । स्त्री॰ आखुपर्ण्याम् ॥ मायायाम् ॥ शम्बयोति ।कृञ्॰ । शमिधातोरिल्यच् । गौरादि . ॥

शम्बल । पुं॰ न॰ कूले । तटे ॥ पाथेये ॥ मत्सरे ॥ शम्बयति । शम्ब॰ । बाहुलकात कल . ॥

शम्बली । स्त्री॰ कुट्टन्याम् ॥ शसुख॰ बलते॰ बलतिवा । बलसंवरणे॰ बलप्राणनेवा । पचाद्यच् । गौरादि ।

शम्बाकृतम् । त्रि॰ द्विवारकृष्टक्षेत्रे । द्वितीयाकृते ॥ शमस्यास्ति । वा शम्बामितिव । शब्शब्दोद्वितीयकर्षणेवर्त्तते । शङ्वकृतम । कृञोद्वितीयतृतीयशम्बबीजात कृषावितिडाच् ॥ यद्वा । शंब शब्द प्रतिलोमे । अनुलोमेनकृष्टंच पुन . प्रतिलोमेनकृष्टमित्यर्थ ॥

शम्बु पु॰ शम्बूके ॥ यथा । शम्बूकः शम्बुकोप्यथ . पूर्वं कास्तुसर्वदा । ककारेणविनाशेषो दृश्यतेग्रन्थविस्तरे ॥ इतिरुद्रचन्द्र ।

शम्बुक . पु॰ शम्बूके ॥ शमेर्बाहुलकादुकप्रत्ययेबुगागमश्च ॥ शम्बूकमपिशम्बुकमितिद्विरूपकोश ॥

शम्बुक पु॰ जलशुक्तौ ॥

शम्बूक ।पु॰ गजकुम्भान्ते । जलशुक्तिकायाम् ॥ शूद्रतापसे ॥ जलजन्तुविशेषे ॥ दैत्यविशेषे ॥ शङ्खे ॥ शाम्यति । शम॰ । उलूकादयश्चेत्यूकोबुकाच ॥ क्षुद्रशङ्खे ॥

शम्बूकपुष्पी । स्त्री॰ शङ्खपुष्प्याम् ॥

शम्बूका । स्त्री॰ जलशुक्तौ ॥

शम्भल । पु॰ ग्रामविशेषे ॥ तत्रच ष्टितीर्थानिसन्ति॰कल्कीचाविर्भूय सहस्रसमा स्थास्यति ॥

शम्भली । स्त्री॰ कुट्टन्याम् ॥ शसुखभलते । भलपरिभाषणे । पचाद्यच् । गौरादि ॥

शम्भु .। पुं॰ महादेवे । ईशे । शिवे ॥ परमेष्ठिन । ब्रह्मणि ॥ विष्णौ ॥ सिद्धे ॥ अर्हति ॥ वृत्ताकंपादपे ॥ शसुखभवति॰ भावयति भू॰ । मितद्र्वादित्वा डु ॥ यद्वा । शभवत्यस्मात् । भूसत्तायाम् । भूप्राप्तौवा । बाहुलकाद्पादानेपि॰ मितद्र्वादि ।

त्वाङ्ग । वर्णवृत्तविशेषे ॥ यथा ।
कुरुपाणिकङ्कणयुग्मालङ्कृतमयेरत्न
हारत्वम् । चरण सनूपुरस युक्तकु
रुकर्णराजत्ताटङ्कम् । रसनामा
शोभयमञ्जीरद्वयमेव शम्भुसद्वृत्तम्
। भुविकान्त गौरिचिरंसम्भावयतन्ना
गाधीशेनोक्तम् ॥ यथा । जयमायामा
नवमूर्त्ते दानवव शध्व सव्यापारौ ।
बलमायोद्रावणाहत्याकारबलङ्का
लक्ष्मीसंहारी । कृतकासध्वसनध
र्मीशसनगोगोपीगोपानन्दी । बलि
लक्ष्मीशासनलीलावामनदैत्यश्रे
णीनिष्कान्दी ॥

शम्भुतनय : । पुं० कार्त्तिकेये ॥ ग
णेशे ॥

शम्भुतिथि : । स्त्री० चतुर्द्दश्याम् ॥

शम्भुनन्दन : । पुं० कार्त्तिकेये ॥
गणेशे ॥ शम्भोर्नन्दन . ॥

शम्भुप्रिया । स्त्री० गौर्याम् ॥ आम
लक्याम् । शम्भो प्रिया ॥

शम्भुवल्लभम् । न० श्वेतकमले ॥
त्रि० शिवप्रिये ॥

शम्या । स्त्री० युगकीलके ॥ शम्य
तेऽनया । शम० । अघ्न्यादि ॥
यज्ञाङ्गभूतेशूलाकारेकाष्ठविशेषे ॥
दक्षिणहस्तगृहीततालविशेषे ॥ य
ष्ठ्याम् ॥ यथा । धनु : शतपरी
णाहीयामक्षमात्समन्तत : । श
म्यापाताक्षयीवापि० त्रिगुणोनग

रस्तु ॥ अत्रशम्यायष्टिरितिकुल्लू
कभट्ट : ॥

शम्याक्षेप : । पुं० भ्रमितक्षिप्तयष्टि
प्राप्तयावत्भूप्रदेशे । शम्यापाते ॥

शम्यापात . । पुं० शम्याक्षेपे ॥ य
था । भ्रामयित्वाबहुगुणयष्टिं क्षि
प्तासमाप्नुयात् । भुव प्रदेश याव
न्तशम्यापात : सउच्यते ॥

शम्याप्राश . । पुं० व्यासाश्रमे ॥ य
था । ब्रह्मनदीसरस्वत्यामाश्रम :
पश्चिमेतटे । शम्याप्राशइतिप्रोक्त
ऋषीणांसत्रवर्द्धनइति ॥

शय । पुं० शय्यायाम् ॥ पञ्चशा
खे । पाणौ । शेतेऽस्मिन्सर्वम् ।
शीङ्स्वप्ने । पुंसीतिघ . ॥ अच्
॥ निद्रायाम् ॥ पणे ॥

शयाल: । पुं० निद्रालौ । शयालौ ॥

शयथ । पुं० अजगरे ॥ निद्रालौ ॥
मरणे ॥ शेते । शीङ् शपिरुग
मिवञ्चिजीविप्राणिभ्योऽथ : । म-
त्स्ये ॥ वराहे ॥

शयनम् । न० शय्यायाम् ॥ निद्रा
याम् । करणानाम् पञ्चमे ॥ सुर
ते । मैथुने ॥ शीङोभावेल्युट्
॥ शय्यतेऽत्र । अधिकरणेल्युट् ।
॥ शयनेविशेषोयथा । श्वासान
ष्टौसमुत्तानस्तान्द्वि । १६ पार्श्वे
चदक्षिणे । ततस्तुद्विगुणान् ३२
वामे०पश्चात्स्वप्याद्यथासुखम्वा ॥

मदिशायामनलोनाभेरूर्ध्वेऽस्तिजन्तू नाम् । तस्मात्तु वामपार्श्वे शयीत भुक्तप्रपाकार्थम् ॥

शयनासनम् । न॰ शयनगृहे । आस्यतेऽस्मिन् । आस॰ । करणाधिकरणयोरिति ल्युट् । शयनस्यासनम् ॥

शयनीयम् । न॰ शय्यायाम् ॥ शेते॰ शय्यतेऽनया । कृत्यल्युटो बहुलमधिकरणे शीङोऽनीयर् ॥ त्रि॰ शयनयोग्ये ॥

शयनीयकम् । न॰ शय्यायाम् ॥

शयान । त्रि॰ शय्यानिहिताङ्गे । शय्यायांसुप्ते । शयाना भुञ्जतेयवनाः । भुजिक्रियाया शयनलक्षणम् । लक्षणहेत्वोः क्रियाया इति लटः शानच् ॥ निद्राकृते ॥ शयानन प्रबोधयेत् ॥ विश्रान्ते ॥

शयानक । पुं॰ अजगरे ॥ कृकलासे ॥ शेते । आनक । शीङ्भिय ॥

शयालु । पुं॰ वाहसे । अजगरे ॥ कुक्कुरे । शुनि ॥ मृतकान्तके । शृगाले । सियाल॰सयाल॰हू॰भा॰प्र॰ त्रि॰निद्रालौ । स्वप्नजि । निद्रालु॰हू॰भा॰प्र॰ । शयनशील । शीङोबाच्यहूल्यालुच् ॥

शयितः । पुं॰ शैलौ । श्लेष्मान्तके । वसन्तकुसुमे । त्रि॰ निद्रिते । निद्राणे । शेतेस्म । शीङ॰ । अकर्मकत्वात्कर्त्तरिक्त । निष्ठाशीङिति नकित्त्वम् । स्थिते ॥

शयितवान । त्रि॰ निद्रिते ॥ शेतेस्म । शीङोकर्मकर्त्तरिक्तवतु । निष्ठाशीङ स्विदिमिदिक्ष्विदिधृषद्भ्यतिन कित्त्वम् ॥

शयिता । त्रि॰ शयनकर्त्तरि ॥

शयु । पुं॰ वाहसे । अजगरे ॥ शेते । भृ॰मृ॰शी॰तृ॰चरि॰तनि॰धनि॰मि॰ मस्जिभ्यउ ॥

शयुन । पुं॰ अजगरे ॥ शेतेऽत्यर्थम् । अजि॰यमि॰शीङ्भ्यश्चेतिशीङउनम् ॥

शय्या । स्त्री॰ शयनीये । तूलिकाद्यास्तरणविशेषे ॥ शय्यतेऽत्र॰शेतेस्यांवा । सञ्ज्ञायांसमजेतिशीङः क्यप् । अयङ्यिक्ङितीतिशीङोयङादेश । खट्वादौ । गुम्फने । शब्दगुम्फे ।

शय्याजन्तु । पुं॰ मत्कुणे ॥

शर । पुं॰ तेजनके । गुन्द्रे ॥ बाणे । काण्डे ॥ दध्यग्रे । दधिसारे ॥ न॰ सलिले । नीरे । जले ॥ शृणाति॰ अनेनवा । शॄहिंसायाम् । अच्॰ ऋदोरबिवा ॥

शरजम् । न॰ हैयङ्गवीने ॥

शरजन्मा । पु॰ षडानने । स्कन्दे ॥ शरेषुजन्मास्य ॥

शरटः । पुं॰ सरटे ॥ शृणाति । शकादिभ्योऽटन् ॥ कुसुम्भशाके ॥

शरणम् । न० गृहे । रक्षितरि । व
धे ॥ रक्षणे ॥ शीर्य्यतेदुःखम
स्मिन्निति व्युत्पत्त्या प्रपन्नानामार्त्ति
हृति । यथा । शरणमहिममजन
नीनपितानसुतानसोदरानान्ये ।
परमशरणमिदमेवचरणममर्मूर्द्धन्दे
शिकन्यस्तमिति ॥ आश्रये ॥ घा
तके ॥ शृणाति । शृ हिंसायाम् ।
ल्युट् भावेवा ॥

शरणद । पुं० स्त्राणदातरि० ई
श्वरे ॥ त्रि० शरणदातरि ॥

शरणा । स्त्री० प्रसारण्याम् ॥

शरणागत । त्रि० आश्रिते ॥ शर
णापन्ने । शरणार्थिनि ॥ शरणे
आगतः ॥ शास्त्रेषुनिष्कृतिर्दृष्टा
महापातकिनामपि । शरणागत
हातुस्तुनदृष्टानिष्कृतिः क्वचित् ॥
शरणागतमार्त्तञ्चयोजहातिनराध
म । सएवनरकयातियावदाभूतस
म्प्लवम् ॥

शरणागतिः । स्त्री० शरणागमने ॥
साषड्विधायथा । आनुकूल्यस्य स
ङ्कल्पः प्रातिकूल्यस्यवर्ज्जनम् ।
रक्षिष्यतीतिविश्वासोगोप्तृत्ववरणं
तथा ॥ आत्मनिक्षेपकार्पण्ये ष
ड्विधाशरणागतिः ॥

शरणार्थी । त्रि० शरणागते । अनु
गते ॥

शरणार्पक । पुं० शरणापन्ने । स
ह्वारकीलिनि ॥

शरणिः । स्त्री० पथि ॥ शृ० । बा
हुलकादनि ॥ आवलौ ॥ शर
णिर्हिमामितिवेदभाष्यम् ॥ पृथ
व्याम् ॥

शरणी । स्त्री० पथि ॥ प्रसारण्याम्
॥ जयन्त्याम् । जयावृक्षे ॥

शरण्ड । पुं० धूर्त्ते ॥ शरटे ॥ भू
षणान्तरे ॥ पक्षिणि ॥ कामुके ॥
चतुष्पदे ॥

शरण्य । त्रि० आर्त्तस्यरक्षितरि ।
त्रातरि ॥ शरणेरक्षणेसाधुः ।
तत्रसाधुरितियत् ॥ शृणातिभय
वा । शृ० । शरुर्य्योस्त्वित्यन्यः ॥ श
रणमिववा । शाखादिभ्योयः ॥

शरण्या । स्त्री० शरणार्हायाम् । दुर्गा
याम् ॥ यथा । विषाग्निभयघोरे
षुशरण्यास्मरणाद्यतः । शरण्याते
नसादेवीमुनिभिः परिकीर्त्तिता ॥

शरण्युः । पुं० वारिदे ॥ वाते ॥

शरत्कम् । न० वृक्षप्रभेदे ॥

शरत्कामी । पुं० कुक्कुरे ॥

शरत्पद्मम् । न० सिताम्बुजे ॥

शरत्पर्व्व । न० दुर्गोत्सवे । कोजा
गरे ॥

शरत्पुष्पम् । न० आहुल्ये । क्षुपे ।
हलराख्ये । तगरे । मिस्त्रीफले ।
सुपुष्पे । पीतपुष्पे । काश्मीरेतरव
टनाम्नाप्रसिद्धे ॥ शारदपुष्पमात्रे ॥

शरत्‌०द्‌ स्त्री० हायने । संवत्सरे । वर्षे ॥ शृणाति भावान्‌ । शॄ हिंसायाम्‌ । शॄदृभसोऽदिः ॥ ऋतुविशेषे । आश्विनकार्त्तिकयोः । वर्षावसाने ॥ शीर्यन्तेऽस्यांपाकेनौषधयः । पूर्ववद्दिः ॥ तत्रजातस्य फलं यथा । नरः शरत्सम्भवकालजन्मा भवेत्सुकर्मा मनुजस्तरस्वी । शुचिः सुशीलो गुणवान्‌ सुमानी धनान्वितो राजकुलप्रपन्नः ॥

शरद . । त्रि० शरवर्षिणि ॥ शरं ददाति । डुदाञ्‌ • । आतश्चेतिकः ॥

शरदन्त । पुं० हेमन्ते ॥ शरदोऽन्तोऽस्मिन्‌ ॥

शरदा । स्त्री० सम्वत्सरे ॥ शरद्वती ॥ शरदो भाग्रुरितिटाप्‌ ॥

शरदिज . । त्रि० शरत्कालजाते ॥

शरदुदाशयम्‌ । न० शरत्कालिकेऽम्बरे ॥

शरधि । पुं० तूणे । तूणीरे ॥ शराधीयन्तेऽस्मिन्‌ । डुधाञ्‌० । उपसर्गेघोः किः । कित्वादाकारलोपः ॥

शरपर्णी । स्त्री० ओषधिविशेषे ॥

शरपुङ्ख । पुं० क्षोद्रशमी । सरफोका० हृ० भा० प्र० ओषधौ ॥ अस्यगुणायथा । शरपुङ्खोयकृत्प्लीहगुल्मव्रणविषापहः । तिक्तः कषायः कासास्रज्वरश्वासहरोलघुः ॥

शरभ । पुं० मृगेन्द्रविशेषे । महामृगे । अष्टापदे । महासिंहे । पर्वताश्रये ॥ अस्यलक्षणं यथा महाभारते । अष्टपादूर्द्ध्वनयनऊर्द्ध्वपादचतुष्टयः । सिंहस्तु समायातिशरभोवनगोचरइति ॥ शृणाति । शॄ० । कृशॄशलिकलिगर्दिभ्योऽभच्‌ ॥ करभे उष्ट्रे । वानरविशेषे ॥ हरौ । विष्णौ ॥ शीर्यन्तइति । शरा शरीराणि० शीर्णमाणत्वात्‌० तैप्रस्थगात्मतया भाति । भादीप्तौ । आतश्चेतिकः ॥ पतङ्गे ॥ वर्णवृत्तविशेषे ॥ यथा । द्विजवरतिलककलितमिहसगणकलयशरभमिदमतिसुखकरणम्‌ । कविवरसकलहृदयकृतहरणं फणिवरनरपतिवदनविहरणम्‌ ॥ अत्रहि जवरशब्दस्तु ष्कलगणपञ्चमरूपवाचकस्तद्रूपम्चतुर्लघुतेषां तत्केनचितयेनकलित द्वादशलघुभिरितियावत्‌ ॥ यथा । सकलकमलदलरुचिधरनयन अखिलजलनिधिफणिपतिफणशयन । दनुजविजयसुरपतिनतिमुदितोहरिरपहरतुदुरिततति मुदितः ॥

शरभङ्ग । पुं० गौतमवंशजे । रामायणप्रसिद्धे । मुनिविशेषे ॥

शरभङ्गाश्रम । पुं० तीर्थविशेषे ॥

शरभू । पुं० पार्वतीनन्दने । स्कन्दे ॥

शरभूमिज । पुं० गन्धके ॥

शरमय । त्रि० शरनिर्मिते ॥

शरमल्ल । पु० खगविशेषे । गूथ लर्क्षि ॥

शरलकम् । न० जले ॥

शरवणोद्भव । पुं० स्कन्दे ॥

शरवाणि । पु० शरमुखे । शरक्षेपिणि ॥ पदातौ ॥

शरबीजम् । न० धातुके । कौतुकाख्ये ॥

शरव्यम् । न० लक्ष्ये । शरविहिता र्हितम् । उगवादिभ्यो यत् ॥ यद्वा । शरान्व्ययति । व्येञ् संवरणे । सम्प्रसारिविभ्योड ॥

शराघात । पुं० प्रचलाके । वाणाघाते ॥

शराटि । ) शराडि । ) स्त्री० शरारिविहगे ॥

शराति: । स्त्री० शरारी । आडिविहगे ॥ शरमीरयतीति । अत० अञ्यतिभ्याञ्चेतीण् ॥

शराभ्यास । पुं० उपासने । शर शिक्षायाम् ॥ शरस्य शरमोक्षणस्य अभ्यास: ॥

शरारि । स्त्री० सुरगाङ्ग० इ० भा० प्र० ॥ पक्षिविशेषे । आटी ॥ शरमीरयति । ऋगतौ । अच् ॥

शरारु: । त्रि० हिंस्रे ॥ शृणाति । शृ० । शृवन्द्योरारु: ॥

शरालि: । स्त्री० शरारिपक्षिणि ॥

शरमीरयति । ऋ० । अच् । कपिलकादित्वाल्लत्वम् ॥

शरालिका । ) शराली ) स्त्री० शरालिविहगे ॥

शराव । पुं० कुडवद्वयपरिमाणे चतुःषष्टितोलके । सेर० इ० भा० प्र० । माणिकायाम् ॥ मृत्पात्रविशेषे । वर्द्धमानके । सरावा० इ० भा० प्र० शरावम् । शृ० । उदीरप् ॥ शृणाति वा । अच् ॥ शरशरादृत्वा० भवति । अवरणादौ । यथा० भज्वा ॥

शरावती । स्त्री० रामात्मजलवस्य राजधान्याम् ॥ नदीविशेषे ॥ इयं स्रोतः पूर्वाभिमुखी० अस्मादस्या: पूर्वार्यवस्थितो देश: प्राग्देश उत्तरापरस्यां व्यवस्थित उदग्देश: । तथा चोक्तम् । प्रागुदञ्चौ विभजते हंस: क्षीरोदकं यथा । विदुषां शब्दसिद्ध्यर्थं सा न: पातु शरावती ॥ शरा: सन्त्यस्याम् । मतुप् । शरादीनाञ्चेति दीर्घ: ॥

शरावर । पुं० कवचे ॥ तूणीरे ॥ यथा । शरावरौ शरै: पूर्णौ विध्वस्तौ पश्य लक्ष्मणेति रामायणम् ।

शरावाप । पु० धनुषि ॥

शरावार्द्धम् । न० कुडवपरिमाणे । द्वात्रिंशत्तोलके । आधसेर इ० भा० प्र० परिमाणे ॥

शराश्रय । पुं॰ तूणे ॥

शरासनम् । न॰ कोदण्डे । चापे धनुषि ॥ शरा अस्यन्तेऽनेन । अ सुक्षेपणे । करणे ल्युट् ॥

शरास्त्रम् । न॰ धनुषि ॥

शरि । पु॰ हिंस्रे ॥ शूलि ॥ शृणाति । शॄ॰ । इन् ॥

शारुः । पु॰ प्रसवे ॥ शृणाति शीवनम् । शॄ॰ । भ्रमृधृसृशॄभ्य उनिच् ॥

शरी । स्त्री॰ शुन्द्रायाम् । एरका तृणे । गौरादित्वान्ङीष् ॥

शरीरम् । न॰ कलेवरे । गात्रे । वपुषि । संहनने । वर्ष्मणि । विग्रहे । समवेतेन्द्रियकलापे॰ देवपितृमनुष्यादीनां देहे । जरायुजाण्डजोद्भिज्जाख्यभेदभिन्ने॰ पादादिभिरीरिते शीर्यते॰ तत्कृताचा हिनस्यतीति शरीरम् ॥ शरीरलक्षणं यथा । चेष्टेन्द्रियार्थाश्रयः शरीरमिति गौतम ॥ चचेष्टादिमिलिताश्रयत्वं न लक्षणम्॰ वैयर्थ्यात् । अपितु॰ चाश्रयपदस्य प्रत्येकमन्वयश्चेष्टाश्रयत्वादिलक्षणत्रयेतात्पर्यम् । चेष्टात्वञ्च॰ प्रयत्नजन्यतावच्छेदको जातिविशेषः । नच शरीरावयवेऽतिव्याप्तिः चन्त्यावयवित्वेन विशेषणात् । नच भिन्नक्रियशरीरेऽव्याप्तिः॰ तादृशेमानाभावात् । अतएवाह॰ इन्द्रियाश्रय इति । इन्द्रियाश्रयत्वञ्च॰ अवच्छेदकताख्यस्वरूपसम्बन्धविशेषेण॰ चक्षुषानुदेवदत्तीयमित्यादिप्रतीतेः । अर्थाश्रयत्वमित्यत्रार्थशब्देनरूपादिपरं । तदाश्रयत्वञ्च घटादावतिव्याप्तेः॰ । किन्तु सुखदुःखान्यतरपर । अतएव भाष्य॰ यस्मिन्नायतनेसुखदुःखयोः प्रतिसंवेदनं प्रवर्त्तते॰ स एषामाश्रयस्तच्छरीरमिति । वस्तुतस्त्वन्यतराश्रयत्वमपि न लक्षणम् । किन्तु॰ सुखाश्रयत्वदुःखाश्रयत्वचेति लक्षणद्वयेतात्पर्य्यम् । शरीरस्य तदाश्रयत्वमवच्छेदकतासम्बन्धेन हस्तादेरलक्ष्यत्वे त्वन्त्यावयवित्वेन विशेषणीयम्॰ स्वर्गिशरीरे नारकिशरीरे च यादौ सुखदुःखयोरन्यतराव्याप्ति । नचतच्छून्यखण्डशरीरेऽव्याप्तिः॰ सुखाद्याश्रयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्॰ तादृशजातिश्च मनुष्यत्वचैत्रत्वादि॰ कल्पभेदेन नरसिंहशरीरार्धभेदान्नरसिंहत्वजातिमादाय नरसिंहशरीरे लक्षणसमन्वय इति ॥ १ ॥ शृणाति॰ शीर्यते रोमादिनावा । शॄ॰ । कॄशॄपॄकटीतीरन् ॥ चर्मचादि ॥

शरीरज । पुं॰ रोगे ॥ कामे ॥ पुत्रे ॥ त्रि॰ देहजाते ॥ शरीरा

ष्ठात्री । जनी० । पञ्चम्यामिति ड ॥

शरीरभाक् । त्रि० देहभाजि । भक्ती षिव ।

शरीरभृत् पुं० प्राणिनि ॥ शरीर बिभर्त्ति । भृञ क्विप् ॥ विष्णौ । श्रीहरौ ॥ शरीरिणांशरीराणिअन्नरूपेणपोषयन् । प्राणरूपेणधारयन्० शरीरभृत् । खमायया शरीराणिबिभर्त्ति वा । डुभृञ्० । क्विपचेति क्विपतुक् ॥

शरीरयात्रा । स्त्री० वपुषः स्थितौ ॥

शरीरावरणम् । न० त्वचि । चर्म्मणि ॥ कायवेष्टने ॥

शरीरी । पु० जीवे । प्राणिनि ॥ शरीरमस्यास्ति । अतइनिठनाविति । इनिः ।

शरु । पु० कोपे । क्रोधे ॥ वज्रे ॥ शरे । बाणे ॥ आयुधे ॥ शृणाति । शॄ० । शॄस्वृस्निहीत्यु ॥

शरेष्ट । पु० आम्रे ॥

शर्करक । पु० मधुजम्बीरे ॥

शर्करजा । स्त्री० सिताखण्डे ॥

शर्करा । स्त्री० खण्डविकृतौ । सितायाम् । गुडायाम् । बृ० भा० प्र० ॥ मीनाण्डायाम् । सितोपलायाम । चीनी० बृ० भा० प्र० ॥ उपलायाम् । अश्मरुपाषाणादि ॥ मृत्तिकामिश्रक्षुद्रपाषाणेषु ॥ कर्पराशे ॥ मृत्कपालखण्डे ॥ शर्करान्वितदेशे । अश्मरी ॥ रोगप्रभेदे ॥ यथा । पच्यमानाश्मरीपित्तात्शोष्यमाणाच वायुना । विमुक्तकफसम्बाना क्षरन्ती शर्करामता ॥ शृणाति० शीर्यते वा शॄ० । शृ० करन् । शर्कराऽस्त्यत्र । देशेलुबिलचाविति मत्वर्थीयस्यालोपः ॥

शर्कराचल । पु० दानार्थकल्पिते शर्करामयगिरिविशेषे ॥

शर्कराधेनु । स्त्री० दानार्थशर्करानिर्म्मितायां धेनौ ॥

शर्करापुष्प । पु० सर्व्वद्रुमे ॥

शर्कराप्रभा । स्त्री० जिनमतनरकविशेषे ॥ यथा । रत्नशर्करावालुकापङ्कधूमतमप्रभा । महातमप्रभाचेत्यधोधोनरकभूमयः स्युरितिहेम० ॥

शर्करावान् । त्रि० सशर्करदेशे ॥ शर्करायाम् । शर्करिले । शार्करे शर्करास्त्यत्र । देशेलुबिलचाविति मतुप् ॥

शर्करावती । स्त्री० नदीविशेषे ॥

शर्करासप्तमी । स्त्री० वैशाखशुक्लसप्तम्याम् ॥

शर्करासव । पु० शर्करयाकृतेमासवविशेषे ॥

शर्करिल । त्रि० शर्करावतिदेशे ॥

शर्करायाम् । शाकरे । शर्कराऽस्त्य
र्थ । देशे लुबिलचौ चेतीलच् ॥
शर्करी । स्त्री॰ शर्करायाम् ॥
शर्करोदकम् । न॰ शर्करान्वितपानी
ये । रस॰ रसवत॰ इ॰ भा॰ प्र॰ । यथा
॥ जलेनशीतलेनैवघोलिताशुभ्रशर्क
रा । एलालवङ्गकर्पूरमरिचैश्चसमन्वि
ता ॥ शर्करोदकनाम्नैतत्प्रसिद्धं वि
दुषांमुखे । शर्करोदकमाख्यातंशुक्र
लंशिशिरंसरम् ॥ बल्यंरुच्यंलघुस्वा
दुवातपित्तप्रणाशनम् । मूर्च्छाच्छर्दि
तृषादाहज्वरशान्तिकरंपरम् ॥
शर्द्ध । पुं॰ अपानशब्दे ॥ शर्द्धनम्
। गृधुशब्दकुत्सायाम् । घञ् ॥
शर्द्धञ्जहः । पुं॰ माषे ॥ शर्द्धमपान
शब्दं जहाति । शीहाक॰ । वात
जननीतत्तच्छर्द्धं त्यजतिखश् । अरु
र्द्विषदितिमुम् । अहातिरत्रान्त
र्भावितण्यर्थः ॥
शर्द्धनम् । न॰ गुदशब्दे । पर्द्दे ॥
शर्म्मा । पुं॰ ब्राह्मणस्योपपदे ॥ न॰
सुखे । त्रि॰ तद्वति ॥ शृणात्यशुभ
म् । शॄ॰ । सर्वधातुभ्योमनिन् ॥
शर्म्मरः । पुं॰ वस्त्रविशेषे ॥
शर्म्मरा । स्त्री॰ दारुहरिद्रायाम् ॥
शर्म्मिष्ठा । स्त्री॰ दानवेन्द्रवृषपर्व
णोदुहितरि ॥
शर्य्या । स्त्री॰ रात्रौ ॥ इ॰वाचस्पति
शेष॰ ॥

शर्य्यातिः । पुं॰ वैवस्वतमनोः पुत्रे ॥
शर्व्वः । पुं॰ ईश्वरे । ईशाने । शि
वे ॥ शृणाति॰सर्वाः प्रजाः संह
रतिप्रलयेसंहारयतिवा । शृणात्य
सुरान्॰भक्तानांपापंवा । शॄ॰ ।
कृगृशॄदृभ्योवः ॥
शर्व्वरी । स्त्री॰ निशायाम् । यामि
न्याम् ॥ स्त्रियाम् ॥ शृणातिचेष्टा
। शॄ॰ । कृगृशॄवृञ्चतिभ्यःष्व
रच् । षित्त्वान्ङीष् । वनिपस्तु
॰ वनोरचेतिङीप्रौ ॥ हरिद्रायाम्
॥ वत्सरविशेषे ॥ तत्फलंयथा । क्व
चिद्वर्षतिपर्जन्योदेशेसंछिन्नमण्ड
लः । दुर्भिक्षंशर्वरीवर्षे व्यवहारो
विपर्य्ययः ॥ ३४ ॥
शर्व्वरीशः । पुं॰ निशापतौ । चन्द्रे ॥
शर्व्वला । स्त्री॰ तोमराख्ये । गँड़ासा
॰सब्बली॰इ॰भा॰प्र॰ ॥ हस्तप्रक्षे
पशस्त्रदण्डे । रायबांस॰इ॰गौ॰
भा॰ ॥
शर्व्वाणी । स्त्री॰ उमायाम् । कात्याय
न्याम् । गौर्य्याम् ॥ शर्व्वस्यस्त्री ।
इन्द्रवरुणभवशर्वेत्यादिना॰ङीषा
नुकौ ॥ शर्व्वाणीमध्यमाभिधे । म
ध्यमेश्वरस्थानदूतयः ॥
शर्शरीकः । पुं॰ हिंस्रे ॥ खले ॥ शृ
णाति । शॄ॰ । शॄपॄभ्यांद्वेचा
भ्यासस्येति॰ईकन्॰इत्वमभ्यास
स्यचकक् ॥

शल पुं॰ भृङ्गिणि ॥ चर्मप्रभेदे ॥ विधौ । ब्रह्मणि ॥ दीर्घायुधे । कुन्ते । विषाङ्कुरे ॥ उष्ट्रे ॥ शल्यो ष्ट्रूपे ॥ न॰ श्वाविल्लोम्नि । शलभ्याम् । शलति ॥ शलति । शल चलने । पचाद्यच् ॥

शलक । पुं॰ मर्कटे लूतायाम् । मकडी॰मकडा॰इ॰भा॰प्र॰ ॥

शलङ्गः । पु॰ लोकपाले ॥ लवणविशेषे ॥

शलभः । पुं॰ कीटविशेषे ॥ पतङ्गे । वृत्तिविशेषे । टिड्डी॰ टीडी॰ इ॰ दे॰ भा॰ ॥ शलति । शल॰ । कृशृशलिकलिगर्दिभ्योऽभच् ॥

शललम् । न॰ शली । श्वाविल्लोम्नि ॥ शलति । शलचलनसंवरणयोः ॥ वृषादित्वात्कलच्चित् ॥

शलली । पु॰ श्वाविधि ॥ शलल मस्यास्ति । इनि. ॥

शलली । स्त्री॰ शलली ॥ गौरादित्वाज्जातित्वाद्वाङीष् ॥

शलाका । स्त्री॰ शल्ये ॥ मदनद्रुमे ॥ सारिकायाम् ॥शल्लक्याम् ॥ छत्रपञ्जरादिकाष्ठयाम् ॥ तिलि इ॰ भाषा॰ शरे ॥ चालीक्यक्षिं कायाम् ॥ शलति । शल॰ । बलाकादयश्चेतिसाधु. ॥ धातुमय्यामञ्जनशलिकायाम् । सला इ॰ भा॰ ॥

शलाकापुरुष । पुं॰ नैवाणादैव पुरुषेषु ॥ तेचत्रिषष्टिसङ्ख्यापरिमिताः ॥ तत्रद्वादशचक्रवर्त्तिनः । चतुर्विंशतिर्जिनाः । नववासुदेवाः । नवबलदेवाः । नवप्रतिवासुदेवाः । इति ॥

शलाटः । पुं॰ शकटपरिमाणे ॥

शलाटुः । पु॰ बिल्वे ॥ मूलविशेषे ॥ चि॰ आमफले ॥ शलति । शलचलनसंवरणयोः । पचाद्यच् । अटति । अटगतौ । मृगय्वादित्वात्कु । शलश्चासावटुश्च॥

शलाभोलि । पु॰ उष्ट्रे ॥ इ॰ हि॰ रुद्र॰ ॥

शलालु । न॰ सुगन्धिद्रव्यविशेषे ॥

शली । स्त्री॰ श्वाविधि ॥

शल्कम् । न॰ त्वचि । वल्कले॥ शकले । खण्डे ॥ मत्स्यत्वचि ॥ शलति । शलचलने । शुकभीकेति कन् ॥ शल्कः । काष्ठखण्डे रिति वेदभाष्यम् ॥

शल्काली । पु॰ मत्स्ये । मीने ॥

शल्की । पुं॰ मीने ॥

शल्मलि । स्त्री॰ शाल्मलितरौ ॥ शलति । शल॰ । क्षिप् । मलति । मलधारणे । सर्वधातुभ्यइन् । शल्चासौमलिश्च ॥ इ॰ हि॰ ष ॥

शल्मली । स्त्री॰ शाल्मलिद्रुमे ॥

शल्य । पुं॰ मदनद्रुमे ॥ श्वाविधि ॥ नृपविशेषे । युधिष्ठिरमातुले ॥ सीम्नि ॥ शलाकायाम् ॥ बिल्व वृक्षे ॥ मत्स्यविशेषे ॥ न॰ चूडे ॥ क्षुरे । शरे । तोमरे । कुन्ते ॥ वंशशल्किकायाम् ॥ पापे ॥ दु॰ सहे ॥ दुर्वाक्ये ॥ वर्ष्मणि ॥ आयुर्वेदस्याङ्गविशेषे ॥ यथाहसुश्रुतः । तत्रशल्य नामविविध तृणकाष्ठपाषाणपांशुलोहलोष्टास्थि वालनखपूयास्रावान्तर्गर्भशल्योद्धर णार्थं यन्त्रशस्त्रक्षाराग्निप्रणिधानव्रण विनिश्चयार्थं चेति ॥ पुं॰न॰शल्के । तोमरे । सेन कू॰ भा॰ ॥ शल ति । चलगतौ । शल्याद्भिरत्वाद्य त् ॥ यद्वा । सान्नांसवर्यं सीत्या दिनाशलैर्यं . ॥

शल्यक । पु॰ मदनद्रुमे । राढे ॥ श्वाविसदृशेस्थूललोमवतिप्रा णिविशेषे ॥ तन्मांसगुणास्तु । श ल्यकः श्वासकासास्रशोषदोषत्र- यापहः । इति ॥

शल्यकण्टक । पुं॰ शल्यके ॥

शल्यलोम । न॰ शलल्याम् ॥

शल्यहृत् । वि॰ व्रणचिकित्सके । शल्यहर्त्तरि ॥

शल्यारि । पुं॰ धर्मपुत्रे । युधि ष्ठिरे ॥

शल्ल : । पुं॰ भेके ॥ न॰ त्वचि ॥

शल्लक । पुं॰ शोणद्रुमे ॥ न॰ त्वचि ॥

शल्लकी । स्त्री॰ श्वाविधि ॥ शल्य मृगे । अस्यामांसगुणायथा । श ल्यमांस गुरुस्निग्धशीतल कफपित्त जिदिति ॥ द्रुमविशेषे । गजभ क्ष्यायाम् । सुवहायाम् अस्या गुणास्तु । शल्लकीतुवराशीतापित्त श्लेष्मातिसारजित् । रक्तपित्तव्रण हरीपुष्टिकृत्समुदीरितेति ॥ शल ति । चलगतौ । क्वुन् । गौरा रादि । गौरादि ॥ सल्कुत्यत क्यते । लकआस्वादने । क्वुन् ।

शल्लकीद्रव । पु॰ सिह्लके ॥

शल्व । पुं॰ साल्वदेशे ॥

शव । पु॰ कुणपे । मृतशरीरे ॥ न॰ तोये जले ॥ शवगतौ । पचाद्यच् ॥

शवकाम्य । पुं॰ कुक्कुरे ॥

शवयानम् । न॰ काष्ठमञ्चे । शव वहनार्थं खट्वायाम् ॥

शवर । पुं॰ अरण्यचरम्लेच्छविशेषे ॥ अप्सु । पानीये ॥ शङ्करे । शा स्त्रविशेषे ॥ हस्ते ॥ न॰ जले ॥ चिन्हे ॥ बौद्धानांव्रतविशेषे ॥ शवति । शव॰ बाहुलकादर ॥ शवरातिवा रा॰ । क॰ ॥

शवरथ । पु॰ शवयाने । चरथो॰ कू॰ भा॰ ॥

शवपादप : । पुं॰ लोध्रे ॥

पिच्छ: ॥ शशच्छधरोधारक: कर्पूरे ॥

शशपानतीर्थम् । न० तीर्थविशेषे ॥

शशप्लुतकम् । न० स्तनादिस्थनखाघाते ॥

शशभृत् । पुं० विधौ । चन्द्रे ॥ शशं बिभर्त्ति । डुभृञ ० । क्विप् ॥

शशलोम । न० शशोर्णे ॥ शशस्यलोम ॥

शशबिन्दु । पुं० वासुदेवे ॥ राजान्तरे । चित्ररथपुत्रे ॥ चन्द्रे ॥ शशश्चबिन्दुस्त्वम्लक्षणमस्य ॥

शशशिम्बिका । स्त्री० जीवन्त्याम् ॥

शशस्थली । स्त्री० गङ्गायमुनयोर्मध्यदेशे । अन्तर्वेद्याम् ॥ ह्र० मुद्रित चि० शेष ॥

शशाङ्क । पुं० चन्द्रमसि । कर्पूरे ॥

शशाङ्कमूर्त्ति । पुं० चन्द्रे ॥ शशाङ्कामूर्त्तिर्यस्या ॥

शशाण्डुली । स्त्री० कर्कटीप्रभेदे । बहुफलायाम् । तण्डुल्याम् । अस्या: पर्यायायथा । शशाण्डुलीबहुफलातण्डुलीचचसम्भवा । क्षुद्राण्डाशीमशफलाधूम्रावृत्तफलातथा ॥ अस्या गुणा: । शशाण्डुलीतिक्तकटुर्व्वीमलाकण्ठयुक्तामधुराकफापहा । पाकेतुसाम्लामधुराविदाहकृत्कफं तुशुक्रारुचिकृद्दीपनी ॥

शशाद: । पुं० विकुक्षिसञ्ज्ञके० राजर्षिविशेषे ॥ श्येने ॥

शशादन । पुं० श्येनपक्षिणि ॥ शशमत्ति । अद० ॥ ल्यु० । ल्युट्०युञ्वा ॥

शशिकला । स्त्री० अतिशक्वरी १५ छन्दोविशेषे ॥ तल्लक्षणन्तु गुरुनिधनमनुलघुरिहशशिकला । यथा । मलयजतिलकसमुदितशशिकला० ब्रजयुवतिलसदलिकगगनगता सरसिजनयनहृदयसलिलनिधिं व्यतनुतविततरभसपरितरलम् ॥ शशिन षोडशांशे ॥

शशिकान्त । पुं० चन्द्रकान्तमणौ ॥ न० कुमुदे । कह्लारे । कैरवे ॥ त्रि० चन्द्रसमे ॥

शशिदेव । पुं० रन्तिदेवे ॥

शशिध्वज । पुं० भल्लाटपुरनृपे ॥ कल्किपुराणस्य २५ ऽध्यायप्रसिद्धे ॥

शशी । पुं० हिमांशौ । चन्द्रे । नक्षत्रेशे ॥ नक्षत्राणामध्येशशीविष्णोर्विभूति: ॥ सचजलमय: । यथा । सलिलमयेशशिनिरवेर्दीधितयोमूर्च्छितास्तमोनैशम् । क्षपयन्तिदर्पणोदरनिहिताइवमन्दिरस्यान्तः ॥ ति ॥ वर्णवृत्तप्रभेदे । नरेन्द्रोयदिस्यात् । शशीकथ्यतेतत् ॥ यथा । जनानन्दकन्द प्रियस्तामुकुन्द । ॥ यशमावत्यहितीयप्रभेदे० ॥ ऽऽ०

॥ अर्हज्जिनविशेषे ॥

शशिप्रभम् । न॰ मुक्तायाम् ॥ कुमुदे ॥ त्रि॰ चन्द्रसमदीप्तियुक्ते ॥

शशिप्रभा । स्त्री॰ ज्योत्स्नायाम् ॥

शशिभूषण । पु॰ चन्द्रशेखरे । शिवे ॥

शशिलेखा । स्त्री॰ चन्द्रमस कलायाम् । इन्दुलेखायाम् ॥ गुडूच्याम् ॥ बाकुच्याम् । सोमराज्याम् ॥ चन्द्रलेखाभिधेवृत्ते ॥ रसालाया' प्रभेदे ॥ यथा । शर्कराशुभ्रयुक्तेन शृतदुग्धघृतेनच पटपूताशिखरिणीशशिलेखेतिकीर्त्तिता ॥ शशिलेखाहिमाबल्यारुच्यापुष्टिप्रदालघु । वातपित्तहराश्रेष्ठ'महादाघविनाशिनी ॥

शशिलेखिका । स्त्री॰ शशिलेखायाम् ॥

शशिवदना । स्त्री॰ गायत्रीछन्द इ प्रभेदे ॥ शशिवदनाख्यौ । यथा । शशिवदनानांव्रजतरुणीनाम् । अधरसुधोर्मिंमधुरिपुरैच्छत् ॥ चन्द्रसममुखायांयोषिति ॥

शशिवाटिका । स्त्री॰ पुनर्नवायाम् ॥

शशिशेखरः । पुं॰ ईश्वरे । चन्द्रमौलौसदाशिवे ॥ बुद्धभेदे । चक्रसवरे । वज्रकपालिनि । वज्रटीके ॥

शशीर्षम् । न॰ शशलोमनि ॥ शशस्यऊर्णा॰शशोर्णम् । शशोर्णकारवंकारयामितिचन्द्रगोमिलिङ्गानुशासनात्॰क्लीबत्वम् ॥

शश्वत् । अ॰ आत्मप्रश्ने ॥ मङ्गले ॥ पुराकल्पे ॥ सदार्थे । नित्ये । निरन्तरे ॥ आभीक्ष्ण्ये ॥ पुनरर्थे ॥ शशतिगमनं वा । शश॰ । बाहुलकात्॰वत् ॥ सहार्थे ॥

शष्कुल । पुं॰ छिन्ती । करञ्जे ॥

शष्कुली । स्त्री॰ पिष्टविशेषे । सोहालीतिख्याते ॥ यथा । समितायाघृताक्तायाखोपचीकृत्वाचवेलयेत् । आज्यतामर्जयेत्सद्याशष्कुलोफेनिकागुणा ॥ कर्णरन्ध्रे ॥ यथाकर्णशष्कुल्यवच्छिन्नंनभएवश्रोत्रमिति ॥ सौरी॰इ॰भा॰प्र॰मत्स्ये ॥ तद्गुणायथा । शष्कुलीग्राहिणीहृद्यामधुरातुवराम्मृता ॥ गौरादित्वान्ङीष् ॥

शष्पम् । न॰ नवीनतृणे । बालतृणे ॥ पु॰ प्रतिभाहानौ ॥ शष्पते॰शुष्यतिवा । अशुद्धिसायाम्॰शुष शोषणेवा । खष्पशिल्पशष्पे तिपोनिपातनात्॰षत्वश्च ॥

शसनम् । न॰ परम्परावै । यज्ञार्थपशुहनने ॥ शसु॰ । भावेल्युट् ॥

शस्तम् । न॰ श्वः श्रेयसि । शिवे । क्षेमे ॥ त्रि॰ कल्याणयुक्ते ॥ स्तुते ॥ प्रशस्ते ॥ शस्यतेस्म । शंसुस्तुतौ । कर्मणिक्तः ॥

शस्तकम । न॰ अङ्गुलित्राणे ॥

शस्तकेशकः । त्रि॰ प्रशस्तकेशवात

शस्ताङ्ग. । त्रि॰ रम्यतनौ ॥ शस्तान्य
ङ्गान्यस्य ॥ पुं॰ अतीतकल्पीयेन्द्रे
दे ॥

शस्त्रम् । न॰ लौहे ॥ तीक्ष्णायसे । ख
ड्गे । आयुधे ॥ शस्त्रास्त्रयोर्न्दिशुभ्राणु
मौरित्यादौशस्त्रास्त्रयोर्भेदश्वन्ना ।
तथाहि । येनकरधृतेनहन्यते तच्छ
स्त्रं असवादि । येनप्रक्षिप्तेनहन्यते
तदस्त्रं काण्डादि पृथ्वनयोर्भेदः । ।
अपिच । अस्त्र मन्त्राभिमन्त्रितम्॰
शस्त्र तद्रहितदिति । शस्त्रतेऽनेन ।
शसुहिंसायाम् । दाम्नीतिष्ट्रन् ।
सर्वधातुभ्यष्ट्रनिवा ॥ अभिचिमि
दिशसिभ्य ' क्तोवा ॥ अप्रगीतस्त
ग्जाते ॥ हीवादिनाशस्तुमानवू
त्यर्थे ॥ अप्रगीतमन्त्रसाध्यायास्तु
तौ ॥ अप्रगीतमन्त्रसाध्यगुणनिष्ठगु
णाभिधान शस्त्रमितियाजकाभ्यां
शस्त्रार: ॥ पुं॰ खड्गे । तरवारौ ।

शस्त्रकम् । न॰ अयसि । लौहे ॥ श
स्त्रतेनेन । शसि . ष्ट्रन् । स्वार्थे
क . ॥

शस्त्रकर्म । न॰ वैद्यानांप्रधानेकर्म
विशेषे । तदष्टविधभवति । यथा
। छेद्य॰भेद्य॰लेख्य॰वेध्य॰मेष्यमा
हार्य॰ विस्राव्य॰ सीव्यमितिभेदे
दात् ॥

शस्त्रकोशतरु: । पुं॰ महापिण्डीत
रौ ॥

शस्त्रजीवी । पुं॰ शस्त्राजीवे ॥

शस्त्रधारणजीवक । पु॰ शस्त्राजीवे ॥

शस्त्रपाणि । पु॰ असादिशस्त्रहस्ते
॥ आततायिविशेषे ॥

शस्त्रभृत् । पु॰ शस्त्रधारिणि ॥

शस्त्रमार्ज: । पुं॰ असिधावके ।
शाणाजीवे ॥ शस्त्रमाष्टि । मृजूशु
द्धौ । कर्मण्यण् ॥

शस्त्रशास्त्रम् । न॰ अथर्ववेदस्योपवे
दे ॥

शस्त्रहत . । त्रि॰ शस्त्राघातेनमृते ॥

शस्त्रहस्त . । त्रि॰ शस्त्रपाणौ ॥

शस्त्राजीव । त्रि॰ काण्डपृष्ठे । आ
युधीये । ॰ आयुधिके ॥ शस्त्रमाजी
वति॰उपजीवति । जीव॰ । कर्म
ण्यण् ॥

शस्त्राभ्यास: । पुं॰ शस्त्रशिक्षायाम् ॥

शस्त्रायसम् । न॰ पिण्डायसे । द्वन्द्व
पात द्व॰भा॰ ॥

शस्त्री । त्रि॰ शस्त्रविशिष्टे ॥

शस्त्री । स्त्री॰ छुरिकायाम् ॥ ष्ट्रन् .
षित्वात्ङीष् ॥

शस्यम् । न॰ वृक्षादिफले ॥ शस्यते ।
शसु॰ । तकिशसिचतीतियत् ॥
तालव्यापिदन्त्याश्चशस्यशूकरपा
शव: ॥ पूर्वधान्ये ॥ यथा । शस्य
क्षेत्रगत प्राहु ' सतुषधान्यमुच्यते
। आमवितुषमित्युक्तं स्विन्नमन्नमु
दाहृतमितिस्मृति: ॥

शस्यध्वंसी । पुं॰ तुम्बवृक्षे । नन्दीद्रुमे ॥ त्रि॰ शस्यनाशके ॥

शस्यमञ्जरी । स्त्री॰ कणिशे । अभिनवनिर्गतधान्यादिशीर्षके ॥ शस्यस्य मञ्जरी ॥

शस्यशूकम् । न॰ यवाद्यग्रे । किंशारौ । शस्यस्य शूकम् ॥

शस्यसंवर । पुं॰ अश्वकर्णे । सालवृक्षे ॥ शस्यैः संव्रियते । वृञ्॰ । अप् ॥

शस्यसंवरण । पुं॰ दीर्घपर्णे । अश्वकर्णे । सर्जद्रुमे ॥

शस्यात । त्रि॰ शस्यभक्षके ॥

शस्यारु । पुं॰ शमीरे । अल्पशमीवृक्षे ॥

शांशप । पुं॰ असने । शिंशपाया विकारः । अञ् । देविकाशिंशपेत्यात्वम् ॥

शांशपायनः । पुं॰ मुनिविशेषे ॥

शाक । पुं॰ द्वीपविशेषे । शाके शाकद्रुमस्तुङ्गः शाकसंज्ञानिबन्धनमुच्यते ॥ कर्कशपत्रे महातिद्रुमे । क्रकचपत्रे । खरपत्रे । श्रेष्ठकाष्ठे । स्थिरसारे ॥ शक्तौ ॥ नृपविशेषे ॥ युधिष्ठिरविक्रमादित्यशालिवाहनादिशकनरपतीनामतीताब्दे ॥ वर्षे । गौराभाख्ये ॥ पुं॰ न॰ हरितके । शाकभार्गे ॥ मण्डूकपर्णी पालङ्क्यावास्तिकासाप्ययोदका । चाङ्गेरी चिल्लमोचा च कलम्बी शाकजातयः । वास्तुके । पत्रपुष्पादिषु । तत्र पत्रं निम्बादेः । पुष्पं कोविदारादेः । आदिपदात् फलं वार्त्ताकादेः । मूलं मूलकादेः । कान्दं शूरणादेः । अङ्कुरो वंशादेः । आह च । मूलपत्रकरीराग्रफलकान्दाधिरूढकम् । त्वक् पुष्पं कवकञ्चैव शाकं दशविधं स्मृतम् । अधिरूढकं तालबीजाङ्कुरास्थिमज्जादीति गौडाः । अन्ये तु जम्बीरजम्बूफलमूलादेः स्वेदाम्बुक्लिन्नाङ्कुरान्मन्यन्ते ॥ शक्यते भक्तोत्यनेन वा भोक्तुम् । शक् । घञ् ॥ यद्वा । शक्यति । शो तनूकरणे । बाहुलकात् कन् ॥ भावप्रकाशे तु षड्विधशाकमुक्तम् । यथा । पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा । शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरम् ॥ अथैतेषां गुणाः । प्रायः शाकानि सर्वाणि विष्टम्भीनि गुरूणि च । रूक्षाणि बहुवर्चांसि सृष्टविण्मारुतानि च ॥ शाकं भिनत्ति वपुरस्थि निहन्ति नेत्रं वर्णं विनाशयति रक्तमथापि शुक्रम् । प्रज्ञाक्षयं प्रकुरुते पलितञ्च नूनं हन्ति स्मृतिं गतिमिति प्रवदन्ति तज्ज्ञाः ॥ शाकेषु सर्वेषु वसन्ति रोगास्ते हेतवो देहविनाशनाय । तस्माद्बुधः शाकविवर्जनन्तु कुर्यात्तथाम्लेषु स एव दोषः ॥ अपि च । सामा

तीक्ष्णा व्यवायिसूक्ष्मश्चाभिष्यन्दिक टुपाकिच ॥

शाकयोग्यम् । न॰ धान्याके ॥

शाकराट् । पुं॰ वास्तूके ॥

शाकराज । पुं॰ वास्तूके

शाकरुण्ड । पुं॰ ग्रन्थिफले ॥

शाकल । पुं॰ उदीच्यग्रामे ॥ वा ह्लीकग्रामे ॥

शाकल्य । पुं॰ ऋषिविशेषे ॥ श कलस्यगोत्रापत्यम् । गर्गादित्वा द्यञ ॥

शाकवालेय । पुं॰ ब्रह्मयष्ट्याम् ॥

शाकविल्व । ) पुं॰ वार्त्ताकौ ।
शाकविल्वक । )

शाकवीर । पुं॰ जीवशाके ॥ पुन र्नवायां ॥

शाकवृक्षः । पुं॰ शाके । खरप त्रे । अर्जुनोपमे । शाकचपत्रे ॥

शाकशाकटम् । न॰ शाकक्षेत्रे ॥ शाकानाभवनङ्क्षेत्रम् । भवने क्षेत्रे शाकटशाकिनाविति शाक- ट ॥

शाकशाकिनम् । न॰ शाकशाकटे ॥ शाकानाम्भवनङ्क्षेत्रम् । भवने क्षेत्रेशाकटशाकिनाविति शाकि नः ॥

शाकश्रेष्ठ । पुं॰ न॰ वास्तूकशाके ॥

शाकश्रेष्ठा । स्त्री॰ जीवन्त्याम् । वा र्त्ताकौ ॥ डिण्डीशुपे ॥

शाकाख्यम् । न॰ पत्रपुष्पादौ । य था मूलपत्रकरीराग्रफलकाण्डा धिरूढकम । त्वक्पुष्पकवकञ्चै तिशाकन्दशविधस्मृतम् ॥ पुं॰ शाकवृक्षे । अतिपत्रे । श्रेष्ठका ष्ठे । स्थिरसारे । गृहद्रुमे । सा गौनदृ॰ गो॰ भा॰ ।

शाकाङ्गम् । न॰ मरिचे ॥

शाकाम्लम् । न॰ वृक्षाम्ले ॥

शाकाम्लभेदनम् । न॰ चुक्रे । का ञ्जिकप्रभेदे ॥

शाकालाबू । स्त्री॰ राजतुम्ब्याम् ॥

शाकिनम् । न॰ महच्छाकवति । महच्छाकशाकी॰ तद्वति ॥ मत्व र्थेपामादित्वान्नः । शाकोपलालो द्ट्रणाङ्क्षत्त्वञ्च ॥

शाकिनी । स्त्री॰ दुर्गायाश्चनुचरीवि शेषे ॥ शाकयुक्तायाभूमौ ॥ यथा । मर्कट शाकिनीगावोआलमस्य न्दनश्चनम् । अनूपपर्वतोराजादु र्भिक्षेनवसन्नय ॥ मर्कटोधान्या दिश्वहनद्वारेणोपजीव्य । पत्रपुष्प फलादिषड्विधशाकयोगात्॰ शा- किनी॰ गृहवाटिका॰ शाकाद्या हरणेन । गावो । दुग्धादिना । जालं । मत्स्याद्याहरणेनप्रस्यन्द नस्तस्थानाऽत्याग॰ऋष्यादिलाभेन॰ व्ययाधिक्यनिरसनाच । वनफलपु ष्पाद्याहरणेन । अनूपंबहूदकदे

श • समूयालशालूकाद्याहरणे
न । पर्वतोगैरिकम्हदाद्याहरणेन ।
राजाभैषादिनेत्यर्थं ॥

शाकी । पु॰ मत्स्यके

शाकुन . । पुं॰ न॰ पशुपक्ष्यादिरूप
शकुनद्वारामनुष्यशुभाशुभनिश्चाय
कग्रन्थे । वसन्तराजादौ ॥

शाकुनि । त्रि॰ पक्षिजीविनि ॥

शाकुनिक । पुं॰ जीवान्तके । पक्षि
हन्तरि ॥ शकुनान् हन्ति । पक्षिम
त्स्ये । त्यन्तपर्यायस्यापिग्रहणाट्ठक ॥

शाकुनेय : । पु॰ उलूके । पिङ्गले ।
क्षुद्रपेचके ॥ शकुनेरपत्यम् । शुभ्रा
दित्वाड्ढक् ॥

शाकुन्तलेय । पु॰ भरते ॥ शकुन्तला
या अपत्यम् । स्त्रीभ्य ढक ॥

शाकुलिक . । पुं॰ मात्स्यिकविशेषे
शकुलान्हन्ति । पक्षिमत्स्येति
ठक् ॥

शाकर । पुं॰ अनडुहि ॥

शाक्त : । त्रि॰ सर्वदेवमध्या शक्त्यु
पासके ॥ शक्तिर्देवताऽस्य । साऽस्यदे
वतेत्यण् ॥ यथा । शाक्ता एव द्विजा
सर्वेनशैवानचवैष्णवा : । उपासते
यतोदेवीं गायत्रींपरमाक्षरीम् ॥ श
क्त्युपासनानन्तर मन्योपासननिषि
धोयथा । अस्यास्त्वाराधनंकृत्वानान्य
स्याराधनंचरेत् । अन्यस्यस्मरणा
द्देवियोगिनीशापमाप्नुयादितिदिलिग

वंस्यतन्त्रम् ॥ देवीभक्तापराधस्तु ख
ड्गातृत्वमुक्त मुण्डमालातन्त्रे ।
शाक्तान्हिंसन्तिगर्जन्तिनिन्दन्ति
वहुजल्पका । छिनद्मितेषादेवि
शीर्षाणिसिंहरवसमेति ॥ गर्ज-
न्ति॰ कुप्यन्तियुध्यन्तिवेत्यर्थ ॥

शाक्तिक । त्रि॰ शक्त्युपजीविनि ॥
शक्त्याजीवति । वेतनादित्वाट्ठ
ञ ॥

शाक्तीक . । त्रि॰ शक्तिहेतिके । श
क्तियोधिनि ॥ शक्तिः प्रहरणम
स्य । शक्तियष्ट्योरीकक् ॥

शाक्य . । पु॰ बुद्धे ॥ शकोऽभिज
नोऽस्य । शण्डिकादिभ्योञ्य ॥
शाक्यमुनौ । भीमवत् ॥

शाक्यमुनि । पु॰ शौद्धोदनौ ।
मायादेवीसुते ॥ शकोऽभिजनो
ऽस्य । शण्डिकाभ्योञ्य ॥ य
द्वा । शाकवृक्षप्रतिच्छन्नंवासयस्मा
च्चक्रिरे । तस्मादिक्ष्वाकुवंशास्ते
शाक्याइतिभुविस्मृता इतिसुन्द
रानन्दचरितागमे ॥ अयमर्थ . ।
केचनेक्ष्वाकुवंश्याराजपुत्रा . पि
त्राज्ञयानिर्वासिताः सन्तः . गौतमवंश
स्यकपिलस्याश्रमे॰ शाकच्छन्नेवस
तिकृतवन्तइतितेतेशाक्या ।
शाकेभवा : । दिगादित्वाद्यत् । त
द्वंशावतीर्णोमुनि । शाक्यश्चा
सौमुनिश्चेति॰ शाक्यमुनि . ॥

शाक्यसिंह । पुं० सर्वार्थसिद्धे । शाक्यमुनौ ॥ शाक्य सिंह इव । उपमितव्याघ्रेतिसमासः ॥

शाक्री । स्त्री० दुर्गायाम् ॥

शाख । पुं० क्षितौ । करञ्जे ॥

शाखा । स्त्री० पक्षान्तरे ॥ बाहौ ॥ ग्रन्थभेदे ॥ अन्तिके ॥ द्रुमाङ्गे । लतायाम् ॥ वेदभागे । ऋग्वेदादिकामेनवेदाश्चत्वारः । तत्रैकविंशति शाखा ऋच । नवाधिकशतशाखा यजुष । सहस्रशाखा साम्न । पञ्चशाखाऽथर्वण । अतोऽत्र छन्दोगपरिशिष्टे । स्वशाखाश्रयमुत्सृज्य परशाखाश्रयस्तु यः । कर्त्तुमिच्छति दुर्मेधा मोघं तत्तस्य यत्कृतम् ॥ यन्नाम्नातं स्वशाखायां पारक्यमविरोधियत् । विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवदिति ॥ बह्वृचं वा स्वगृह्योक्तं यस्य यत्कर्मकीर्त्तितम् । तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवेदिति तत्रापि विशेषः ॥ शाखति । शाखृ व्याप्तौ । पचाद्यच् । टाप् । यद्वा । शेतेऽस्यां पक्षी । शीङोक्खस्वश्च त्वत । ह्रस्वावयवश्चेति दशपाद्यनुसारिणा ॥

शाखाकण्ट । पुं० स्नुहीवृक्षे ॥

शाखानगरम् । न० यन्मूलनगरादन्यत्पुरं तस्मिन् । मुख्यपुराश्रयपुरे । अभिष्यन्दिरमणे । यथा । आरभ्य मूलनगरादपरनगरं हि यत् । तदभिष्यन्दिरमणं शाखानगरमित्यपि ॥ इतिशब्दरत्नावली ॥ तत्स्थानी यस्य मूलनगरस्य शाखिनगरम् ॥

शाखापित्तम् । न० पाणिपादासमूलदाहे ॥

शाखापुरम् । न० शाखानगरे ॥ शाखिपुर ॥

शाखामृग । पुं० कपौ । वलीमुखे । वानरे ॥ शाखाचरो मृगः पशुः । शाकपार्थिवादिः ॥

शाखामृगाधिप । पुं० सुग्रीवे । शाखामृगाणामधिपः ॥

शाखाम्ला । स्त्री० वृक्षाम्लायाम् ॥

शाखारण्ड । पुं० स्वशाखापरित्यज्य शाखान्तराध्ययनकर्त्तरि । अन्यशाखकी । स्ववेदशाखामुत्सृज्य परशाखाश्रयकर्मकारिणि ॥

शाखारथ्या । स्त्री० पीडमहत्तप्रस्थे पथि । यथा । धनूंषि चैव चत्वारि शाखारथ्यास्तु निर्मिता । त्रिकाराश्चोपरथ्यास्तु द्विकाराश्चोपरथ्यका ॥ इतिदेवीपुराणम् ॥

शाखाल । पुं० वानीरवृक्षे ॥

शाखाशिखा । स्त्री० मूलादारभ्य यावद्गतायां लतायाम् । मरीचे ॥

शाखि । पुं० तुरुष्के । तुरकस्तान् इ० भा० प्र० देशे ॥ शा

खृ० । इन् ॥

शाखी । पु० पादपे ॥ वेदे ॥ तुरुष्काख्यजने ॥ राजभेदे ॥ शाखाऽस्यास्ति । व्रीह्यादित्वादिनि ॥ यद्वा । अवश्यं शाखति । शाखृ० । आवश्यकेतिणिनि ॥

शाखोट । पु० सहोड इ० भा० प्र०हच्चे । पीतफले ॥ यथास्यपर्यायगुणा । शाखोट पीतफलको भूतावास खरच्छद । शाखोटोरक्तपित्तार्शोवातश्लेष्मातिसारजिदिति ॥

शाखोटक । पु० शाखोटे ॥

शाङ्कर । पु० बलीवर्दे ॥ न० छन्दोभेदे ॥ त्रि० शङ्करसम्बन्धिनि । माहेश्वरे ॥ शङ्करप्रोक्ते ॥ यथा । आगमोक्तविधिंहित्वाय शाङ्कं कुरुते नर । आगतद्विफलसोपिपितृभिर्नरकंव्रजेत् ॥ तत्तोयशोणितसमपिण्डोमलमयोभवेत् । तस्मान्मर्त्यः प्रयत्नेनशाङ्करमतमाश्रयेत् ॥ शङ्करस्यायम् शङ्करेणप्रोक्तं वा । अण् ॥

शाङ्करि । पु० स्कन्दे ॥ गणेशे ॥

शाङ्करी । स्त्री० देवीविशेषे ॥ श्रीगिरीशाङ्करीस्म तेतिदेवीशाङ्करीतुमङ्गाकाले०तिचदेवीगीता । अथ शङ्करीशाङ्करीत्यंन्यमेनपाठेगीतायांबोध्य : ॥

शाङ्कुची । स्त्री० शङ्कुयादसि ॥

शाङ्खिक । पु० काम्बविके । शङ्खवलयादिकर्त्तरिजातविशेषे ॥ शङ्खशिल्पमस्य । शिल्पमितिठक ॥

शाङ्गुष्ठा । स्त्री० गुञ्जायाम् ॥ इ० र० माला ॥

शाट । पु० वस्त्रविशेषे । शाटके ॥ शटेर्कर्म्मणिघञ् ॥

शाटक । पु० न० पटप्रभेदे ॥ यथा आजानुलम्बितमलीमसशाटकानां भिक्षार्थिप्रथमयाचितभाटकानाम् । पुत्रार्थिप्रियतमैकवराटकानाञ्च द्विव पततुमूर्द्धिकराटकानाम् ॥ स्वार्थेक : ॥

शाटिका । स्त्री० शाट्याम् ॥

शाटी । स्त्री० शाटके । स्त्रीपरिधेयवस्त्रे । साडी०इ०भा०प्र० ॥ शाट्यते । शटश्लाघायाम्चुरादि । सर्वधातुभ्यइन् । कृदिकारादितिङीष् ॥

शाट्यायन । पु० मुनिविशेषे ॥ न० प्रकृतकर्मवैगुण्यप्रशमनार्थेहोमे ॥ नायहोम : सर्वसम्मत : निर्मूलत्वात् । समूलत्वेशाखान्तरीयत्वमितिगौडा ॥

शाठ्यम् । न० कुसृतौ । कपटे । व्याजे । निकृतौ । शठतायाम् ॥ शठति । शठकैतवे । पचाद्यच् । शठस्यकर्म । ब्राह्मणादित्वात्ष्यञ् ॥

यद्वा । शठनम् । ऋच्छतीत्यर्त्तृ ॥

शाण । पु० माषचतुष्टये । निष्के । टङ्के ॥ खड्गादितीक्ष्णीकरणयन्त्रे निकषे । कषे । कसौटी० इ० भा० प्र० पाषाणे ॥ शण्यते । शणु दाने । अकर्त्तरीतिघञ् ॥ श्य शिला । शीतनूकरणे । बाहुलका स ॥ न० शणनिर्मितवस्त्रे ॥

शाणकम् । न० शणपुष्पे ॥ तच्छाकप्रकारोयथा । सुस्विन्नं शाणकपुष्पं तक्रे तैलेविपाचितम् । हिङ्गुना वासितंसम्यग्जीर्णं नावचूर्णितम् । शणपुष्पं सरंस्वल्पमस्रप्रदरनाशनम् । मधुरंरुचिरपाकीकासघ्नंविष्टम्भकारकम् ॥

शाणाजीव । पु० असिधावके । शस्त्रमार्जे ॥

शाणिः । पुं० पट्टवस्त्रे ॥

शाणित । त्रि० तेजिते । निशिते ॥

शाणी । स्त्री० प्रावरणान्तरे । शणसूत्रमय्यांपट्टिकायाम् ॥ यथा । शाणीप्रायाधिवस्त्राश्चधर्मीप्रायामलीकृता । शूद्रप्रायास्तथावर्णाभविष्यन्तिकलौयुगे ॥ इ० वि० पु० शाणी० शणसूत्रमयीपट्टिका० तत्तुल्यानिवस्त्राणीतितट्टीका ॥ छिद्रवस्त्रे ॥ हस्तकटाक्षादिसूचनायाम् । सैन० इ० भा० ॥ शणस्य विकारः । तस्यविकारइत्यण् । टिड्ढेतिङीप् ॥

शाण्डकी । स्त्री० मण्डलेशस्थानस्थायादेवतायाम् ॥

शाण्डिल्य । पु० गोत्रभक्तिसूत्रयोः कर्त्तरिमुनिविशेषे ॥ शाण्डिल्यो मुनिरम्लेषुमान्योतीवप्रकीर्त्तितः ॥ पावकविशेषे ॥ मालूरे । बिल्ववृक्षे ॥ शण्डते । शडिरुजायांसङ्घाते च । सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्यइलच् । शण्डिलस्यमुनेर्गोत्रापत्यम् । गर्गादिभ्योयञ् ॥ शाण्डिल्यइवमान्यत्वाद्वा ॥

शाण्डिल्यविद्या । स्त्री० मनोमयात्मनउपासनायाम् ॥ शाण्डिल्येन मुनिनादृष्टाविद्या ॥

शात । न० सुखे ॥ त्रि० दुर्बले । निशिते ॥ सुखान्विते ॥ शायतेस्म । शो० । क्तः । शाच्छोरन्यतरस्यामितिपक्षे इत्वाभावः ॥ श्यतिदुःखम् । शावतेवा । बाहुलकात्तन् ॥

शातकर्णिः । पुं० मुनिविशेषे ॥

शातकुम्भ । पुं० अश्वमारके । करवीरे ॥ न० काञ्चने ॥ शतकुम्भेपर्वतेभवम् । अण् ॥

शातकौम्भम् । न० काञ्चने । स्वर्णे । शतकुम्भेपर्वतेभवम् । तत्रभवइत्यण् । अनुशतिकादीनाञ्चेत्युभय

शान्ता | शांतिः

समस्तोपाधित्वादिच्छेपाद्विविकार शून्ये • आत्मनि ॥ रागादिदोषरहिते । निर्वृत्तिकतयानिरुद्धेन्द्रियव्यापारे • संस्कारमात्रशेषे • चित्तविच्छेपरहितेयतौ च तृष्णारहिते ॥ सर्वविशेषप्रत्ययस्तमितरूपे • चविक्रिये • सर्वान्तरे • सर्वबुद्धिप्रत्ययसाक्षिणि • मुख्यआत्मनि ॥ आकाशादिसृष्टु लिसुसत्त्वप्रधानतया • वैचिद्वृशी या शान्ता . सुखा . प्रकाशका . लघवस्तेशान्ता उच्यन्ते ॥ शाम्यतेस्म । शम० । क्वान्त । क्त । वादान्तशान्तेतिसाधु . ॥ निहत्ते ॥ यथा • शान्तोरोग ॥

शान्तनव . । पु • भीष्मे ॥ शन्तनोरपत्यम् । अण् ॥

शान्तनु । पु • कुरुवंशजेनृपविशेषे । प्रातीपे । प्रतीपभूपतनये ॥ यो यगङ्गायाभीष्मजनयामास ॥ अय कराभ्यास्पृशतिजीर्णंयौवनमेप्यति । शान्तिमाप्नोतिचेत्याख्याकर्मणो तेनशान्तनु ॥ ललितिकातीर्थे ॥

शान्तम् । अ • वारणे ॥

शान्तमाना । त्रि • नियतचित्ते । वशीकृतमनसि ॥

शान्ता । स्त्री • दुर्गायाम् ॥ सात्त्विक्यांमनसोवृत्तौ । आमलक्याम् ॥ शमीप्रभेदे । शुभायाम् । भद्रायाम् । अपराजितायाम् ॥ श

मीवदृश्यागुणा ॥

शान्तारुच : पु • अयायाम् ॥

शान्ति . । पु • वृत्ताईद्विशेषे ॥ जिनवक्रवर्तिविशेषे ॥ द्वममन्वन्तरीयेइन्द्रे ॥

शान्ति . । स्त्री • मङ्गले । भद्रे ॥ सम्यूजकानांकुलपालकानांयतीन्द्रयोगीन्द्रतपोधनानाम् । देशस्य राष्ट्रस्यकुलस्यराज्ञ करोतुशान्तिं भगवान्कुलेश ॥ विषयेभ्यइन्द्रियोपरतौ । शमथे । शमे । तृष्णाक्षये ॥ तल्लक्षणं यथा । यत्किञ्चिद्वस्तुसम्प्राप्यस्वल्पं वायदिवाबहु । यातुष्टिर्जायतेचित्तेशान्तिः सागद्यतेबुधैरिति ॥ सुशीलस्यभार्यायाम् । यथा । शान्तिलंब्धाचभार्येद्वेसुशीलस्यचपूजिते । याभ्यांविनाजगत्सर्वमुन्मत्तमिवनारदेति ॥ कामक्रोधाद्यभावे ॥ सर्वसंसारोपरतौ । मुक्तौ । सहेतुकस्वसंसारस्योपशमे ॥ सर्वतस्थुपरतौ ॥ विषयभोगस्पृहानिवृत्तौ । अन्त . करणस्योपशमे ॥ सकार्याविद्यानिवृत्तिरूपायांवेदान्तवाक्यजन्याया • ब्रह्मात्मैक्यसाक्षात्कृतौ ॥ सर्वलौकिकालौकिककर्मविच्छेपनिवृत्तौ ॥ बाधितानुवृत्त्याऽविद्याकार्यनिवृत्तौ । अविद्यातत्कार्यनिवृत्तिरूपायांमुक्तौ ॥

दुर्गायाम् ॥ यथा । उत्पत्तिस्थिति नाशेषुरजआदिगुणामता । सर्वज्ञा सर्वेश्वत्वाच्छान्तित्वाच्छान्तिरुच्य ते । गौरीविशेषे ॥ अनर्थनिवृत्ती ॥ धर्मद्वारायद्दौस्थ्यादुःखप्रादि सूचितेविज्ञानिष्टैतुदुरितनिवृत्ती ॥ ययाशस्त्रप्रहाराणांकवचंविनि वारकम् । तथादैवोपघातानांशा न्तिर्भवतिवारणम् ॥ अपिच । रो गकुष्ठायस्रादीनांनिरासःशान्ति रीरितेति ॥ शमनम् । शम० । स्त्रियांक्तिन् । अनुनासिकेतिदीर्घः ॥
शान्तिकामः । त्रि० शान्त्यभिलाषि णि ॥ श्रीकाम . शान्तिकामोवाय श्चयज्ञ समाचरेत् । वृष्ट्यायुःपुष्टि कामोवातथैवाभिचरन्नपि ॥
शान्तिगृहम् । न० यज्ञान्तेशान्त्या लये । शान्तिकुम्भजलैस्नानगृहे ॥ आथर्वणे । द्र०ह०मद्र० : ॥
शान्तिमार्गः । पुं० दुस्तर्कादिरहिते वर्त्मनि ॥
शापः । पुं० आक्रोशे । कृदमनिष्टमे षामस्त्वित्येवरूपे०अभिशापे ॥ शा पदानात्पयः च्चयः ॥ दिव्ये । श पथे ॥ शपनम् । शप० । घञ् ॥ निन्दायाम् ॥ मिथ्याभिशंसने ॥ अनिष्टाचरणे ॥
शापाक्षः । पुं० मुनौ ॥
शाफरिकः । त्रि० मात्स्यिकविशेषे ॥

शब्दरान् इन्ति । पश्चिमत्वे तिठक ॥
शाब्दः । त्रि० शब्दजन्ये ॥ शब्दसम्ब न्धिनि ॥ शब्दे जातः ० शब्दे भवः ० शब्दस्यायथा । अण् ॥
शाब्दबोधः । पुं० शब्दार्थज्ञाने ॥ न्यायमते० पदार्थज्ञानजन्यज्ञाने ॥ तत्रकरण पदज्ञान । तत्रकारण पदशक्तिज्ञानम् । कदाचिल्लक्षणा ज्ञानम् । एवमाकाङ्क्षायोग्यता सन्नितात्पर्यज्ञानञ्च । यथा । पद ज्ञानन्तुकरणद्वारंतत्रपदार्थधीः । शाब्दबोधःफलंतत्रशक्तिधीः सहकारिणीति० भा० प० ॥ सं सारमोहनाशायशाब्दबोधोनहिक्ष म । ननिवर्त्ततितिमिरकदाचिद्दी पवार्त्तयेतिकुलार्णवे १ उल्लासः ॥
शाब्दिकः । पुं० वैयाकरणे ॥ शब्द करोति० प्रकृतिप्रत्ययविभागेनोत्पा दयति० अर्थेवार्थे० शब्ददुर्करो तीतिठक् ०अभिधानस्वाभाव्यात् । तेनेहन । शब्दंकरोतिवर्वरः ॥ आदिशाब्दिकायथाकविकल्पद्रुमे । इन्द्रश्चन्द्रः काशकृत्स्नापिश लीशाकटायनः । पाणिन्यमरजैने न्द्राजयन्त्यष्टादिशाब्दिकाः ॥ इ ति ॥
शाब्दीभावना । स्त्री० पुरुषप्रवृत्त्यनुकू लव्यापारविशेषे ॥ यथा । यजेत० इत्यत्राख्यातांशयम् ० यजिधातु प्र

त्ययस्य । तत्रप्रत्ययेप्यस्य' अंशद्वयम् ।
आख्यातत्वं । लिङ्त्वञ्च । तत्रा
ख्यातत्वं दशलकारेषुविद्यते । लिङ्
त्वञ्चकेवलेलिङ्येव । तत्राख्यातत्व
लिङ्त्वाभ्याभावनैवोच्यते । साहि
द्विधा । शाब्दीभावना । आर्थीभा
वना चेति । तत्रशाब्दीभावनालि
ङ्त्वांशेनोच्यते । लिङ्श्रवणे । अ
यमांप्रवर्त्तयति । मत्प्रवृत्त्यनुकूलव्या
पारवानयमितिनियमेनप्रतीयमा
नत्वात् । यच्चयस्मात्प्रतीयते । त
त् । तस्यवाच्यम् । यथागोत्वम्
। सचप्रवृत्त्यनुकूलोव्यापारविशेषो
लौकिकपुरुषनिष्ठोभिप्रायविशेषः ।
वेदेतुपुरुषाभावाल्लिङादिशब्दनिष्ठ
एवशाब्दीभावनेत्युपदिश्यते । सा
चशाब्दीभावना । अंशत्रयमपेक्षते ।
साध्य । साधन । मितिकर्त्तव्यताञ्च
। साध्यंस्वर्गादि । साधनंलिङादिज्ञा
नञ्चकरणत्वेनान्वयत्वम् । इतिकर्त्त
व्यताप्राशस्त्यज्ञानमितिकर्त्तव्यता
त्वेनान्वीयते । यथोक्तमेवएतत् ।
यस्यक्रियतेयत प्रयाजानुयाजाद्य
तिप्रयाजादिस्तुतिज्ञानम् । तथा
हि । भाव्याकाङ्क्षायां । किंभाव
येत । स्वर्गंभावयेत् । कारणाका
ङ्क्षायांकेनभावयेत् । यागेनभाव
येत् । कथम्भावाकाङ्क्षायायत्
सन्निधौपठितमश्रूयमाणफलञ्च

याजातंतदेवोपकार्याकाङ्क्षामामि
तिकर्त्तव्यतात्वेनान्वयमनुभवितुं
योग्यम् । तथाच । प्रयाजानुयाज
सहकृतेनदर्शपौर्णमासेनस्वर्गंभा
व्यः । इति ॥
शामनी । स्त्री । अवाच्यांदिशि ॥
शामिता । त्रि । वधकर्त्तरि ॥
शामित्रम् । न । वधरूपेशमितुःकर्म्म
णि ॥
शामित्रकर्म । न । पशुहिंसने ॥ शमि
तुरिदंशामित्रम् । तच्चतत्कर्मचेति ॥
शामीलम् । न । भस्मनि । शमीभस्म
नि ॥ शम्याविकारः । शम्या । ष्
लञ् । षित्वान्ङीष् । शामीली
स्रुक् ॥
शाम्बरी । स्त्री । मायायाम् । इन्द्रजा
लादौ ॥ शम्बरस्यदैत्यविशेषस्येय
म् । तस्येदमित्यण् । ङीप् ॥
शाम्भवः । पुं । गुग्गुलौ ॥ कर्पूरे ॥
शिवसख्याम् । विषप्रभेदे ॥ शम्भु
पुत्रे ॥ न । देवदारुणि ॥ त्रि । श
म्भुसम्बन्धिनि ॥ कौलिके । माहे
श्वरे ॥ पुं । शम्भुप्रोक्तआचारे ।
कुलाचारे ॥ यथा । शाम्भवेनमा
र्गेणदेवतास्थापनञ्चरेत् । नसान्नि
ध्यंभवेत्तत्रदेवतायाः कथञ्चन ॥
कृत्वामुक्तफलनास्तिकायक्लेशोधनव्य
यः ॥ आगमोक्तविधिंहित्वायः
श्राद्धंकुरुतेनरः । श्राद्धंतद्विफलं

सोऽपि पितृभिर्नरकं व्रजेत् ॥ ततो
यशो पितृसकपिण्डो मलमयो भवेत्
। तस्मात् सर्वप्रयत्नेन शाङ्करमत
माश्रयेत् ॥ बहुभाव विमुक्तेन सत्य
सत्यं मयोच्यते । अशाम्भवकृतकर्म
सर्वं देवि निरर्थकम् ॥ अस्तुताव
तपरो धर्म्म: पूर्वधर्मोऽपि नश्यति
। शाम्भवाचारहीनस्य नरकान्नैव नि
ष्कृति: ॥ शम्भोरयम्, शम्भो
रागत: शम्भुनाप्रोक्तो वा ॥ अण् ॥

शाम्भवी । स्त्री॰ पार्व्वत्याम् ॥ कुली
मायाम् ॥ नीलदूर्व्वायाम् ॥

शायिका । स्त्री॰ शयने ॥ शीङोधा
त्वर्थनिर्देशे ण्वुल् । इत्वम् ॥

शार: । पुं॰ समीरणे । वाते ॥ अ
क्षोपकरणे ॥ त्रि॰ शवले । कर्बु
रे ॥ पीते ॥ शीर्य्यतेऽनेन शृणाति वा
। शृ हिंसायाम् । शृवायुवर्ण्णनिवृ
तेष्विति घञ् ॥ शृणन्त्यनेन द्यूत
कारा: परस्परम् । बाहुलकाद्घञ्
॥ शारो वर्ण्ण: । चित्रीकरणमिह
धात्वर्थ: ॥

शारङ्ग: । पुं॰ सारङ्गविहगे ॥ शारय
ति शीर्यते वा तपादिना । शृ॰ ।
शरत्यादिभ्यश्च ल्यङ्गच् ॥ शवले ॥
हरिणे ॥

शारङ्गी । स्त्री॰ वाद्ययन्त्रविशेषे ॥

शारद: । पुं॰ अब्दे । वत्सरे ॥ का
शे ॥ बकुले ॥ पीतमुद्गे ॥ हरिन्मु
द्गे ॥ रोगे ॥ न॰ सस्ये ॥ श्वेतप
द्मे ॥ त्रि॰ शरज्जाते ॥ नवे । नू
तने ॥ अप्रतिभे ॥ शालीने ॥ शृणा
ति । शृ॰ । शृदृभसोऽदिरिति॰ अ
दि । प्रज्ञाद्यण् ॥ शरदि भव: ।
सन्धिवेलादीत्यण् ॥ शरदि पुष्यति
कालात् साधुपुष्यत्पच्यमानेष्वित्य
ण् ॥ शरदि पच्यन्ते शारदा: शाल
य: ॥

शारदका: । पुं॰ भू॰ दर्भविशेषे ॥
मुद्गविशेषे । शरदि जाता: । सञ्ज्ञा
यां शरदो वुञ् ॥

शारदा । स्त्री॰ सरस्वत्याम् ॥ दुर्गाया
म् ॥ शरत्काले पुरा यस्मात् नवम्यां बो
धिता सुरै: । शारदा सा समाख्याता
पीठे लोके च नामत: ॥ ब्राह्म्याम् ॥
शारिवायाम् ॥ शृणाति जाड्यम् ।
शृ॰ अदि । अण् । टाप् ॥

शारदिक: । पुं॰ रोगे । शारदे ॥ वि
भाषा रोगातपयोरिति ठञ् । पक्षे
॰ शारदो रोग आतपो वा ॥ न॰ श
रदि भवे॰ श्राद्धे ॥ श्राद्धे शरद इति
ठञ् ॥

शारदी । स्त्री॰ तोयपिप्पल्याम् ॥ को
जागरपूर्णिमायाम् ॥ शरदि भवा
। सन्धिवेलेत्यण् । ङीप् ॥ सप्तप
र्णे ॥ शरदि पुष्यति । कालात् सा
धुपुष्यदित्यण् । ङीप् ॥

शारदीय: । पुं॰ दुर्गोत्सवे ॥ यथा ।

अदूरेजगदम्बाया : शारदीयोमहोत्सव . ॥

शारदीयमहापूजा । स्त्री॰ शरत्कालिकदुर्गामहापूजायाम् ॥

शारद्वत : । पुं॰ कृपे ॥

शारि । पु॰ अक्षोपकरणे । द्यूतसाधने । खेलन्याम् । शारे । गुटिका॰ गोट॰ सारि॰ इ॰ भा॰ प्र॰ ॥ स्त्री॰ शकुनिकाप्रभेदे ॥ युद्धार्थगजपर्याणे ॥ व्यवहारान्तरे ॥ शृणाति । शॄ॰ । अ. शकुनादिति ॰इञ् ॥ कपटे ॥ बह्वादित्वात्पक्षेङीषि॰ शारी ॥

शारिका । स्त्री॰ खगान्तरे । पीतपादायाम् । गोराट्याम् । मैना॰इ॰ भा॰ ॥ शृणातिदु॰ खमिरहितीनाम् । शॄ॰ । ण्वुल् । प्रत्ययस्थादितीत्वम् ॥ वीणावादनदण्डे ॥ इ॰ हे॰न्द्र : ॥

शारीफलम् । न॰ अष्टापदे । शारिखेलनाधारे । शारीणांखेलनाधरपट्टे । चौपड॰ इ॰ भा॰ शारीणाफलम्॰ पट्ट : ॥

शारिफलक . । पुं॰ न॰ शारिफले । अक्षपीठिकायाम् ॥

शारिवा । स्त्री॰ गोप्याम् । श्यामायाम् । अनन्तायाम् । उत्पलशारिमायाम् ॥ अस्यागुणा : । श्वेतकृष्णप्रभेदेनशारिवाद्विविधास्मृता ॥ शारिवायुगलस्वादुस्निग्धशुक्रकरं गुरु । अग्निमान्द्यारुचिश्वासकासामविषनाशनम् ॥ दोषत्रयास्रप्रदरज्वरातीसारनाशनम् ॥ अपिच । एकंवाशारिवामूलसर्वव्रणविशोधनमिति ॥ शरणम् । शॄ॰ । कृशॄत्यादिना॰ इण् । शारिरस्त्यस्या । अन्येभ्योपीतिव : ॥

शारिशृङ्खला । स्त्री॰ पाशकविशेषे । पश्चक्याम् ॥ यथा । चुम्बरीतिम्लिङ्गोद्यत॰ पश्चमीशारिशृङ्खला । नयपीठोचाष्टकाङ्गो॰नव: स्याञ्जयपुत्रक : ॥ एतेपाशकभेदा. स्यु॰ जयकोलाहलोपिच । इति शब्दरत्नावली ॥

शारी । स्त्री॰ शारिपदार्थे ॥ कुशायाम् ॥

शारीर : । पुं॰ जीवे ॥ न॰ वृषे ॥ त्रि॰ देहजे ॥ शरीरेभव : शरीरेजातो वा । अण् ॥ कर्मविशेषे । शरीरस्थितिमात्रप्रयोजने॰ कौपीनाच्छादनादियहणभिक्षाटनादिरूपेयतिस्वतिशास्त्राभ्यनुज्ञाते । शारीरकेवलकर्मकुर्वन्नाप्नोतिकिल्बिषमिति भगवदुक्ते . ॥ शरीरप्रधाने : कर्तादिभि : साध्येचकर्मणिनतुकेवलेनशरीरेण॰ पश्चैतेतस्यहेतवइत्युक्ते : ॥ शरीरमात्रसाध्येचकर्मणि ॥ तपोविशेषे ॥ यथा । देवद्विजगु

शप्राङ्गपूजनं शौचमाजवम् । ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥

शारीरक । पुं० जीवे ॥ शरीरमेव शरीरकम् । तत्र भवः । अण् ॥ शारीरकं भाष्यमिति त्वभेदोपचारात् ॥

शारीरकसूत्रम् । न० उत्तरमीमांसायाम् । अथातो ब्रह्मजिज्ञासेत्यादिव्यासप्रणीतेषु० जीवयाथात्म्यवादिषु वेदान्तार्थसङ्ग्रहवाक्येषु ॥ शारीरको जीवः तस्य सूत्रैर्याथातथ्यमनिरूप्यते तानीति व्याख्यानात् ॥

शारीरकीय : । पुं० ग्रन्थविशेषे ॥ शारीरकमधिकृत्य कृतो ग्रन्थः । अधिकृत्य कृते ग्रन्थे इत्यर्थे० छः ॥

शारुक : । त्रि० हिंसके ॥

शार्क : । पुं० शर्कराणाम् ॥

शार्कक : । पुं० दुग्धफेने ॥ शर्करापिण्डे ॥

शार्कर : । पुं० दुग्धफेने ॥ शर्करैव । शर्करादिभ्योऽण् ॥ शर्करान्वितदेशे । शर्करायाम् । शर्करिके ॥ शर्करायाः अयं । देशे लुबिलचौ चेति चादण् ॥ त्रि० शर्करासम्बन्धिनि ॥

शार्कराक्ष : । पुं० अनात्मज्ञे ॥ शर्कराक्षस्यापत्यम् । गोत्रापत्ये० गर्गादित्वाद्यञ् ॥

शार्ङ्ग : । पुं० न० विष्णोर्धनुषि ॥ क्रामुकमात्रे ॥ शृङ्गस्य विकारः । अनुदात्तादेश्चेत्यञ् ॥ पुं० पक्षिणि ॥ शृणाति । शॄ० । गणश्च कुमारिति गन्० तस्य नुट् । अपि । ... ॥ त्रि० शृङ्गसम्बन्धिनि ॥ न० आर्द्रके ॥

शार्ङ्गधन्वा । पुं० विष्णौ ॥ इन्द्रियाद्यहङ्कारात्मकं शार्ङ्गनामधनुर्यस्य । धनुषश्चेत्यनञ् ॥ यथा । भूतादिमिन्द्रियादिं च द्विधाहङ्कारमीश्वरः । बिभर्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितिमिति वि० पु० ॥

शार्ङ्गपाणि : । पुं० विष्णौ ॥ शार्ङ्गं पाणौ यस्य सः । प्रहरणार्थेभ्यः परे निष्ठासप्तम्याविति पाणेः परनिपातः ॥

शार्ङ्गी । पुं० विष्णौ ॥ शार्ङ्गमस्यास्ति । अतइनिठनाविति० इनिः ॥ धन्विमात्रे ॥

शार्दूल : । पुं० व्याघ्रे ॥ पशुविशेषे ॥ राक्षसे । उत्तरस्थितः सत्तमे ॥ यथा० राजशार्दूलः ॥ शरभे । चित्रके ॥ शारयति । शॄ० स्वार्थणिच् । क्विप् । दूयते । टुदु परितापे । कर्मण्यर्थे : । बाहुलकादूलक् । शार् चासौ दूलश्च । यद्वा । शृणाति । पिशादित्वात् ऊलच् । बाहुलकाद्दुक् । इति ॥

शार्दूलललितम् । न० वृत्ति १८

छन्द : प्रभेदे ॥ तल्लक्षणं यथा ।
म ' सौज . मतसाद्दिनैश्चरतुभि'
शार्दूलललितम।यथा । कृत्वाकस
मृगेपराक्रमविधिं शार्दूलललितयश्च
क्रोधितिभारकारिपुसुराराति ध्वंति
दूरम । सन्तोषपरमन्तुदेवनिवहे
भ्यो लोकयशरण्यं योन सततौत्वपा
रमहिमालक्ष्मीप्रियतम ' ॥
शार्दूलवाहन . । पुं० पञ्चविंशति
पूर्वजिनान्तर्गतजिने ॥
शार्दूलविक्रीडितम् । न० अतिधृति
१९ वृत्तप्रभेदे ॥ तल्लक्षण यथा ।
सूर्याश्वैर्मसजस्तता : सगुरव : शा
शार्दूलविक्रीडितम् ॥ यथा । गो
विन्द प्रणमोत्तमाङ्गरसनैस्त्वं चोषवा
इनिंशमपार्थोपूजयतमन : स्मर
पदेतस्यालयगच्छतम् । एव चे
त्कुरुताखिलममङ्गितशीर्षादयस्तद्
भुवमन्नप्रेच्च भवताक्रौतेभवमहाशा
र्दूलविक्रीडितम् ॥
शार्व्वरम् । न० अन्धतमसे । ध्वा
न्ते ॥ त्रि० घातुके।शर्वर्योभवम् ।
तत्रभवइत्यण् । काषाट्ठञ्चि
त ' ॥ शर्वरीसम्बन्धिनि ॥
शार्व्वरी । स्त्री० शर्वर्याम् । रा
त्रौ ॥
शार्वी । स्त्री० ऐशान्यांदिशि ॥
शाल । पुं० मत्स्यविशेषे । गज
के । गजाङ० कू० प्र० ॥ शालि
वाहननृपे ॥ नद्विविशेषे ॥ साल
वृक्षे ॥ शाडाति । शाडृश्लाघाया
म् । कर्मणि० घञ् । डलयो
रैक्यम् ॥ प्राकृते । शीतनूकार
र्ये । वाहुलकात्कालन्वा ॥
शालग्राम : । पुं० हरिचक्रे । ग
ण्डकीशिलायाम । विष्णवादि
देवानांप्रतिविम्बरूपेपाषाणविशेषे।
गण्डक्याश्चैकदेशेचशालग्रामस्थलं
स्मृतम् । पाषाणतद्भवयत्तत्पश्चा
लग्राममितिस्मृतम् ॥ शालवृक्षो
पलक्षितोग्राम, शालग्राम ' शाल
ग्रामेभव : । अण् ॥ अपिपापसमा
चारोब्रह्महत्यायुतोपिवा । शाल
ग्रामशिलातोयपीत्वायोतिपरांग-
तिम् ॥ तुलसीचन्दनचक्रं शङ्खो
घण्टाचचक्रकम् । शिलाताम्रस्य
पात्रन्तुविष्णोर्नामपदोदकम् ॥ प
दान्यन्तुनवभि : पापराशिप्रदाहक
म् । बहुभिस्तुमय : शान्ता ' स
सर्वस्वार्थकोविद ' ॥ सर्वती
र्थपरित्यागात्सर्वक्रतुसमर्पणात्
पुण्यभवतियद्राजन्विन्दौविन्दौतद्
द्भुतम् ॥ शालग्रामशिलायत्रपू
ज्यतेपुरुषोत्तमे ' । तत्रयोजनमा
त्रन्तुतीर्थकोटिसमन्वितम् ॥ शा
लग्रामा ' समा : पूज्या . समेषु
द्वितयनहि । विषमाएवपूज्याश्च
विषमेषुत्रयंनहि ॥ द्वारावतीभ

व चक्रतथावेगराडकीभवम । शुभ
यै: सङ्गमीयचतचगङ्गासमुद्रगा ॥
शालग्रामीश्वरैर्मूर्त्तिर्जगन्नाथसभा
रतम् । क्वचिद् ग्रस्थान्त यद्युक्त्य
त्वाप्तरे: पदम् ॥ विग्रहाणियत्र
श्यानांशालग्रामशिलाचमे प्र
धिकारीनशूद्राणांहरेरर्चामैत-
सा ॥

शालग्रामगिरि । पुं॰ शालग्रामोत्
पादकपर्वते ॥

शालङ्कटङ्कट । पुं॰ मुनेरग्निनिराख
से ॥

शालङ्कायन: । पुं॰ मुनिविशेषे ॥ न
न्दिनि । शिवद्वारपाले ॥

शालङ्कायनक । पुं॰ शालङ्कायनान
विषयेदेशे ॥ राजन्यादिभ्योवुञ् ॥

शालङ्कायनजीवसू । स्त्री॰ व्यासमा
तरि ॥

शालङ्कि: । पुं॰ मुनिविशेषे । पाणि
नौ ॥

शालज: । पुं॰ गजभक्षे । शाले ॥

शालनिर्यास: । पुं॰ धूनके । सर्ज्जर
से ॥

शालपर्णिका । स्त्री॰ शालपर्ण्याम् ॥

शालपर्णी । स्त्री॰ औषधिविशेषे । वि
दारिगन्धायाम् । अंशुमत्याम् ।
स्थिरायाम् । शालपर्णी॰ द्र॰ गौ॰
भा॰ ॥ अस्यागुणायथा । शालपर्णी
गरच्छर्दिज्वरश्वासातिसारजित् ।
शोषदोषत्रयहरीबृंहण्युक्तारसायनी
॥ तिक्ताविषहरीस्वादु । क्षतकास
कृमिप्रणुत् ॥ पाककर्म्मेतिकेषु ॥

शालभञ्जिका । स्त्री॰ शालभञ्ज्या
म् ॥

शालभञ्जी । स्त्री॰ पञ्चालिकायाम् ।
दन्तकाष्ठादिनिर्मितपुत्रिकायाम् ॥
वेश्यायाम् ॥

शालव । पुं॰ लोध्रे ॥

शालवेष्ट । पुं॰ धूनके ॥ शालस्यवे
ष्टोनिर्यास: ॥

शालसार । पुं॰ तरौ । द्रुमे ॥ हिङ्गु
नि ॥

शाला । स्त्री॰ गृहे । गेहैकप्रदेशे ।
द्रुमस्कन्धशाखायाम् । स्कन्धात्प्र
थमोत्पन्नप्रधानशाखायाम् ॥ शल
श्वन । शलगतौ । हलश्चेति॰ घ
ञ् ॥ यद्वा । शलति । शलचलने
। ज्वलितीतिण ॥ श्यति । शो॰
। बाहुलकात्॰ कालनृवा ॥

शालाकटङ्कटम् । न॰ चाणक्यसूत्रके ॥

शालाकी । पुं॰ अस्त्रवैद्ये ॥ नापिते
॥ शलधारिणि ॥ वृत्तिकर्षित ॥

शालाक्यम । न॰ आयुर्वेदस्याङ्गविशे
षे ॥ यथाहसुश्रुत । तत्र॰ शाला
क्यंनाम॰ ऊर्द्ध्वजत्रुगतानांरोगा
णां॰ श्रवणनयनवदनघ्राणादिसं
श्रितानांव्याधीनामुपशमनार्थमि
ति ॥

शालाग्नि : । पुं॰ आवसथ्याग्नौ ॥
शालाङ्की । स्त्री॰ पुत्तलिकायाम् । पञ्चालिकायाम् ॥ इ॰ अ॰ र॰ लौ ॥
शालाजिर : । पुं॰ न॰ शरावे ॥
शालाञ्जि : । स्त्री॰ शाकविशेषे । शालिञ्चे ॥
शालातुरीय : । पुं॰ पाणिनीयमुनौ ॥ शलातुरोऽभिजनोऽस्य । तूदीशलातुरेतिछण् ॥
शालानी । विदार्याम् ॥
शालामृग : । शृगाले ॥
शालारम् । न॰ हस्तिनखे । पुरद्वारस्तम्भद्वये ॥ सोपाने ॥ पक्षिपञ्जरे ॥
शालावृक : । पुं॰ शृगाले ॥ सारमेये ॥ वलीमुखे । मर्कटे । वानरे ॥ शालां वृणोति । वृञ्॰ । स्तम्भूशुषिभ्य : कक् ॥ विडाले ॥
शालि : । पुं॰ गन्धोतौ । गन्धमार्जारे ॥ कलमादिधान्ये ॥ आदिशब्दात् राजशाल्याद्याश्चोद्ध्या : ॥ ते यथा । राजान्नषष्टिकासिततररक्तमुण्डस्थूलासुगन्धतिरियादिकशालिसञ्ज्ञा : । व्रीहिस्तथेति दशधा भुवि शालयस्तु सोऽपि क्रमेण गुणनामगणं ब्रवीमि ॥ इति राजनिर्घण्टः ॥ शाड्रते । शाङ्कूनाम्र्ये । डलयो रैक्यम् ॥ इन् ॥ शाल्यते वा । शलचलने । वयस्म । अचङ् : ॥ यद्वा । शृणाति । शॄ॰ । बाहुलकादिञ् शारि : । कपिलकादित्वात् लत्वम् ॥ शालयो द्विविधा. प्रोक्ता जलजा : स्थलजास्तथा । तत्र । कण्डनेन विना शुक्ला हैमना शालय : स्मृता : ॥ शालीनां नामान्याह । रक्तशालि . सकलम : पाण्डुक . शकुनाहृत . । सुगन्धक : कर्द्दमको महाशालिश्च दूषक . ॥ पुष्पाण्डक. पुण्डरीकस्तथा महिषमस्तक : । दीर्घशूक . काञ्चनको हायनो लोध्रपुष्पक : ॥ इत्याद्या शालय सन्ति बहवो बहुदेशजा . । ग्रन्थविस्तरभीतेस्ते समस्ता नात्र भाषिता: ॥ अथ गुणा. । शालयो मधुरा. स्निग्धा बल्या बद्धाल्पवर्चस : । कषाया लघवो रुच्या : स्वर्या वृष्या बृंहणा. ॥ अल्पानिलकफा. शीता: पित्तघ्ना मूत्रलास्तथा । शालयो दग्धमृज्जाता . कषाया लघुपाकिन. ॥ सृष्टमूत्रपुरीषा रूक्षा : श्लेष्मापकर्षणा : ॥ कैदारा वातपित्तघ्ना गुरव : कफशुक्रला . । कषाया अल्पवर्चस्का मधुरा बलावहा : ॥ कैदारा : कृष्टवजाश्वा : ॥ स्थलजा : स्वादव : पित्तकफघ्ना वातवह्निदा : । किञ्चित्तिक्ता : कषाया विपाके कटुकाश्च ते ॥ स्वलजा :

कन्दे । पङ्कशूरणे ॥ शालूकंशीतलंवृष्यपित्तदाहास्रनुद्गुरु । दुर्जरस्वादुपाकञ्चस्तन्यानिलकफप्रदम् ॥ सङ्गाहिमधुरहृद्य भिस्माण्डम-पितद्गुणम् ॥ जातीफले ॥ शल्यते० शलतिवा । शलचलनसंवरणयो । शलिमण्डिभ्यामूकण्० इद्धिश्च ॥

शालूकिनी । स्त्री० ग्रामविशेषे ॥ शालूकानिसन्त्यस्या देशे । पुष्करादिभ्योदेशइ'ति० इनि ॥ तीर्थविशेषे ॥

शालूर । पु० भवे । दर्दुरे ॥ शाडते । शाडगतौ । खर्जपिञ्जादिभ्यऊरोलचाविल्यूर' । डलयोरैक्यम् ॥ शालतेवा । शालश्लाघने ॥ पूर्ववदूर ॥

शालेय । पु० मिसौ । मधुरायाम् ॥ त्रि० शाल्युद्भवेक्षेत्रे । धान्यसामान्यस्यकलमादेश्चोत्पत्तियोग्येक्षेत्रे ॥ शालीनांभवनक्षेत्रम् । व्रीहिशाल्योर्ढक् । तदस्यास्ति । पर्षादय् ॥

शालेयधाराभृत् । पुं० गिरिविशेषे । शालिरमौ० इ० भा० प्र० । शालिवाहनजन्मस्थाने ॥

शालेया । स्त्री० मिश्रेयायाम् ॥

शाल्मल : । पुं० शाल्मलिद्रुमे ॥ शाल्मलिद्वीपे ॥

शाल्मलि । पुं० स्त्री० पिच्छिलायाम् । पूरण्याम् । मोचायाम् । स्थिरायुषि । सेमल० सेमर० इ० भा० । षष्टिवर्षसहस्राणिवनेतिष्ठतिशाल्मलि ॥ अस्यागुणायथा । शाल्मलि. शीतलास्वादीरसेपाकेरसायनी । श्लेष्मलास्निग्धवीजावष्टम्भणी रक्तपित्तजित् ॥ इति ॥ शालयति । शलचलनेणिजन्त । क्विप् । मलते । मलधारणे । सर्वधातुभ्यइन् । शाल्चासौमलिश्च ॥ द्वीपविशेषे । सप्तसूयोजनोन्नत सूर्यद्युति शाल्मलिवृक्ष . शाल्मलिद्वीपेस्ति । यथा । शाल्मलेशाल्मलीवृक्षोहैम : साहस्रिकोद्भवा : । प्रियोमराणां तत्केतु' सतदाख्यानिबन्धनइति ॥

शाल्मलिक . । पुं० रोहितकवृक्षे । कूटशाल्मलौ ॥

शाल्मली । पुं० गरुडे ॥ इ० श० को ॥

शाल्मलिनिर्यास ' । पुं० मोचरसे ॥

शाल्मलिनी । स्त्री० शाल्मलीवृक्षे ॥

शाल्मलिपत्रक । पु० सप्तच्छदवृक्षे ॥

शाल्मलिस्थ । पु० गरुडे ॥ शाल्मलिद्वीपस्थशाल्मलिवृक्षे तिष्ठति । स्था० । क ' ॥

शाल्मली । स्त्री० शाल्मलिवृक्षे ॥ कृदिकारादितिङीष् ॥

शाल्मलीकन्द : । पुं० शाल्मलिवृक्षमूले । विजुले । मसन्द ॥

शाल्मलीपुष्पम् । न० पिच्छिलाकुसुमे ॥ तत्कालगुणा । शाल्मलीपुष्पशाकन्तुघृतसैन्धवसाधितम् । प्रदरनाशयत्येवदु साध्यञ्चनसशय ॥ रसेपाकेचमधुरकषायशीतलगुरु । कफपित्तास्रजिद्ग्राहिशालञ्चप्रकीर्त्तितम् ॥

शाल्मलीफल । पु० तेजःफलवृक्षे ।

शाल्मलीवेष्ट । पुं० पिच्छायाम् । मोचरसे । मोचस्रावे सेमरगोंद इतिख्याते ॥ शाल्मल्यावेष्ट ॥

शाव । पु० अर्भके । शिशौ । त्रि० शवसम्बन्धिनि । शव्यते । शवगतौ । घञ् । शवस्यायम् । अण् ॥

शावक । पुं० शिशौ । बाले । शव्यते । शव० । घञ् । स्वार्थेकन् ॥

शावर । पुं० पापे ॥ अपराधे ॥ श्वेतलोध्रे । गालवे ॥ शवराणामयम् । तस्येदमित्यण् ॥ शवरस्वामिकृतभाष्ये ॥ न० तन्त्रविशेषे ॥ मन्त्रविशेषे ॥ त्रि० शवरसम्बन्धिनि ॥

शावरभेदाख्यम् । न० ताम्रे ॥

शावरी । स्त्री० शूकरशिम्बाम् ॥ ङीप् ॥

शावरोत्सव । पुं० म्लेच्छकृतोत्सवे ॥ यथा । पुजयित्वामहाष्टम्यां बल्यांबलिभिस्तथा । रिसजयेद्दशम्यान्तुश्रवणे शावरोत्सवैरित्यादिकालिकापुराणम् ॥

शाश्वत : । पु० वेदव्यासे । त्रि० नित्ये० अनाद्यनन्ते० सदैकरूपे० परमात्मनि ॥ शश्वत्सर्वदाभवति० नापचीयतेनापचीयतेचयेत्स शाश्वतासे ऽपचीयते ऽपचीयतेच० अयमुक्ततथा ॥ सतते । अनारते । सापेचनित्ये ॥ शश्वद्भव : । तत्रभवइत्यण् । अनित्यो ऽव्ययानां टिलोपोवक्तव्यष्टिलोपे । भावनाजन्मकात् ॥ पारिभाषिकशाश्वत यथागारुडे । शाश्वत देवपूजादि० विप्रदानञ्चशाश्वतम् । शाश्वतीसगुणाविद्या० सुहृन्मित्रञ्चशाश्वतमिति ॥

शाश्वतिक : । त्रि० नित्ये ॥ शश्वद्भव : । अध्यात्मादित्वाट्ठञ् । शाश्वतिकइतिनिर्देशान्नकादेश ॥

शाष्कल : । त्रि० आमिषाशिनि ॥ शष्कुलीमांसोपलक्षणम् । तामत्ति । शिषइत्यण् । पृषोदरादि ॥

शाष्कुलि । त्रि० मांसाशिनि ॥ शष्कुलीमांसोपलक्षणम् तामत्ति । शिषइत्यण् ॥

शाष्कुलिकम् । न० शष्कुलीवृन्दे । शष्कुलीमांसमूह । अचित्तहस्तिधेनोष्ठक । त्रि० शष्कुलिप्रिये ॥ शष्कुल्योभक्षिरस्य अचित्ताद्देशका

स्त्राट्‌क् ॥ शष्कुलीसदृशे ॥ शष्कुलीव । खङ्गुल्यादिस्थकि ।

शासक । त्रि॰ शासनकर्तरि । उपदेष्टरि । शास्तरि ॥ शास्ति । शासु॰ ण्वुल् ॥

शासनम् । न॰ राजदत्तोर्व्याम् ॥ लेखे । लिपौ । शिक्षायाम् ॥ आज्ञायाम् । प्रवर्तनायाम् ॥ शास्त्रे ॥ शास्तौ ॥ पत्रे ॥ श्रुतिरूपेश्वराज्ञावले ॥ शासुअनुशिष्टौ । ल्युट् ॥ त्रि॰ । शासयितरि ॥ त्रिजगत्प्रशासिन्यादित्वाज्ञा ॥

शासनहर । पुं॰ राजदूते ॥ आज्ञावाहके ॥

शासित । त्रि॰ कृतशासने ॥

शासिता । त्रि॰ शासनकर्तरि । उपदेष्टरि । शास्तरि ॥ ब्रह्मादिस्तम्बपर्यन्तस्य॰ चेतनाचेतनस्य॰ जगतो नियन्तर्यन्तर्यामिणि परमात्मनि ॥ सोयमग्न्यादीनामौष्ण्यादिनियमो यद्यादित्यादीनां भ्रमणादिनियमो यच्च कर्माणां फलं प्रतिनियतमेतत् सर्वं परमात्माधीनमस्ति ॥

शास्ति । स्त्री॰ आज्ञायाम् ॥ राजदण्डे । शसु॰ । बाहुलकात् तिप्रत्ययः कृत्वाभावश्च ।

शास्ता । पुं॰ उपाध्याये ॥ पितरि ॥ राजनि ॥ बुद्धे ॥ समन्तभद्रे ॥ जिने ॥ त्रि॰ शासके । देशके ॥ शासितरि ॥ शास्ति इमेयान्॰ इति॰ शास्ता । तृन्तृचौशंसिक्षदादिभ्य संज्ञायां चानिटाविति तृन्॰ तृच्वा । नप्तृादिग्रहणं व्युत्पत्तिपक्षे नियमार्थत्वान्न दीर्घः । पितृवत्॰ शास्तृशब्दः । सोधाता चाविधाता च पौराणो जगतः पतो । सो गाता रो नित्य कीर्त्यन्न धर्माधर्मौ प्रकीर्त्तिताविति विष्णुपुराणे तु सर्वत्र तृचा विति तृज्बोध्य ॥ प्रशासितरि । ईश्वरे ॥ सर्वेषां वर्णाश्रमाणां तत्तत्कर्मण्यधिकृतानां श्रुतिस्मृत्यादिभिरनुशिष्टिं करोतीति तथा । शासिर्यद्यपि सेट् कस्तथापि व्युत्पत्ति प्रयोगानुरोधादनित्यमागमशासनमिति न्यायात्॰ शसितरूपमितीत्यादिकन्दसि निपातनादिड्भाव ॥

शास्त्रम् । न॰ । आज्ञायाम् । निदेशे । आगमे । वेदे । शिष्यते॰ अनुशिष्यतेऽपूर्वार्थो बोध्यतेऽनेनेति शास्त्रमेदपत्र ॥ वेदा वनो विष्णु॰ स्मृतिपुराणागमादिषु ॥ एकप्रयोजनोपनिबद्धेऽशेषार्थप्रतिपादके ॥ छन्दोव्याकरणाभिधानकोषकलाच तुरङ्गगजतुरगखङ्गादिलक्षणग्रन्थाः शास्त्राण्यभवन्ति ॥ प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥

शास्त्रम्

तच्छास्त्रं त्रिविधं प्रोक्तं सात्त्विकादि
विभेदतः । यथोक्तं देवीभागवते
। सात्त्विकं तत्र वेदान्त मीमांसाद्य
मसम्मतम् । तामसं न्यायशास्त्रं
च हेतुवादाभियन्त्रितमिति ॥ त
थाध्यात्मशास्त्रातिरिक्तशास्त्रनिन्दा
यथा कुलार्णवे । षड्दर्शनमहा
कूपे पतिताः पशवः प्रिये । पर
मार्थं न जानन्ति पशुपाशनियन्त्रिताः
॥ वेदशास्त्रार्णवे घोरे उह्यमाना इत
स्ततः । षडूर्मिनिग्रहग्रस्तास्ति
ष्ठन्ति हि कुतार्किकाः ॥ वेदागम
पुराणज्ञः परमार्थं न वेत्ति यः ।
विडम्बकस्य तस्यैव तत् सर्वं काकभा
षितम् ॥ इदं ज्ञानमिदं ज्ञेयमिति
चिन्तासमाकुलाः । पठन्त्यहर्निशं
देवि परतत्त्वपराङ्मुखाः ॥ वाक्य
च्छन्दोनिबन्धेन काव्यालङ्कारशो
भिताः । चिन्तया दुःखिता मू
ढास्तिष्ठन्ति व्याकुलेन्द्रियाः ॥ अ
न्यथा परमं तत्त्वं जनाः क्लिश्यन्ति
चान्यथा । अन्यथा शास्त्रभावो व्या
ख्यां कुर्वन्ति चान्यथा ॥ कथयन्त्यु
न्मनीभावं स्वयं नानुभवन्ति च । अ
हङ्कारहताः केचिदुपदेशादिवर्जि
ताः ॥ पठन्ति वेदशास्त्राणि बोधय
न्ति परस्परम् । न जानन्ति परं तत्त्वं
दर्वी पाकरसं यथा ॥ शिरो वहति
पुष्पाणि गन्धं जानाति नासिका ।
पठन्ति वेदशास्त्राणि दुर्लभो भावबो
धकः ॥ तत्त्वमात्मस्थमज्ञात्वा मू
ढः शास्त्रेषु मुह्यति । गोपः क
क्षगते छागे कूपे पश्यति दुर्मतिः ॥
संसारमोहनाशाय शाब्दबोधो न हि
क्षमः । न निवर्तेत तिमिरं कदा
चिद्दीपवार्तया ॥ प्रज्ञाहीनस्य पठ
नमन्धस्य दर्पणं यथा । देवीप्रज्ञा
वतः शास्त्रं तत्त्वज्ञानस्य साधनम्
अग्रतः पृष्ठतः केचित् पार्श्वयो
रिति केचन । तत्त्वमीदृक् तादृगि
ति विवदन्ति परस्परम् ॥ सद्विद्या
दानशौर्यादिगुणैर्विख्यातमानवः
। ईदृशस्तादृशश्चेति दूरस्थः कथ्यते
जनः ॥ प्रत्यक्षग्रहणं नास्ति वार्त्त
या ग्रहणं प्रिये । एवं ये शास्त्रसम्मू
ढास्तत्त्वदूरस्थानसंशयः ॥ इदं ज्ञा
नमिदं ज्ञेयं सर्वं तच्छ्रोतुमिच्छति ।
दिव्यवर्षसहस्रायुः शास्त्रान्तं नैव
गच्छति ॥ वेदान्यनेकशास्त्राणि
चाल्पायुर्विघ्नकोटयः । तस्मात्
सारं विजानीयात् क्षीरं हंस इवाम्भ-
सः ॥ अभ्यस्य सर्वशास्त्राणि तत्त्वं
ज्ञात्वाथ बुद्धिमान् । पलालमिव
धान्यार्थी सर्वशास्त्राणि सन्त्यजेत् ॥
यथाऽमृतेन तृप्तस्य नाहारेण प्रयोजन
म् । तत्त्वज्ञस्य तथा देवि न शास्त्रे
ण प्रयोजनम् । न वेदाध्ययनान्मु
क्तिर्न शास्त्रपठनादपि । ज्ञानादेव

छिन्नाः स्युन्नान्यथावीरवन्दिते ॥ आगमा कारणम् तर्दर्शना निमकारणम् । तथैवसर्वकर्म्मा विज्ञानमेवहिकारणम ॥ मुक्ति दागुरुवागेका॰ विद्या . सर्वाविडम्बना : । काष्ठभारसहस्रेषु॰ एकसञ्जीवनपरम ॥ अद्वैतञ्चिशि वप्रोक्तंक्रियायासविवर्ज्जितम् । गुरुवक्त्रे पलभ्यं तनाधीतागमकोटिभि . ॥ आगमोत्थ विवेकोत्थ द्विधाज्ञानप्रचक्षते । शब्दब्रह्मागम मयपरब्रह्मविवेकजम ॥ अद्वैतकेचिदिच्छन्तिद्वैतमिच्छन्तिचापरे । सम तत्त्व नजानन्तिद्वैताद्वैतविवर्ज्जितम् ॥ द्वे पदेबन्धमोक्षाय निर्ममेतिममेतिच । ममेतिबध्यतेजन्तुर्निर्ममेतिविमुच्यते ॥ तत् कर्मयन्नबन्धायसाविद्यायाविमुक्तिदा । आयासायापरंकर्मविद्यान्याशिल्पनैपुणम ॥ यावत्कर्म्माणिदीप्यन्ते यावत्स सारवासना । यावदिन्द्रियचापल्यतावत्तत्त्वकथाकुत ॥ यावत् प्रयत्नवेगोस्तियावत्-सङ्कल्पकल्पना । यावन्नमनस स्थैर्यंतावत् तत्त्वकथाकुत : ॥ यावद्देहाभिमानश्चममतायावदेव हि । यावन्नगुरुकारुण्यंतावत् तत्त्वकथाकुत : ॥ तावत् तपो व्रतंतीर्थजपहोमार्चनादिकम् ।



वेदशास्त्रागमकथायावत् तत्त्व नविन्दति ॥ तस्मात् सर्वप्रयत्नेनसर्वावस्थासुसर्वदा । तत्त्वनिष्ठोभवेद्देवियदीच्छेन्मोक्षमात्मन : ॥ धर्मज्ञानसुपुष्पस्यस्वर्गभोगफलस्य च । तापत्रयार्त्तिसन्तप्तश्छायांमोक्षतरोःश्रयेत् ॥ इति ॥ वह्निपुराणेपि । पुराण भारत वेदोधर्मशास्त्राणियानिच । आयुष . क्षपणायैवधर्मंतत्त्वेनचाचरेत् ॥ पुत्रदारादिस सार · पुसांसम्मूढचेतसाम् । विदुषांशास्त्रस सार · संयोगाभ्यासविघ्नकृत् ॥ इद ज्ञ यमिद ज्ञे य य . सर्वज्ञातुमिच्छति । अपिवर्षशतेनापिशास्त्रान्त नाधिगच्छति ॥ विज्ञायाक्षरतन्मात्र जीवितञ्चापिचञ्चलम् । विहायशास्त्रजालानिपारलौकिकमाचरेत् । पण्डितोपिहिमूर्खोसौशक्तियुक्तोप्यशक्तिक ॥ य : स साराम्नचात्मान समुत्तारयितु क्षम : ॥ इति ॥ शैवपाशुपतादिशास्त्रोत्पत्तिर्यथागम्यवर्तन्ते ॥ प्रथमहिमयाप्रोक्त शैव पाशुपतादिकम् । मच्छक्त्यावेशितैर्विप्रै . सम्प्रोक्तानिततः परम् ॥ कणादेनचसम्प्रोक्तंशास्त्र वैशेषिकमहत् । गौतमेन तथान्यायसाङ्ख्यन्तुकपिलेनहि ॥ धिषणेनतथाप्रोक्तंचार्वाकमतिगर्हितम् । दैत्यानानाशनार्थायविष्णु